बहुभृत्यो धनी कामी भोगी मिष्टान्नभुक् प्रभुः ॥
सर्वधारिणि १ ना जातः सर्वाधारपरो भवेत् ॥ २२ ॥

कुटुंबकलहं कर्ता परदाररतः सदा ॥
सर्वलोकविरोधी च विरोधिवर्षसंभ (ध्यब्दसमुद्भ) वः ॥ २३ ॥

कृष्णवर्णतनुः श्यामः कलालोलस्तु निर्गुणः ॥
विकृष्टपर्वारुरु (र्वोरू रू) क्षतरो विकृत (ति) वर्षजः ॥ २४ ॥

धुलिधूम्रसर्वांगो दीर्घायुः परसत्यकृत् ॥
कामेश्वरश्च निर्लज्जः खरसंवत्सरे नरः ॥ २५ ॥

सदानन्देन संतुष्टः प्रपाकूपतडा (टा) कवृ (कृ) त् ॥
अभिन्नरी (भीरुर्दा) नशीलश्च नरो नन्दनवर्षजः ॥ २६ ॥

शूरः समृद्धो दुर्धर्षः ख्यातकीर्ति (र्ती) रणेऽन्वितः ॥
पृथ्वीपते (ति) र्जयी भोगी विजयाब्दे नरो भवेत् ॥ २७ ॥

विद्वान् मानी लोकमानी सर्वशास्त्रविशारदः ॥
प्रजां प्राप्नोति सर्वत्र जयवर्षे प्रजायते ॥ २८ ॥

उत्पन्नभोगभोक्ता च का(मी) च प्रियवादनः ॥
मुख्याभरणशोभाढ्यो मन्मथे वत्सरे भवेत् ॥ २९ ॥

शठः शूरमतिर्दुष्टो हिंस्रो मोवृ (स्त्रशाम्बु) पल्लीपतिः ॥
वक्रः स्याद्बाहुचरणे दु(र्दु)र्मुखाब्दे भवेन्नरः ॥ ३० ॥

---

१ ना पुरुषः

सुवर्णधनधान्यादिपशुवस्त्रसमृद्धिमान् ॥
कान्तापत्यैः (त्य) सुखाढ्यश्च हेमलंबसमुद्भवः ॥ ३१ ॥

मन्दो लुब्धोऽलसो दुःखी श्लेष्मलश्चापि वंचकः ॥
स्वकार्याभिरतः पापी विलंबे वत्सरे शिशुः ॥ ३२ ॥

अविवेकी महागर्वविशालः कुशलः खलः ॥
विकारिवत्सरे जातः प्राणी भवति वंचकः ॥ ३३ ॥

वणिक् शूरः सुहृद्द्वेषी दीर्घः कृशतनुः तु (न) तः ॥
निद्राघूर्णितनेत्रश्च शार्वर्यब्दसमुद्भवः ॥ ३४ ॥

चंचलश्चपलः कामी परसेवारते (रतः) सदा ॥
हलत्राता ह्रस्वतनुर्जातो वर्षे प्लवाख्यके ॥ ३५ ॥

सुभगः शुभकामी च विद्याधर्मपरायणः ॥
दीर्घायुर्धनपुत्र (त्रा) ढ्यः शुभकृद्वर्षसंभवः ॥ ३६ ॥

सर्वत्र विजयी कामी चारुरूपो गुणान्वितः ॥
कृपालुः शोभकृद्वर्षे जातो भवति मानवः ॥ ३७ ॥

पिङ्गाक्षो राजकोपश्च (पी च) मन्दः कामी च स्त्रीलो (च लो) लुपः ॥
परकार्यविहन्ता च क्रोधिसंवत्सरे नरः ॥ ३८ ॥

विश्वावसुसमुद्भवः (समुद्भूतः) प्रजावांश्च सुखी भवेत् ॥
शांतः सर्वगुणोपेतो दाता मिष्टान्नभुक् शुचिः ॥ ३९ ॥

परदाररतश्चैव शठः स्वपर (ठस्त्वप्रिय) बान्धवः ॥
पराभवसमुद्भूतो धनधान्यविवर्जितः ॥ ४० ॥

प्लवंगवत्सरे जातो नरा भवति किल्बिषी ॥
खलः पापरतो दुष्टो (ष्टः) स्वाचारहतकोऽशुचिः ॥ ४१ ॥

मध्यरूपधरः कामी क्षुत्पिपासार्दितो नरः ॥
कीलके जातितो वर्षे च (वत्सरे जातश्छ)लहृत्क (त्कु) ट
मन्मथः ॥ ४२ ॥

पंडितो धनभोगी च भूदेवातिथिपूजकः ॥
तापसः पुण्यकृद्दो (द्दे) हो नरः सौम्ये प्रजायते ॥ ४३ ॥

नीचवृत्तिः शुचिः कामरहितः परदेशगः ॥
देवावलोकः क्रोधी स्यात् साधारणसमुद्भवः ॥ ४४ ॥

विरोधी सर्वलोकानां पितृभक्तिविवर्जितः ॥
विरोधिकृज्जातनरो जातिसेवाकरो भवेत् ॥ ४५ ॥

विद्वान् सर्वबलाभिज्ञः व्यापारकुशलः सुधीः ॥
राजमानी दानशीलः परिधाविसमुद्भवः ॥ ४६ ॥

प्रमाथिवत्सरे जातो नरो बन्धुविरोधकृत् ॥
कुबुद्धिर्धातुको लुब्धः पापकर्मरतः सदा ॥ ४७ ॥

बहुभार्योऽतिचतुरः सर्वानन्दकरः क्षमी ॥
आनन्दवत्सरे जातः पुत्रमित्रसमन्वितः ॥ ४८ ॥

सर्वभक्षी कृतघ्नश्च धर्माधर्मविवर्जितः ॥
हिंसकः परसंतापी राक्षसाब्दे भवेन्नरः ॥ ४९ ॥

वैश्यवृत्तिर्धनी चैव कुटुंबबहुलः शुचिः ॥
जलसस्यकरो जातो नलसंवत्सरे नरः ॥ ५० ॥

क्लिन्नदक् कृशरोमा च महोद्यमपरो भवेत् ॥
फलकालपरित्यागी पिंगलाब्दे भवेन्नरः ॥ ५१ ॥

लोकोपकारकः कालो भक्ष्याभक्ष्यं (क्ष्ये) न संत्यजेत् ॥
कालयुक्तसमुद्भूतो नरो भवति रोगकृत् ॥ ५२ ॥

ऋद्धिसिद्धियुतो नित्यं भोगी गीतविशारदः ॥
मन्त्री कीर्तिपरो दाता सिद्धार्थिवर्षसंभ (र्थ्यब्दसमुद्भ) वः ॥ ५३ ॥

भयंकरवपुः पापी पिशुनो घातकृद्भवेत् ॥
रौद्रसंवत्सरे जातो नरः स्वल्पायुषो भवेत् (षा युतः) ॥ ५४ ॥

मूर्खः क्रूरयुतः कामी स्वकीयवचनप्रियः ॥
अदाता धनवांश्चैव दुर्मतौ वत्सरे नरः ॥ ५५ ॥

नित्योत्साही क्षितिपतिर्गजाश्वबहुधान्यकः ॥
वादित्रघृत (ति) सौख्याढ्यो दुंदुभीवर्षसंभ (भ्यब्दसमुद्भ)वः ॥ ५६ ॥

काम (मी) लोभी महादोषः शस्त्रपीडानिपीडितः ॥
दुष्कर्मी (र्मा)) कुनखी जातो रुधिरोद्गारिवत्सरे ॥ ५७ ॥

नेत्ररोगी सदा मंददृष्टिर्दंभपरः सदा ॥
दुर्जनः कर्मबहुलो रक्ताक्षीवर्षजो (क्ष्यब्दभवो) नरः ॥ ५८ ॥

तापसो निर्गुणः क्रूरः [1]धातुर्वा (वा) दी भयंकरः ॥
क्रोधनाब्दे नरो जातो वंचकः पापबुद्धिमान् ॥ ५९ ॥

[2]उत्प (त्स) न्नारोग्यरूपश्च परसेवारतः खलः ॥
क्षयसंवत्सरे जातो नरो धर्मविवर्जितः ॥ ६० ॥

॥ इति श्रीजातकसारदीपे संवत्सरफलाध्यायस्तृतीयः ॥

---

## ॥ अथ अयनफलाध्यायश्चतुर्थः ॥

प्रियायुतः सौख्यगुणान्वितश्च
दीर्घायुराचारमतिः प्रवीणः ॥
देवद्विजाचार्यपदानुरक्तः
सौम्यायने जात (न) रो यशस्वी ॥ १ ॥

क्रूरः शठो रोगयुतप्रदेहः
पापात्मकश्चौर्यरतः खलश्च ॥
पौ (पौं) श्चल्यकृत्क्रूरमतिः शिशुश्च
स्याद्दक्षिण (णा) स्त्ययनजोऽतिनिंद्रः ॥ २ ॥

॥ इति श्रीजातकसारदीपे अयनफलाध्यायश्चतुर्थः ॥

---

१ सुवर्णादिधातुविषयकक्रयविक्रयादिव्यवहारवानित्यर्थः २ आरोग्यरहितशरीर इत्यर्थः

## ॥ अथर्तुफलाध्यायः पञ्चमः ॥

शिशिरे जायते मर्त्यो बलसौख्यचिरायुषः (चिरायुर्बलसौख्यवान्) ॥
मिष्टान्नाशी शुभाचारो दंतरोगी प्रजायते ॥ १ ॥

[1]सुखी भोगी गुणी कांतः सत्यव्यसनकृद्ध (वान्म) वेत् ॥
शास्त्रविज्ञानदाता च ग्रीष्मर्तौ जायते नरः ॥ ३ ॥

देशग्रामपुराध्यक्षः कृषिकर्ता भवेत्सदा ॥
शास्त्रसंग्रहणे दक्षः वर्षाजातो भवेन्नरः ॥ ४ ॥

व्यापारकुशलो मन्त्री ज्वररोगविवर्जितः ॥
पंडितो गुणवान् धीरः शरदृतौ (ज्जातो) नरो भवेत् ॥ ५ ॥

॥ इति ऋतुफलाध्यायः पञ्चमः ॥

---

## अथ मासफलाध्यायः षष्ठः ॥

[2]भोगी दाता कृशो दीर्घो गौरः कामी बहुस्त्रिकः (स्त्र्यधिकांगनः)
पुत्रवान्धनवान् श्रीमान् नरो भाद्रपदे भवेत् ॥ ६ ॥

आश्विने च नरो जातो विद्वान् भूपप्रियो भवेत् ॥
बहुभृत्यः स्त्रिया युक्तो बह्वपत्योऽल्पजीवितः ॥ ७ ॥

वाचालो बहुबुद्धिश्च कुंचिताग्रालकोऽलसः ॥
कार्तिके जायते नित्यं ब्रह्मचर्यरतो भवेत् ॥ ८ ॥

---

[1] अत्र द्वितीयः श्लोकः कोशे नास्ति । स च वसंतर्तुजातनरगुणवर्णनपरः ।
[2] अत्र हेमन्तभवनरगुणवर्णनपर एकः श्लोकः, तथा चैत्रमासादाश्रावणमासं पंचमासभव पुरुषगुणवर्णनपराः पंच श्लोकाश्च मूलकोशे न सन्ति ।

तीर्थयात्रारतो नित्यं मन्त्रदीक्षापरायणः ॥
मार्गमासे (शीर्षे) भवेन्मर्त्यः सदा शास्त्रार्थकोविदः ॥ ९ ॥

पुष्यमासे समुत्पन्नो नरो दुः [ख] प्रदो भवेत् ॥
सर्वरोगयुतो नित्यं पापमार्गरतः खलः ॥ १० ॥

योगीश्वरस्तपोनिष्ठो वेदवेदांगपारगः ॥
शान्तो दयान्वितो दक्षो नरो माघे प्रजायते ॥ ११ ॥

सुकुमारः सदा भोगी कामी स्त्रीवल्लभः सुखी ॥
फाल्गुने जायते बालो गजाश्वनरभूषणः ॥ १२ ॥

॥ इति मासफलाध्यायः षष्ठः ॥

## ॥ अथ पक्षफलाध्यायः सप्तमः ॥

शुक्लपक्षे नरो जातो दीर्घायुः पुत्रवान् भवेत् ॥
बहूनां पालको दाता सुहृन्मानी प्रियाजितः ॥ १ ॥

अलसो मलिनो द्वेषी निंदको ग्राम्यदूषणः ॥
कृष्णपक्षे भवेन्मर्त्यः सर्वधर्मबहिष्कृतः ॥ २ ॥

॥ इति पक्षफलाध्यायः सप्तमः ॥

## ॥ अथ तिथिफलाध्यायोऽष्टमः ॥

[१]प्रतिपद्दिवसे जातस्त्रिदिनं च त्रिमासकं ॥
जीवितः स (स्या) न्महातेजा वर्षाशीतिचिरायुषः ॥ १ ॥

द्वितीयादिवसे जातो नरः सत्यवचा भवेत् ॥
जनानन्दकरः श्लाघ्योस्व (घ्यःस्व) कर्मनिरतः सदा ॥ २ ॥

१ अशीतिवत्सरेभ्यः परं मासत्रयं दिनत्रयं च जीवितः स्यादिति भावः

तृतीयायां नरो जातः स्त्रीलोलः कृपणश्चलः ॥
व्रतोपवासनिरतो मूर्खो वादी बलान्वितः ॥ ३ ॥

चतुर्थ्यां तु नरो जातो लुब्धः पिशुनवाक् भ (न्भ) वेत् ॥
चंडः साहसिकः शूरश्चलचित्तः सुखान्वितः ॥ ४ ॥

पंचम्यां तु नरो जातो मानी दीर्घायुषो भवेत् (रन्वितः) ॥
महामतैः (तिः) स्थिरः शूरः सत्यवादी जितेन्द्रियः ॥ ५ ॥

षष्ठ्यां चैव नरो जातो व्रणांकिततनुः स्थिरः ॥
स्त्रीलोलुपोऽतिसुभगो विद्याकीर्तिपरो भवेत् ॥ ६ ॥

सप्तम्यां जायते मर्त्यो धनवान्गुणवान्भवेत् ॥
गुरुदेवार्चनपरः सदाचारो दृढव्रतः ॥ ७ ॥

अष्टम्यां तु नरो जातः स्वदारनिरतो भवेत् ॥
बहुभाषोऽतिचपलो (ल) चित्तोऽतीवर (च) निष्ठुरः ॥ ८ ॥

कामलुब्धो महाशूरो गीतनृत्यरतस्तथा ॥
शत्रुघ्नश्च महाक्रोधी नवम्यां जायते नरः ॥ ९ ॥

दशम्यां तु नरो जातः स्त्रीजितोऽस्त्रव्रणांकितः ॥
शुचिरत्यन्तसुभगश्चलचित्तो महामतिः ॥ १० ॥

एकादश्यां च जनि (संभू) तो लोकव्यापारकोविदः ॥
कालशास्त्रेऽतिकुशलः सत्यवादी दृढव्रतः ॥ ११ ॥

द्वादश्यां च नरो जातः सदाचारोऽतिदुःसहः ॥
सुभगो रतिलोलश्च वस्त्रभोजनतत्परः ॥ १२ ॥

त्रयोदश्यां नरो जातः स्त्रीजितो ज्ञानवान् भवेत् ॥
व्रतोपवासनिरतः स्वशत्रुर्मतिमान् गुणी ॥ १३ ॥

चतुर्दश्यां नरो जातः सुशुद्धः सर्वकर्मसु ॥
बुद्धिमान्व्रतनिर्मुक्तस्सदा बंधुरतो भवेत् ॥ १४ ॥

पौर्णमास्यां नरो जातः पूर्णांगः सुथिरो भवेत् ॥
सदा हृष्टमनाः कामी सुभगोऽतिरणान्वितः ॥ १५ ॥

अमायां तु नरो जात इन्द्रियार्तिग (यु) तः सुखी ॥
सुभगमे बलहीनश्च वित्ते [न] बहुनाऽऽकुलः ॥ १६ ॥

॥ इति तिथिफलाध्यायोऽष्टमः ॥

## ॥ अथ वारफलाध्यायो नवमः ॥

स्थिरः प्रचंडः शूरस्तु रक्तश्यामतनुः शुचिः ॥
पित्ताधिकोऽतिचतुरो जायते सूर्यवासरे ॥ १ ॥

सोमवारे नरो जातः सात्विकः क्षयवृद्धिमान् ॥
ह्रस्वकायोऽतिगौरश्च पृथुवक्षाः सुबुद्धिमान् ॥ २ ॥

क्षत्रवृत्तिसमायुक्तो जनयेद्भौ (जायते भौ) मवासरे ॥
रक्तायताक्षो लोलश्च वाग्यतो मधुरोऽक्षमी ॥ ३ ॥

निपुणोऽतिवृत्तशिरःपादश्चैव तथा कविः ॥
रूपवान्मतिचापल्यो जनितो (जायते) बुधवासरे ॥ ४ ॥

सुधीः सद्ब (न्ब) हुलोकहः (ज्ञः) कालशास्त्रविदुः (दा) शुचिः ॥
प्रगल्भो (भः) कुशलो धीरः संभवेद्गुरुवासरे ॥ ५ ॥

प्रकृष्टकार्यः सुमतिर्जातः शुक्रस्य वासरे ॥
सुधीः सद्वक्त (द्वाक्ति) लोकज्ञः कलाशास्त्रविदः (दा) शुचिः ॥ ६ ॥

रूक्षदुर्बलदेहश्च मलिनोऽतिचलः खलः ॥
रौद्र (द्रः) क्रोधपरो नित्यं जनितः (जायते) शनिवासरे ॥ ७ ॥

॥ इति वारफलाध्यायो नवमः ॥

---

## अथ नक्षत्रफलाध्यायो दशमः

### होराप्रदीपे

विभूषणेप्सुर्मतिमान् शशांके
दक्षः सुरूपस्सुभगोऽश्विनीषु ॥
दक्षः शुचिः (सुखी) सत्यवचा भरण्यां
भवेदरोगः कृतनिश्चयः स्यात् ॥ १ ॥

स्यात्कृत्तिकास्वन्यकलत्रगामी
प्रभूतरु (भु) क् ख्यातियुतः सुतेजाः ॥
प्रजे (जा) पतेर्भे प्रियवाक् सुरूपः
शुचिः सदा (स्थिरः) सत्यवचाः शशांके ॥ २ ॥

उत्साहभोगार्थयुतो मृगांके
भीरुः पटुः स्याच्चतुरश्चलश्च ॥
शठः खलः पापरतः कृतघ्नो
हिंस्रोऽतिगर्वः शिवभे शशांके ॥ ३ ॥

दांतः सुशीलः सु (कु) मतिः पिपासुः
सु (स) ग्रुक् सुखी चादितिभेऽल्पतुष्टः ॥
स्यात्पंडितः शान्तमनाः शशांके
सौभाग्यधर्मार्थियुतश्च पुष्ये ॥ ४ ॥

धूर्तः शठः पापरतः कृतघ्नः
स्यात्सर्वभक्षो भुजगर्क्षसंस्थे ॥
चंद्रे मघासूद्यमभोगभृत्य
धनान्वितः स्यात्पितृदेवभक्तः ॥ ५ ॥

प्रियंवदो भूपतिसेवकश्च
दाता नरः कान्तियुतो भगर्क्षे ॥
विद्यार्थयुक्त सुखभोगभागी
सौभाग्ययुक्तोऽर्यमभे शशांके ॥ ६ ॥

चोरो घृणी पाप (न) रतोऽतिधूर्त (धृष्ट)
उत्साहवान् शीतकरे करस्थे ॥
चित्रासु चित्रांबरमाल्यधारी
सुलोचनांगः पुरुषश्च जातः ॥ ७ ॥

दाता (दांतः) कृपालुः प्रियवाग्धनी (वणिक्) च
धर्माश्रितः शीतकरेऽनिलर्क्षे ॥
ईर्ष्युर्नरः कांतियुतोऽतिलुब्धो
द्विदैवते वाक्चतुरः कुलेप्सुः (कलीप्सुः) ॥ ८ ॥

विदेशवासी धनवान् क्षुधालुः
चंद्रेऽनुराधास्वटनो नरः स्यात् ॥
ज्येष्ठासु संतोषरतोऽतिकोपो
न भूरिमित्रो निरतश्च धर्मे ॥ ९ ॥

सुखी न हिंस्रो धनमानभोग
युतः स्थिरो मूलगते शशांके ॥
व्य (अ) भीष्ट (ष्टि) तानंदकलत्रमानो
नरोऽबुदैवे दृढसौहृदश्च ॥ १० ॥

वैश्वे विनीतो बहुमित्रधर्म
युतः कृतज्ञः सुभगः शशांके ॥
उदारधीरः श्रुतवान्धनी च
श्रीमान् प्रसिद्धः श्रवणे नरः स्यात् ॥ ११ ॥

दातार्थ (ति) शूरो धनवास्वरो (भो) गी
र (गी) त प्रियो वासवभे प्रजातः ॥
स्यात्स्पष्टवाक् साहसिकोऽबुपर्क्षे
दुर्ग्राह्य इंदौ व्यसनी जितारिः ॥ १२ ॥

उद्विग्नचित्तो धनवांस्त्वरोगी (न्पटुश्च)
अजांघ्रिके जी (स्त्री) विजितस्त्वदाता ॥
वक्ता प्रजावान् सुमु (सु) खो मृगांकेऽ
हिर्बुध्न्यभे धर्मरतो जितारिः ॥ १३ ॥

संपूर्णदेहः सुभगोऽतिशूरः
शुचिर्धनी पौष्णगते शशांके ॥
विज्ञेयमेतन्निरुपद्रवे भे
फलं बलिष्ठे रजनीपतौ च ॥ १४ ॥

॥ इति नक्षत्रफलाध्यायो दशमः ॥

---

## ॥ अथ नक्षत्रचरणफलाध्याय एकादशः ॥

अश्विन्याः प्रथमे पादे जातो भवति तस्करः ॥
द्वितीये चाल्पकर्मा च तृतीये सुभगो भवेत् ॥ १ ॥

पादे चतुर्थके भोगी दीर्घायुर्जायते नरः ॥
त्यागी याम्याद्यपादे स्याद्द्वितीये धनवान्सुखी ॥ २ ॥

तृतीये क्रूरकर्मा च चतुर्थेऽसौ दरिद्रभाक् (कः) ॥
वह्न्यृक्षप्रभवं (वो) बालं ते (लस्ते) जिष्ठं (ष्ठः) प्रथमांशके ॥ ३ ॥

द्वितीये शास्त्रविज्ञानं तृ (नस्तृ) तीये शौर्यभाग्भवेत् ॥
दीर्घायुर्बहुपुत्रश्च चतुर्थे चरणे भवेत् ॥ ४ ॥

सौभाग्यं च तथा पीडा भीरुत्वं सत्यवादिनं (ता) ॥
रोहिणीसंभवस्यैव (वं) फलं पादचतुष्टये ॥ ५ ॥

नृपतिस्तस्करो भोगी धनधान्यसमन्वितः ॥
क्रमेण मृगशीर्षस्य फलं पादचतुष्टये ॥ ६ ॥

रौद्रर्क्षप्रभवो बालः (लो) भवेत्पादचतुष्टये ॥
व्ययी दरिद्री (द्र) स्वल्पायुस्तस्करस्तु यथाक्रमं ॥ ७ ॥

पुनर्वसुभवो बालो (लः) सुखी विद्वान् रुगान्वितः ॥
मृदुभाषी भवेन्नित्यं क्रमात्पादचतुष्टये ॥ ८ ॥

दीर्घायुस्तस्करो भोगी बुद्धिमान् जायते नरः ॥
क्रमात्पादचतुर्णो (ष्के) तु पुष्यस्य च प्रकीर्तनात्
(नक्षत्रसंभवः) ॥ ९ ॥

अप्रजाः परकार्य [श्च] रोगी च सुभगो भवेत् ॥
सार्पर्क्षांघ्रिचतुर्जातो गंडांते चाल्पजीवितः ॥ १० ॥

मघापादचतुर्जातश्चापुत्रः पुत्रवान् भवेत् ॥
तीव्ररोगी पंडितश्च जायते नात्र संशयः ॥ ११ ॥

[1]समर्थो धार्मिको राजा रोगी क्रूरोऽल्पजीवितः ॥
पूर्वा (र्व) फल्गुनिजातस्य फलं पादचतुष्टये ॥ १२ ॥

उत्तराफल्गुनीपादचतुर्णो तद्भवस्य च (ष्टयभवः क्रमात्) ॥
पण्डितः पृथिवीपालो विजयी धार्मिको भवेत् ॥ १३ ॥

हस्ते जातो यदा बालः शूरो वादी च रोगवान् ॥
[2]धनधान्ययुतः श्रीमान् फलं स्यात्प्रथमांघ्रितः ॥ १४ ॥

चित्रायां प्रथमात्पादात्फलं जातस्य कथ्यते ॥
चोरश्चित्रकरः स स्यात् प(पा)रदारी च पीडितः ॥ १५ ॥

---

१ समर्थो धार्मिक इति पदद्वयं राज्ञो विशेषणं । २ धनधान्ययुतः श्रीमान् इति चतुर्थपादफलं ।

स्वात्याद्यपादतो पुत्रसंभवस्य फलं क्रमात् ॥
तस्करो (रा) ऽल्पायुषी (षौ) धर्मी नृपतिः स्यान्न संशयः ॥ १६ ॥

विशाखाजातपुत्रस्य फलं पा [द] चतुष्टये ॥
नीतिज्ञः शास्त्रवेत्ता च वाग्मी दीर्घायुषो भवेत् (रेव च) ॥ १७ ॥

तीव्रो धर्मकरो दीर्घजीवी पुंश्चल्यसं (लिका) युतः ॥
अनुराधाद्यपादादिजातस्य च क्रमादथ (यथाक्रमं) ॥ १८ ॥

क्रूरो भोगी च विद्वांश्च पुत्रवां (वा) [न्] जायते नरः ॥
ज्येष्ठाद्यपादचतुष्के स्या ज्जातस्य च फलं क्रमात् ॥ १९ ॥

मूलाद्यपादजातस्य नरस्य च फलं क्रमात् ॥
भोगी त्यागी सुमित्रश्च नृपतिर्जायते नरः ॥ २० ॥

पूर्वाषाढाद्यपादादिजातस्य च क्रमादयं (यथाक्रमं) ॥
श्रेष्ठो राजा प्रियंवादी धनी भवति निश्चितं ॥ २१ ॥

उत्तराषाढजातस्य फलं पादचतुष्टये ॥
नृपो मित्रविरोधी च मानी धर्मरतो भवेत् ॥ २२ ॥

शुभमानी शुभगुणो विद्वांश्च धा (द्वान्सद्धा) र्मिको भवेत् ॥
श्रवणस्य चतुष्पादजातस्य च फलं क्रमात् ॥ २३ ॥

दीर्घायुः पीडितो भीरुर्महानारीवरो भवेत् ॥
धनिष्ठाप्रथमात्पादादुत्पन्नस्य यथाक्रमं ॥ २४ ॥

शतभिषक्प्रथमांशौ च वाग्मी श्रीमान् द्वितीयके ॥
सुखी तृतीयके पादे चतुर्थे पुत्रवान् भवेत् ॥ २५ ॥

शूरश्चोरो महाबुद्धिः पौ (पु) रो भो (भा) गी भवेन्नरः ॥
पूर्वा (र्वे) भाद्रपदापादचतुष्कैः क्रमशः फलं ॥ २६ ॥

अ (अ!) हिर्बुध्न्ये क्रमात्पादचतुष्के संभवात्फलं ॥
राजा च तस्करश्चैव पुत्रवांश्च सुखी भवेत् ॥ २७ ॥

ज्ञानी च तस्करो युद्धे जयी च क्लेशभाग्भवेत् ॥
क्रमात्पादचतुष्कस्य रेवत्यां जायते फलं ॥ २८ ॥

विनीतो धर्मशीलश्च सत्यवादी जितेंद्रियः ॥
विद्याऽव्यसनशीलश्च जायते प्रथमांशके ॥ २९ ॥

उत्पन्नविभवो भोक्ता संग्रामेष्वपराजितः ॥
नीतिज्ञः प्रमदासक्तो द्वितीये जायतेंऽशके ॥ ३० ॥

उत्पन्नभोगभोक्ता स्यात्सर्वशास्त्रविशारदः ॥
स्वकर्मप्रमदासक्तस्तृतीये जायतेंऽशके ॥ ३१ ॥

स्त्रीजितश्चानपत्यश्च मायासक्तो नपुंसकः ॥
वीरविद्याविचारज्ञश्चतुर्थे जायतेंऽशके ॥ ३२ ॥

॥ इति श्रीसकलागमाचार्यश्रीनृसिंहदैवज्ञविरचिते
जातकसारे नक्षत्रचरणफलाध्यायः एकादशः ॥

---

## अथ योगफलाध्यायो द्वादशः

कान्तो [१]बन्धुरतस्त्रीषु (णां) परदाररतस्तथा ॥
दक्षश्च सर्वकार्येषु विष्कंभे जायने नरः ॥ १ ॥

---

१ स्त्रीणां बन्धुषु रतः इति योजना।

मार्गे रतः प्रियवचा धनधान्यगुणान्वितः ॥
प्रगल्भमानसंतुष्टः सुस्त्रीकः प्रीतिजन्मकः ॥ २ ॥

गीतिज्ञः स्थिरवित्तश्च बहुदः कृत्यतत्परः ॥
आयुष्ये जनितो (जायते) बालः सर्वभोगसमन्वितः ॥ ३ ॥

बहुवाक्यः शुभधनो निर्गुणः शुभवाक् सुधीः ॥
गन्धप्रियोऽतिसुभगः सौभाग्ये जनितो (जायते) नरः ॥ ४ ॥

मतिमांश्च गुणाढ्यश्च शोकयुक्तसुतौ (तो) भवेत् ॥
शोभने च नगे जातो धौतचित्तस्सुनिर्मलः ॥ ५ ॥

परापवादी शूरश्च सत्ययुक्तश्च धर्मवित् ॥
परदाररतः कामी चातिगंडे च युञ्य (जाय) ते ॥ ६ ॥

दक्षश्च सर्वकार्येषु धनधान्यगुणान्वितः ॥
व्यापारकुशलो नित्यं सुकर्मणि नरो भवेत् ॥ ७ ॥

गंधपियो धनाढ्यश्च परवादी सदाऽलसः ॥
परदाररतो नित्यं धृतियोगे च जायते ॥ ८ ॥

सत्वयुक्तश्च सत्कर्मगुणवान्भाग्यतोऽपिहि (भागपि) ॥
शूलयोगे नरो जातः शूलवान् जायते ध्रुवं ॥ ९ ॥

वाचालोऽपि महीसत्यो गंभीरो गर्वितो भवेत् ॥
सुष्ठुः (श्रेष्ठः) सुशुभवान् गंडे नरो जातः समाहितः ॥ १० ॥

महामतिः स्थिरः शूरः सत्यवादी जितेंद्रियः ॥
वृद्धियोगे नरो जातो दृढवाक्यो महाबलः ॥ ११ ॥

धूर्तकार्यं सदा कर्ता शत्रुपीडाविवर्जितः ॥
ध्रुवयोगे नरो जातो दृढवाक्यो महामतिः ॥ १२ ॥

मूर्खश्च मलिनश्चित्रकर्मण्यभिरतः सदा ॥
निष्ठुरोऽथ महागर्वी व्याघाते जायते नरः ॥ १३ ॥

कुलटः सत्वसंपन्नो मृदुवाचो महाबलः ।
कृषिकर्ता भवेन्नित्यं हर्षणे जायते नरः ॥ १४ ॥

अदाता च धनाढ्यश्च कृपणो ग्राम्यभाषणः ॥
क्रूरश्चाक्षीणपापश्च वज्रयोगे प्रजन्मनः (जायते) ॥ १५ ॥

भोक्ता च धनवांश्चैव जायते स्वल्पवा (जयत्यरिगणा) न्सुखी ॥
सुसिद्धः सत्यरक्तश्च सिद्धियोगे प्रजन्मनः (जायते) ॥ १६ ॥

अस्थिरः सर्वरहितो मंत्री याचनतत्परः ॥
कलत्रहीनो मूर्खश्च जनिता व्यतिपातके ॥ १७ ॥

बहुपूज्यो धनाढ्यश्च स्वकर्मनिरतो भवेत् ॥
जनानंदकरः श्लाघी वरीयसि नरः स्मृतः ॥ १८ ॥

दानवृत्तिर्दुराचारः सुलुब्धः साहसश्च (सी च) लः ॥
मदनो मद (न्माद) युक्तश्च परिघे सु (सं) प्रजायते ॥ १९ ॥

तीर्थयात्रारतो नित्यं धनवान्पुत्रवान्भवेत् ॥
ब्रह्मचर्यरतो नित्यं शिवयोगे प्रजन्मनः (गससुद्भवः) ॥ २० ॥

विविधछन्नमंत्री च सर्वव्यापारकोविदः ॥
सुचित्तो नीतिवां (मां) श्चैव सिद्धि (द्ध) योगे प्रजायते ॥ २१ ॥

विविधःव्यवसायी च स्वामिभक्तो महामतिः ॥
गन्धप्रियो महोदारः सुसाध्यः साध्यजन्मनः (कः) ॥ २१ ॥

सत्यवाक् सुभगो धर्मी क्रोधहीनः सुनिर्मलः ॥
प्रागतः प्रियकारी च सु (शु) भयोगे प्रजन्मनः (जायते) ॥ २३ ॥

सत्यवाक् सुमतिः कांतः ख्यातिवा (मा) न् श्रुतिपारगः ॥
कलाशास्त्रेषु कुशलः शुक्लयोगे प्रजन्मनः (जायते) ॥ २४ ॥

प्रियवाक्यो महासत्यो ब्रह्मण्यो ब्राह्मणप्रियः ॥
प्रगल्भो निर्मलो धीरो ब्रह्मयोगे प्रजन्मनः (जायते) ॥ २५ ॥

ऐन्द्रयोगे नरो जातो विजयी धनिको भवेत् ॥
प्रभूतः (भावी) सर्वकार्येषु ध (मा) नी ख्यातः पियंवदः ॥ २६ ॥

लुब्धः पिशुनवित्त (पैशुन्ययुक्त) श्च बहुभाषणतत्परः ॥
प्रथमे च (मश्च) ल वित्तश्च (चित्तेषु) योगे वैधृतिजन्मनः
(के नरः) ॥ २७ ॥

॥ इति योगफलाध्यायो द्वादशः ॥

---

## अथ करणफलाध्यायस्त्रयोदशः

अतः परं प्रवक्ष्यामि करणानां च जातकं ॥
शृणु कश्यप यत्नेन यशो (थो) वाच प्रजापतिः ॥ १ ॥

मदतीव्र उदाराढ्यः सुखबान्धववर्जितः ॥
बवाख्ये करणे जातः सेनापालो भवेच्चलः ॥ २ ॥

सुधीरः सुभगस्त्यागी बाललीलारतः सुखी ॥
बालवेऽयं (र्वे) दिने जातः बालकर्मरतः सदा ॥ ३ ॥

प्रसूतः कौलवे यस्तु कौतुकानन्दवर्धनः ॥
पापकर्मरतः सौम्यः प्रच्छन्नः कौलवेयकः ॥ ४ ॥

साधकः सत्यसपन्नः स्थिरश्चंडः प्रतापवान् ॥
तापसो मलिनस्तु (स्तूक्तः) जातस्तैतिलके नरः ॥ ५ ॥

मन्त्रविन्नीतिमान्दक्षो दुर्बलो बहुभाषणः ॥
चपलो विग्रहरतो गराख्ये जायते नरः ॥ ६ ॥

नानापण्यविशेषज्ञो वणि (णिं) कर्माऽभिजीवकः ॥
वणिजाख्ये नरो जातो वणिग्वृत्ति (त्तिः) सदा भवेत् ॥ ७ ॥

क्रूरः साहसिकश्चंडः पापकर्मरतश्चलः ॥
प्रभूतः (भावी) सर्वकार्येषु विष्टयाख्ये च प्रजन्मनः (जायते) ॥ ८ ॥

[1]सद्योयोगकरः शान्तः सदाभ्रामी महामतिः ॥
शकुन्याख्ये नरो जातः शकुनज्ञो विशेषतः ॥ ९ ॥

कृषिवाणिज्यकारी च सदुद्योगी गतक्लमः ॥
वि (नि) रालसः (स्यः) सत्वयुक्तो जातश्चैव चतुष्पदे ॥ १० ॥

नानाधातुविशेषज्ञः स्वकर्मगुणवान् भवेत् (महान्) ॥
नागाख्ये करणे जातो नागानां पालको भवेत् ॥ ११ ॥

---

१ सद्योयोगः. आकस्मिकधनलाभकारणीभूतो योगो वाजिद्यूतादिः, तस्य करः कर्ता इत्यर्थः । सदाभ्रामी सर्वदा लोकसंचारीत्यर्थः ।

किंचिद्धर्मरतो नित्यं किंचित्पापरतो भवेत् ॥
किंचिद्रोगार्दितो देहे किंस्तुघ्ने जायते नरः ॥ १२ ॥

॥ इति करणफलाध्यायस्त्रयोदशः ॥

---

## अथ योनिफलाध्यायश्चतुर्दशः

[1]चपलश्चंचलः पुष्टः शीघ्रगामी रणप्रियः ॥
अश्वियोनौ तु संजातो बलवान्स्त्र (स्वा) मिवल्लभः ॥ १ ॥

मन्दगामी बलाढ्यश्च बह्वाशी राजवल्लभः ॥
सत्यवाक् ज्ञानवांश्चैव गजयोनौ भवेन्नरः ॥ २ ॥

दुर्घटं दुर्लभं स्थानं भेदयत्यविशंकितः ॥
अजायोनिषु जातोऽसौ बहुवृद्धिप्रदो भवेत् ॥ ३ ॥

दर्शनं भीतिदं नित्यं फ [९टा] टोपेन वर्तते ॥
परवेश्मोपहारी च सर्पयोनौ प्रजायते ॥ ४ ॥

सर्वभक्षी (क्षो) वृथावादी दूतः स्वामिरतो हितः ॥
अरण्ये दुःसहो वीरः शुनो यौनो भवेन्नरः ॥ ५ ॥

पिंगाक्षः सर्वभक्षी च (क्षश्च) चपलो हर्षकारणः ॥
मार्जारयोनिसंजातो वृथाकोपी भयान्वितः ॥ ६ ॥

धूर्तः स्वकार्यनिरतः परकार्यविनाशकः ॥
शत्रूणां मूलविच्छेत्ता नरो मूषिकयोनिजः ॥ ७ ॥

---

१ चपलः विपयाभिलाषयुतः चंचलः स्थिरबुद्धिविधुरः ।

गोधनैर्बहुभिर्युक्तः क्षीराहारोऽतिसुन्दरः ।
[जातः] परोपकर्ता च पशुयोनौ भवेन्नरः ॥ ८ ॥

मन्दगामी स्थूलतनुः ब (नुर्बे) ह्वाशी बलवान्धनी ॥
बहुक्षीराज्यभोगी च महिषीयोनिसंभवः ॥ ९ ॥

कृतांतः सर्वभक्षी च (क्षश्च) विद्यावान् कुशलो नरः ।
व्याघ्रयोनौ भवेन्नित्यं दर्शनाद्भयदो महान् ॥ १० ॥

गीतवाद्यप्रियो नित्यं सुन्दरश्चारुदर्शनः ।
मृगयोनिर (ग) तो धूर्तो मृगयोनौ रतो भवेत् ॥ ११ ॥

पिङ्गाक्षश्चपलोऽरण्यगामी फलभुजो भवेत् (स्यात्फलभक्षणः) ।
न विश्वासं व्रजेत्कैश्चित्कपियोनिसमुद्भवः ॥ १२ ॥

[1]चारुदर्शनकार्यार्थिसादरः........................... ।
बिलवासी चिरायुः स्यान्नरो नकुलयोनिजः ॥ १३ ॥

महाबली च (लश्च) पिंगाक्षः कृशमध्यो भयानकः ।
सिंहयोनिप्रजातस्तु सर्वभक्षणकृद्भवेत् ॥ १४ ॥

॥ इति योनिफलाध्यायश्चतुर्दशः ॥

---

## अथ गणफलाध्यायः पञ्चदशः

गुरुदेवद्विजातीनां भक्तः शास्त्रविमर्शकः ।
देवतासदृशो मूर्तौ जातो देवगणे नरः ॥ १ ॥

---

१ अत्र श्लोके पूर्वार्धे ग्रंथपातो दृश्यते । स च भागः “ चारुदर्शनरूपोऽयं देवकार्यकृतादरः ” इति पूरणीयः ।

तामसः पापकृत्क्रोधी गर्विष्ठः कलहप्रियः ।
निष्ठुरश्छन्नपापश्च गणे स्याद्राक्षसे नरः ॥ २ ॥

अन्नदाता धनाढ्यश्च प्रजावान्देवपूजकः ।
मनुष्यर्क्षे नरो जातो वरस्त्रीसुखभोगकः ॥ ३ ॥

॥ इति गणफलाध्यायः पञ्चदशः ॥

---

## अथ दिवारात्रिफलाध्यायः षोडशः

तेजस्वी पितृसदृशः चा (संकाशश्चा) रुदृष्टिर्नृपप्रियः ।
बन्धुपूज्यो धनाढ्यश्च दिवा जातो न सशयः ॥ १ ॥

मन्दहक् बहुकामार्तः क्षयरोगी मलीमसः ।
क्रूरात्मा छन्नपापश्च निशि जातो भवेन्नरः ॥ २ ॥

॥ इति दिवारात्रिफलाध्यायः षोडशः ॥

---

## अथ दृग्गणितैक्यसंस्थापनाध्यायः सप्तदशः

अथ जन्मकालिकोऽहर्गणः, मध्यस्पष्टग्रहा [श्च] लेख्याः । जन्मकुण्डली लेख्या, लग्न द्रेक्काण नवांशकुंडली च, चंद्रराशिनवांशकुंडली [च] ॥

उक्तं च—

जातकादिषु सर्वत्र ग्रहैर्ज्ञानं प्रजायते ।
तस्माद्गणितदृक्तुल्या (दृक्तुल्यगणिता), स्वतंत्रात्साधयेद्ग्रहान् ॥ १ ॥

विवाहे जातके यात्राप्रश्नवास्तुव्रतादिषु ।
ज्योतिःशास्त्रात्फलं सर्वं प्रस्फुटद्युचराश्रयात् ॥ २ ॥

तत्तु सम्यक्प्रकारेण प्रवक्तुं नैव शक्यते ।
सिद्धांतानां तु सर्वेषां साम्यता(म)स्ति मिथो यतः ॥ ३ ॥

प्रत्यक्षसमयाच्चैने येन पक्षेण यत्र वै ।
स्फुटं दृक्तुल्यतां यान्ति तेन सर्वविनिर्णयः ॥ ४ ॥

**ज्योतिर्विवरणे—**

यात्रोद्वाह प्रभृतिषु फलं स्पष्टखेटाश्रयं यत्
तस्मात्त त्साधन इह बुधैर्भाषितेऽपि क्वचित्ते ॥

स्पष्टा न स्युः परमपुरुषांशाश्चला लक्ष्यचारा
स्तस्मात्साध्या बहुविधमतैर्नैकपक्षाभिमानः ॥ ५ ॥

**तथा च वसिष्ठः—**

यस्मिन्पक्षे यत्र काले येन दृग्गणितैक्यकं ।
दृश्यते तेन पक्षेण कुर्यात्तिथ्यादिनिर्णयं ॥ ६ ॥

**सौरभाष्येऽपि—**

संसाध्य स्पष्टतरं बीजं नलिकादियंत्रेभ्यः ।
तत्संस्कृतास्तु सर्वे पक्षाः साम्यं भजंत्येव ॥ ७ ॥

**ब्रह्मसिद्धांतेऽपि—**

ध्यानग्रहोपदेशाद्बीजं ज्ञात्वा च दैवज्ञैः ।
तत्संस्कृतग्रहेभ्यः कर्तव्यौ निर्णयादेशौ ॥ ८ ॥

**ज्योतिर्विवरणे—**

[1]पैतामहादयः पुण्यक्रियाकालविनिर्णये ।
सद्यंत्रैर्जनुषः कालदृक्तुल्यगणितात्खगाः ॥ ९ ॥

[2]किं तेनापि सुवर्णेन कर्णघातं करोति यत् ।
तथा किं तेन शास्त्रेण यत्र प्रत्यक्षतः स्फुटं ॥ १० ॥

**वासिष्ठे—**

इत्थं मांडव्य संक्षेपादुक्तं शास्त्रमथोऽत्तमं ।
विस्तरं रविचंद्राद्यैर्भविष्यति युगे युगे ॥ ११ ॥

**दामोदरपद्धतौ—**

यांति संसाधिताः खेटाः येन दृग्गणितैकतां ।
तेन पक्षेण ते कार्याः स्फुटास्तत्समयोद्भवाः ॥ १२ ॥

इति दृग्गणितैक्यसंस्थापनाध्यायः सप्तदशः

---

## अथ चंद्रराशिफलाध्यायोऽष्टादशः

अथ मेषराशिफलम्

[3]पित्ताधिको रक्तगौरो गुर्वीरेद्ध (न्द्ध) हि कार्यकृत् ॥ १ ॥

---

१ पुण्यक्रियाकालविनिर्णये पैतामहादयः सिद्धान्ताः उपयुक्ताः । तेषु सद्यन्त्रैर्नलिकादिभिः साधिताज्जन्मकालीनदृक्तुल्यगणितात्खगाः साध्याः इति भावः २ यत् सुवर्णं कर्णघातं करोति तेन सुवर्णेन किं प्रयोजनं इत्यपि इति काकुः । प्रयोजनमस्त्येवेति यावत् । कर्णघातकारित्वेन दुःखदमपि सुवर्णं यथा कर्णभूषणं भवति तथा बहूपपत्त्यादिज्ञानसाध्यतया कष्टतरमपीदं शास्त्रं प्रत्यक्षप्रमाणसाम्यवत्तया कर्णभूषणायितमिति भावः । किं तेन शास्त्रेणेत्यत्रापि काकुः । ३ अत्र श्लोकार्धं पतितमिति भाति ।

सगोश्वमहिषश्चात्मकार्यालस्य [1](स्यः) परोऽद्यमी ।
[2]कन्यामिथुनपुंभिन्नमित्रो बहिष्ट उद्य(द्य)मी ॥ २ ॥

आषाढफाल्गुनोर्जेषु न सौख्यं (सुखी) नृपमानयुक् ।
विकफो मस्तके पीडा हानिर्विंशति २० वत्सरे ॥ ३ ॥

षड्विंशेऽ२६ब्दे पुनःस्याद्यास्त्रिंशेऽ३ ब्दे ज्वरशस्त्रभीः ॥
पंचा [ब्ध्य] ब्दे स्व(ख)पंचाब्देऽ ४५-५० ल्पमृत्युः
पंचपंचके ५५ ॥ ४ ॥

## सोमकाक (इति रोमक) मतं ॥

विश्वैकसप्तमे १३-७ (१३-१-७) वर्षे ज्वरी त्र्यर्केऽषुभिर्नृपे
३-१२ (३-१२-५-१६) ।
रदे ज्ये(त्य)ष्टा ३२-१७ वल्पमृत्युस्ते(त्त)त्वे [२५] ऽपत्यविनाशनं
॥ ५ ॥

[3]शिरोव्रणी वातरोगी कुतस्वी (नखी) मेषजो भवेत् ॥ ६ ॥

## इति जन्मप्रदीपे ॥

[4]चतुर्थाद्याष्टमेऽब्दे वा ४-१-८ मासे वाहनि पीडितः ॥ ७ ॥

त्र्यर्के ३-१२ सिद्धे २४ विषांबूत्थैःकर्णशूलैर्व्रणैस्तथा ।
अल्पभुक्ताम्रनेत्रश्च करमत्स्यतिली क (कि) ये ॥ ८ ॥

॥ इति मेषराशिफलम् ॥

---

१ आत्मकार्यविषये आलस्ययुतोपि परकार्यविषये उद्योगयुत इत्यर्थः ।
२ कन्यामिथुनराशिजातपुरुषभिन्ना मित्राणि भवन्त्यस्येति भावः । उद्यमी सदा संचारपर इति भावः । ३ अत्र श्लोकार्धं लुप्तं ४ अत्र श्लोकार्धं लुप्तं

## अथ वृषभराशिफलम्

स्थूलश्च दीर्घबाहुश्च विस्फोटाः सर्वसंधिषु ।
वातश्लेष्माधिकः शूली वित्सिताक्र्यहि कार्यकृत् ॥ ९ ॥

[1]रवौ न सन्म्लेच्छभावो व्यवसायश्च मध्यमैः ।
गुल्मार्शश्वासकासाढ्य [2]आमरोगैः प्रपीडितः ॥ १० ॥

औषधं कटु तीक्ष्णं सन्न गौल्यं [3](गव्यं) मधुरं तथा ।
[4]आरामकृषिवाणिज्य उ(ज्यान्यु)च्चघातः परैर्मुदः ॥ ११ ॥

जान्वा(न्वो)र्घातो मध्यमानः शृंगारी नेत्ररुक्तथा ।
कंठोदरव्रणी गन्धलाभो (भी) मिष्टान्नभुक्तथा ॥ १२ ॥

द्व्यब्धिपंचनगैर्वर्षैर्धृत्यब्दे २-४-५-७-१८ पीडितो भवेत् ।
दंते ३२ वेदाब्धिभि ४४ श्चत्वारिंशता ४० [5] हानि रोगवान् ॥ १३ ॥

स्त्रीप्रियः कर्मकौशल्य उष्ट्र(ष्ण)भुक् शीततो गदः ।
याम्योत्तरं गृहद्वारं पुराणाढ्यो वृषे विधौ ॥ १४ ॥

१ रवौ वारे न सन् न श्रेष्ठः, पूर्वश्लोकोक्तकार्यकृत्वफलविपरीतकार्यविघाताश्रयस्वरूपफलाश्रय इति तात्पर्यार्थः। विशेषेणावसायो निर्णयो यस्य सः व्यवसायः कार्यनिर्णयार्थं मध्यमानेवाश्रयति नोत्तमानिति भावः। २. कफवातप्रधाना रोगाः। ३. गव्यं क्षीरादि, तथा अन्यन्मधुरं शर्करादि च न सत् न हितं, वृषभराशिकस्येति तात्पर्यं। ४. आराममित्यारभ्य जानुघातान्तान्यस्य भवंतीति शेषः। मध्यं मानं शरीरपरिमाणं यस्य सः मध्यमानः। अस्य भवेदित्यनेन संबंधः। ५ धनधान्यादिनाशवान् रोगवांश्चेति भावः।

**इति रोमकमतं ॥**

[1]स्तनहन्वोः सविघ्नः स्यात्कंठे रुक् त्र्यब्दकेऽ ३ ग्निभीः ।
वामेंऽघ्रौ हस्तके तत्वे २५ रदेऽतिघृति ३२-१९ मृत्युयुक् ॥ १५ ॥

द्विभार्यः श्लेष्मलः शीतो वृषेंदौ स्वल्पसोदरः ।
[2]माघशुक्लसिताहर्भरोहिणीनवमीमृतिः ॥ १६ ॥

**इति यवनः ॥**

वृषे द्विपंचनंदेऽ २-५-९ श्मकाष्ठैर्वामाक्षिगुह्यभीः ॥
[3]दीप्ताग्निः कुशलः क्लेशी दाता लक्ष्मीयुतो वृषे ॥ १८ ॥

**इति जन्मप्रदीपः ॥**

॥ इति वृषभराशिफलम् ॥

## ॥ अथ मिथुनराशिफलम् ॥

वातपित्ताधिकः पित्तकोपी शूली सुरूपवान् ।
वित्तसितार्क्यर्हि कार्यासिर्लेख्यवान्नृपपूजितः ॥ १९ ॥

[4]उच्चैर्बुधेऽ (धोऽ) ल्पचक्षुः स्यादौषधं कटु तीक्ष्णकं ।
कृष्णलाभः श्वेतहानिः श्रृंगारी हयवित्तवान् ॥ २० ॥

शीघ्रकोप (पः) परस्वार्तिर्बहुस्त्री स्व (कोऽ) ल्पगर्भवान् ।
उदरग्रंथियुग्वर्षे पंचार्काष्टिभ ५-१२-१६-२७ पीडितः ॥ २१ ॥

---

१. सुखविरोधत्वेन विघ्नरूपिणा शस्त्रघातादिना स्तने हनौ च युक्तः, वत्सरत्रये वामपादे हस्ते चाग्निबाधया युक्तश्च स्यादिति तात्पर्यं । २. माघशुक्लनवमी-रोहिणीनक्षत्रशुक्रवारयोगे मध्याह्ने मृतिर्वा तत्प्रतिनिधिर्वा भवतीति तत्पर्यं । एव मग्रेपि । ३. अस्मात्पूर्वमेकः श्लोको लुप्त इति भाति । ४ उच्चैः उन्नतदेहः, बुधः ज्ञानी, हयनिमित्तकवित्तवांश्च भवेदिति भावः ।

पंचाशद्वत्सरे ५० स्वल्पमृत्युः षष्ट्यल्पजीवितः ।

इति रोमकमतं ॥

वयस्याद्ये सुखी मध्ये मध्यो भूपेऽ१६बुभीर्धृनौ १८ ॥ २२ ॥
कर्णरुक् पंचमे ५ काष्ठभीतिः स्याद्विकृतौ २४ तथा ।
सा (अ) ष्टाविंशत्स्व (त्य) ल्पमृत्युर्द्वंद्वेऽ[१]शीतिप्रजीवितः ॥ २३ ॥
वैशाखद्वादशे मंदशुकज्ञाह्नि मृतिर्भवेत् ।

इति यवनः ॥

[२]रामाशांगे ३-१०-६ त्रिदोषाग्नि ते शैलवनोत्थभीः ।
नखेऽर्के २०-१२ श्वाहिदंत्यद्रिशस्त्रतोयैः प्रपीडितः ॥ २५ ॥
धृत्यंकत्रिंशता बाणे १८-९-३०-५ ज्वरग्रहनिपीडितः ।
हास्ययुक् सधनः क्षामो हृदि कटयंकितस्त्विभे ८ ॥ २६ ॥

॥ इति मिथुनराशिफलम् ॥

---

## अथ कर्काटकराशिफलम्

श्रेष्ठं रविकुजेंद्वह्नि बुधे कार्यं न शोभनं ।
कफवातगदी गौरस्त्रिवारं स्वल्पमृत्युभाक् ॥ २७ ॥

---

१ द्वन्द्वे मिथुने  २ अत्र त्रिदोषाग्निमित्यतः परं द्वितीयः पादः ते शैल इत्यतः पूर्वं प्रथमः पादश्च लुप्त इति भाति । अतो नात्रान्वयार्थं बुद्धिक्लेशोऽनुसर्तव्यः ।

ह्यष्टैकविंशत्यब्दे तु (स्या) २-८-२१ ए (दे)कोनत्रिंशता
२९सरुक् ।

वत्र (क) निर्बलपादश्च द्विभार्यश्च जलोदरी ॥ २८ ॥

कटिमस्तकपादेषु व्रणग्रंथिप्रपीडितः ।

दृष्टिरुक् वाक्यनिष्ठुरो (नैष्ठुर्यं) नीचैः प्रीतिः सिते शुभं ॥ २९ ॥

कृष्णे दुःखं श्वेतरक्तवस्तुष्वाभित्य (ष्वधिक) लाभवान् ॥

वर्षपादो (वात) जलाद्भीतिः गंधलाभोऽहि ८ वर्षके ॥ ३० ॥

[1]कर्कलग्नं विधुः पश्येत्संक्रांत्यधि च (क्राम्यत्यपि) गृह्वर्ते ।

यद्वस्तु द्विगुणो लाभो वातकष्टं च हानिवान् (मत्) ॥ ३१ ॥

पूर्वोत्तरं गृहद्वारं-ब्दे (गजाब्धौ) खगजे ४८-८०मृतिः ।

**इति रोमकमतं ॥**

दरिद्र्याद्ये सुखी मध्ये त्रिकसज्वरपीडितः ३-७ ।[2]

(आद्ये दरिद्रः सुखितो मध्ये त्र्यद्रिज्वरान्वितः ।)

त्र्यब्दे वामेऽग्निभीः शिश्नतिकी मूर्ध्नि रुक् सुखी (त्रिकमूर्धरुगर्दितः)
॥ ३३ ॥

रदेऽ३२ल्पम (मृ) तिरेकोनत्रिंशता २९ सर्पभीस्तथा ।

माघे शुक्के वने शुक्रे नवम्यां निधनार्दितः ॥ ३५ ॥

---

१. गोचाररीत्या कर्काटकलग्नं यदा चन्द्रः पश्यति, यदा वा संक्राम्यति, तदा यद्वस्तु विक्रीयते तेन वस्तुना कर्काटकराशिजातस्य द्विगुणो लाभो भवतीति भावः । तस्यैव पुंसो हानियुक्तं वातकष्टं च भवतीति भावः । २ गृहद्वारं पूर्वोत्तर शुभदमिति शेषः । अस्य श्लोकस्योत्तरार्धं लुप्तमिति भाति ।

**इति यवनः ॥**

तुर्याष्टार्के ४-८-१२ शिर श्रोत्राक्षिरुक् स्फोर (ट) त्रिदोषभोः ।
सिद्धभूपेऽ२ऽ ४-१६बुकाष्ठाश्मभूताद्रिगुदमेहभीः ॥ ३६ ॥

षट्त्रिंशे ३६ विषचोरांबुलोष्ठभीश्चारुनेत्रकः ॥
स्त्रीवश्युद्यानकृत्कृष्ये कुशलो भीरुरिंदुभे ॥ ३७ ॥

**इति जन्मप्रदीपे ॥**

॥ इति कर्काटकराशिफलम् ॥

---

## ॥ अथ सिंहराशिफलम् ॥

कुजेंद्वर्कान्हि सिद्धिः स्याल्लघुकेशश्च पै...कः (पैत्तिकः) ।
नृपाद्वा संगराल्लाभो द्विभार्यो वंध्यकैकिका ॥ ३८ ॥

कटिपृष्ठोदरे शूलं हृत्कंडू मू(मू) ध्नि घातयुक् ।
उच्चेऽर्के वस्तुलाभ स्यात् नीचे हानिर्मृतिः स्त्रियः ॥ ३९ ॥

जले हानिः स्थले लाभोऽष्टवेद८-४ज्वरपीडित ।
अष्टाविंशे २८ नृपे १६ शूलमेकंपंचाशदब्दके ५१ ॥ ४० ॥

त्रिंशत्कष्टं ३० रवौ वर्षेश्वरे जीवितसंशय ।
पूर्वोत्तरं गृहद्वारं नृपे १६ याम्यह च दिक् सदा ॥ ४१ ॥

**(इति) रोमकः ॥**

प्रथमे १ पिंगलाबांधां (बाधा) हस्तांघ्रयोर्गोभिभिः (भीः) शरे ५ ।
विश्वे१३ विषूचिका दंते३२ल्पमृत्युः सप्तमे ७ ज्वरी ॥ ४२ ॥
विंशत्यां २० सर्पभीरेकविंशद्या(शे व्या)धी रणप्रियः ।
परवादापवाद्यष्टाविंशतौ २८ गुल्फ(ल्म)पीडितः ॥ ४३ ॥
[1]फाल्गुने शुक्लपञ्चम्यां सोमेऽश्विनि मृतिर्हरौ ।

**(इति) यवनः ॥**

पंचदिक्तिथिभिः ५-१०-१५ [2]शस्त्राग्न्यंबुवाताक्षिहृद्य (द्य)था ।
पशुव्रणनखैर्दंष्ट्रिशूलिभिस्त्रिंशतौ ३० नखे २० ॥ ४५ ॥
सर्पाच्चत्वारिंशता ४० च शाकिनीज्वरपीडितः ।
शूरः सत्ययुतस्तीक्ष्णः स्त्रोद्वेष्यल्पात्मजो हरौ ॥ ४६ ॥

**इति जन्मप्रदीपे ॥**

॥ इति सिंहराशिफलम् ॥

---

## अथ कन्याराशिफलम्

सुनेत्रो दीर्घकेशश्च वातपित्ताधिकस्तथा ।
पीतगौर. [3]परालस्यः स्वा(स्यश्चा)त्मकार्यो जगत्प्रियः ॥ ४७ ॥

---

१ अत्र श्लोकार्धलोप इति भाति । २ शस्त्रेत्यादेः क्रमेण व्यथेत्यनेन संबंधः । पश्चित्यादीनां दंष्ट्रीत्यादेश्चांघ्राहतेन व्यथेत्यनेन संबंधः । नखे इत्यस्याग्रिमश्लोकस्थेन सर्पादित्यनेन संबंधः । ३ परकार्यविषये आलस्यवान् । आत्मकार्यसाधनपर इत्यर्थः

[१]लिखनात् पठनात्कृष्य (ष्या) नृपसेवाधनी शुचिः ।
सिद्धिर्नैन्दून्हि वै [२]तुंगपातो वातभयान्वितः ॥ ४८ ॥

सुपत्नी प्रथमा वेदगोऽ४-९ब्दमासेऽह्नि नेत्ररुक् ।

पंचाशद्यद्धित्तिकत्रिशत्र्यूनपंचाशदब्दके ।

३—५०—२८—३०—४७ ॥

कष्टं च पंचाशदब्दके-१०—१८—३०—४७

कष्टं च पंचाशदब्दके—१—६० ॥

क्षित्यश्वमहिषीधनं ।

[३](द्यूनत्रिंशत्रिशदग्निर्त्र्यूनपञ्चाशदब्दके)
पञ्चाशदब्दके २८-३०-३-४७-५० कष्टं क्षित्यश्वमहिषीधनं ।)

उच्चे बुधे [क्षे] त्र लाभो ह्यर्शांसि त्रिंशदब्दके ३० ॥ ५० ॥

याम्यं पश्चाद्गृहद्वारं वर्षेशे ज्ञे क्षयो मृतिः ।
कुटुंबमानोंऽग्निभयं खाष्ट (ष्टा) ब्दायुः ८० स्त्रियां विधौ ॥ ५१ ॥

**इति रोमकमतं ॥**

शरे ५ वामाक्षिरुक् त्र्यब्देऽ३ग्निभीतिर्नवमे ज्वरी ।

तरुभित्तिभयं चैकविं[शे]२१शिश्ने गले तिलः ॥ ५२ ॥

---

१ लिखनादित्यादीनामध्याहृतेन धनीत्यनेन संबंधः । २ तुंगदेशात्पततीत्यर्थः
३ अयं श्लोको मूलकोशे अत्यंतमशुद्धो दृश्यते । स च मया मूलकोशनिर्दिष्टकानुसारेण पूरितः कुण्डलीमध्ये निवेशितः । तस्य साधुत्वे सहृदया एव प्रमाणं । उच्चे बुधे क्षित्यश्वमहिर्षाधनं इत्यन्वयः ।

विश्वे१३विषूचिका पंचदशे१५सर्पभयं तथा।
त्रिंशदब्दे ३० वनात्सर्पाच्छस्त्राद्वाऽल्पमृतिर्भवेत् ॥ ५३ ॥

[1]चैत्रे कृष्णत्रयोदश्यां रवौ मृत्युः स्त्रियां विधौ।
शूलाश्मकाष्ठशस्त्राग्निवधो धृत्यर्कषट्सु च १८-१२-६।
पाशचोराग्निवातेन (भ्यो) ज्वराग्नि (द्वी) र्मेहनेत्रभीः ॥ ५५ ॥

षट्त्रिंशता सिद्धिवर्षे ३६-२४ खांका ९० युर्धार्मिको गुणी।
स्वक्षो वक्रनखः श्यामः परस्वोऽटनयुक् स्त्रियां ॥ ५६ ॥

॥ इति कन्याराशिफलम् ॥

---

## ॥ अथ तुलाराशिफलम् ॥

सुनेत्रः सुमुखो भिन्नवर्ण (र्णो) गौरः [2]सुवर्चकः।
नृपमित्रजनैः प्रीतिः सितार्किज्ञान्हि कार्यकृत् ॥ ५७ ॥

नरो वै श्लेष्मवाताढ्यः क्रयणः स्वल्पलाभदं (भयुक्)।
घातो मूर्धास्यवोक्चपानोष्टब्दे न (वाचां चापानावष्टंभ) भीश्च शुक् ॥ ५८ ॥

[3]मया वियुग्गुप्तपापी द्विभार्यस्तीर्थकृद्भवेत्।
स्वल्पकायलोस्ययुक् (स्वल्पकायोऽलसो) धान्यकार्थः पृष्ठे कटौ व्यथा ॥ ५९ ॥

---

१ अत्रोत्तरार्धं लुप्तं। २ वर्चशब्दोऽदन्तोऽप्यस्ति अतः सुवर्चक इति साधुः
३ मया लक्ष्म्या।

धननाशो भवेद्द्रोहाच्छृंगारी बहुसंततिः ।
मतियुङ्निरपेक्षी च (क्षश्च) शीघ्रं पा(प)लितकेशकः ॥ ६० ॥

उच्चे शुक्रे गन्धलाभः शीघ्रकोपी स्वविग्रहः ।
नडी(दी) तडा(टा)कप्रासादप्राकारपर्वताश्रयः ॥ ६१ ॥

त्र्यष्टेऽद्रोत्कृतिसिद्धा३-८-१४-२६-२४ब्दे त्र्यूनपंचाशदब्दके४७ ।
पंचपंचाशदब्दे च ५५ त्रिषष्ठौ ६३ श्वासरुक्तथा ॥ ६२ ॥

श्लेष्मानिलग्रंथिभयं चतुराशीतिको ८४ युवा ।
त्रिंशदब्दे ३० द्विभार्योऽर्के १२ वारिभीरष्टमेऽ८ग्निभीः ॥ ६३ ॥

वृक्षाद्वा तुरगात्स्वल्पमृत्युः स्यादेकविंशतौ २१ ।
विंशतौ २० सर्पभीतिश्च सवाणिज्यः कृशो धनी ॥ ६४ ॥

[1]सिते दशम्यां वैशाखे सर्पर्क्षे भूसुते मृतिः ।

**वा—**

व्यालशृंगयभिचारैर्भौमे(मे)षशूलविषज्वरैः ।
सर्तेऽद्रविंशद (त्य) ब्देऽ७-१४-२०थ कृमिरज्जुत्रिदोषभीः ॥ ६६ ॥

अष्टाविंशद्द् (द्वि) चत्वारिंशनाथो (दब्दे) २८-४२ गजलोष्ठभीः ।
करांघ्रयोश्च त्रिषष्ट्यब्दे ६३ पीडितो नृपपूजितः ॥ ६७ ॥

[2]नेत्रोन्नतो विशालास्यो वणिक् त्यागयुगो (तो) घटे ॥ ६८ ॥

॥ इति तुलाराशिफलम् ॥

---

१ अत्र श्लोकार्धं लुप्तं । २ अः पूर्वार्धलोपः

## ॥ अथ वृश्चिकराशिफलम् ॥

पित्ताधिको रक्तगौरो गव्यं मधुरभोजनं ।
गुर्वारारविचंद्राह्वि सिद्धिर्नो सिद्धिरिंदुजे ॥ ६९ ॥

कटु क्षारं च न शुभं रात्रौ स्वप्नं च न स्मरेत् ।
दुर्बलः पंशुवित्तश्च परदेशधनी शुभः ॥ ७० ॥

मातृवर्गे मुदा राजगौरवः (वं) संगरे धनं ।
प्रतिभूकं वसद्बंधं फललाभोऽबु [ना] भयं ॥ ७१ ॥

नौतोऽथ मिथुनेऽर्के चोऽत्तरायनं (रयानं) न शोभनं ।
कृतं चंद्रोहहानीचं (क्षणमुद्रेकहानी च) रुष्टः शीघ्रं प्रतुष्यति ॥ ७२ ॥

कृतापकारी सरिपुः सप्तार्केन्द्राष्टात्रिंशके ७-१२-१४ २८ ।
श्वासकष्टं चतुःपंचाशता ५४ च्छेदो बुधेऽब्दपे ॥ ७३ ॥

धनायुःसंक्षयो रक्तपीतलाभो नवे (ऽलिगे) विधौ ।
स्त्रीमु (सु) खं सद्गृहा (ह) द्वारं सौम्ययाम्यं [1]शराद्रिकः ७५ ॥ ७४ ॥

वा—

पंचादिमे पंचदशे५-१-१५ज्वरी तत्वेऽ २५ ल्पमृत्युयुक् ।
ऽयब्देऽग्निभीश्च पंचा........तीर्थी बह्वपत्ययुक् ॥ ७५ ॥

कलही भार्यया हीनो मित्रद्रोही नृपाश्रितः ।
ज्येष्ठे शुक्ले दशम्यां ज्ञे हस्ते मृत्युस्त्वलिन्यथ ॥ ७६ ॥

१ पञ्चसप्ततिमितपरमायुरित्यर्थः ।

वा—

नृपचोरादिशस्त्राग्निविषभूतज्वरार्दितः ।
गजाष्टिसिद्धे ८-१६-२४ रष्टाब्धित्रिमिते वर्षे रदैर्मिते ४८-३२
॥ ७७ ॥

शृंखलास्त्रव्रणैः कीटैर्द्विसप्तत्या ७२ ज्वरांबुजैः ।
क्रूरचेष्टो नृपार्चाढ्यो वृत्तवक्षो (क्षा) विपैतृकः ॥ ७८ ॥

॥ इति वृश्चिकराशिफलम् ॥

---

## ॥ अथ धनूराशिफलम् ॥

पित्ताधिकः पित्तगौरः पिंगकेशः सुनेत्रकः ।
संधिविस्फोटशूली च जं (टवान् शूली जं) घापीडा (डः)
स्वविग्रहः ॥ ७९ ॥

क्षुधायुङ्मधुराशी च शृंगारी देवतीर्थकृत् ।
धृतिसिद्धिक(ख)रामैकचत्वारिंशे इ (र) दे १८-२४-३०-४१-३२
गदः ॥ ८० ॥

गुर्वारेंद्वह्नि कार्ये सन्सिंहे (त्सिते) पुसो भयं भवेत् ।
त्रिभार्यो न शुभं माघे कर्कार्केऽपि न चोऽग्रतः ॥ ८१ ॥

उच्चे गुरौ पीडितश्च भ्रातृहा श्वेतपित्तकः ।
यद्वा(द्धा)न्यस्पर्शहस्तस्तद्वा(द्धा)न्यं नैवाप्यते मु(सु)खात् ॥ ८२ ॥

भूलजो मस्तके शूलं कर्केऽर्के स्फोटशूलकौ ।
सर्सेंद्राष्टिनखे ७-१४-१६-२०पंरे (च) त्रिंशत्तत्वा ३५-२५ स्मि (त्म)
के छिदः (दा) ॥ ८३ ॥

रक्तपीतश्वेतलाभः सौम्यं स्यात्पा (म्यं प्रा) ग्वेश्मनो मुखं ।
चतुःषष्ठिः ६४ शतं १०० चायुर्धनुद्र (र्गत) विधौ फलं ॥ ८४ ॥

वा—

आद्येऽब्दे[1] रोगयुक् विश्वेऽ १३ ग्नमृत्युश्छिद्रपादकः ।
प्रथमे वयसि श्रीमान् स्वल्पापत्यो गृहे सरुक् ॥ ८५ ॥

परस्त्रीलंपटः कुष्ठी कव्यकर्ताऽन्नभुक् तथा ।
शुचिकृष्णे च पंचम्यां श्रवणे च भृगौ मृतिः ॥ ८६ ॥

वा—

भांकधृति (धृतिभांके)षु २७-९-१८ वातांकपंकशृंगिकर्कडुभीः ।
चतुःपंचाशता षट्त्रिंशता५४-३६ मेहस्त्रिदोषभीः ॥ ८७ ॥

रक्तशूलैः शिरोरोगै[1]र्धन्वींदौ कष्टजीवितः ।
दंडाधिकारो चतुरो याज्ञिकः कार्मुके धनी ॥ ८८ ॥

॥ इति धनुराशिफलम् ॥

---

## ॥ अथ मकरराशिफलम् ॥

वातपित्ताधिकः शूरो जंघाव्यंगः (व्यंगजत्रः) करौ (रे) व्यथा ।
पृष्ठग्रंथिर्ज्ञार्किशुक्रकार्यकृन्न रवौ शुभं ॥ ८९ ॥

न च सिंहविधौ मासे भाद्रे हानिभि (र्भि) षक्क्रियः ।
[2]गजाष्ट (ष्टा) विंशत्त्रिशच्च च (तित्रिंशच्च) तुस्त्रिश ८-१५-२०-३०-
३४ त्सपीडितः ॥ ९० ॥

---

१ धन्वी इन्दाविति छेदः । कार्मुके इन्दाविल्यन्वयः । २ मूलकोशे १५-२०. इति दृश्यते तस्य मूलं मृग्यं । तत्र ८-२८-३०-३४ इति संख्यया भाव्यं ।

सवेदचत्वारिंशतै (चतुश्चत्वारिंशपीडै) कोनषष्ठि४४-५९
प्रजीवितः ।

कुरूपद्वयभार्यश्च याम्यपश्चान्मुखं गृहं ॥ ९१ ॥

[1]मंदेऽब्जके कृष्णलाभः पिशुनो दुष्टपूजितः ।

वा—

जलभीः सप्तमे ७ वृक्षात्पतनं दशमेऽ१० बुभीः ।
एकविंशे २१ ज्वरो दंते ३२ पंचाब्दे ५ [स्व] ल्पमृत्युयुक् ॥ ९३ ॥

वामेऽग्निभीः पंचविंशे २५ पारदार्यं रिपोर्भयं ।
पंचत्रिंशत्प (त्य) ३५ थो भौमनभःशुक्लेऽद्रमे मृतिः ॥ ९४ ॥

वा—

नेत्ररुक् कुष्ठतोयोत्थश्वापदैर्नखिशस्त्रभीः ।
दिग्विंशे त्रिंशके १०-२०-३० चांधो चत्वारिंशे च ४० षष्ठिके
६० ॥ ९५ ॥

गुदोदरहृषत्काष्ठविषभूतैर्भयं भवेत् ।
सद्यूत (तः) स्त्रीरतोऽल्पस्वो (स्वः) कृपणः सखलो मृगे ॥ ९६ ॥

॥ इति मकरराशिफलम् ॥

---

## ॥ अथ कुंभराशिफलम् ॥

[2]कृम्भिग्रंथ्योदरी (थ्युदरो) वातकफी शुक्रज्ञमंदके ।
सिंहश्च (हे च) न रवौ भिन्नगौरः स्वक्षो धनी सुखी ॥ ९७ ॥

---

१ अत्रोत्तरार्धं लुप्तं । २ कृम्रन्थिः मांसप्रधानः, अग्निग्रंथिः पित्तप्रधानः । शुक्रज्ञमन्दके इत्यस्याध्याहृतेन कार्यसिद्धिः इत्यनेन संबंधः ॥ रविवारे, सिंहे लग्ने, राशौ च न कार्यसिद्धिः इति भावः

वारुणर्क्षे द्वितीयेऽह्नि वातपीडाऽथ वा मृतिः ।
संग्रही बहुलाभश्च द्विभार्यः सप्त (स्वल्प) जीवितः ॥ ९८ ॥

पूर्वाजः स दरिद्रश्च कृष्णकर्बुरला (का) लकः ।
उत्तमप्रीतिरेका स्त्री वंध्या स्यात्पृष्ठलांछनः ॥ ९९ ॥

समुद्रां (द्रादा) य इंद्रीज्यकुजसिधिः (द्धिः) सिते न हि ।
पीडितेऽज्यं प्रकर्तव्या भक्तिर्देवद्विजेषु च ॥ १०० ॥

[1]नीचे वाणिज्यहानिश्च सूत्रधारी सुतार्थकृत् ।
द्व्यष्टाष्ट्याकृतिपंचाशत्खाब्धिवर्षाद्व २-८-१६-२२-४०-५०-६०
प्रपीडितः ॥ १०१ ॥

जिना २४ ब्दे मृत्युसंदेहोऽतिसारो द्व्यब्धिधगोऽर्कके २-४-९-१२
प्रथमाब्दे वल्ल (ली) पीडा प्रतिभूकं न शोभनं ॥ १०२ ॥

परोपकारी स्वालस्यः पश्चाद्ग्राम्यास्यवेश्मकः ।
द(र)दातिधृतिके ३२-१९ छेदो कटुतिक्तौषधं शुभं ॥ १०३ ॥

**वा—**

जातो मिष्टान्नभोगी च परो गी [त] प्रियंवदः ।
अस्थिरो धनकार्येषु प्रथमेऽब्दे रुजान्वितः ॥ १०४ ॥

त्रिबंधुर्वामहस्ते च लांछनं द्विस्त्रियो (स्त्रीद्वयं) भवेत् ।
स्वल्पापत्योऽथ वाऽजीवी पंच५षड्६वत्सराणि तु ॥ १०५ ॥

दरिद्रश्च पुनः क्षेमी पंचमेऽ५ब्देऽग्निजं भयं ।
द्वादशेऽ १२ ब्दे जलभयं तथा सर्पकृतं भयं ॥ १०६ ॥

कुंभराशिगते चंद्रे जातस्तस्य भविष्यति ।
स मानवो महाक्रोधी परदाररतो भवेत् ॥ १०७ ॥

---

१ नीचे शनावितिशेषः ।

दुःशीलश्च कृतघ्नश्च पृथुलः शीघ्ररेत (मान) सः
कामधूर्तः शठो धूर्तः कुंभराशौ भवेन्नरः ॥ १०८ ॥

दीर्घग्रीवः शिरालश्च दीर्घांगो रोमसंभवः ।
जीवत्यशीति ८० वर्षाणि शुभदृष्टयै (ष्टे) तदा नरः ॥ १०९ ॥

कृष्णभाद्रपदे नंदे रोहिण्यां मरणं भवेत् ।
भवाब्दे ११ जलपीडा वा जले भीरुदरऽ्यथा ॥ ११० ॥

नृपे १६ विवचि (गणि) काशस्त्रभयं चैकोनविंशके १९ ।
सर्पभीर्व्यपवादश्च तत्वे २५ पिंडे त्रिदोषभीः ॥ १११ ॥

सप्तत्रिंशन्मिते ३७ वर्षे राजभीर्वाऽस्त्रजं भयं ।
विस्फोटश्वापदैः शस्त्राज्ज्वराज्जंगमजंतुभीः ॥ ११२ ॥

शू (रु) द्राकृतिसुरा १२-३३ (११-२२-३३) ब्देऽथ षट्षष्ठ्यां
द्विगुणाकृतौ ६६-४४ ॥ ११३ ॥

दंताक्षिकर्णरुक्काष्ठाज्ज (ष्ठज) लजैश्चोरतो भयं ।
कटिपृष्ठकरे चिह्नी परस्वो द्यूतवान् घटे ॥ ११४ ॥

॥ इति कुंभराशिफलम् ॥

---

## ॥ अथ मीनराशिफलम् ॥

रक्तस्रावी विलासाढ्यो भिन्नवर्णः सुनेत्रकः ।
शृंगारी गीतनृत्यादिस्त्रीभोगी नृपलाभयुक् ॥ ११५ ॥

---

१ अत्र मूलकोशे १२-३३ इति लिखितं । तत्र १२ इत्यस्य मूलं मृग्यं । अस्य श्लोकस्य पूर्वार्धं लुप्तं ।

वामभागे व(व)लीपीडा मीनराशिविधौ फलं ।
अर्थवान् शीलवान् भोगी संतोषी चातिथिप्रियः ।। ११६ ॥

पितृमातृगु (तुर्मातुर्गु) रोर्भक्तः प्रथमेऽब्दे जलाद्भयं ।
ज्वरः स्यादष्टमे ८ वर्षे द्वात्रिंशाब्देऽ ३२ ल्पमृत्युकृत् ॥ ११७ ॥

शुभग्रहदशावर्षशतं जीवत्यसौ नरः ।
तुंगास्यश्च बृहच्छीर्षश्चारुदृष्टिः प्रियाजितः ॥ ११८ ॥

पंडितो धनवान् भोगी जलाश्रयरतो रुषः ।
बहुस्त्रीनिरतस्त्यागी सप्तबंधुश्च विंशके २० ॥ ११९ ॥

वर्षे मृत्युभयं चापि वामकुक्षौ कुलांछनं ।
आश्विने बहुले पक्षे चतुर्थ्यां गुरुवासरे ॥ १२० ॥

रोहिण्यां तु नदीतीरे प्राप्नोति मरणं ध्रुवं ।
द्व (द्वा) दशे ऽ१२ ब्दे ज्वरी शके १४ क्षयी सर्पभयं धृतौ १८
॥ १२१ ॥

आकृतौ २२ परदेशाद्भीः सिंहेऽ (सिद्धेऽ २४) ल्पमृत्यु (ति) रेव च ।
जलभीः सप्तविंशे २७ च रदे ३२ सर्पाद्ब्रजं भयं ॥ १२२ ॥

कीटलोष्ठान्न (ष्ठव) खिश्चादिज्वरशृंखलिकाभयं ।
षट्त्रिंशे द्वादशे सिद्धे ३६-१२-२४ चत्वारिंशत्सु साध्यसु ४८ ॥१२३ ॥

भूतज्वरमरुत्स्फोटकुष्ठाग्निशस्त्रपीडितः ।
दीर्घदेही विशालाक्षोऽबुवृत्तिः शास्त्रवित् झषे ॥ १२५ ॥

॥ इति मीनराशिफलम् ॥

॥ इति जातकसारे चंद्रराशिफलाध्यायोऽष्टादशः ॥

---

## ॥ अथ लग्नफलाध्याय एकोनविंशः ॥

आदौ मेषलग्नफलं

लग्ने क्रिये क्रोधपरोऽतिलुब्धो
विदेशगोऽल्पात्मजसौख्यशीलः ॥
मेषाक्षिरी (क्ष ई) र्ष्युःस्खलिताभिधायी
पटुः परः श्रेष्ठविशिष्टकर्ता ॥ १ ॥

विरुद्धशीलैः सहजैश्च मित्रैः
ख्यातोऽल्पमेधाश्चपलः कुबंधुः ॥
भी (धी) रः स्थिरः स्फीतधनो विषादि (दी)
स्यादिष्टकर्माऽद्भुतगो जितारिः ॥ २ ॥

वियुज्यते प्राक्सरुजेन (जा स्व) मात्रा
पित्रा धनभ्रंशसमन्वितश्च ॥
प्राप्नोति भार्यां सुकुमारशीलां
व्यंगां समीरादिभिरर्दितांगीं ॥ ३ ॥

॥ इति मेषलग्नफल ॥

---

## ॥ अथ वृषभलग्नफलं ॥

लग्ने वृषे स्यात्सुभगो यशस्वी
स्यादिष्टकर्मा वरभूषणेषु ॥
लुब्धोऽन्नपाने दयिताप्रियश्च
[1]कल्पप्रियो वा पितृतोऽधिकारी (कःस्यात्) ॥ ४ ॥

प्रायो न वक्रः (सक्तः) स्वजनावमर्दे
धर्मेऽतिवृत्तः कफवातुलश्च ॥
काणीकुविद्यु (वणिक्कविद्यू) तजलाशयार्थं
स्थिरः पटुश्चाश्रयभृद्यशस्वी ॥ ५ ॥

[2]भार्यां प्रचंडां विषमां कुयोनिं
प्राप्नोति रौद्रानपि बंधुवर्गान् ॥ ६ ॥

॥ इति वृषभलग्नफलं ॥

---

## ॥ अथ मिथुनलग्नफलं ॥

लग्ने तृतीये प्रियवाक्य (रूप) दाता
शास्त्रार्थसंगीतकलासु दक्षः ॥
शोभारतः कामवशो वचस्वा (स्वी)
द्विमातृकः पूज्यतमश्च सभ्यः ॥ ७ ॥

---

१ कायकल्पाद्यायुर्वेदोक्तायुर्योगप्रियः कल्पप्रियः । २ अत्र पूर्वार्धं त्रुटं ।

हीनाधिकांगो विहितारिपक्षो
दुर्मर्षणः क्षुद्रकुटुंबवित्तः ॥
अनिष्टपुत्रश्च समे (मोऽ) ल्पबंधु
धर्मालसो नार्थसहोऽलसश्च ॥ ८ ॥

बह्वंगनो रोगसहोऽरिहंता
स्त्व (स्व) संस्थितो यत्नत (ज) रोगहानिः ॥
रत्नोर्णहेमाढ्यजभूमिभागी
प्रसिद्धकर्मा च नरो विनीतः ॥ ९ ॥

॥ इति मिथुनलग्नफलं ॥

---

## अथ कुलीरलग्नफलं

कुलीरलग्ने विषमस्त्वभावै (स्वभावो)
नै (न) चैकवासा द्विजदेवभक्तः ॥
दाता सुधीर्दीनदयासमेतः
कफानिलात्मा चपलश्च शीघ्रः ॥ १० ॥

भीरुः परार्थव्ययकर्मभागी (कारी)
पूज्यः कुलार्यो मुदभुक् (दितः कु) कामी ॥
दुष्टाल्पपुत्रो बहुवाक् सुबंधुः
कन्याप्रजो वा बहुलार्जवात्मा ॥ ११ ॥

सगोमहिष्यौषधवाहनस्त्री
विभूषण: साहसिकोऽतिधीर: ॥
विदेशको दुष्टकबंधुक: स्या
त्पापान्न सत्यान्न हिताद्बिनत्ति (द्बिमेति) ॥ १२ ॥

॥ इति कुलीरलग्नफलं ॥

---

## ॥ अथ सिंहलग्नफलं ॥

लग्ने हरौ सिंहमुखो महौजा
दृढांसवक्षा नृपलब्धमान: ॥
धीरो गभीर: स्थितिसत्वयुक्त:
प्रियामिष: स्वल्पवचोऽप्रमादी ॥ १३ ॥
भ्रात्रेऽल्प (त्रादि) बंधूनपि हंति दुष्टान्
वातात्मको दु: [स्व] सहोऽतिकोपी ॥
वनाद्रिचारी वधकृत् क्षुधालु
र्लुब्धोऽरिहा स्वार्थकुटुंबकार्य: ॥ १४ ॥
कृष्यादिवित्तोऽन्नतबंधुमित्रो
व्ययी विधर्मा वृकदंतरोगी ॥
वृद्धां नटीं प्रव्रजितामनार्यां
व्यापारशीलां लभते च भार्यां ॥ १५ ॥

॥ इति सिंहलग्नफलं ॥

## ॥ अथ कन्यालग्नफलं ॥

कन्याविलग्ने मृदुवाग्दयावान्
काामी सुरूपः सुभगो विनीतः ॥
संगीतकाव्य [व्य] वहारशिल्प
दानोपचारप्रणयो दर (रस) ज्ञः ॥ १६ ॥
कन्याविलग्नीतिविलास [स] त्व
यशोभिलाषी परवित्तभोक्ता ॥
वामोऽटनो ह्रिप्रकृतिः सवातो
मन्दप्रजो धर्मरतश्च मानी ॥ १७ ॥
स्वजातिपूज्यः प्रबलं (लः) कुटुंब
क्रियापरस्स्यान्न सिता (हितोऽ) सतीषु ॥
पापैरनार्यैः सहजैर्विरुद्धै (द्धो)
र्नी (नी) चारिविद्वेषविवृद्धरोषः ॥ १८ ॥

॥ इति कन्यालग्नफलं ॥

---

## ॥ अथ तुलालग्नफलं ॥

तुलाविलग्ने शुभकृष्णरक्त
श्चलोऽलसो दीर्घकृशः कृतघ्नः ॥
क्षीणार्जितार्थो विषमा (मां)गशीलो
वक्ता सुधीर्धर्मरतोऽतिदुःखी ॥ १९ ॥
देशानुचारी कफवातकीजो (देहो)
परानु (स) वित्त किलि (तःकालि) कृत् क्रियावान् ॥

शुचिर्गुरुर्यानकृद्ज्ञपूज्यः
पितांऽत्यजातो (तः) सहजप्रियश्च ॥ २० ॥

भार्यां कुवृत्तां महितांश्च बन्धून्
पुत्रान् लभेतोऽपहृतं कुटुंबं ॥
पापोऽल्पवीर्यो मृदुशत्रुवर्गः
कार्येषु लब्धव्यवसायबुद्धिः ॥ २१ ॥

॥ इति तुलालग्नफलं ॥

---

## ॥ अथ वृश्चिकलग्नफलं ॥

लग्नेऽष्टमे वृ(वि) स्तृतपीनदेहो
निम्नोदरः पिंगगभीरनेत्रः ॥
पित्तान्वितो मध्यविलग्ननासिको
विश्वासहा (हो) मातुरनिष्टकर्ता ॥ २२ ॥

स्थिरः प्रचंडो विषमस्वभावः
ईर्ष्युः सुहृद्द्रोहकरो महाभुः ॥
परान्नभोक्ता वधभेदकारी
शूरोऽन्यनारीनिरतोऽरियुक्तः ॥ २३ ॥

नृपानुगः पापधनः कुटुंबी
क्षुद्रोऽप्रकृत्कर्मरतः प्रजावान् ॥

शिवाश्च (श्र) यः स्यात्प्रणतार्थदाता
प्रभूतनारीनिरतोऽटनश्च ॥ २४ ॥

॥ इति वृश्चिकलग्नफलं ॥

---

## ॥ अथ धनुर्लग्नफलं ॥

धनुर्विलग्ने पृथुतुंगमूर्धा
ह्रीमान्महाक्षः कुनखी जितारिः ॥
पीनोऽरुवक्षोंऽसभुजोदरश्च
स्थूलद्विजौष्ठश्रुतिनासिकश्च ॥ २५ ॥

परोपकारी बहुशास्त्रवेत्ता
क्रोधी सुधीः सत्यवृतिः कुलेष्टः ॥
स्वयं स्वहेतूज्झितधर्मचित्तो
बंधुप्रियः शिल्परतश्च शूरः ॥ २६ ॥

साम्नैव साध्यो बहुदारपुत्रः
कफानिलात्मा मुखनेत्ररोगी ॥
चलद्बहुक्षुद्रकुटुंबकार्यः
श्रुत्याहता (हितो) वा क्षितिपाद्धृतार्थः ॥ २७ ॥

॥ इति धनुर्लग्नफलं ॥

---

## ॥ अथ मकरलग्नफलं ॥

नक्रे विलग्ने कु (मु) कृशो मृगास्यो
भीरुः प्रदीर्घोंघ (घ) नसौम्यसत्वः ॥
[1]उद्वृत्तरो...................मिताक्षो
विस्तीर्णवक्षाश्चपलः क्षुधालुः ॥ २८ ॥

आचारहीनोऽद्रिवनानुचारी
संगीतशास्त्रार्थरतोऽतिदाता ॥
हृतांगरागोऽनिलरुक् कुभार्योऽ
लसो व्ययी स्वक्षिकटिस्त्वनीर्ष्यः ॥ २९ ॥

धर्मी प्रवासी नृपशिल्पपण्य
शौर्यार्जितस्वो जनकोंऽगनानां ॥
सद्भावभाक् क्षुद्रचलः कुटुंब
स्त्रीणां वशो दुःस्वजनः शठारिः ॥ ३० ॥

॥ इति मृगलग्नफलं ॥

---

## ॥ अथ कुंभलग्नफलं ॥

लग्ने घटे विस्फुटिनाग्रघो (घो) णो
नीचः कुलीनः कलिकृत्स्वतंत्रः ॥

---

१ अत्र मध्ये ग्रंथपातो दृश्यते "उद्वृत्तरोमा झषसंमिताक्षो" इति पूरणीयमिति भाति ।

क्रोधी पिपासुः कफमारुतात्मा
क्षीणो हितार्थः पिशुनः कुकीर्तिः ॥ ३१ ॥

प्रभूतकर्मिष्ठजनो जनानां
वाह्योऽलसो नष्टसुहृत्कुटुंबः ॥

स्त्रीद्यूतपारुष्यरतः प्रवासी
व्ययी शठी (ठो) भ्रातृभिरा (र) र्दितश्च ॥ ३२ ॥

विगर्हितां कर्मणि दुष्टशीलां
स्त्रीं कर्मठां विग्रहकारिणीं च ॥

[1]प्राप्नोति मित्रानहितान् शठांश्च
विद्वेषणः श्लेष्मगदाभिभूतः ॥ ३३ ॥

**तथा च वराहः—**

न कुंभलग्नं शुभमाह सत्यो
सद्भाग (न भाग) भेदाद्यवना वदन्ति ॥
कस्याऽशभेदो न यतो (तथा) ऽस्ति राशे
रतिप्रसंगादि (गस्त्वि) ति विष्णुगुप्तः ॥ ३४ ॥

॥ इति कुंभलग्नफलं ॥

---

## ॥ अथ मीनलग्नफलं ॥

लग्ने झषे कुट्टनकर्म [का] र
स्त्वग्दोषभागी विवृताननश्च ॥

---

१ मित्रशब्दस्य पुंस्त्वे कारणं मृग्यं ।

पानामिषेप्सुर्धृतिसत्वमेधाः

शौचश्रुताचाररतो विनीतः ॥ ३५ ॥

गीतांगनाकार्यसुशिल्पविज्ञः

कन्याभजः प्रत्ययकीर्तियुक्तः ॥

दुर्मर्षणः स्फीतचलत्कुटुंबो

धन्यः स्थिरभ्रातृजनोऽतितेजाः ॥ ३६ ॥

कफानिलात्माऽव्यजलोहधान्य

फलक्रियाभिः सहितोऽप्युदारः ॥

क्षुद्रोग्रशत्रुर्मृदुवल्गुहासो

व्यालाग्न्यसृग्विषकर्शितांगः ॥ ३७ ॥

॥ इति मीनलग्नफलं ॥

[1]होरापतौ पूर्णबले च (ले स) होरे

होरागुणं स्वं लभते प्रसूतः ॥

स्वस्वामियोगेऽक्षणतः फलं स्या

द्भावोद्भवं श्रेष्ठमतोऽन्यथाऽन्यैः ॥ १ ॥

॥ इति श्रीजातकसारदीपे लग्नफलाध्याय एकोनविंशः ॥

---

१ होरापतौ लग्नपतौ, सहोरे सलग्ने, होरागुण पूर्वोक्त लग्नफलम् ।

## ॥ अथ होराफलाध्यायो विंशः ॥

**सारावल्या—**

[1]चंडः शूरो धनवान्मु (न् रि) क्तो स्कंठ (स्फुट) लोचनः शुकना (सुना) साग्रः ॥
पीनोच्चोदरतनु (पीनोन्नतोऽग्रदार) श्चोरेशोऽ जादिहोरायां ॥ १ ॥

स्निग्धायतदि (ह) क्चतुरो [2]बहुदारयुतः पृथुतनुर्वृषभगौरः ।
धीमांश्च (मान् ख) राग्रपादांगुलिर्विलासी क्रियांत्यार्धे ॥ २ ॥

वृषभाद्येऽर्धे श्यामः स्थूलास्थिर्विपुलभालदृग्वक्षाः ॥
रतिपानवशोऽल्पकचः क्रोधी प्रौढो वपुष्मांश्च ॥ ३ ॥

पृथुदीर्घ [वृत्त] कंठो विस्तृतसुमध्यमतनुर्वृषभनेत्रः ॥
सत्वाधिकः सुकेशो व्यस्तकटिर्वृषपरार्धे स्यात् ॥ ४ ॥

शूरो वाग्मी मतिमा (धनवा)न् सु [र] तेप्सुर्मृदुकचः शुभांसांगः (माङ्घ्रिश्च) ।
मध्यायतदृक (दक्ष) तनुर्मध्यममूर्तिस्तृतीयपूर्वार्धे ॥ ५ ॥

कामी सुधीः सुमैत्रः (कर्मा) शूरो मृदुवाक् च वाग्मी च ।
भावोष्ठदंत (परदारदत्त) देहस्तृती [यं] राशेः परार्धे स्यात् ॥ ६ ॥

---

१ इमे श्लोकाः मुद्रितायां सारावल्यां न सन्ति तथापि मुद्रितपुस्तकेनार्थसाम्यं प्रायशो वर्तते । क्वचिदर्थभेदोऽपि । अतो मया दुर्गमार्थस्थले मुद्रितसारावल्यनुसारेण पाठभेदः प्रदर्श्यते । २ बहुदारयुत इत्येतस्य प्रतिपदं मुद्रितसारावल्यां प्रमादबहुल इति वर्तते । अतस्तत्पुस्तकानुरोधेन प्रमादबहुल इत्यनेन भाव्यमिति भाति ।

[1] उद्धूत (द्ध) तनुः [प्रगल्भः] सुशिरा भग्नाग्रद्र (रद) स्तनुश्यामः।
([2] मन्दाक्षचलांगशठः सुकृतघ्नः कर्किपूर्वहोरायाम् ॥ ७ ॥)

(द्यूताध्वरतः क्रोधी कठिनतनुः[3] सत्प्रमाणपृथुवक्षाः।)
चपलः कृपणो धनहा मदप्रदः कुलीरपरभागे ॥ ८ ॥

गुरुरायतदृकृतनुजः (देहयुतः) क्रोधी रक्तांतदृक् प्रगल्भश्च।
जिस्तः (ह्मः) सुखभोगयुतः स्थिरसत्वः सिंहपूर्वार्धे ॥ ९ ॥

स्थिरसौहृदोत्थ (थ) भोगी दाता स्वल्पात्मजः कठिनदेहः।
स्त्रीमृष्टपानभोजनवस्त्रेष्वुर्हरिपरो (रा) र्धे स्यात् ॥ १० ॥

सुकुमारांगः कान्तः संगीतस्त्रीप्रियः सुवाङ्मृदुदृक्च (क् सुभगः)
शिल्पश्रुविद्ग्र (ङ्म) धुरः कन्याद्यर्धधि (र्धेऽति) [मा] न्न (न्य) श्च
॥ ११ ॥

कन्यांत्यार्धे ह्रस्वः सेवागन्धर्वलेख्यलिपिविज्ञः।
स्थूलशिराः सविषादः पापर्धिसुखभाक् सु (चादक्षयवृद्धिः
सुखी श्रु) तार्थश्च ॥ १२ ॥

वृष (च) मुखस्तुंगनसः पटुर्विलासी धनी सुधीर्मैत्री (नेत्रः स्यात्)।
पीनायतोऽस्थिसारस्तुलादिमार्धे प्रियस्वजनः ॥ १३ ॥

भिन्ना (हीना) ग्रांघ्रिः कुवि (कुंचि) त केशो बह्वर्थभाक् शठः श्यामः।
स्थिरसत्वो वृत्ताक्षस्तुलापरार्धे भवति शिल्पी (सुत्वक्) ॥ १४ ॥

---

१ अस्य श्लोकस्योत्तरार्धमुत्तरश्लोकपूर्वार्धं च लुप्तं। अतः सारावलीस्थश्लोकद्वयानुसारेण त्रुटितो भागो मया ग्रथितः। २ मन्दाक्षश्चासौ चलांगश्चासौ शठश्चेति विग्रहः। ३ सत्प्रमाणश्चासौ पृथुवक्षाश्चेति विग्रहः।

दुष्टाध्व (ष्टोऽर्थ) भागशांतः स्त्रीषु वपुष्मान्स [सा] हा (ह)
सः शूरः ।

[1]रक्तांतपिंगरौद्राक्षो (क्ष) लुब्धकर्मा [न्वितोऽ] लिपूर्वार्धे ॥ १५ ॥

पीनायतविततांगो रक्तस्फुटलोचनः कितव (नो नृपति) सेवी ।
मित्रं (त्र) [र्णि] भाक् सुकेशोऽष्टम (मा) परार्धे प्रहर्ता च ॥ १६ ॥

स्थूलोष्ठरदः क (प) रिकुंचितदग्निधृतोनतः पथग्रतोरुः
(ग्विदारितपृथुमुखोराः ।)

माल्यांजरष्ठा (बाल्ये विगता) त्मगुरुश्चापया (स्या) द्यर्धे (धे) ज [स्त]
पस्वी [च] ॥ १७ ॥

गुरुलंबभुजः सुतनुः शास्त्रार्थविदायतेक्षणः सुभगः ।
धर्मार्थभाग्य (न्योऽर्थयशः) सहितः शस्त्री निभृ (वृ) तश्चापरार्द्धे
स्यात् ॥ १८ ॥

[2]श्याममृगाक्षो धन्यः स्त्रीष्वजितः सौम्यमूर्तिः श (तिश) ठ आद्ये
(ढ्यः) ।

मूढासन (मृष्टाशनः) सुवेषो मृगाद्यभागे तनूच्च (च्च) नसः ॥ २० ॥

[3]तनुवृत्ततनुः श्यामो रक्तांतदग्तुग्नः साहसी त्वलसः ।
[(रक्तान्तदृष्टिरलसो गुरुदीर्घाटनपरो भवति मूर्खः)] ॥
अस्थिरसमृद्धः स्त्रीमित्रयुक्तो वलो मृगाननांत्यार्धे ॥ २१ ॥

१ रक्तांतपिंगरौद्राक्षश्चासौ लुब्धश्चासौ कर्मान्वितश्चेति विग्रहः । २ श्यामश्चासौ मृगाक्षश्चेति विग्रहः । सौम्यमूर्तिश्चासौ शठश्चेति विग्रहः । ३ अस्य श्लोकस्योत्तरार्धं दुर्बोधमशुद्धिबहुलं च वर्तते । अतः सारावलीगतः श्लोकः कुंडलीमध्ये निवेशितः ।

[(श्यामो रोमचिताङ्गस्तीक्ष्णः ससाहसः सुरौद्रकर्मा च)] ॥ २१ ॥

रक्तोत्पलदृक् ताम्रच्छवि (म्रो मृदु) रल्पसुतोऽलसो विकर्मा च
(तो गुणी लसद्वर्णः) ।
शूरः स्थिरः सत्व (रनारी) सुहृत्कुंभाद्यार्धे च [या] न
रतः ॥ २२ ॥

असितकृशव्यंग (शात्यल्प) तनुः शठोऽलसो नैकृती विषादी च ।
घटपरदले दुरंतो (लेऽतिकृपणो) दारिततामेक्षणः पुरुषः ॥ २३ ॥

पृथुवक्षास्तनु (मुखवक्षा) ह्रस्वो महाललाटो विवाक् (टोऽतिचारु)
पृथुलकी (मू) र्तिः ।
शूरः पटुर्यशस्वी मीनाद्यर्धे गता (र्धेऽङ्गना) दपि (यि) तः ॥ २४ ॥

श्रेष्ठः स्थिरः सुमेधां मृतोदारां गतो नृ (धा दाता स्वक्षः पटुर्नृ)
पतिदयितः ।

शुभवागुन्नतघोणो झषापरार्धे सुमूर्तिः स्यात् ॥ २५ ॥

चंद्रार्कयोरेकतमे बलिष्ठे

होरापतिं (तिः) पश्यति केंद्रगं (गो) वा ।

होरा यथोद्दिष्टफलप्रदात्री

स्यादृर्भसंस्थासु महद्भवेच्च (संस्थस्य समुद्भवेषु) ॥ २६ ॥

॥ इति श्रीजातकसारदीपे होराफलाध्यायो विंशः ॥

## ॥ अथ द्रेष्काणफलाध्याय एकविंशः ॥

**सारावल्यां—**

मेषे प्राग्दका (का) णे दाता हर्ता कलिप्रियो दीप्तः ।
निजबंधुषुऽग्रदंडः क्षयोदयी समरचंडश्च ॥ १ ॥

स्त्रीचपलः शास्त्ररतः स्त्रवति मि (स्त्रीधनभाग्रतिमान्मि) त्रार्थभाक् सुवाक् सुतनुः ।
प्रियगीतश्च मनस्वी मध्यत्र्यंशे द्वितीया (विहारी) स्यात् ॥ २ ॥

गुणवान्परदोषकरो धने (मे) च्छुः सत्यचलयुतस्त्रंशै (स्त्र्यंशे) ।
स्वजनप्रियः प्रियमाद (याद) रनृपसेवी क्रियांते स्यात् (ऽज्ञः) ॥ ३ ॥

पात्रा (ना) न्नवस्त्रभूषणगारु (रागः) स्त्रीकृतानुसारी स्यात् ।
आद्ये वृषभत्रिभागे स्त्रीविरहस्वजनसंतप्तः ॥ ४ ॥

सौम्यः सुतनुर्भोक्ता [स्त्री] सु भगोऽ र्थीस्तान् भू (र्थी भू) षणेप्सुश्च ।
लुब्धो बली मनस्वी स्थिरो द्वितीये वृषत्र्यंशे ॥ ५ ॥

चतुरश्चरस्थिरतनुः भाग्योरो (श्चास्थिरसुतनुभाग्यो वीरो) मलीमसो भीरुः ।
विगतधनुः (नः) कुचरित्रैः [पश्चात्] सु (सं) तप्यजे (ते) वृषस्यांते ॥ ६ ॥

नृपमान्यः कृत्यकरः (न्गो गुणयुक्तः) कलारतः पृथुशिरा धनी प्रांशुः ।
मिथुनाद्ये दका (का) णे वाग्मी वा कित वा (वो) विलासी च ॥ ७ ॥

ह्रस्वमुखः सूक्ष्मकवान् (चो) धन्यो धीमान्मृदुः सुसौम्यवपुः ।
मिथुनद्वितीयभागे स्यात्स्वर° (रूपेतर) यशःप्रतापश्च ॥ ८ ॥

स्थूलशि [रा] रूक्षनखो ग्राही स्निग्धेक्ष (खः सुहृढः स्त्रीद्वेष)
णोऽरिमान्प्रांशुः ।
चंचलवित्तो विभूना (तो) मिथुनस्यांऽते वपुष्मांश्च ॥ ९ ॥

द्विजदेवरतो गौरः परकृत्यकरश्चलः सुधीःसुभगः ।
कर्कटकादित्र्यंशे कांभो भूरि (शे शुभाङ्गनोऽति) प्रजः सुतनुः ॥ १० ॥

लुब्धार्थो दान (ब्धः स्वाद्वदन) परः स्थिरोऽभिमानां (नी) सरुक्
प्रियसद्मः ।
स्त्रीविजितो बहुसहजः सुगतिः कर्किद्वितीयकत्र्यंशे ॥ ११ ॥

काननतोयनि (यानु) रतो विदेशः (श) [गः] स्त्रीव (च) लोऽर्थभाक्
साधुः ।
कर्कटकांत्यत्र्यंशे वृथा शगे (प्रियासवो) भवति माल्यरुचिः ॥ १२ ॥

दाता ह (भ) र्ता बहुधनदारो नृपसेवको रिपुजिगीषुः ।
स्थिरमित्रः सत्वयुतः सिंहस्याद्ये दृकाणे स्यात् ॥ १३ ॥

माल्यद्रविणविभूष (श्रुतिर) णधर्मरुचिर्बुद्धिमान्सुखी कामी ।
दाता स्थिरो चयु (वपु) ष्मान् हरेर्दृकाणे द्वितीये स्यात् ॥ १४ ॥

लुब्धः स्थिरायततनुः स्तब्धः परवित्तसुहृ (त्तहृ) त्सुधीः कितवः ।
सिंहांते नैकसुतः स्त्रीणां नेष्टः प्रगल्भश्च ॥ १५ ॥

सुकु (सुकुमा) रतनुः श्यामो मधुर [समाक्ष] सुवाक् सुधीरनयः ।
स्त्रीभ्योऽर्थभाक् दृकाणे कन्याद्ये दीर्घकंठश्च ॥ १६ ॥

समरोत्कटो वितासी सुनयुग्मनि समगतिर्विदेशरतः ।
[(धीरो विदेशभागी शिल्पकथापण्डितः समरशौण्डः ॥)]
धीरो व्ययी चाल्पकलाकथारतः षष्ठमध्यांशे ॥ १७ ॥

[(वाचाटः श्रुतवाक्यो वनौकसां संमतो द्वितीये स्यात् ॥ १७ ॥)]

नतसुतनुः परधनभाक् गीतरतिः प्रभुदृगवनि (पृथुदृक्शिरा नृ)
पाभिमतः ।
त्यागी स्थिरः सुरूपः शठः कन्यांतदृकाणे ॥ १८ ॥

श्यामः सेवाप्त (ध्त) कलापण्यनियोगे [षु] निपुणबुद्धिः स्यात् ।
मंत्रज्ञः स्मररूप (पो) [धीर] स्तुलादिमे भवति दृका (का) णे
॥ १९ ॥

पद्मा (भ्मा) यतदृक् व्या (रुया) तो वशगोऽनुचितकृत् (वंशगवृद्धानुगः)
पटुः प्रलापी स्यात् ।
शुभरूपवा न्नसखस्तुलामध्यांशे प्रहासश्च (त्तुलाया मध्यांशे सत्वसाह-
सोपेतः) ॥ २० ॥

चपलः शठो विरूपो जिह्मस्तनुमूर्तिरल्पधोरटनः ।
तु (न) ष्टार्थसुहृत्कीर्तिः कृतहाभ्यं [त] रो तु (रस्तु) लांत्ये स्यात्
॥ २१ ॥

गौरः पृथुरक्ताक्षः (क्षो) रणोत्कटः कलिहविः पृथुः स्मृतः
(लिरतिर्बृहद्देहः) ।
चंडो (डः) स्थपोऽ (रोऽ) लिपूर्वे दृका (का) णे शास्त्रचतुरःस्यात्
॥ २२ ॥

चतुरश्चलदृक्कांचम (न) गौरः परवित्तजा (भा) गृजुः क्षौ (कां) तः ।
धर्मांतरा क्रिया (चतुरः शीलकला) वानलिमध्ये मिष्टपानान्नः ॥ २३ ॥

---

१ अयं श्लोकोऽतीवाशुद्धो दृश्यते, अतः सारावलीस्थं पद्यं कुण्डल्यां निवेशितं ।

सुभुजो मधुपिंगाक्षो महोदरः श्मश्रुरोमरहितश्च ।
सरु (ह) जवियुतः प्रहर्ता हिंस्रः कृष्णोऽ (स्रो धीरोऽ) लिनस्तृतीयेंऽशे
॥ २४ ॥

ह्रस्वमुखो गणमुख्यो विदेशगो वृत्तलोचनो वक्ता ।
ऋजुरतिसाधुवृत्ति ध (र्ध) नुर्द्दकाणे धनुः प्रथमे ॥ २५ ॥

शास्त्रार्थमंत्रवेत्ता शांतो मखसत्रकृद्विभुर्वक्ता ।
धनुषो मध्यद्दकाणे तीर्थायतनानुचारी स्यात् ॥ २६ ॥

रूपविलासः च (सश्च) तुरः परांगनाधर्मकीर्तिमान्सु (न) [यु] तः ।
नवमांत्ये च विजि (ष्ट्युः) सु (ष्णुः स) तांगनि (ति) बंधुमुख्यश्च
॥ २७ ॥

लंबभुजः स्त्रीष्व (षु) जितः कांत तः श्यामः शठः प्रकृष्टगुरुः (यशाः)
स्मितवाक् च वल्गुचेष्टो मध्यमवृत्तो (ष्टः सद्धनयुक्तो) मृगादिमत्र्यंशे
॥ २८ ॥

[1]उद्धृद्धजंघहृततो द्रुतरश्चलः शठः श्यामः ॥
(अल्पवदनश्च मध्ये चलः परस्त्रीधनापहर्ता स्यात् ॥)
मृगमध्ये स्त्रीधनताविदारो विवादवान्नटनः ॥ २९ ॥

(चतुरः सतां गतिज्ञः प्रदानशीलो दुरन्तपादः स्यात् ॥ २९ ॥)

घंटालाभी (भागी) कलुषो धर्मव्यसनभाक् कृशो दीर्घः ॥
लभते धनं विदेशे पितुर्नि(र्वि)योगान्मृ(गी मृ)गस्यांऽन्ते ॥ ३० ॥

स्त्रीपा(मा) नरतः प्रांशुः स्थिरकर्मा सुखरतो धर्मोरिपुमान् (नी सुयशाः) ॥
कुंभादिमे द्दकाणे प्रियंगुकुसुमप्रभो भवति ॥ ३१ ॥

---

१ अयं श्लोकोऽतीवाशुद्धः । अतः सारावळागतः श्लोकः कुण्डल्यां निवेशितः ।

र(म)तिहास्यधनो घटधरमध्ये चोऽत्स्त्र(द्र)ष्टवाक् सुचित्रकरः (मित्रयुतः)॥
प्रियसंगीतो [१]लुब्धो (ध) मधु[र]गौरः पिंगदृक् समर्थश्च ॥ ३२ ॥

दीर्घः कृशोऽल्पबाहुः [२]शठो (ठ) [ती] र्थतापित्रे (र्थप्रताप)
धनयुतोऽ [न्तरा] विषमः ।
स्तब्धोऽ [नृतो] विदारितदृक् रतिवित्कुंभांत्यदृक्काणे ॥ ३३ ॥

मीनाद्ये दृक्काणे गौरो मधुदृक् सुधीः कृतज्ञश्च ।
ज्ञानक्रियारतिरतः सुखी विनीतः सुवाक् ख्यातः ॥ ३४ ॥
धनिकोऽ (वनितोऽ) पचारवेत्ता परधनभुक् (ङ्) मिष्टमन्नमाकांक्षी ।
मुखरः सुजनानुमतो ज्ञानी झषमध्यमत्र्यंशे ॥ ३५ ॥

श्यामः पृथुकरपादः सदन्नपानः सुहृद्वरश्चापि ।
हास्यकलावित्प्रेष्याप्रियो झषांत्ये च दृक्काणे ॥ ३६ ॥
[इति] ईरितोऽयं स्वगुणस्वभावै (वो) र्द्रे (द्रे) क्काणजानां गुण वि
(चि)न्हकल्पः (ल्पैः) ।
दृक्कापतौ (द्रेक्काणगे) वीर्यवतीष्टदृष्टे द्रेक्काफलं निर्विक (णकल्पं तु फ)
लं विदध्यात् ॥ ३७ ॥

॥ इति श्रीजातकसारदीपे द्रेक्काणफलाध्याय एकविंशः ॥

---

## ॥ अथ सप्तांशफलाध्यायो द्वाविंशः ॥

गृहे गृहे चंद्रविलग्नयुक्तैः सप्तांशकैराकृतिलक्षणानि ।
यानि प्रसूतौ यवनैः पुराणैः स्मृतानि पुंसां कथयामि तानि ॥ १ ॥

---

१ लुब्धश्चासौ मधुरश्चासौ गौरश्चेति विग्रहः । २ शठश्चासौ तीर्थप्रतापधन-युतश्चेति भावः ।

तनुमुखकुच (च) श्चंडो रक्तांताक्षः [1]कलिक्षतायश्च ।
रणकर्मचौर्य [नि] रतः कृतः कृशः क्रिये पूर्वे (र्वे) सप्तांशे ॥ २ ॥

पृथु [रम्य] भालगंडः सुमुखः सुखभोगदाननिरतश्च ।
पृथुपीनांस (सो) नतपर्व (र्वा) भोगी द्युतिमान् द्वितीयसप्तांशे ॥ ३ ॥

दाक्षिण्यशौर्यविग्रहपापाढ्यः (ढ्य) विलेख्यशास्त्रवित्कृशः कामी ।
कांतोऽटनः प्रवक्ता श्यामो मेष (षे) तृतीयसप्तांशे ॥ ४ ॥

पृथुनयनकपोलोऽदरपाणिर्गौरो गुरुश्च धर्मरतः ।
माल्यस्नानविभूषणरतः क्रिये तुर्यसप्तांशे ॥ ५ ॥

ताम्रद्युतिः प्रचंडो बृहद्भुजः भ्र (जभ्रू) शिरोललाटांसः ।
अजपंचमसप्तांशे शूरस्ताम्रांतप (दृक्) ध्व [स्त]ः ॥ ६ ॥

आयत (त) मूर्तिर्गौरः कान्तः पृथुमधुविलोचनो धनवान् ।
शुभवाग्बुद्धिर्ज्ञानी स्वधीतविद्योऽजषष्ठसप्तांशे ॥ ७ ॥

पृथुदीर्घासितमूर्तिः कलिप्रियो भिन्न [न] खरदकेशाग्रः ।
निष्ठुरकुत्सगलनः पिशुनोऽजे सप्तमे भागे ॥ ८ ॥

पृथुभालगंडवक्षःस्कंधकपोलोऽरुबाहुकः श्यामः ।
घट (मृदु) सूक्ष्मकचो व्यस्तेऽक्षणो वृषे प्रथमसप्तांशे ॥ ९ ॥

स्निग्धद्युतिरायतदृक् (ङ्) मधुरवचाश्चारूयततनुः ।
कामा (मी) विज्ञानकलानिरतो वृषे (षभे) द्वितीयसप्तांशे ॥ १० ॥

---

१ कलिना कलहेन क्षतः नष्टः आयो लाभो यस्य सः ।

प्राज्ञः पीनो गौरो मृगदृक् सुभगां (गो) रतिप्रियो दाता ।
मृदुतनुः (नु) कवो वचस्वी वृषभतृतीये च सप्तांशे ॥ ११ ॥

उच्चमुखं (ख) [गं] डघोणो घनवाक् स्फुटदृक् पृथुश्च (श्र) वा गौरः ।
रक्तनखो भिन्नकटिस्वरो वृषे तुर्यसप्तांशे ॥ १२ ॥

ताम्राभः पिंगाक्षः सुकुमारस्तीक्ष्णवाक् परस्वेच्छः ।
मृतदारो [बहु] रोगी गवि सप्तांशे [च] पंचमे भवति ॥ १३ ॥

पृथुकर्णायततनुरसितदृगुन्नतन (ना) सः कृपा (क्रिया) दक्षः ।
अभिमानी गवि षष्ठे सप्तांशे व्यापदार्तश्च ॥ १४ ॥

गोऽत्यांशे भ्रांतमुखः सितांतदृक् श्यामकृशतनुः स्यात् ।
लुब्धः क्रोधी वक्ता चलोऽल्पसत्वोऽटनश्च श [त्रुम] हः ॥ १५ ॥

ज्ञानी कविर्वचस्वी श्यामः कान्तः शुचिर्विलासी च ।
रतिगीतरतिः ख्यातो मिथुनादिमसप्तां (स) [कां] शे स्यात् ॥ १६ ॥

घ(घ)नगौरः प्रांशुतनुः पृथुदृक् प्राज्ञः प्रियालपश्च मृदुः ।
संगीतधर्मनिरतो द्वितीयसप्तांशके मिथुने ॥ १७ ॥

पृथुदृक् ताम्रविदारितमुखौ (खो) महो (हा) हनुर्दारकर्मा च ।
शूरो हर्ता वक्ता प्र [सा] हसो मिथुनतृतीयसप्तांशे ॥ १८ ॥

आयततनुः सुनसदृक् श्यामः पण्ये प्रयोगमार्गपटुः ।
शूरः सुभगः स्मितवाक् (ङ्) मिथुने चतुर्थसप्तांशे ॥ १९ ॥

रक्तनखाधरनेत्रश्चंडो वक्ता कृशो विभक्तभुजः ।
रतिचौर्यकुटिलकृत्यं (त्यः) [पं] चमसप्तांशके मिथुने ॥ २० ॥

गुर्वायतगौरतनुः स्वक्षनसः काव्यशास्त्रधर्मरतः ।
मधुरः सुधीवि (र्वि) शिष्टः षष्ठे सप्तांशके मिथुने ॥ २१ ॥

स्त्रीशस्त्रकथाद्य (द्यू) तात्पसत्वरोगाध्वभाक् चलो मिथुने ।
युतस (सं) स्निग्धसमासितदीर्घांगोऽत्यसप्तांशे ॥ २२ ॥

उपचितकुर्चोऽ (चोऽ) रुवक्षाः श्यामः प्रांशुः सुवृत्तघोणश्च ।
वस्ता (रक्ता) यन (त) दृक्कर्किणि दीर्घभुजः प्रथमसप्तांशे ॥ २३ ॥

स्थूलोऽष्ठगंडके (कं) ठः शूरस्ताम्रद्युतिः कृशः प्रांशुः ।
प्रसहोऽब्जाक्षः पिंगाक्ष (गः) प्राज्ञः कुलीरे द्वितीयसप्तांशे ॥ २४ ॥

विद्वद्रा (विद्वां) स्तनुरायतदृक् संगीतार्थस्त (नरतः) कविश्चतुरः ।
कर्किणि मृदुस्तृतीये सप्तांशे न भ (शे भ) वति सुकुमारः ॥ २५ ॥

पृथुदृङ्मृदुसूक्ष्मकचः स्तब्धशिराः स्तब्धघोणश्च ।
गीतज्ञो लंबभुजः कर्किणि तुर्ये च सप्तांशे ॥ २६ ॥

उद्वंड[कंठ]घोणस्ताम्रः कृशतनुः पिंगदृक् शूरः ।
अन्यस्त्रीच्छुः कर्किणि पंचमसप्तांशके लग्नात् (ग्ने) ॥ २७ ॥

दीर्घास्याक्षिनसः पृथुकर्णो मान्यश्च बंधुभिर्गौरः ।
सुतनुमतिवचनकर्मा कर्किणि सप्तांशके षष्ठे ॥ २८ ॥

खरवांकेश (वाकेशः) क्लेशो (शी) दीर्घकृशासिततनुः खलस्त्वटनः ।
तिर्यग्दृगुन्नतनसः कर्किणि सप्तांशके प्रासे (चान्त्ये) ॥ २९ ॥

रक्तांगाक्षो दीर्घश्चंडः सुपटुः प्रवृद्धयो (घो) णश्च ।
सिंहादिमेऽस्थिसारः सप्तांशे तुंगखररोमा ॥ ३० ॥

अभ्युद्धतहर्षणस्वो (परो) दीर्घो वक्ता द्वितीयसप्तांशे ।
धृष्टोऽर्थे (र्थी) शास्त्रार्थोऽपचारनयविद्ववेत्सिंहे ॥ ३१ ॥

पृथुपीनायतदेहः पृथुलाभाक्षः स्थिरोऽर्थसंचयः (ये) [विभवी] ।
विधृतिसत्वदारसहितो हरौ तृतीये च सप्तांशे ॥ ३२ ॥

[गाढ] कलिर्दु शीलश्चंडः केकरदृक् विमुखो नात्युच्चः ।
रक्तध (घ) नतनुरे [क] सत्वः सिंहस्य तुरीयसप्तांशे ॥ ३३ ॥

सोत्साहवाक् म (ङ्म) तिस्थितियशःप्रतापः सुद ाल (न) न [न] सोराः ।
हरिपंचमसप्तांशे गौरो वा पृथुशिरालश्च ॥ ३४ ॥

शिरा (दीर्घा) यतवृत्ततनुभ्रां (भ्रो) ताम्यदृगल्पवाग्विषाद्यटनः ।
हरिषष्ठे सप्तांशेऽन्याशोऽवहितः सदीर्घघोणश्च ॥ ३५ ॥

मृदुरुत्त (न्न) तगौरा (रां) गः प्राज्ञा (ज्ञोऽ) ल्पनसोऽल्पवाक् सुवेषश्च ।
सिंहान्त्ये षष्ठांशे गी[तर]तः स्त्रीरतः कान्तः ॥ ३६ ॥

कन्यादिमसप्तांशे वाग्मी प्राज्ञः सुधीर्विनीतश्च ॥
स्वायततनुदृक्पाम्रो (दो) निभृतः समवंशघोणः स्यात् ॥ ३७ ॥

पीनोऽरुचं (प) [दां] श (स) भुजोऽदरो वचस्वी मृदुस्तु पूष्ण (पुष्ट) मुखः ।
सुकुमारो रतिसक्तोऽगनाद्वितीय (ये) [च] सप्तांशे ॥ ३८ ॥

अभिमानकूटवादस्तेव (य) रतो रक्तगात्रदृक् चपलः ।
तनुरोमोऽच्चकमु (चमु) खोऽल्पकचित्तः कन्यातृतीयसप्तांशे ॥ ३९ ॥

[1]शिल्पश्रुतिमुखकमनि (कामी म) हाहनुस्कंधदृक्शिराः प्राज्ञः ।
दानरुचिः स्फुटघनवाक्कन्यासप्तांशके तुर्ये ॥ ४० ॥

कन्यापंचमसप्तांशेऽलसो भीरु [रुग्र] वाक्क्रोधी ।
[पी] नहनुर्दीर्घमुखः स्नायुतना (युताऽ) सिततनुमृगि (मृग) दृक् ॥ ४१ ॥

पूर्णसुविभ [व] सुरक्तगात्रोऽल्परतिः श्रुतियचो [रतो] धर्मी ।
कन्याषष्ठसप्तांशे कृष्णाक्षो (क्ष) नसाधन (र) भ्रूः स्यात् ॥ ४२ ॥

तनुपिंगकचो मध्वायतदृक् स्थूलोऽष्ठगंडगलदंष्ट्रः ।
[2]उग्र क्रुधा ता (पा) परुचिः कन्यायाः सप्तमेंऽशेंऽन्त्ये ॥ ४३ ॥

पद्माक्ष उच्चघोणस्तरुणांकुरसंनिभः सुदीप्ततनुः ।
[3]वक्तव्यं (व्य) धनार्जनज्ञस्तुलादिसप्तांशे (शके)सुधीर्नृभृत् ॥ ४४ ॥

[4]वृत्तास्य (स्यो) वृष्टि (ष) कर्मा क्लिष्टध्वनिरुन्नतोऽमनसोऽष्ठः ।
हिंस्रो रक्तश्यामस्तुलाद्वितीये च सप्तांशे ॥ ४५ ॥

धर्मार्थिशास्त्रशस्त्रास्त्रकृत्यवित्तुंगनसः शिरालश्च महान् ।
पृथुवदननयनमूर्तिस्तुलातृतीये च सप्तांशे ॥ ४६ ॥

कृष्ण (ष्णः) खरस्वरांगो दीर्घमुखः पीनकंठवक्षोऽष्ठः ।
जिह्मश्चपलोऽल्पकर्मा वक्रनखस्तुलाचतुर्थसप्तांशे ॥ ४७ ॥

---

१ शिल्पश्च श्रुतिश्च शिल्पश्रुता ते मुखे येषां तानि शिल्पश्रुतिमुखानि पंडितपामरोपयुक्तानि सर्वशास्त्राणि तेषु कामः इच्छा अस्यास्तीति तत्कामीति भावः । २ क्रुधा कोपेन उग्रः क्रूरस्वभाव इति योजना । ३ वक्तव्यज्ञो धनार्जनज्ञश्चेति भावः । ४ वृषो धर्मः तदात्मककर्मवानित्यर्थः ।

[1]शुभ्रनसाक्षिपत्रः सममूर्तिः स्त्रीबलः सपेशलवाक् ।
तुलिषष्ठे सप्तांशे भवति नरः सुमुखघोषकोष्ठश्च ॥ ४९ ॥

स्थूलोऽष्ठास्थिरदो मधुपिंगलकेशः सुरक्तदृक् क्रूरः ।
बालाब्जकोमलांगः सप्तमसप्तांशके तुलिनि ॥ ५० ॥

घातानृतमेदा (दा) हवरतो नतश्च नख (नखश्च) पिंगरक्ताक्षः ।
अलिपूर्वसप्तमांशे खरपिंगकचश्च [च] लदेहः ॥ ५१ ॥

पृथुदृक्तनु (नू) रू [जुबु] द्धिः सुनसः कौर्पे द्वितीयसप्तांशे ।
उद्वृत्तपीता (न) [देहोऽ] रुणकान्तिः शास्त्रचित्रज्ञः क (वित्क) ला
[भि] ज्ञः ॥ ५२ ॥

पटुवाङ्निरुद्धपूर्वार्धवृद्धकायोऽसिताविकृतमूर्तिः ।
कठिणोऽ (नोऽ) घृणो गुरूणां अ (णाम) लिनि तृतीये च सप्तांशे
॥ ५३ ॥

पृथुगंडघोणजठरो वक्रवचाः कौर्प्यतुर्यसप्तांशे ।
उद्वसनि (उच्छ्वसि) तनितंबः स्यात्सहर्षभाक्षी (षी) महाबाहुः
॥ ५४ ॥

कृशजठरः पृथुवक्षा वक्ता द्यूतप्रियः सुख [द] बाहुः ।
सेवायुक्तोऽल्पपटुः सप्तांशे पंचमेऽष्टमभे ॥ ५५ ॥

बालोत्पलदृङ्मतिमांस्तनुतुंगनसोऽल्पवाङ्मृदुर्ध म (न)[वान्] ।
अलिषष्ठे सप्तांशे सुकोमलौ (लो) दारसत्वतनुः ॥ ५६ ॥

---

१ अत्र तुलापञ्चमसप्तांशफलपरः श्लोको लुप्तः ।

समरेच्छु (च्छुः) प्रांशुनसः पृथुशोर्षस्मि (स्फि) क् पिंगरोमाक्षः ।
अलिसप्तांशे प्राप्ते (चान्त्ये) ख्यातः स्थिरधीरसत्वश्च ॥ ५८ ॥

स्थूलोष्ठगंडवा (ना) सः पृथूदरौ (रां) सश्च सत्ववान्मधुदृक् ।
तुंगशिराः पिंगलारपा (तनुभा) श्चाद्यम (मे) [च] सप्तांशे ॥ ५९ ॥

मृगदृक् सुवृत्तजंघोऽन्यार्थस्त्रीहृत्सुगेयविलिरीर्ष्यः (दतीर्ष्युः) ।
ताम्रांगाक्षो ह्रस्वो वह्निरतो धनुषि तृतीयसप्तांशे ॥ ६० ॥

उन्नतसुनसस्कंधः स्थूलतनुहनुवृ (वृ) षेक्षणः [प्रांशुः] ।
कपितुंगशिरा गानप्रियश्चतुर्थे धनुषि सप्तांशे ॥ ६१ ॥

तनुकठिनायतमूर्तिः सुनसो दारितसुदृक् प्रसभ (त्र) श्च ।
स्थितिकाव्यादिकलाभिज्ञः (लाज्ञः) सप्तांशे पंचमे धनुषि ॥ ६२ ॥

हरिषष्ठे सप्तांशे त्व (त) पोभिरामो मृदुवचः कर्म [र्मा] ।
[1]पृथुमुखनयन (नो) गुणघनो (न) मृदुगौरोऽपचितशीर्षः ॥ ६३ ॥

दीर्घोष्ठनासिकाक्षः सुसत्ववाक्द्युतितनुर्धनुषि शूरः ।
सप्तांशेऽन्त्ये त्यागी महाललाटश्रवणदंतः ॥ ६४ ॥

[2]तनुवंशे (श) घोणदीर्घास्यतनुजिह्वोवशस्थः (स्थ) कीर्तिभाक्
श्यामः ।
स्वरक्त (त्) युवक्त्रवासी भीरुर्मकरादिसप्तांशे ॥ ६५ ॥

---

१ गुणघनो मृदुः गौरवर्णः उपचितशीर्षश्चेति योजना । २ तनुवंशघोणश्चासौ दीर्घास्यतनुश्चासौ जिह्मश्चेति; वशस्थश्चासौ कीर्तिभाक् चेति च विग्रहः ।

गौरोपचितोरुतनु सुमुखी धन (नी) समदे (द) चेष्टः ।
दक्षश्चलो युयुत्सुः द्वि (त्सुर्द्वि) तीयसप्तांशे विकृष्टस्तु हासमतिः
॥ ६६ ॥

[1]रक्तांगाक्षश्चंडः कृश (शः) परस्त्रीधनसमदचेष्टः ।
दक्षश्चलो युयुत्सुः तृ (स्तृ) तीयसप्तांशके मकरे ॥ ६७ ॥

स्मितमृदुभाषी मतिमान् गृहास्थिरो (रः) [स्थूल] गंडघोणनेत्रश्च ।
मृगतुर्यसप्तमांशे स्त्रीच्छुः पद्मांकुरश्यामः ॥ ६८ ॥

संगीतशिल्पविग्रहसेवारतिर्विनीतको मान्यः ।
मृगपंचमसप्तांशे दीर्घासितमूर्तिरुरुगंडः ॥ ६९ ॥

हेमप्रभो विशालः श्रेष्ठजनानां प्रियः कुवलयाक्षः ।
मृगषष्ठे सप्तांशे तप (पः) श्रुतिज्ञानवांश्च मृदुः ॥ ७० ॥

वृद्धोऽरुतनुश्चंडो नतपक्ष्मा रक्तचक्षुरभिमानी ।
पृथुकंठास्यनसभ्रूर [ट] नोऽत्ये मकरसप्तांशे ॥ ७१ ॥

[2]निकृतिरवलोक्यसत्वः खरकेकरदृक् बृहच्छिरा (रः) [फा] लः ।
दीर्घो घटादिसप्तांशके शिरालो विनतघोणः ॥ ७२ ॥

पक्वामणि (ल) कनिभः पृथुरल्पकथो दारितास्यनासाक्षः ।
कुं [भ] द्वितीयसप्तांशे पिपासुः शूरो मनस्वी च ॥ ७३ ॥

---

१ अत्र ६६-६७ तमयोः श्लोकयोः प्रायः साम्यं दृश्यते । अतः एकस्मिन् श्लोके वधमानान्येव पदानि द्वयोरपि श्लोकयोरावृत्तानीति ज्ञायते । प्रथमश्लोकगतं "विकृष्टस्तु हासमतिः" इत्येतत् द्वितीयश्लोकगतेन परस्त्री इत्यनेनानुस्यूतं "परस्त्रीविकृष्टस्तु हासमतिः" इति पठनीयम् । २ निकृतिः कपटाभिसंधिः । अवलोक्यं सर्वैर्दर्शनीयं सत्वं यस्य सः ।

मार्जारदृक्चलतनुस्ताम्रांगः स्वल्पधीर्घटतृतीये ।
मेदाहव (वा) नृत्तचौर्यादिकृत्सप्तांशे सधूम्रकपिलकचः ॥ ७४ ॥

मृद्वल्पवाक् पिपासुस्तुंगनसो रक्तगौर एणाक्षः ।
नीलांबरश्चतुर्थे घटसप्तांशे च पटुविनीतः ॥ ७५ ॥

रूक्षकचश्चितां (त्रां) गो गौरश्यामः सुरुक् सुमुखवचनः ।
घटपंचमसप्तांशे प्रवासरुचिः शिल्पपानरुचिः ॥ ७६ ॥

गौरोऽ[1]च्छच्छविपृथुगात्रः सुमुखेऽक्षणो विनीतश्च ।
घटषष्ठे सप्तांशे व्रतदेवार्चनपरोऽल्पकथः ॥ ७७ ॥

दीर्घता (स्ता) ग्राक्षितनुः ख्यातः सत्त्वाधिकः पृथुनसोष्ठः ।
उत्कृष्टवाक् वपुष्मान् पिंगकपोलो घटांत्यसप्तांशे ॥ ७८ ॥

[2]भक्षानवद्योणस्थो नवतोलीवनं वनदलप्रभुः सुमतिः ।
(सूक्ष्माननघोणोष्ठो नवनालीकदलप्रभः सुमतिः ॥)
श्रुतसत्त्वरतः प्रख्यो मीनादिमसप्तमे भागे ॥ ७९ ॥

चूतांकुरारुणतनुस्तनुरोमसुखश्चकारदकष्टः (खः सुवाक्दरदोष्ठः) ।
युधि वैरिहा द्वितीये झषसप्तांशे सुदृढसत्त्वः ॥ ८० ॥

पृथुमुखाख्यो (खोष्ठो) वृद्धोपचितांगो [3]गीरुयि (चि) द्वितीयश्च ।
सुभ्रूनासाकेशांघ्रिर्झषतृतीये च सप्तांशे ॥ ८१ ॥

---

१ अच्छछविः स्वच्छकान्तिः स चासौ पृथुगात्रश्चेति योजना। २ अस्य श्लोकस्य पूर्वार्धमतीवाशुद्धम् । कुंडलीस्थपाठो मया कल्पितः । ३ गीरुचिद्वितीय इत्येकं पदं । गिरि वाचि रुचिर्येषां ते गीरुचयो विद्वांसः ते द्वितीयाः सहाया यस्य सः पण्डितगोष्ठीपरिमण्डित इति भावः ।

मंत्री सुनिश्चितार्थः पूर्णाढ्यो वल्गुवाक् सुबुद्धिश्च ।
झषतुर्ये सप्तांशे पालाशदलविभक्तकांगः ॥ ८२ ॥

श्वेतजगर्गाभ (श्रेष्ठवचा बहु) गौरो नीलोत्पलदृक् सुमृदु शुचिर्दक्षः ।
मा (मां) सलवक्त्रतनुर्झषपंचमसप्तांशके क्षांतः ॥ ८३ ॥

धर्मसुदक्षो वारिजलद (दल) वर्णनिभो विधृतदेहः ।
पृथुसुगंडदशनोत्कटाननो मीनषष्ठसप्तांशे ॥ ८४ ॥

[1]रूक्षांगजोऽवाग्धीभग्नमनसा तनुश्च दुष्टः ।
(रूक्षांगजोऽल्पबुद्धिर्भग्नमनसः सूक्ष्मतनुरल्पः ॥)
जिह्मात्सुतां झषे वसन्नधैर्यौंत्यसप्तांशे ॥ ८५ ॥
(जिह्मोऽल्पवागधीरोऽसितश्चलः स्याज्झषेऽत्यसप्तांशे ॥ ८५ ॥)

**तथा च यवनः ॥**

शूरः प्रसिद्धः स्थिरकाव्यकर्मा
सप्तांशकेऽर्कस्य बली प्रसिद्धः ।
शुचिर्मुहुर्धर्मपरो विनीतो
रतिप्रियः स्याच्छशिनः सुधीश्च ॥ ८६ ॥

दुर्मर्षणः सत्वबलाभिमानी
स्यात्सप्तभागे क्षितिनंदनस्य ।
कविः कथाशिल्पकलाभिरामो
विद्वान्सुवाक्य (क्यो) निपुणो बुधस्य ॥ ८७ ॥

---

१ अयं श्लोकः सर्वप्रकारेणाशुद्धः । तत्स्थाने मांसबद्धः कुण्डलीगतः श्लोकः पठनीयः ।

विशारदः स्यात्स्थिरसत्त्वबुद्धि
गुरोर्मतो ज्ञानवतां वरिष्ठः ।
कामी विलासी रतिहास्यलीला
गांधर्वगानाभिरतिर्भृगोः स्यात् ॥ ८८ ॥

मूर्खोऽलसो जिह्ममतिर्विकर्मा
सौरस्य पापाभिरतो नरः स्यात् ।
[1]स्वक्षेत्रनीचोच्चविधानजानि
ज्ञेयानि चैषां तु फलानि तानि ॥ ८९ ॥

॥ इति सप्तांशफलाध्यायो द्वाविंशः ॥

---

## ॥ अथ संक्षिप्तलग्ननवांशफलाध्यायस्त्रयोविंशः ॥

**अथ नवांशफलं—**

[2]भागाधिपः श्रेष्ठबलो विलग्ने
यदा भ [वे] त्केंद्रमुपागतो वा ।
स भागसंज्ञोऽपगतस्य राशेः
कृतस्वभावं विदधाति पुंसां ॥ १ ॥

पृथक्पृथक् (ङ्) नवांश त्रिंशांशफलं वक्ष्यमाणं ज्ञेयं ॥

॥ इति संक्षिप्तलग्ननवांशफलाध्यायस्त्रयोविंशः ॥

---

१ पूर्वोक्तं सप्तांशफलं सप्तांशाधिपे स्वोच्चगते पूर्णं, मूलत्रिकोणगते पादत्रयं, स्वक्षेत्रगते अर्धं, मित्रक्षेत्रगते पादमितं, शत्रुक्षेत्रगते अष्टमांशमितं, नीचक्षेत्रगते अस्तं गते च शून्यं भवतीति तात्पर्यं । २ भागाधिपः लग्ननवांशाधिपः, श्रेष्ठबलो विलग्ने यदा भवेत्, केन्द्रमुपागतो वा यदा भवेत् तदा सः लग्ननवांशाधिपः, भागसंज्ञोपगतस्य लग्ननवांशराशेः कृतस्वभावं पुंसां विदधाति । बलिष्ठो लग्ननवांशाधिपतिर्लग्ने केंद्रे वा स्थितः लग्ननवांशसंबंधिनं स्वभावं पुंसां विदध्यादिति यावत् ।

## अथ ग्रहबलफलाध्यायश्चतुर्विंशः

**अथ तन्वादिद्वादशभावाः ससंधयो लेख्याः,**
**भावकुंडली च, उपचयापचे (च) यफलानि च ।**
**ग्रहाणां [1]त (ता) त्कालिकमैत्रीचक्रं, [2]सप्तवर्गचक्रं लेख्यं ।**
**[3]षड्बलानि च लेख्यानि ॥**

**तेषां फलं—**

सर्वजातकफलस्य निर्णयो
नो भवेद्ग्रहबलेन विना हि ।
षड्विधग्रहबलस्य निर्णयं
तेन वच्मि यदुदीरितमाद्यैः ॥ १ ॥

---

१ सर्वेषामपि ग्रहाणां स्वस्मात् दशमैकादशद्वादशद्वितीयतृतीयचतुर्थगता ग्रहास्तत्कालमित्राणि भवन्ति । तच्चक्रं लेख्यमिति भावः । २ राशिः, होरा, द्रेकाणं, सप्तांशः, नवांशः, द्वादशांशः, त्रिंशांशश्चेति सप्तवर्गी सलमानां सवेषां ग्रहाणां भवति । तच्चक्रं लेख्यमिति भावः । ३ ग्रहाणां स्थानबलं, दिग्बलं, दृग्बलं, कालबलं, चेष्टाबलं, निसर्गबलं चेति षड्बलानि । स्वोच्चे, मूलत्रिकोणे, स्वक्षेत्रे, सुहृत्क्षेत्रे, स्वद्रेकाणे, स्वनवांशे वा स्थितानां ग्रहाणां, स्त्रीराशौ युग्मराशौ स्थितयोः स्त्रीग्रहयोश्चन्द्रशुक्रयोः, पुरुषराशावोजराशौ स्थितानामन्येषां ग्रहाणां च स्थानबलं भवति । मित्रशुभग्रहदृष्टानां ग्रहाणां दृग्बलं भवति । लग्ने बुधगुर्वोः, चतुर्थे शुक्रचन्द्रयोः, सप्तमे शनेः, दशमे रविभौमयोः स्थितौ दिग्बलं भवति । रात्रौ चन्द्रभौमशनीनां, सदा बुधस्य, अन्येषां दिवा, क्रूराणां शनिकुजरविपापयुतबुधक्षीणचन्द्राणां कृष्णपक्षे, अन्येषां शुभग्रहाणां शुक्लपक्षे, वर्षमासदिवसकालहोराधिपतीनां क्रमेण स्ववर्षमासदिवसकालहोरासु च कालबलं भवति । उत्तरायणे रविचन्द्रयोः, सूर्याद्दूरं गतानां, वक्रं गतानां, चन्द्रसमागतानां च कुजादीनां ताराग्रहाणां चेष्टाबलं भवति । ताराग्रहाणामन्योन्यसमागमरूपे युद्धे जयिनः मुत्तरदिग्गतानां विपुलकिरणानां चेष्टाबलं भवति । शनेः सकाशाद्भौमः, भौमाद्बुधः, बुधाद्गुरुः, गुरोः शुक्रः, शुक्राच्चन्द्रः, चन्द्राद्रविश्च क्रमेण निसर्गबलयुताः । एतानि षड्बलानि श्रीपतिपद्धत्यादिजातकोक्तगणितरीत्या साधितानि पृथग्बलरूपाणि बलपिण्डरूपाणि च लेख्यानीति भावः ।

॥ राशिबलफलम् ॥

स्यात्तुंगवीर्ये परमावलक्ष्मी
वेलाधिपत्यं च त्रिकोणवीर्ये ।
[1]स्वक्षा (क्षा) दिवीर्ये नृपतेः प्रसादं
श्रेष्ठां च कीर्तिं लभते मनुष्यः ॥ २ ॥

कलासु दक्षः परलोकभीरु
[2]र्वे (र्न) रांगनो (ना) राशिबले सुरूपः ।
[3]स्याद्राशिवीर्ये (र्य)च पराजयः स्या
न्नीचारिगे दैन्यमतीव खेटे ॥ ३ ॥

॥ दिग्बलफलम् ॥

विभूषणं [4]स्वां (स्वं) बरवाहनाद्यं
ककुद्बले तद्दिशि शोभनं स्यात् ।

॥ कालबलफलम् ॥

दिवारात्रिबले दद्यात्खेचरो भूगजान्वितां ।
लक्ष्मीं शौर्यं सुखं पुंसां रिपूणां च परिक्षयं ॥ ४ ॥

---

१ स्वक्षेत्रादिसप्तवर्गबले इत्यर्थः । सारावळीरीत्या मित्रबलफलमेतत् । स्वक्षेत्रादिसप्तवर्गबले मित्रबले च फलमेतद्भवतीति भावः । २ नरग्रहे नरराशौ अंगनाग्रहे अंगनाराशौ च स्थिते नरांगनाराशिबलं भवति । तस्मिन्सति सुरूपयुतः स्यादिति भावः । ३ पूर्वोक्तमुच्चवीर्यं, त्रिकोणवीर्यं, स्वक्षादिवीर्यं नरांगनाराशिबलं च राशिवीर्यं स्यादिति, तस्य च राशिवीर्यस्य पूर्वोक्तं फलं च भवेदिति भावः । खेटे नीचारिगे राशिवीर्यं नास्ति तस्य च फलं पराजयादिकमिति भावः । ४ स्वं सुखं । दिग्बलयोगे बुधगुरू पूर्वां, शशिशुक्रा-वुत्तरां, शनिः पश्चिमां, रविभौमौ दक्षिणां दिशं प्राप्य विभूषणादिकं दापयेयुरिति तात्पर्यं ।

स्त्रीसुवर्णमहीवस्त्रगजरत्नादिसंपदा (द:) ॥
शत्रुनाशं सुखं कीर्तिं दद्यात्पक्षबलान्वितः ॥ ५ ॥

चेष्टाबलफलम्

कचिद्राज्यं कचित्पूजां कचिद्द्रव्यं कचिद्यशः ॥
ददाति विहगश्चित्रं चेष्टावीर्यसमन्वितः ॥ ६ ॥

वि (व) क्रिणश्च महावीर्याः शुभा राज्यपदा ग्रहाः ॥
पापा व्यसनदाः पुंसां कुर्वंति च वृथाऽटनं ॥ ७ ॥

यो ग्रहो निर्जितारातिः स करोति सुखं जयं ॥
प्रस्फुरन्मण्डलो राज्यं

दृग्बलफलम्

आरोग्यं दृग्बलान्वितः ॥ ८ ॥

षड्बलपिण्डफलम्

आचारसत्यसुख (शुभ) शौचरताः सुरूपा
स्तेजस्विनः कृतविदो द्विजदेवभक्ताः ।
सद्व (स्त्र) कमाल्य (गन्ध) जलभूषणसत्प्रि (त्प्रि) याश्च
[1]सौम्यग्रहैर्बलयुतैः पुरुषा भवंति ॥ ९ ॥

[(कृष्णाः कुकर्मनिरता निजकार्यनिष्ठाः
साधुद्विषः सकलहाश्च तमोभिभूताः ।

---

१ पापग्रहाणां बलाधिक्ये फलं सारावलीस्थं कुण्डल्यां निवेशितं ।

क्रूराः सदा वधरता मलिनाः कृतघ्नाः

पापग्रहैर्बलयुतैः पिशुनाः कुरूपाः ॥ १० ॥)]

इति श्रीजातकसारदीपे ग्रहषड्बलफलाध्यायश्चतुर्विंशः

---

## ॥ अथ रश्मिफलचिन्ताध्यायः पञ्चविंशः ॥

¹[(नीचविहीनः शोध्यश्चक्रात् षड्भवनतो यदाऽभ्यधिकः ॥

आत्मीयरश्मिगुणितात्षड्भक्ताद्रश्मयस्तस्मात् ॥ १ ॥)]

---

१ अत्र मूलकोशे प्रथमः श्लोकः द्वितीयश्लोके आदिभागश्च नास्ति। लुप्तो भागो मया सारावल्यनुसारेण पूरितः। तत्र प्रथमः श्लोको दुर्गमत्वाद्विशतो व्याख्यायते। सूर्यादीनां ग्रहाणां क्रमेण १०, ९, ५, ५, ७, ८, ५ रश्मयः संभवंति। एतच्च महेन्द्र-शास्त्रानुसारेण। मणित्थमयबादरायणादिमतानुसारेण च सर्वेषामपि ग्रहाणां प्रत्येकं सप्त रश्मयः। अत्र द्वितीयमेव मतं बहुसंमतत्वात्सारावल्यादिसंमतं। एते च किरणाः स्वोच्चे पूर्णाः। नीचे किरणाभावः। मध्येऽनुपातः। तमनुपातं प्रदर्शयितुमाह ॥ नीचविहीन इति ॥ स्पष्टग्रहस्तदीयेन नीचध्रुवकेण हीनः कार्यः। स्पष्टग्रहस्य नीच ध्रुवकाल्पत्वे स्पष्टग्रहे द्वादशराशीन् संयोज्य तस्मान्नीचध्रुवकं शोध्यं। अवशिष्टं षड्भाधिकं चेद्द्वादशराशिभ्यः शोध्यं। अवशिष्टस्य षड्भाल्पत्वे तदेव ग्राह्यं। एतच्च ग्रहनीचध्रुवयोरन्तरगतं राश्यात्मकं फलं। तच्च तत्तद्ग्रहरश्मिसंख्यागुणितं षड्भक्तं कार्यं। लब्धा रश्मिसंख्या भवति। उदा-स्पष्टरवि ३-१० रविनीचं ६-१० अत्र स्पष्टरवेः नीचध्रुवकापेक्षया अल्पत्वेन रवौ द्वादशराशियोगे कृते १५-१० तस्मान्नीचध्रुवके शोधिते जातं ९-० अस्य षड्भाधिकत्वेन द्वादशराशिभ्यः शोधने कृते जातं ३-० राश्यात्मकं स्पष्टरविनीचान्तरं। एतच्च रविरश्मिभिर्दशभिर्मतान्तररीत्या सप्तभिर्वा गुणितं ३० अथवा २१ षड्भिर्भक्तं ५। अथ वा ३-१/२। एते सूर्यकिरणाः इति श्लोकाभिप्रायः। इमे च किरणाः मित्रद्वादशांशगते ग्रहे द्विगुणाः कार्याः। स्वोच्चस्वद्वादशांशगते ग्रहे त्रिगुणाः कार्याः। स्वोच्चे स्वराशौ च विद्यमानो ग्रहो यदि वक्री भवति तर्हि त्रिगुणाः कार्याः। अन्यत्र यदि वक्री भवति तर्हि द्विगुणाः कार्याः वक्रान्तावस्थायां ग्रहे, स्वोच्चादिषु सर्वत्र द्विगुणाः कार्याः। वक्रत्यागे सति स्वोच्चादिगतस्य किरणाः स्वीयेन द्वमांशेन हीनाः शत्रुद्वादशभागे, नीचद्वादशभागे च स्थितस्य ग्रहस्य किरणाः स्वीयेन षोडशभागेन हीनाः कार्याः। रविणा अस्तं गतस्य ग्रहस्य किरणाः शून्यं। शुक्रशन्योरस्तत्वेपि किरणलोपो नास्ति। इति ॥ १ ॥ पूर्वोक्तरीत्या साधितानां सप्तग्रहरश्मीनां योगस्य फलमस्मिन्नध्याये निगद्यते। एकादि पंचेत्यादिना ॥

२.[एकादि पञ्च १-५ यावद्] भिरतिदुःखिताः कुल [वि]
हीनाः ॥
परतर्के (ऽत्र) का दरिद्र (द्रा) नोचरताः स(सं)भवंति नराः ॥ २ ॥
परतो दशकं ६-१० यावत्सूर्या (वद्भूनका) दीना (ना)
विदेशगमनरताः ।
जायंतेऽत्र मनुष्याः सौभाग्य परिच्युता मलिनाः ॥ ३ ॥
ऊर्ध्व (र्ध्वं) पंचदशा ११-१५ तिर्यावंतो (वत्ता) [व] ब (ह्र)
हुजनाः (श्रुतः) सुजनाः ।
धर्माभिरताः सुमुखाः कुलस्य तुल्याः प्रजायंते ॥ ४ ॥
आविंशते १६-२० र्भवेयुः कुलाधिका धनयुता जनाः (न) ख्यातीः
(ताः) ॥
कीर्तिकराश्च मनुष्या यथाक्रमं स्वजनसंपूज्याः ॥ ५ ॥
सुभगा धीराः कृति [न]ः पूज्या [भूपा] स्यु (स्तु) शरकृर्ति २१-२५
या (तिर्या) वत् ।
परतो भवंति मनुजाः संसाधितसकलकरणीयाः ॥ ६ ॥
अत उत्तरेण चंडा नृपाश्रिता नृपतिलब्धधनसौख्याः ॥
त्रिंश २६-३० द्यावत्सचिवाः पूज्याश्च भवंति भूपानां ॥ ७ ॥
एकत्रिंशद्भि३१स्तु प्रवराः ख्याता महीभुजामिष्टाः ॥
द्वात्रिंशद्भिः३२पुरुषाः पंचशतग्रा (चाशद्ग्रा) मपतयः स्युः ॥ ८ ॥
ग्रामसहस्राधिपतिं त्रिंशद (ध्य) धिका३३करोति रश्मीनां ॥
त्रिसहस्रग्रामाणि (मेशं) पुरुषं सूतौ (ते) चतुस्त्रिंशत्३४ ॥ ९ ॥

परतो३५ मंडलभाजो बहुकोशपरिग्रहा महीमात्राः (हासस्वाः) ॥
प्रख्यातकीर्तियशसो भवंति सुभगाश्च लोकानां ॥ १० ॥

त्रिंशत्षड्भिः सहिता ३६ रश्मीनां यस्य जन्मसमये स्यात् ॥
सार्धं भुनक्ति लक्षं ग्रामाणां वै पुमान्नियतं ॥ ११ ॥

त्रिंशत्ससमेता३७रश्मीनां संभवे [भवे]येषां ॥
लक्षत्रितयपतित्वं ग्रामाणां जायते तेषां ॥ १२ ॥

त्रिंशद्वसुभिः३८ सहिता गावो येषां भवन्ति पुरुषाणां ॥
मुनिसंमितलक्षाणां ग्रामाणां तेऽधिपा ज्ञेयाः ॥ १३ ॥

त्रिंशत्सनवा३९गावो जन्मनि येषां ग्रहोत्थिताः पुंसां ॥
सं(ते)तोषितसकलजना भवंति पृथ्वीधराः पुरुषाः ॥ १४ ॥

दशजलधिगुणा४० या रश्मिसंख्या नराणां
दिशति पृथुलभूमेः पालकत्वं च ये(ते)षां ।
हृतरिपुवनिताभिर्गीयतेऽतीव कीर्तिः
करुणरुदितशब्दै (गर्भे) रुयताक्रांतसारं (यदाक्रोशशब्दैः) ॥ १५ ॥

[1]शशिज[ल]निधि४१संख्यै रश्मिभिः सू(श्रू)यते यो
[(जलनिधिरशनायाः पार्थिवः स्यात्स भूमेः ॥)]
द्विजलधिरस(श)नायाः पक्षवेदाख्यसंख्यै४२
क्षित(ज)लधिरस(श)नाया रामवेदै४३स्तथैव ॥ १६ ॥

---

१ अत्र द्वितीयः पादो लुप्तः स च सारावलीत उद्धृतः कुंडल्यां निवेशितः

वेदाब्धितुल्यै४४श्च मयूखजालै
जाता नरेंद्राः खलु स(सा)र्वभूमे (भौमाः) ।
सौम्याः सुखा(र)ब्राह्मणभक्तिशीला
दीर्घायुषः सत्य(त्व)युता भवंति ॥ १७ ॥

परतः परतः किरणैः(णै)द्वारा(द्वीपा)न्तरपालका निरुपसर्गाः ॥
सर्वनभस्या(मस्याः)सुभगा महेंद्रतुल्यप्रतापाश्च ॥ १८ ॥

चत्वारिंशद्युक्ताः(क्ता)पंचादिभि४५ ४९रत्र यस्य सूतस्य ॥
ज्ञेयं तस्यारिष्टं सर्वक्षितिपालकत्वं वा ॥ १९ ॥

भुवनभरसहिष्णोः सर्वतः क्षीणशत्रो
स्त्रिदशपतिमहिम्नः सर्वलोकैस्तुनम्यः (कस्तुतस्य) ।
विदधति विहगानां रश्मयोऽतीव दीप्तां(प्ता)
स्तुरगकृति४९समानाश्चक्रवर्तित्वमेव ॥ २० ॥

[1]अभिमुखकरप्रवाहाः फलं प्रयच्छन्ति पुष्टतरमत्र ।
तद्विपरीतं पुंसां पराङ्मुखस्था ग्रहेंद्राणां ॥ २१ ॥

जन्मसमये ग्रहेभ्यो (हाणां) रश्मीनां स(सं)[क्षये]क्षयो भवति ॥
वृद्धौ वृद्धिर्नृणां परमोच्चगताः (णामभमोत्तमता) क्रमेणैवं ॥ २२

॥ इति श्रीजातकसारदीपे रश्मिफलचिंताध्यायः पंचविंशः ॥

---

१ नीचाच्च्युतानां ग्रहाणां किरणा उच्चस्थानाभिमुखत्वेनाभिमुखा इत्युच्यन्ते । तथा स्वोच्चाच्च्युतानां ग्रहाणां किरणा पराङ्मुखस्थोच्चाभिमुखत्वात्पराङ्मुखा इत्युच्यन्ते ।

## अथ दीप्ताद्यवस्थाध्यायः षड्विंशः

### [1]जन्माधिपो विलग्नेशः

[दीप्तः] स्वस्थो मुदितः शांतः शक्तः प्र(नि)पीडितो दीनः (भीतश्च)।
विकलः खलश्च कथितो नवप्रकारो ग्रहो हरिणा ॥ १ ॥

स्वोच्चैर्भ(च्चे भ)वति च दीप्तः स्वस्थो(स्थः)[स्वगृहे सुहृद्गृहे]मुदितः ॥
शांतः शुभवर्गस्थः शक्तः स्फुटकिरणजालश्च ॥ २ ॥

विकलो रविलुप्तकरो [2]ग्रहाभिभूतः प्रपीडितश्चापि ॥
[3]पापगणस्थश्च खलो नीचे दीनः (भीतः) समाख्यातः ॥ ३ ॥

स्वोच्चैर्वि(दीप्ते वि)[च]रति पुरुषः प्रतापमहद(विषमा)भिदग्धरिपुनिचयः ॥
लक्ष्म्यालिंगितदेहो गजमदसंसिक्तमू(भू)पृष्ठः ॥ ४ ॥

स्वस्थः करोति जन्मनि सुखेन(खानि) रत्नाश्च(श्व)कनकपरिवारं (रान्) ॥
नृपतेर्दंडपतित्वं गृहधान्यकुटुंबपरिवृद्धिं ॥ ५ ॥

उदयास्तं चेद्यातः सूर्याद्दक्षिणवामगो ग्रहः कश्चित् ॥
पापं प्रथयति फ [पुंसां]दक्षिणगश्चोत्तरे शुभदं(दः) ॥ ६ ॥

मुदिते विलसति मुदितो विलासिनीकनकरत्नपरिपूर्णः ॥
विजितसकलारिपक्षः समस्तसुखभानतः (जनः) पुरुषः ॥ ७ ॥

शांते प्रशांतचेताः सुखधनभागी महीपतेः सचिवः ॥
विद्वान्परोपकारी धर्मपरो जायते सुभगः ॥ ८ ॥

---

१ अत्र जन्माधिपो विलग्नेश इत्येतदधिकं दृश्यते। तत्परित्यागे श्लोकः साधुर्भवति। २ युद्धे अन्येन ग्रहेण पराजितः। ३ पापग्रहस्वामिके सप्तवर्गे स्थितः।

स्त्रीवस्त्रगन्धमाल्यैर्विकसति पुरुषः सदा विततकीर्तिः ॥
दयितः सर्वजनस्य च शक्ताख्ये भवति विख्यातः ॥ ९ ॥

दुःखैर्व्याधिभिररिभिः प्र[पीड्यते]पीडित(ते)[सदा]पुरुषः ॥
देशाद्देशं विचरति बंधुवियोगाभिसंतप्तः ॥ १० ॥

बहुसाधनोऽपि राजा प्रध्वस्तबलः प्रपीडितो रिपुणा ॥
नाशमुपयाति विजिते (तो)दीने (भीते) दैन्यं परं प्राप्तः ॥ ११ ॥

स्वस्वा(स्था)नपरिभ्रष्टो मलिनश्चासौ(नः क्लिष्टः) प्रयाति परदेशं ॥
विध्वस्तधनो विकलो(ले)रिपुभय(बल)संचकितचित्तश्च ॥ १२ ॥

स्त्रीहरणदुःखतप्तः समस्तधनवान्प(नाश)पीडितमनस्कः ॥
न जहाति शोकभारं कथमपि खलसंज्ञके पुरुषः ॥ १३ ॥

॥ इति श्रीजातकसारदीपे दीप्ताद्यवस्थाध्यायः षड्विंशः ॥

---

## अथ नवांशफलाध्यायः सप्तविंशः

### अथ ग्रहाणां होराद्रेष्काणफलानि लेख्यानि ॥

### तत्रापि नवमांशफलमुच्यते ॥

नवांशफलम्

चोरः क्रियांशे सुखभाक् वृ(वृ)षांशे
पुष्णाति विद्यां मिथुनांशके च ।
कर्कांशके स्याद्धनवान्महीशः
सिंहांशके क्लीबसमोऽङ्गनांशे ॥ १ ॥

शूरस्तुलांशे मृतकोऽष्टमांशे
दासो हयांशे हिमगौ बलिष्ठे ।
पापो मृगांशे पिशुनोऽप्रचेष्टः
कुंभांशके मीनलवे प्रधानः ॥ २ ॥

अंशकफलतारतम्यम्

[1]वर्गोत्तमस्वा(स्वा)[न्य]लवेषु शस्तं
पुष्टं समं स्वल्पमसद्वि(सद्वि)लो[मं] ।

अंशकफलस्य राशिफलबाधकत्वम्

विरुद्ध(रुणद्धि)राशीक्षणतः फलं तु
स्वल्पं स्व(बल्यंश)नाथोंऽशकृतं ददाति ॥ ३ ॥

बः स्वांशकेंऽशाधिपतिर्बलीयान्
स्थितो भवेन्मंदबले शशांके ।
तदंशकस्वामिसमानमूर्ति
स्वभावचेष्टाः पुरुषा भवंति ॥ ४ ॥

---

१ ग्रहाणां यत् शस्तं शुभं फलं, ग्रंथे उक्तं तत् वर्गोत्तमलवगते ग्रहे पुष्टं, स्वांशकगते मध्यं, शत्रुलवगते स्वल्पं भवति । असत् फलं अशुभं फलं, विलोमं विपरीतं, वर्गोत्तमांशगते ग्रहे अल्पं, स्वांशकगते ग्रहे मध्यं, शत्र्वंशगते पुष्टं भवति । मेषादिराशिगतानां ग्रहाणां दृष्टिफलं राशिस्थितिसंश्रयकांस्थति च निमित्तीकृत्य द्वेधा कथितं । तत्र राशीक्षणांशकेक्षणफलयोर्मध्ये राशिपतेः सकाशादंशकपतिर्यदि बली तर्हि सः राशीक्षणतः कथितं फलं, रुणद्धि परिहरति, अंशकदृष्टिकृतं फलमेव ददाति । "वक्ष्यामाणकर्मांशकर्क्षयोः" इति सामान्यन्यायेनैव बलिनोऽशकपतेः फलदातृत्वे सिद्धेऽपि पुनः कथनं राशीशांशकेशयोर्बलसाम्येपि लवाधिपफलमेव वक्तव्यं, अंशेशस्य न्यूनबलत्वेपि राशीशांशकेशयोः फलं तारतम्येन योजनीयमिति द्योतनायेति भावः ।

### प्रसंगात् चन्द्रदृष्टिफलतारतम्यम्

[1]होरेशहोराश्रितखेटदृष्ट

स्तदाश्रितः शीतकरः सुखः(शुभः) स्यात् ।

स्वत्र्यंशनाथेन विलोकितश्च

यद्वा सुहृद्गेहसमाश्रित(तै)श्च ॥ ५ ॥

### प्रसंगात् चन्द्रद्रेकाणफलम्

[2]कल्याणरूपगुणमात्मसुहृद्दृकाणे

चन्द्रोऽन्यगस्तदधिनाथगुणं करोति ।

व्यालोद्यतायुधचतुश्चरणाण्डजेषु

हिंस्रो(तीक्ष्णो)ऽतितीक्ष्ण(हिंस्र)गुरुतल्परतोऽटन(टन)श्च ॥ ६ ॥

---

१ होरा लग्नं, तदीशस्य होरा राश्यर्धं, चन्द्रहोरा सूर्यहोरा वा, तामाश्रितै-र्खेटैर्ग्रहैर्दृष्टः, तामेव लग्नेशाश्रितां होरामाश्रितः, शीतकरः शुभः स्यात् । चन्द्रस्य, तद्दृष्टु-र्ग्रहस्य, लग्नेशस्य च सूर्यचन्द्रान्यतरहोरासाम्ये चन्द्रः शुभकरः स्यादिति यावत् । अर्थादन्यथा न शुभकरः इत्युक्तं भवति । स्वस्य चन्द्रस्य त्र्यंशो द्रेकाणं तस्य नाथेन दृष्टः यद्वा सुहृद्गेहसमाश्रितैर्दृष्टः शीतकरः शुभः स्यात् । चशब्दोऽनुक्तसमुच्चये । तेन स्वगृहगतैर्ग्रहैर्दृष्टः शीतकरः शुभः स्यादित्यपि द्रष्टव्यं । अर्थादन्यथा अशुभ इत्युक्तं भवति । एतदुक्तं भवति—चन्द्रः यस्मिन् द्रेकाणे स्थितस्तस्य द्रेकाणस्याधिपतिना, मित्रगृहगैः, स्वगृहगैश्च ग्रहैर्दृष्टः शुभकरः । द्रेकाणपतिना अदृष्टः, शत्रुनीचगतैर्दृष्टो वा न शुभकर इति तात्पर्यं । २ आत्मा च सुहृच्च आत्मसुहृदौ तयोर्द्रेकाणे स्थितश्चन्द्रः कल्याणरूपगुणं नरं करोति । अन्यगः उदासीनद्रेकाणगतः, शत्रुद्रेकाणगतश्च तद्द्रेकाणाधिपतिसदृशगुणं करोति । इदमुक्तं भवति-चन्द्रे स्वद्रेकाणे मित्रद्रेकाणे वा स्थिते जातस्य नरस्य रूपं गुणश्च कल्याणौ स्तः । उदासीनद्रेकाणगे मध्यमौ स्तः, शत्रुद्रेकाणगे नीचौ स्त इति तात्पर्यं । चन्द्रे व्याले सर्पद्रेकाणे स्थिते जातस्तीक्ष्णो भवति, उद्यतायुधद्रेकाणगे जातोऽतिहिंस्रो भवति । चतुश्चरणगे द्रेकाणगे जातो गुरुतल्परतो भवति । अण्डजद्रेकाणगे जात अटनो भवतीति भावः । सर्पद्रेकाणानि कर्कटकान्त्य, वृश्चिक प्रथम, वृश्चिकद्वितीय, मीनान्त्यद्रेकाणानि । उद्यतायुधद्रेकाणानि मेषप्रथम, मेषतृतीय, सिंह-द्वितीय, सिंहतृतीय, तुलाद्य, धनुःपूर्व, [3]मकरान्त्यद्रेकाणानि । चतुष्पादद्रेकाणानि

## ॥ अथ पृथक् नवांशफलम् ॥

### अथ मेषे चन्द्रनवांशफलम्

**सारावल्यां—**

[1]मेषेऽजांशेऽजमुख[स्त]नुनासाग्र:(ग्र:)कृशोऽल्परोमा च ।
चंडध्वनि: शशांके संकुंचितविलोचनापांग: ॥ १ ॥
(चण्डध्वनिर्विरूप: सङ्कुचिताक्षोऽक्षताङ्गश्च)
दीर्घास्यगल:(नस:)श्याम: कृशांघ्रिसंधि: स्फुटेऽक्षणो[म]द(धु)रवचनश्च ॥
न च पृथुललाटशत्रुर्जगुर्वंश: क्रिये वृषभभागे ॥ २ ॥
[2](अपृथुललाटसुजत्रुर्गुर्वंसभुज: क्रिये वृषभभागे ॥)
रोगन्यस्ततनुभुजां बुधजवाक्यंपंडित: सरामांश: ॥
[3](चार्वक्षिनासगौरो व्यस्तभुजो वाक्यपण्डित: कृशोरु: स्यात् )
कृशजंघजानुरालुसकुंतलोऽजे नृमिथुनांशे ॥ ३ ॥
भ्रांताननदृक् कंजो रक्तवपुर्ह्रस्वभालनासश्च ॥
(भ्रान्ताननदृक् चण्डोऽनुजहीनो ह्रस्वभालनासश्च)
भटन: खरांघ्रिरोमा कृशत्व(स्त्व)चाढ्य:-क्रिये चतुर्थांशे ॥ ४ ॥
हय(गज)दृग्गजाकृतिशिरा: पीनोद्वृत्तो(त्ता)समूर्तिरल्पकच: ॥
खलवक्त्रांघ्रि: क्रियसिंहांशे पृथुनसललाटश्च ॥ ५ ॥

---

वृषमद्वितीय, वृषभतृतीय, कर्कटकाद्य, सिंहाद्य, वृश्चिकान्त्य, धनुराद्य, मकराद्य, द्रेष्काणानि । पक्षिद्रेष्काणानि, मिथुनद्वितीय, सिंहाद्य, तुलाद्वितीय. कुंभाद्यद्रेष्काणानि ।

१ इमे श्लोका मुद्रितसारावल्यां न संति । अत्यन्तमशुद्धाश्च दृश्यन्ते । अतो मया मुद्रितसारावल्यनुरोधेन शुद्धं पाठं परिकल्प्य कुण्डल्यां निवेश्यते । क्वचित्क्वचिच्छुद्ध-पाठप्रकल्पनमप्यशक्यं । तत्र मुद्रितसारावळीस्थ: श्लोक एव कुंडल्यां निवेशित: ।

२ अपृथुललाटश्चासौ भुजत्रुश्चेति विग्रह: । ३ चार्वक्षिनासश्चासौ गौरश्चेति विग्रह: ।

(खररोमाकृतिः क्रियसिंहांशे पृथुनासाभ्रूललाटश्च ॥)

मृगदृक् श्यामः पृथुलो व्यस्तभुजांसोदरः मत्युरस्पृक् ॥

(मृगदृक् श्यामः पृथुलो व्यस्तभुजांसोऽदरः कृशोऽरुचरणकण्ठस्फिक् ॥)

मृदुरल्पगतिर्मृदु(र्बहु)वागतिभीरुः क्रिये च(षण्ढश्च) षष्ठांशे ॥ ६ ॥

सुनसः (चपलः) कृशो (शः) सिताक्षो दूर्वाङ्कुरसंनिभो विलास (शाल) तनुः ॥

लुब्धस्वजनोऽजससमभागे नारी (वेश्या) रतः (तोऽ) शांतः ॥ ७ ॥

कठिनः स्थि(ख)रः कपिमुखो गुरु (खःपिंगो) हिंस्रोऽनृतो वधरुचिश्च ।

[1]वक्ता सुहृत्प्रियोदुःखसहोऽष्टमांशे ॥ ८ ॥

(वक्ता सुहृत्प्रियोग्रो गुह्यगदः स्यात्क्रियेऽष्टमांशगते ॥)

[(दीर्घः कृशो विहारी व्यस्तललाटश्रवोऽश्ववदनश्च ॥

बहुभिधानाभिरतस्त्वनृजुर्नवमांशजो भवति ॥ ९ ॥)]

॥ इति मेषे चन्द्रनवांशफलम् ॥

---

## अथ वृषभे चन्द्रनवांशफलम्

असितससमागो विषमेक्षणो विलुब्धोऽन्यकर्मकृन्नीचः ॥

(स्तब्धोऽसितसमदेहो विषमेक्षणो विलुब्धोऽत्यकर्मकृन्नीचः ॥)

वितत (तः) प्रथमार्धमुखः प्रकृतिविरुद्धो वृषप्रथमभागे ॥ १० ॥

---

१ अत्र मूले नवमः श्लोको नास्ति ।

पृथु(नत)वदनांसश्रवणो गंभीरदृगल्पधीरनृ [तबहु] भाषी ॥
अलसो विरुद्धदारः प्रतिकूलो वृषद्वितीयांशे ॥ ११ ॥

मृद्वार्जवः स्फुटकथासुपार्ष्णिपादोऽस्थिरो वपुष्मांश्च ॥
(मृदुबृहदंगः सुनसः स्थिरपार्ष्णिकरः स्फुटायताक्षो वपुष्मांश्च ॥)
यज्ञांग(ज्ञादि,कर्मनिरतो वृषे(षभे,च तृतीये(य)नवमांशे ॥ १२ ॥

आताम्रो दीर्घभुजोऽजासत्वो(जाक्षोऽस्वोऽ)न्यधनहरस्तीक्ष्णः
(रः कोपी) ॥
वृत्तगलो घृ(धृ)ष्टरवो वृषतुर्यांशे भवति ह्रस्वः (कृश)[मध्यः] ॥ १३ ॥

स्वक्षः श्यामो बलवान् घनकेशः क्षीरतश्च तुरगांगः ॥
(व्यालो गौरः सुनसो घनकेशः क्षीरतो विलासी च ॥)
वृषभाननो बृहद्भुजकंध(टघ)सो वृषभमध्यांशे ॥ १४ ॥

स्निग्धतनुकेशनेत्रः कामी(प्रौढो)माधुर्यहास्यरतिचतुरः ॥
धर्मरतो वल्गुकथो वृषषष्ठांशे क्रियाकुशलः (स्थिरो निपुणः) ॥ १५ ॥
लंबनसः सूक्ष्मकचो मृतकरोगुरुकरांघ्रिसिताक्षः ॥
(लंबनसः सूक्ष्मकचो मृतसुतदारस्मृतिर्गुरुतरांघ्र्यक्षः ॥)
उद्धृत(द्ध)तनुः स्वजनद्वेषी वृषसप्तमेंऽशे स्यात् ॥ १६ ॥

स्पष्टनसा व्याघ्राक्षश्चलोऽल्पकर्मा निषेद्धुरुद्वृत्तः ॥
(स्पष्टनसो व्याघ्राक्षोऽजितोऽल्पकर्मा [1]सुदशनोद्वृत्तः ॥)
घनकेशनखो भिन्नर्ध्वन(ध्वनि)र्वृषेंऽशेऽष्टमे भवति ॥ १७ ॥

---

१ सुदशनप्रासाद्वृत्तश्चेति विग्रहः ।

भीरुरसंचितवित्तः कितवित्तः कितवोऽधस्तात्कृशोऽल्पसत्वश्च ॥
(भीरुः संचितवित्तः सममूर्तिः कितवोऽधस्तात्कृशोऽल्पसत्वश्च ॥)
सिध्धप्रलापमानो धनयुक्तो वृषेंऽत्येंऽशे ॥ १८ ॥

(प्रसिद्धिमानकोपप्रलापयुक्तो वृषेंऽत्येऽशे ॥)

॥ इति वृषभे चन्द्रनवांशफलम् ॥

---

## ॥ अथ मिथुने चन्द्रनवांशफलम् ॥

रोमशभुजोऽसिताक्षः कृशांघ्रिहस्तः समुछ्रैयैया(च्छ्रितनसः)स्यात् ॥
दूर्वाकांडश्यामो मिथुने प्रथमांशजः पुरुषः ॥ १९ ॥

घटाशिरा विकर्मा वहवाहेष्टो विलग्नघोणश्च ॥
(घटशीर्षोऽशुचिकर्मा बहुवाक्चेष्टो मध्यलग्नघोणश्च ॥)
सिंहास्तेयेछेहाभिरतो मिथुनद्वितीयांशे ॥ २० ॥

(सिंहांसः कलहपतिर्घातरतो मिथुनद्वितीयांशे ॥)
गौ[रो]रक्तांताक्षः सुनसो वाक्पटुः स(सु)मेधाश्च ॥
वीर्यास्यद्प्रमाणस्तृतीयभागे मिथुनराशेः ॥ २१ ॥

(दीर्घास्यः समदेहस्तृतीयभागे सितभ्रूः स्यात् ॥)
कुवलयनिभोऽल्प(ति)कामी रोमशतनु(नुः)सुभालाक्षः(कभ्रूः)
पृथुवक्षा चाररदो मिथुने पुरुषश्चतुर्थांशे ॥ २२ ॥

(पृथुवक्षाश्चारुरदो मृदुवक्ता मिथुने चतुर्थांशे ॥)

पीनभुजोंगकालो मायाचतुरो महोदरशिरकः ॥

(पीनभुजोरःस्फिक् स्यान्मायाचतुरो महाननशिरस्कः ॥)

शुक्लांत(क्लानु)कूट(ल)नेत्रः सत्वरगामी [खलो]मिथुनमध्ये ॥ २३ ॥

विस्तृतहस्तललाटो मधुदृग्गौरश्चरः प्रलापी च ॥

(व्यस्तललाटः सुसमो मधुदृग्गौरश्चलः प्रतापी च ॥)

कितव(वः)सुदेहसत्वो मिथुने षष्ठांशके सुदंतोष्ठः ॥ २४ ॥

पीनोदरः सुताम्रो विशालवक्षाः [1]समुन्नतश्च(ताक्ष)शिल्पज्ञः ॥

हास्यसुरतो(ता)भिलाषी सप्त[म]भागे च मिथुनस्य ॥ २५ ॥

[2]गुरुवृद्धतनुः श्यामो दीर्घासितदृग्बुधो मधुरवाक्यः ॥

आदिलेल्यादि [3](व्यस्तमनस्वि)कलाज्ञो ललितो मिथुनाष्टमे भागे ॥ २६ ॥

वृत्तासितदृक् रा(सु)तनुः [सिद्धो] विज्ञात(न)काव्यकुशलश्च ॥

मेधावी सुभगः(वी रतिवित्)स्यात तृतीयराशौ नवमभागे ॥ २७ ॥

॥ इति मिथुने चन्द्रनवांशफलम् ॥

---

## अथ कुलीरे चन्द्रनवांशफलम्

गौरोऽल्पांसकवक्षा [4]मधु[रो]न्नतलोचनो विन(त)तकुक्षिः ॥

मंडलवपुः(मंगलमुखः)सुकेशः कर्किणि पूर्वांशके भवति ॥ २८ ॥

---

१ समुन्नताक्षश्चासौ शिल्पज्ञश्चेति विग्रहः । २ गुरुश्चासौ वृद्धतनुश्चेति विग्रहः । ३ व्यस्तश्चासौ मनस्वी चासौ कलाज्ञश्चेति विग्रहः । ४ मधुरश्चासावुन्नतलोचनश्चेति विग्रहः ।

मार्जारमुखः स्वक्षः(मुखाक्षः स्यात्) पीडितहृदयः कलि(ला)
प्रबंधश्च ॥

कृशजानुजंघ उग्रो रक्ताक्षः(भः)कर्किणि द्वितीयेंऽशे ॥ २९ ॥

गौरः पीतो(नो)धीमान्स्वक्षः स्त्रीसंमतो मृदुर्वाग्मी ॥
सुकुमार(रः)कर्म नि र(मिर)तोऽलसः कुलीरे तृतीयांशे ॥ ३० ॥

स्वक्षिकरनखश्यामः पृथुपीनजघनतनुरर्थलुब्धश्च ॥
क्षतदंतस्तुर्येऽशे कर्किणि सबंधुषु च शठाः ॥ ३१ ॥

[(श्यामच्छविर्नतभ्रूर्विलासपीनोन्नतः सुनासाक्षः ॥
क्षीणः पुरुषो दाता सुजातिकार्यश्चतुर्थे स्यात् ॥ ३१ ॥)]

पृथुकुक्षिलम्बः कर्किणि मध्यांशे यातयो विकर्मा च ॥
(सेवारतो विकर्मा मध्ये दुर्मर्षणः पृथुलकुक्षिः ॥)
घटशिरमतिप्लुतो नतानतो दीर्घदृक्चलः सुभ्रूः ॥ ३२ ॥

(घंटाशिरोऽलमतियुङ्नताननो दीर्घबाहुयुक् सुभ्रूः ॥)

वक्रोष्ठ(क्ता सु)नसो गौरः स्वक्षः पृथुमूर्तिदंतपंक्तिश्च ॥
उपतापी पीनोन्नतकर्णः षष्ठे कुलीरांशे ॥ ३३ ॥

रूक्षासितभिन्नकराग्रमूर्धजश्च(जः स्थू )लवपुः शिशिर(राल)जंघः ॥
कर्किणि सप्तमभागे काकोलरूरोऽ(काकारोऽ,न्यगृ[ह]वासी ॥ ३४ ॥

सुमुखोरुजानुरसितो(खभुजांगः कृष्णो) घंटाशीर्षो विलम्बघोणश्च ॥
गर्हितवृत्तिः क(कूर्मगतिः स्यात्क)र्किणि कुत्सितशिल्पोऽष्टमे भागे
॥ ३५ ॥

[1]कृशजानुगुल्फलंबोष्ठपाणिर्दीर्घोरुहनु पृथूरस्कः ॥
गौरो गुदरोगधरो (गुरु[2]मृदूदर) झषनेत्रोऽन्त्ये कर्किनवमांशे ॥ ३६ ॥

॥ इति कर्काटके चन्द्रनवांशफलम् ॥

---

## ॥ अथ सिंहे चन्द्रनवांशफलम् ॥

मंदोदर उन्नतनसः पीनो रक्तदृङ्महौजाः स्यात् ॥
(मन्दोदर उन्नतनसः पीनोन्नतवक्षसा युतः शूरः)
चंडः सरक्तगौरो वृत्तशिराः सिंहपूर्वांशे ॥ ३७ ॥

पृथुतुंगलाभ(भाल)वक्षाः पृथुघोणो दीर्घरुग्यु(दोर्यु)तः सिंहे ॥
स्निग्धाताम्रायतदृक् च (ग्धो विलोमनेत्रश्च)तुरस्रतनुर्द्वितीयेंऽशे ॥ ३८ ॥

रोमवि(मान्वि)तायतबाहूरस्कः स्निग्धश्मश्रुकोरदृक् त्यागी ॥
गर्हितगुण उन्नतनसो हरौ वादी तृतीयेंऽशे ॥ ३९ ॥
(वृत्तगलस्तून्नतनसो हरौ चलः स्यात्तृतीयेंऽशे)

पृथुकरचरणललाटोऽसितदृकंबुद्ध्वनि समृद्धकेशः ॥
(पृथुकरचरणो दीर्घासितदृकंबुध्वनिः सुमृदुकेशः)
गौरतनुर्दर्दुरकुमक्षः(कक्षोडः)सिंहे चतुर्थांशे ॥ ४० ॥

पृथुदंष्ट्रः पीनोराश्चंडो लंबोदरोऽल्पकेश (शः) स्यात् ॥
[3]असिताक्षो(क्षि)[नासरोमोऽ]पचितोऽर्व(र्ध्व)तनुर्घटशिरा हरेर्मध्ये ॥
॥ ४१ ॥

---

१ कृशजानुगुल्फश्चासौ लंबोष्ठपाणिश्चासौ दीर्घोरुहनुश्चेति विग्रहः । २ मृदूदरश्चासौ झषनेत्रश्चेति विग्रहः । ३ असिताक्षिनासश्चासौ रोमोपचितोर्ध्वतनुश्चेति विग्रहः ।

स्वल्पाल्परोमशांगादीर्घश्यामौसितायतनेत्रः ॥
(स्वल्पाल्परोमशांगो दीर्घः श्यामोऽसितस्निग्धसमनेत्रः)
वाक्कर्म(र्मा) स्त्रीचतुरो विकच्छतः (त्थनः) सिंहषष्ठांशे ॥ ४२ ॥

रोमचितः शिरालो सिदीर्घांगो दुर्भगोतोभीरः ॥
(रोमाचितः सिरालो दीर्घास्यः स्त्रीषु दुर्भगश्चण्डः)
सप्तमलवे पृथुह(त)नुः सुनिश्चयी पु(प)रुषवाक् सिंहे(कृष्णः) ॥ ४३ ॥

विसुहृद्धृतोऽ(नोऽ)ल्पचेष्टो दुर्व(ष्टः सुव)चा गंभीरघोराक्षः ॥
कालः [1]स्थिरः खरांगो(रांगकूटो)विकर्मशीलोऽष्टमे हरेर्भागे ॥ ४४ ॥

लंबभुजः खरवदनोऽसितनेत्रः सुदृढजंघपार्ष्णिः स्यात् ॥
पीडित[वक्ष]च(श्च)क्षुःकुक्षिः श्यामो हरो[च] नवमेंऽशे ॥ ४५ ॥

॥ इति सिंहे चन्द्रनवांशफलम् ॥

---

## ॥ अथ कन्यायां चन्द्रनवांशफलम् ॥

वक्रो(क्रोऽ)न्नतपीनांगः(नोराः) सारंगमुखो धनी प्रदाता च ॥
संभोगरुचिः श्यामः कन्याप्रथमांशके जा[त]ः ॥ ४६ ॥

[2]स्निग्धगुरुभ्रूजठरो लुब्धः श्यामो मृदुः शठः स्वस्थः ॥
(स्निग्धगुरुभ्रूजठरः स्वक्षः श्यामश्चलो महोरूराः)
मृदुवाक् शिल्पी सुमुखो विवादवाक् कन्या(न्य)[का]द्वितीयेंऽशे
॥ ४७ ॥

---

१ स्थिरांगश्चासौ कूटश्चेति विग्रहः। कूटः कपटकृत्। २ स्निग्धश्चासौ गुरुभ्रूजठरश्चेति विग्रहः।

शुभ(गौरो)रोमचितां[त्रिः]सुभुज(जः)स्फुटनासिकः सुदृग्वा(दृढा) ग्मी ॥
योषिद्विलासकाव्यश्रुतिरतः(सक्तः) कन्यकातृतीयेंऽशे ॥ ४८ ॥

तीक्ष्णः कृशापरार्धः सक्तभुजः स्फुटदृग्गुल्फरोमा च ॥
(तीक्ष्णः कृशापरार्धः सुकुमारः स्त्रीरतिर्द्विमूर्धा च)
प्रांशुरतिरक्तगौरो मधुरः कन्या(रो ज्ञानी)चतुर्थांशे ॥ ४९ ॥

पीनोऽच(रः)स्कंधभुजांसोष्ठो र(जोष्ठः स्याद्र)क्तः पराश्रयो धनवान् ॥
सोद्बद्धजंघ महिषाक्षकुक्षीरप्युभेंऽगनामध्ये ॥ ५० ॥
(उद्बद्धजंघ उन्नतदेहः पृथुमूर्धजोंऽगनामध्ये)

विज्ञानशास्त्रकुशलो लेख्यलिपित(ज्ञः) सुवाकृश[गतिः] स्वच्छः ॥
स(श)स्ततनुः कन्यायां शुचिर्विहिंस्रश्च(हारी च) षष्ठेंऽशे ॥ ५१ ॥

पानप्रियोऽति(र्योऽबु)भीरुः पृथुकर[भुज]चरणांसकोऽदरो गौरः ॥
ह्रस्वमुखो हंसाक्षः कन्यासप्तमलवे जातः ॥ ५२ ॥

दीर्घश्चंडो गौरः पिंगलरोमा सुभानुरुन्नतदृक् ॥
वर्तुलगलोऽभिमानी पीनोरुभुजोऽष्टमेंऽगनाभागे ॥ ५३ ॥

श्याम(स्त्यातः)स्निग्धो [1]मृदुतनुनता(तां)सकोऽसितविशालदृक्चतुरः ॥
स्त्रीसत्वो हे लेख्यादौ विद्वान्कन्यानवमभागे ॥ ५४ ॥

॥ इति कन्यायां चन्द्रनवांशफलम् ॥

---

१ मृदुतनुश्चासौ नतांसकश्चेति विग्रहः ।

## ॥ अथ तुलायां चन्द्रनवांशफलम् ॥

गौरोऽसितायाना(यता)क्षः श्लाघ्यो दीर्घाट(न)नोऽर्थगोप्ता स्यात् ।
पण्यविदुदारवाक्यो वनकूर्च(कीर्ति)स्तुलिनि पूर्वांशे ॥ ५५ ॥

पृथुतरहृदयहनुशिरालमप्रभृतसुवृत्तदृग्गौरः ॥
(विस्मृतहृदयः कुतनुः करालदन्तः सुवृत्तदृग्गौरः)
तुलिनि द्वितीयभागे निमग्नमध्यः सरक्तकृष्णांगः (सुसंहतभ्रूश्च)
॥ ५६ ॥

गौरः खरमुखसुंदरो दीर्घतनुगलः कृशश्च मधुराक्षः ॥
(गौरोऽश्वमुखः सुरदो दीर्घनसागलः कृशश्च मधुराक्षः ॥)
स्फुटितकपोलः सयशास्तुलातृतीये शरण्यांशे (सुपादश्च) ॥ ५७ ॥

श्यामो मृगव(च)पलाक्षस्तत्वं(न्वं)सभुजः कृशः समुच्चरदः ॥
रक्त(ह्रस्व)नसा (सो)दुःशीलः सभयविवा(षा)दस्तुलाचतुर्थेऽशे ॥ ५८ ॥

खरकेशनख(खः)[स]ह्रस्व(म)हग्निलग्नघोणो गभीरदृक्कृष्णः (म्हस)
मानी स्थिरः सुमित्रः क्रि[या]पटुस्तुलिनि मध्यमे वां(चांऽ)शे ॥ ५९ ॥

सुनसाति(सः सु)दृक् पृथुमुख(नखो)गुरुपीतां(नां)सस्तुलाधरे गौरः ॥
विग्धोक्ति(क्तिः)शाली[स्या]नी(नो)तिव्यवहारजोऽशकेषष्ठे(विद्य षष्ठेऽशे)
॥ ६० ॥

[1]रक्तगुरुह्रस्वदेहो ह्रस्वनसोध:(पचण्डलुब्धः)कृशो वृहद्भालः ॥
रतिगीतज्योतिषविद्यं(रतिमान्दुर्गः सुमनाश्च)द्रे ससमलवे तुलिनि ॥ ६१ ॥

---

१ रक्तमांसौ गुरुह्रस्वदेहश्चेति विग्रहः । स्थूलवामनशरीर इति भावः ।

निर्णीत(र्णिक्त)वाक् प्रभोक्ता श्यामः[1] स्तुंगांसगण्डकवि(ठि)नांगः ॥
स्वच्छ(शांत)स्तुलिनि पृथुस्कंधशिरोऽरस्कोऽष्टमे भागे(सुभ्रूः) ॥ ६२ ॥

गौरः सुचारुमूर्तिः स्वक्षो दाक्षिण्यहास्यगौरवयुक् ॥
वाग्मी विट(ट)स्वभावः कलापटुस्तुलिनि नवमांशे ॥ ६३ ॥

॥ इति तुलायां चन्द्रनवांशफलम् ॥

---

## अथ वृश्चिके चन्द्रनवांशफलम्

[2]रुद्रः प्रागर्द्धतनुर्गौरो ह्रस्वोऽन्नततालुगलः ॥
कौर्प्याद्यंशे वर्दुरकुक्षिः कध्वंसदृग्गूढोत्पलसः ॥ ६४ ॥

[(ह्रस्वोऽन्नतोऽष्ठघोणः सुललाटः स्याद्दृढांगगौरश्च ॥
वर्दुरकुक्षिर्घटकोऽष्टमराशौ प्रथमनवभागे ॥ ६४ ॥)]

गौरः पृथुभुजवक्षाः साहचिरो (सिकः) [3]कुंतला(ल)ह्रस्वः ॥
उत्पृतनक(वृत्तबल)विमर्दो(र्दी) ताम्राक्षोऽलिद्वितीयेंऽशे ॥ ६५ ॥

गौरो बृहद्भुजदृक् सुस्निग्धवचा मृदुः सुधार्मिकः कामी ॥
(प्राज्ञो दृढांसबाहुः प्रयत्नकोशो विशुद्धवाग्गौरः ।)
रुचिराधरो वपुष्मान् भिन्नकचोऽ(कानीनकोऽ)लि[न]तृ(स्तृ)तीयेंऽशे
॥ ६६ ॥

श्यामस्त्वसितकचाक्षो दीर्घः पीनोदरांसहनुस्तः(युक्तः) ॥
[(श्यामोऽसितकेशाक्षो नष्टप्रगल्भश्च पीनरोमांसः ।)]
क्षेप्ता द्रोहान्यस्त्रीनिरतो धीरोऽलितुर्यांशे (र्यंशे) [दीर्घः] ॥ ६७ ॥

---

१ तुंगांसगंडभासौ कठिनांगश्चेति विग्रहः । २ अत्र चतुर्थः पादो दुर्गमार्थः । अतोऽत्र सारावलीस्थं पद्यमेव कुंडल्यां निवेशितम् । ३ ह्रस्वकेश इति यावत् ।

रक्तांतगभीराक्षो न्य(न्य)स्तदृढां(ढां)गो गुरूदरशिरस्कः ॥
[(गम्भीरस्ताम्राक्षो मग्नसः पंचमे धीरः ।)]
संसारतस्त्व(रत)नयज्ञस्त्वक्रोधी वृश्चिकस्य मध्यमे भागे ॥ ६८ ॥

[(मृष्टोदरोऽप्रकर्मा न्यस्तदृढाङ्गो यशस्वी स्यात् ॥)]
धृष्टो वरिष्ठबुद्धिः पृष्ठो(पुष्टोऽ)च्चनसो गभीरसत्वः स्यात् ।
सुनसः प्रचण्डकर्मा षष्ठे दक्षोऽल्पकघनभ्रूश्च ॥ ६९ ॥

निम्नोदर कटिः प्लु(रःप्लु)ताक्षः (कृकी)[र्ण]रदो रा (दर)रितनुलोऽसितो दीर्घः ॥
तनुह(रुस्नत)नुः पृथुवक्षाः सप्तमभागेऽळिनि शिराळः ॥ ७० ॥

स्फुटः स्वोच्चनसो ह्रस्वो स्वलब्धदृक् नयसत्वः ॥
[(स्फुटिताग्रनसः कालो विपन्नशीलो मलीमसांगः स्यात् ।)]
तनुकुंतलो घनभ्रू दक्षोऽल्पकचोऽष्टमलवे कीटे ॥ ७१ ॥

[(भिन्नोऽल्कटैः शिरोजैः संत्यक्तमतिस्तथाऽष्टमजः ।)]
गौरदृढपीत(न)देहो विशालरोमा श्वा(मृगा)कृतिः शांतः ॥
सत्कर्मरतो(मृदुपिङ्गाक्षो)दाता गुरुदेवरतोऽलिनोऽतिमे भागे ॥ ७२ ॥

॥ इति वृश्चिके चन्द्रनवांशफलम् ॥

---

## ॥ अथ धनुषि चन्द्रनवांशफलम् ॥

भिन्नांगयुक् [प्र] चंडो वृद्धकीडो बृहन्नसो गौरः ॥
उन्नतपरवाग्ग्राही पृथुवक्षा धन्विपूर्वांशे ॥ ७३ ॥

---

१ अत्र मूले चतुर्थनवांशफलपरः श्लोको लुप्तः ।

[(सुबृहल्लसोऽजहष्टिः स्फुटाग्रभाषी सुदन्तरोमा च ॥
गौरः सुबुद्धभूषणश्चापाद्यंशे प्रचण्डः स्यात् ॥ ७३ ॥)]

पृथुवक्षोनयनहनुरुत्तुंग नयन शीदाः(शिराः)स्त्रीचलो निवृत्त(विकृत)
घोणः(णा)[श्चः] ॥

स्थिरधीर्गुरुफि कू गु(गू)रुर्धन्विनि जातो द्वितीयेंऽशे ॥ ७४ ॥

स्वक्षः सुविभक्तांगः सा(प्रौढो गम्भीरतनुः शि)क्षाच्छा(शा)स्त्रार्थे(र्थ)
पंडितो धनुषी(षि) ॥

रति(नय)हास्यशिल्पनिरतोऽगनाप्रियः स्यात्तृतीयेंऽशे ॥ ७५ ॥

कछपतिर्धृ(कृछ्रपविधृ)नकुक्षिर्मधुपत्राभोऽ(वृत्ताक्षोऽ)टनः सुधीर्गौरः ॥
दक्षः सुकेशवक्षाः पृथु[शुभ]मूर्ति[र्ध]न्वितुर्यांशे ॥ ७६ ॥

पृथुकर्णादि(ण्ठाक्षि)मुखभ्रूर्हिंस्रोऽग्रवपुर्दृढः स्थिरो रक्तः ॥
पीनोऽन्नतमृचित(रोमचितोऽन्नतपीन)स्कंधो हर्ता(हन्ता)धनुषि
मध्येंऽशे ॥ ७७ ॥

स्निग्धासिता(त)[दीर्घा]क्षः काव्यकथाहास्यमंडनानुरतः ॥
सुतनुर्मल्लाटो धनुषि विनीतोंशके षष्ठे ॥ ७८ ॥

[(पृथुपीनमुखो हीनः षष्ठे विद्वान् महाफालः ॥)]

श्यामो मृदुरुच्चशिरा च्च दी(रा दी)र्घः पृथुदृक् सुवाक् सु बृह त
(सुत)नुः ॥

दाक्षिण्यसत्व(पटुः)संग्रहनिपुणः सप्तमे नवमे धनुषि ॥ ७९ ॥

प्रियमित्रो बहुभाषी भ्रां(भ्रां)ताक्षः पृथुशिराश्चिपिटघोणः ॥
गुर्वथ म मनेऽ(र्वभिमतोऽ)ष्टमेंऽश(शे)क्रुद्धो धनुषि प्रवृद्धवै[र]श्च ॥ ८० ॥

चापांत्येंऽशे दीर्घ (घों)[गौराङ्गः]खरमुखोऽल्पवाक् सतामिष्टः ॥
विद्यौऽघघविघ(द)सितदृक् सविवा(षा)दः कठिन(कुटिल)जंघोऽङ्गः
॥ ८१ ॥

॥ इति धनुषि चन्द्रनवांशफलम् ॥

---

## अथ मकरे चन्द्रनवांशफलम्

विरल(ला)[प्र]रदः श्यामः खरकेशनख कृशःप्रभिन्नकचः(वचाः) ॥
मृगदृक् स म (दृङ्म)करांद्यंशे व(ब)लचित्तो(वित्तोऽ)[ध्व]
गीतहास्यरतः ॥ ८२ ॥

वक्रनखो(सो)गीतरतिः श्यामो दाता शठोऽलसोऽरमुतः (तिवचा) ॥
सुरगुल्म(पृथुदेहः)स्त्रीचतुरो मृगद्वितीये समर्थोंऽशे ॥ ८३ ॥

स्फुटवंशः स्फुटितनसो गांधर्व(र्व)कलापटुस्तृतीयेंऽशे ॥
गौ[रो]रक्तांताक्षो मकरे बहुधर्ममित्रबंधुश्च ॥ ८४ ॥

पृथुभालो बहुरजदृग्जानुरक्तासितः कृशकरांघ्रिः ॥
([१]पृथुभालबाहुरक्तासितमण्डलदृक्कृशकरांघ्रिः ॥)
विग्रह(श्लथ)वान्(क्)विरलरदो विकीर्णकेशो मृगे चतुर्थेंऽशे ॥ ८५ ॥

भोक्ता गंधर्वगंदुघोणो मितायताक्षो बृहद्भुजोरुशिराः ॥
[(उद्दण्डघोणकुक्षिर्भवति हि भोक्ता सुनासिकावंशः ॥)]
स्खलपदः कुलीशः श्यामो मानी मकरमध्ये ॥ ८६ ॥

---

१ पृथुभालबाहुआसौ रक्तासितमण्डलदृक् चासौ कृशकरांघ्रिश्चेति विग्रहः ।

[(श्यामो वृत्तोरुभुजः पञ्चमभागे स्थिरारम्भः ॥)]

स्निग्धतनुः पृथुहनुः सुतनुर्वक्ता सुदम्भनसः कामी ॥

(स्निग्धच्छविः सुवेषः पृथुहनुभालश्च कामुको वक्ता ॥)

समसूक्ष्मरदों(दो)मकरे षष्ठेऽशे कुटिलकेशः स्यात् ॥ ८७ ॥

कुंचितंभिन्नकुलास्वरपादांगुलिरप्रवाक्(ङ्)निरुद्धतनुः ॥

[(श्यामोऽलसः सुभाषी रूक्षितदेहो बृहत्तनुः कठिनः ॥)]

श्यामोऽलसः पृथुकरः सप्तमलवके सुपीनमुखः ॥ ८८ ॥

[(मृदुपादपाणिमतिमान्सप्तमजः शीलसंपन्नः ॥))

पिंगाक्षश्च रक्तास्यो भिन्नकचानखः समुन्नघोणनसः ॥

(गम्भीरपिङ्गनेत्रो रक्तास्यो भिन्नकचनखः समुन्नघोणः स्यात् ॥)

धनमानभाक् सुशीलो घंटोस्वनोमृगेऽष्टमे भागे ॥ ८९ ॥

[(उद्बद्धतनु शक्तोऽष्टमजो घटपृथुललाटश्च ॥)]

पृथुनयनवदनवक्षाः समुन्न(सुसत्व)घोणो निरं[तरं]सुधीः श्यामः (साधुः) ॥

मधुरः संगीते(त)रतिः श्यामोऽवस्तात्(मः सुजनो)मृगेऽस्यैंऽशे ॥ ९० ॥

॥ इति मृगे चन्द्रनवांशफलम् ॥

---

## ॥ अथ कुम्भे चन्द्रनवांशफलम् ॥

श्यामोऽसिताक्षो यवाक्षो विघटननिरतः कृशो नृशंसः स्यात् ।

[(श्यामो मृदुः कृशाङ्गः पीनहनुः शास्त्रकाव्यमतिः ॥)]

पृथुहनुरघनो विद्वा[न्] चरश्च कामी घटांशे ॥ ९१ ॥

[(कामी रतिमान् कान्तः कुम्भस्याद्यांशके भवेज्जातः ॥)]
घटाशिरा(राः)स्वरत्वङ्नखदृष्टिकरोऽसितो विकीर्णः स्यात् ॥
[(त्वङ्नखदृष्टिशिरोजैः खरैश्च सुविपन्नवत्सलः साधुः ॥)]
उद्धतनेत्रदंतोऽल्पधीः कुशिल्पो घटद्वितीयेंऽशे ॥ ९२ ॥

[(दीर्घो विशिरा मूर्खो द्वितीयभागे भवेज्जातः ॥)]
भोक्ता च पीनदेहस्तेजस्वी पृथुरदो नरोऽल्पकचः ॥
[(संसक्ततनुः प्रमदाप्रियश्च वैडूर्यकान्तिधरः ॥)]
पृथुरक्तांतः पृथुदृक् प्रचंडघोणो घटतृतीयांशे ॥ ९३ ॥

[(शास्त्रार्थवित्प्रयोक्ता तृतीयनवभागजः पुरुषः ॥)]
कृशदीर्घो वितनुभ्रूर्मेषहनु(नुः)स्फुटरदो गभीराक्षः ॥
[(कान्तानुरतो गौरो विदारितास्यो रिपुप्रणाशकरः ॥)]
घटतुर्येंऽशे तिष्ठन्कर्कशवागुन्नतो रतो भीरुः ॥ ९४ ॥

[(गंभीरधीरसत्वश्चतुर्थजो भोगरतियुक्तः ॥)]
नतघोणो जिह्मकचः कृशोऽसितो दारितानतोत्पल(नोऽल्पन)सः ॥
[(स्पष्टार्थवित्कलाज्ञः खररोमधराङ्घ्रिरुग्रः स्यात् ॥)]
घटपंचमेंऽशके स्यात्स(सु)मूढधी रक्तदृकु(दृक्कु)टिलवेश:(षः) ॥ ९५ ॥

[(संरुद्धगण्डकर्णः पञ्चमजः कृष्णवर्णश्च ॥)]
विहृतां(कृतां)सः पृथुवक्त्रः सुन(शुभ)ध्वनिः पृथुतनुर्मूर्खः स्वक्षः ॥
[(व्याघ्राननः प्रगल्भः कुञ्चितकेशः सुनिश्चितार्थश्च ॥)]
दास्यरतिर्घटषष्ठे विकशसत्यः(कुंचितकेशः)सुधीश्चांशे ॥ ९६ ॥

[(व्यालमृगोरगहन्ता षष्ठेंऽशे वल्लभो नृपतेः )]

[1]तनुकूर्चलं[ब]वक्त्रो वक्ताऽयतनासिकः कृशो रक्तः ॥

[(मेषाक्षिमुखस्तीक्ष्णो ग्राम्यरतिः स्त्रीषु परिभूतः ॥)]

घटसप्तमेस्व(मेऽतिखर)वाग्विश्लिष्टप(क)रांगुलीरदोंऽशे च ॥ ९७ ॥

[(पित्तरुगर्दितदेहः सप्तमजः सत्वधृतियुक्तः ॥)]

पृथुकर्णहल्ललाटः पा(टः पृथु)गंडघ्राणहक्रम(ह्म)द्वालस्यः ॥

[(स्थिरसत्वबुद्धिरतिमान्नरेन्द्रयोधो नरेश्वरः सुभगः ॥)]

स्थूलशिरोरु[ह]जंघो घटाष्टमे भक्षकः स्वतंत्रश्च ॥ ९८ ॥

[(स्थूलरदो विपुलाक्षः कुम्भे स्यादष्टमेंऽशके पुरुषः ॥)]

श्यामः सुतनुः स्वक्षो मृदुप्रलापः सुकृष्णसूक्ष्मकचः ॥

[(श्यामः समग्रवदनो विशेषितः सुधनदारपुत्रश्च ॥)]

यज्ञाध्ययनव्रतकर्मसंयुतः कुभगेंऽन्त्येंऽशे ॥ ९९ ॥

[(नवमांशजः सुवाक्यः प्रथितः शक्तो भवेत्पुरुषः ॥)]

॥ इति कुंभे चन्द्रनवांशफलम् ॥

---

## ॥ अथ मीने चन्द्रनवांशफलम् ॥

ह्रस्वाननहग्गौरौ नैकनिवासो मृदुः शांतः ॥

[(गौरोपि रक्तदेहः प्रभामृदुः स्त्रीमतिमचलचित्तः ॥)]

[2]कर्मस्वनिश्चितः स्यान्मीनाद्यंशेऽल्परोमा च ॥ १०० ॥

---

१ तनुकूर्चश्चासौ लम्बवक्त्रश्चेति विग्रहः । २ अत्र मूले सार्धः श्लोको लुप्तः ।

[(ह्रस्वगलः कृशमध्यो मीनस्याद्यांशके पुरुषः ॥)]

[(पृथुपीनशुभनासः क्रियापटुर्मांसशुभ्रुचिरदेहः ॥)]

[(काननपर्वतचारी बृहच्छिराः स्याद्द्वितीयांशे ॥ १०१ ॥)]

[(गौरः शठः सुचक्षुः शस्ततनुर्धर्मवान् सुविद्वांश्च ॥)]

पृथुशीर्षस्तीक्ष्णरदस्तुंगनसः पिंगलदृक् झषतृतीयेंऽशे ॥ १०२ ॥

[(दाक्षिण्यवान् विनीतस्तृतीयजो रूपवांश्चतुरः ॥])

हरिक्रूरमुखो गौरः पृथुघोणाहनुः क्रियापटुर्झषदृक् ॥

[(गुणवान्विपन्नशीलः प्रवृद्धसेवी क्रियापटुर्वीरः ॥)]

धीरो झषचतुर्थेंऽशे सस्वाद्यो(शस्तांगो)धनयुतो विद्वान् ॥ १०३ ॥

[(सत्वाधिको नयज्ञस्तुङ्गनसः स्याच्चतुर्थे च ॥)]

मध्ये विलग्नघोणो बृहच्छिरा[दु]ः सद्दोऽन्य(ति)वाग्मिनः ॥

दीर्घोऽसित(तः)प्रतापी सुदंतदृक्(कृ)मीनमध्यांशे ॥ १०४ ॥

पृथुदंतभ्रूचशिरोनसः सुदेहः क्रियासु निपुणः स्यात् ॥

[(कान्तः प्रतापगुणवान् प्रसन्नवंशोऽल्पनासिको मानी ॥)]

वीर्याढ्यदृक् षष्ठे(ष्ठां)शे विहारशीलो झषे चंद्रे ॥ १०५ ॥

[(तिर्यग्वदनः स्यात: षष्ठेंऽशे स्यात्तथा निपुणः ॥)]

मृगदृक्कृशो नतांगः श्यामोऽल्पधनो मृदुश्चपलः ॥

[(पुरुषाभिमानपरकृद्धर्मरुचिः श्रेष्ठगश्च सचिवः स्यात् ॥)]

झषे(ष)सप्तमे विकारी सुवंशभासाकपालरोमां(मा)च ॥ १०६ ॥

[(प्रबलो विषादशीलः शठोऽस्थिरः सप्तमे भागे ॥)]

बृहद्दंतः स्पष्टाक्षघोणो रूक्षादिक्(क्षदृङ्)नखश्च(स्त्व)लसः ॥

[(दीर्घो बृहच्छिराः स्यात्कृशोऽलसो रूक्षनेत्रकेशश्च ॥)]

स्वजनानुचर(रः) स्थिरोऽल्पभागो झषाष्टमे भागे ॥ १०७ ॥

[(मन्दात्मजोऽर्थनिरतो रणकुशलो ह्यष्टमे भागे ॥)]

ह्रस्वः शुभः पृथुमूर्तिर्विद्वान् स्वा(द्रान)नष्टबंधुरंत्येंऽशे ॥

[(ह्रस्वो मृदुः सुवीरो विशालवक्षोऽक्षिनासिकः स्निग्धः ॥])

स्निग्धमधुपिंगनेत्रः शांतः कथकः सुवाग्मी(ङ्मी)ने ॥ १०८ ॥

[(विततांङ्गबुद्धिगुणवान् नवमेंऽशे स्यात्पुमान् ख्यातः ॥)]

॥ इति मीने चन्द्रनवांशफलम् ॥

---

॥ पूर्वोक्तराशिफलस्य द्वादशांशफले अतिदेशः ॥

[1]यत्प्रोक्तं राशिफलं द्वादशभागेऽपि तत्फलं वाच्यं ॥

---

१ रव्यादीनां सप्तानां ग्रहाणां मेषादिराशिस्थितिनिमित्तं फलं यत् प्रोक्तं तदेव फलं द्वादशभागेऽपि वाच्यम् । शेषेषु त्रिंशांशादिषु, सप्तमभागसमानं राशिफलस्य यः सप्तमो भागस्तत्तुल्यं, फलं प्राज्ञो विनिर्दिशेत् । एतदुक्तं भवति – द्वादशभागे राशिफल पूर्णमेव वक्तव्यम् । त्रिंशांशादौ तु न पूर्णं, किं तु सप्तमांशमितमेवेति । केचित्तु त्रिंशांशादिषु सप्तमभागसमानं राशिहोराद्रेष्काणसप्तांशद्वादशांशनवांशत्रिंशांशरूपसप्तवर्गगतो यः सप्तमांशः तत्फलसमानं फलं विनिर्दिशेदिति व्याचक्षते । तन्न बुध्यामहे वयं । तथा हि-अयं श्लोकः सारावलीगतः । तत्र च सप्तांशफलं नैवोक्तम् । अतस्त्रिंशांशादिषु तदतिदेशः कथं घटते? । सप्तांशाश्च प्रतिराशि सप्त सप्त भवन्ति । ते च मेषादिष्वोजेषु षट्सु राशिषु ग्रहलग्नाश्रितेषु तत आरभ्य क्रमेण सप्तराशिगता भवन्ति । वृषभादिषु षट्सु युग्मेषु राशिषु ग्रहलग्नाश्रितेषु तेभ्यः सप्तमराशितः क्रमेण सप्तराशिगता भवंति । त्रिंशांशाश्च

॥ पूर्वोक्तराशिफलस्य त्रिंशांशादिफले अतिदेशः ॥

सप्तमभागसमानं शेषे तु(षु) विनिर्दिशेत्प्राज्ञः ॥ १०९ ॥

॥ इति श्रीजातकसारदीपे चंद्रनवांशफलाध्यायोऽष्टाविंशः ॥

---

## ॥ अथ रव्यादिनवांशफलाध्याय एकोनत्रिंशः ॥

### ॥ अथ रवेः नवांशफलम् ॥

शूरः परद्रव्यहरः कुजांशे

शुक्रांशके भूपहती(तः)क्षयाद्यः(ढ्यः) ॥

विद्वान्बुधांशे च समाश्रयी च

चांद्रे विकर्म(र्मा) व्यसनी बलोनः ॥ १ ॥

स्वांशे स्थिरोऽर्कः(र्के) प्रभविष्णुरुग्रो

मानीऽष्टमित्रः सुरपूजितांशे ॥

सौराश्रिते(रांशके) नीचपरिश्रयः स्यात्

[1]चन्द्रादिहक्षे(ष्टे) शशिवद्रवौ च ॥ २ ॥

॥ इति रवेः नवांशफलम् ॥

---

प्रतिराशि कुजबुधगुरुशुक्रशनिसंबंधिनो भवंति । तेषां च त्रिंशांशाधिपानां राशिद्वयाधिपत्यं वर्तते । प्रहलग्नाश्रितानां राशीनां समत्वे त्रिंशांशाधिपस्वामिकसमराशिसंबंधित्वं त्रिंशांशानां । ओजत्वे चौजराशिसंबंधित्वमिति विवेको ज्ञेयः । एवं त्रिंशांशराशौ ज्ञाते तद्राशिसंबंधिसप्तांशफलं तस्य त्रिंशांशवर्गस्य वक्तव्यमिति तेषां व्याख्यातॄणामाशयो वक्तव्यः । तथा सति मेषे लग्ने गुरुत्रिंशांशे शनित्रिंशांशे वा जन्मनि, धनुर्वा कुंभो वा त्रिंशांशराशिः स्यात् । सप्तांशराशयस्तु मेषादातुलांतं सप्तराशयः । तथा च सप्तांशत्रिंशांशराश्योरैक्याभावेन कथं सप्तांशराशिफलसमानफलं त्रिंशांशराशेरिति विभावनीयम् । एवं वृषभादावप्यूह्यम् । तथा चास्मदीयव्याख्यानमेव ज्यायः । १ प्रसंगाद्रवेश्चन्द्रादिदृष्टिफलमाह ।

## ॥ अथ कुजस्य नवांशफलम् ॥

[1]चंद्रा(चान्द्रेऽ)तितेजा रिपुहाऽतिशूरः
स्वांशोऽपयाते क्षितिजे नरः स्यात् ॥

शौक्रे परस्त्रीधनभूषणोंऽशे
[विवा]द[कृत् ]कृत्यकरो बुधांशे ॥ ३ ॥

शूरः प्रचंडोऽस्व(ड्श्च)लवे तथेऽ(वित्त ई)र्ष्युः
सूर्यांशके नायक उग्रधैर्यः ॥

जीवांशके ग्रामपुराधिनाथो
हरिद्राद्यातादिर[2](द्यूतादिदारिद्य्रयु)तोऽर्कजांशे ॥ ४ ॥

॥ इति कुजस्य नवांशफलम् ॥

---

## ॥ अथ बुधस्य नवांशफलम् ॥

द्यूतर्णकृद्भौमलवे च चोरः
शुक्रांशके हास्यपरो(रः)[सु]चित(त्तः) ॥

स्वांशे बुधे काव्यरतः सुवाक्यो
धर्मान्विता(त)श्चंद्रलवे कविश्चा(श्च) ॥ ५ ॥

---

चन्द्रादीति। मेषादिनवांशगते रवौ चन्द्रादिदृष्टे सति चन्द्रवत् फलं वाच्यं। मेषादिनवांशस्थयो रविचन्द्रयोः कुजादितारामहदृष्टिफलं समानं। नवांशस्थचन्द्रस्य रविदृष्टिजन्यं फलं नवांशस्थरवेश्चन्द्रदृष्टया भवतीति भावः। १ अतितेजा इत्येतत् चान्द्रे इत्यत्र, रिपुहा अतिशूरः इत्येतत् स्वांशोपयाते इत्यत्र चान्वेति। २ द्यूतादिनिमित्तेन दारिद्य्रेण युत इत्यर्थः।

स्यात्सेच(व)कः स्वल्पमु(सु)खोऽर्कभागे

विख्यातबुद्धिः कविरिज्यभागे ॥

सौरांशकस्थे शशिजे नरः स्या

त्काव्याघसूयानृतदुष्टशीलः ॥ ६ ॥

॥ इति बुधस्य नवांशफलम् ॥

---

## ॥ अथ गुरोः नवांशफलम् ॥

दृढाभिमानः क्षितिपुत्रभागे

स्यादाय(र्य)दारः सचिवः स(सि)तांशे ॥

जीवे बुधांशे च कविः कलाज्ञो

विद्वान्समृद्धो रजनीकरांशे ॥ ७ ॥

अनल्पचित्तः प्रथितोऽर्कभागे

समृद्ध आर्योऽरिजवन्निशां(थी निजां)शे ॥

[1]प्रभूतवित्तो रवियुत्त (पुत्र)भागे

जीवे नरोऽवाक् पुरुषः प्रजातः ॥ ८ ॥

॥ इति गुरोः नवांशफलम् ॥

---

## ॥ अथ शुक्रस्य नवांशफलम् ॥

ईर्ष्युः कलि(कुजां)[शे]स्थ(कु)तनुश्च चंड

उग्रः प्रभुः स्याद्भृगुजेऽर्कभागे ॥

---

१ प्रभूतवित्त इत्येतत् निजांशे इत्यत्रान्वेति ।

काव्ये(वौये) कविर्जीवकवे(लवे) वरिष्ठः

[1]स्वरप्रधानः किल सत्वयुक्तः ॥ ९ ॥

आढ्यो(स्वीयेऽ)ल्पशीलो रविपुत्रभागे

मृद्वंगनस्स्यात् पुरुषो(श्चन्द्रलवे)दुरंतः ॥

॥ इति शुक्रस्य नवांशफलम् ॥

## ॥ अथ शनेः नवांशफलम् ॥

पापो जिघांसुः क्षितिपुत्रभागे

महार्थयुक्तो गुणवान्विनीतः ॥ १० ॥

सितांशके स्त्रीयुतकर्मशीलः

शिल्पी बुधांशे रविजे स्वतंत्रः ॥

स्त्रीदूषकश्चंद्रनवांशे(श)[के] स्या

त्प्रेष्या(ष्योऽ)र्कभागे व[निता]वि[युक्तः ॥ ११ ॥

कुकर्मचित्तः सुरमंत्रिभागे

[पराक्र]नामोगयुतः पुमां(मान्) स्यात् ॥

पुत्रांगनागप्ति(वित्त)युतः सुशीलो

भवेन्नरः स्वीयनवांशकस्थे ॥ १२ ॥

इति शनेः नवांशफलम्

॥ इति श्रीजातकसारदीपे रव्यादिनवांशफलाध्याय एकोनत्रिंशः ॥

---

१ स्वरप्रधानः सत्वयुक्त इति द्वयं स्वीये इत्यत्र, अल्पशील इत्येतत् रविपुत्रभागे इत्यत्र, मृद्वंगनः दुरंत इति द्वयं च चन्द्रलवे इत्यत्र चान्वेति ।

## ॥ अथ द्वादशांशफलाध्यायस्त्रिंशः ॥

### ॥ सामान्यतो द्वादशांशफलम् ॥

[1]भागाधिपः श्रेष्ठफ(ब)लो विलग्ने
यदा भवेत्केंद्रमुपागतो वा ॥
स भागसंज्ञोपगतस्य राशेः
कृतस्वभावं विदधाति पुंसां ॥ १ ॥

---

### ॥ विशेषतो द्वादशांशफलम् ॥

### तत्रादौ मेषद्वादशांशफलम्

कांतिप्रवा(ता)पकीर्तिप्रदः पितुर्भास्करोऽजभागगतः ॥
मातुः करोति रोगं चंद्रस्फि(दोऽस्र)कूपित्तसंभूतं ॥ २ ॥
अर्थपटुः कुजे कुवृत्त(त्तो) द्वैमित्र(त्रः) स्खलितभाषी[च] ॥
भ जीवे जंतौ(तो)श्चौर्यात्परिक्षया(ता)र्थः सकनको ज्ञे ॥ ३ ॥
भृगुपुत्रे नष्टाहितदुष्टकलत्रोऽजभागगे भवति ॥
मंदे क्षुद्रो भृत्यार्दितो नरो बालमूर्तिधरः ॥ ४ ॥

॥ इति मेषद्वादशांशफलम् ॥

---

### ॥ अथ वृषभद्वादशांशफलम् ॥

वसुहा पितुर्दिनकरो मातुश्चंद्रो न सौख्यपुष्टिकरः ॥
भौमोऽप्रजातः(ल्पज्ञान)[करः] सौम्यः स्त्रीमित्रस्थूल(लाभ)पुष्टस्वः
(ष्टिकृत्) ॥ ५ ॥

---

[1] अयं च श्लोकः पूर्वं नवांशाध्याये लिखितः। द्वादशांशाधिपतिफलपरतयाऽप्यस्य योजना कर्तुं शक्येति ज्ञापनायेदानीमावृत्तः। भागाधिपः द्वादशांशाधिपः

जीव(वः) स्थिरवित्तकरः सते(सितो) वृषांशे सुदारतो भवति ॥
वनितोऽपस्थि(पाश्रि)तमा(मा)र्किर्जराभिभूतं मानवं कुरुते ॥ ६ ॥

॥ इति वृषभद्वादशांशफलम् ॥

---

## ॥ अथ मिथुनद्वादशांशफलम् ॥

यात्रादिवृत्तिरर्के वावा(द)कलावान्भवेन्मिथुनभागे ॥
मा(मं)ता विभूतिसौभाग्यमानहर्याश्रि(र्षान्वि)तश्चंद्रे ॥ ७ ॥
भौमो(मेऽ)नार्यसुतो ज्ञे विद्वान् शिल्पी सुवाक् [प्र]सिद्धह(ज)नुः ॥
श्रमस(सं) श्यन चि[तवि]त्तः स्याद्गुरौ कलावान् [सिते] मिथुनभागे ॥ ८ ॥
धूर्तश्चलः कुशिल्पी वयःप्रगल्भा(भो) भवति इनपुत्रे ॥

॥ इति मिथुनद्वादशांशफलम् ॥

---

## ॥ अथ कर्काटकद्वादशांशफलम् ॥

कर्क्यंशके ग्र नप्रनकौ(खरकरे) रोगाधिव्यसनसंयुतो भवति ॥ ९ ॥
आरोग्यसौख्यसौभाग्यसंयुतः शीतगौ जातः
नीचसुतो भूमिसुते ज्ञे मित्रबलः(चल) स्थितिसुवाक्यश्च ॥ १० ॥
कर्कटभागे जीवे जातो बहुमित्रभु(भा)भवति ॥
कुलयुक्तरूपदारो भवति सरोषः सिते कुलीरांशे ॥ ११ ॥
[1]क्षिप्ररजस्को मंदे प्रवीय(प्रपीड्य)ते दुष्टभृत्यदाराद्यैः ॥

॥ इति कर्काटकद्वादशांशफलम् ॥

---

१ क्षिप्रकोपीत्यर्थः ।

## ॥ अथ सिंहद्वादशांशफलम् ॥

पितुरौदार्यत्तय(धन)करः सूर्यो मातुर्भयं शशी कुरुते ॥ १२ ॥

भौमे सिंहांशकस्थे(गते)[1]तुद्धृत(द्धृत्त)मृतात्मजो भवति ॥

भ्रष्टवं(चे)ताः कुसुदशेगरी(हज्ज्ञे गुरौ) य[श]सी(स्वी) सुहृदुपास्तिलब्ध

कृच्छ्रगोचितं:(वित्तः) ॥ १३ ॥

शुक्रेऽन्नवांस्तदं(वानिनां)शे शनौ [2]जरावां(सं)[यु]तात्म[ज]वशः ॥

॥ इति सिंहद्वादशांशफलम् ॥

---

## ॥ अथ कन्याद्वादशांशफलम् ॥

दैन्यं पितुर्दिनें(ने)शे[3] मातुर्मुदवित्त्क(त्त)वत्वमिंदौ स्यात् ॥ १४ ॥

क्लच(क्लीब)समोऽमृ(सृ)जि सौम्ये कन्यांशे वाक्पटुः सुमित्रश्च ॥

जीवे [च] कन्यांश्रयचि(वि)त्तयुक्तः

शुक्रे मृदूपद्रुतदेहरा(दा)रः ॥ १५ ॥

कन्यांशके मंदजरापरकर्मसक्तः

(मन्दो जरावान्परकर्मसक्तः)

स्त्रीप्रायभृत्यः पुरुषोऽर्कपुत्रे ॥

॥ इति कन्याद्वादशांशफलम् ॥

---

१ केचनात्मजाः उद्वृत्ताः केचन मृताश्च भवन्तीत्यर्थः २ जरासंयुतश्चासावात्मजवशश्चेति विग्रहः । ३ मातुर्मुत् आनंदः, अवित्तवत्वं दारिद्र्यं स्वस्य च स्यादिति भावः ।

## ॥ अथ तुलाद्वादशांशफलम् ॥

भवेद्नारोग्यतनुर्दिनें(ने)शे
पित्रुद्धृतार्थस्तुलभां(तुलां)शसंस्थे ॥ १६ ॥

विधौ जनन्या बलदेव(ह)घातः
कुजे बले(लो)[ना]त्मजयुक् प्रतां(ती)तः ॥

अनेकचित्तः शशिजे प्रवक्ता
जीवेऽध्वपण्यक्रयचित्तयुक्तः ॥ १७ ॥

क्रियारतिज्ञानविदार्यदारः
शुक्रेऽव्ययस्थे(वस्थो) बहुभृत्य आर्कौ ॥

॥ इति तुलाद्वादशांशफलम् ॥

---

## ॥ अथ वृश्चिकद्वादशांशफलम् ॥

पितुर्दिनेशे हिमगौ ज[न]न्या
नाशो भवेद्वृश्चिकभागसंस्थे ॥ १८ ॥

भौमे च पापातुरविक्लव(वः)स्या
च्छशांकजे वा विकलः सुनेत्रः ॥

वित्तक्षयो मंत्रिणि दैत्यपूज्ये
व्यंगांगनः पूर्वमृतांगनो वा ॥ १९ ॥

भूत्वा शनौ मंदजनोऽलिभागे

[1]पापातुर(रा)ज्ञाकरस(सं)श्रितो वा ॥

॥ इति वृश्चिकद्वादशांशफलम् ॥

---

## ॥ अथ धनुर्धरद्वादशांशफलम् ॥

पितुर्वपुर्गौरवमातु(मर्थ)लाभो

दिवाकरे चाप[ध]रांशसंस्थे ॥ २० ॥

चंद्रे जनन्या अथ भूमिपुत्रे

भव(वे)द्गुरु[2]र्वृद्धि(द्ध)सुतप्रसूतिः ॥

वाग्मी प्रसिद्धो विदवा(द्वि चा)समोगः

प्रभूतपानाश्च(श्व)धनो हि जीवे ॥ २१ ॥

शुक्रे धनाभ्यर्चितदारयुक्तो

[3]वयस्विनां(भिः) किंकरसंपदाढ्यौ ॥

॥ इति धनुर्धरद्वादशांशफलम् ॥

---

## ॥ अथ मकरद्वादशांशफलम् ॥

मृगाख्यसंस्थे पितृहानिरर्के ।

माता विधौ पाह(द)ग्मा(ग)र्दिता स्यात् ॥ २२ ॥

---

१ पापातुरा पापपरायणा या अज्ञा तस्याः करं संश्रितः । पापकार्यनिरतावा ज्ञानशून्यायाः पतिरिति भावः । २ वृद्धा वर्धिता सुतप्रसूतिः यस्य सः । ३ वयोयुता ये किंकराः तद्रूपसंपद्युत इति भावः ।

वन्ध्यातनूनुः(नु)प्रभवश्च भौमे
कुसौहृदो वाग्विकलश्च सौम्ये ॥
जीवे सुत प्रि या(प्रा)प्तिरसंभृतश्री(मता स्यात्)
शुक्रो(क्रेऽ)बलो रुग्व्यशि(थि)तांगदारः ॥ २३ ॥
शनैश्चरे [1]क्षि(ति)प्रजने(नः)प्रसूतो
मृगांशके भृत्यपरिष्कृतश्च ॥

॥ इति मकरद्वादशांशफलम् ॥

---

## ॥ अथ कुम्भद्वादशांशफलम् ॥

शशांकसूर्यौ घटभागसंस्थौ
रुग(गा)र्तिवैकल्यकरौ च पित्रोः ॥ २४ ॥
भवेन्महीजे मृतपुत्रभृत्यः
शशांकजे वाक्यहतः सुमित्रः ॥
जीवो(वेऽ)र्धसंस्था(स्थो) मृतिभाक् घटांशे
दासो वयोवृद्धवधूश्च शुक्रे ॥ २५ ॥
सौरो(रे) तु वृद्धाकु(द्धः सु)वरिष्ठभृत्यो(भार्यो)
भवेन्नरो [2]दासश्च सु)संस्कृतो वा ॥

॥ इति कुम्भद्वादशांशफलम् ॥

---

१ अतिप्रजनो बहुपुत्रः । २ दासैः सुसंस्कृतः सम्यक् सेवितः ।

## ॥ अथ मीनद्वादशांशफलम् ॥

मीनाख्यभागे पितरौ प्रहर्ष
मानार्थयुक्तौ रविशीतरश्मी(श्म्योः) ॥ २६ ॥

कुजेऽर्थपक्षर्द्धि(द्धि)रपण्यशक्तो
ज्ञे दुष्टवाक्(ङ्)नष्टसुहृत्प्रजातः ॥

प्रभूतरत्नाकरभाक् सुरेज्ये
शुक्रे महार्हाप्रतिरूपदारः ॥ २७ ॥

विख्यातकीर्तिः सुगुणः सुभृत्यो
मीनांशकस्थे रविजे त(न)रः स्यात् ॥ २८ ॥

[1]एषां गृहे स्वामिगुणान्समीक्ष्य
संदर्शनाख्या(नं स्वा)सवपुर्बलानि ॥

---

१ एषां पूर्वोक्तद्वादशांशानां निरुक्तं फलं अनिष्टेष्टसमप्रबन्धात्, अनिष्टं इष्टं समं इति क्रमेण त्रिभज्य, ब्रूयात्। कथं ? गृहस्वामिगुणान् समीक्ष्य। तथा हि-द्वादशांशस्वामिनो बलवत्वे इष्टं फलं पूर्णं, अनिष्टं फलं शून्यं, मिश्रं फलं समं। तस्य दुर्बलत्वे अनिष्टं फलं पूर्णं, इष्टं फलं शून्यं, मिश्रं फलं मध्यं। तस्य मध्यमबलत्वे मिश्रं फलं पूर्णं, इष्टानिष्टफले मध्ये इति कथयेत्। तथा संदर्शनं विलोक्य ब्रूयात्। तथा हि-द्वादशांशराशेस्तदधिपतेश्च शुभदृष्टियोगे, स्वामिदृष्टियोगे च शुभं पूर्णमित्यादि ज्ञेयं। अशुभदृष्टियोगे, स्वस्वामिशत्रुदृष्टियोगे च अशुभं पूर्णमित्यादि ज्ञेयं। शुभाशुभग्रहाणां, स्वस्वामिशत्रुमित्रग्रहाणां च दृष्टिसाम्ये मिश्रं फलं पूर्णमित्यादि ज्ञेयं। तथा स्वासवपुर्बलानि विलोक्य ब्रूयात्। तथा हि-यस्मिन् राशौ द्वादशांशो विभज्यते स राशिः द्वादशांशासराशिः। यथा मेषे कन्याद्वादशांशे विभक्ते मेषः कन्याद्वादशांशास-राशिः। तस्य स्वासवपुषो द्वादशांशाश्रितराशेर्बलवत्वे, दुर्बलत्वे, समबलत्वे च पूर्वोक्तरीत्या फलं ब्रूयात्। अथ वा स्वेन द्वादशांशेनासराशिरेव स्वासवपुः। यथा मेषे कन्याद्वादशांशे कन्यैव। तस्य बलानि निरीक्ष्य पूर्वोक्तरीत्या फलं ब्रूयात्। तथा योगं निरीक्ष्य

भोग(योगं) स्थिते(तिं) भो(यो)गकृते(तिं) निरुक्तं
मू(ब्रू)यादनिष्टेऽष्टगुण(सम)पव(बं)धात् ॥ २९ ॥

॥ इति श्रीजातकसारदीपे द्वादशांशफलाध्यायस्त्रिंशः ॥

---

## ॥ अथ त्रिंशांशफलाध्याय एकत्रिंशः ॥

१भौमादित्रिंशांशे शूरो विश्र(ष)मो गुणी सुखी सुतनुः ॥
सूर्य(र्ये) चंद्रे तत्स्थे(स्तब्धो) वक्ता[ध](को) धनवान् बुधश्र(धः श्रे)ष्ठः
॥ १ ॥

---

ब्रूयात् । द्वादशांशराशेः, तदाश्रितराशेश्च शुभग्रहयोगे, स्वस्वामियोगे च इष्टं फलं पूर्णमित्यादि पूर्वोक्तरीत्या ज्ञेयम् । तथा स्थितिं निरीक्ष्य ब्रूयात् । तथा हि-शुभग्रहस्वामिकत्वादिना, समराशित्वादिना च द्वादशांशराशेस्तदाश्रितराशेश्च शुभा स्थितिः स्वभावो यदि स्यात्तदा इष्टं पूर्णमित्यादि ज्ञेयम् । अशुभग्रहस्वामिकत्वादिना, ओजराशित्वादिना च द्वादशांशादिराशेः अशुभो यदि स्वभावस्तदा अशुभं पूर्णमित्यादि ज्ञेयम तथा शुभग्रहस्वामिकस्योऽजराशित्वे, अशुभग्रहस्वामिकस्य समराशित्वे, चैवंविधया बहुभिः प्रकारैर्मिश्रस्वभावो यदि द्वादशांशतदाश्रितराश्योस्तदा मिश्रं फलं पूर्णमित्यादि ज्ञेयं । तथा योगकृतिं निरीक्ष्य ब्रूयात् । तथा हि-द्वादशांशाधिपतेः, तदाश्रितस्य, तद्दृष्टस्य ग्रहस्य राजयोगादिशुभयोगकारकत्वे शुभं पूर्णमित्यादि ज्ञेयम् । खलयोगादिदुर्योगकारकत्वे अनिष्टं पूर्णमित्यादि ज्ञेयम् । तेष्वेव केषांचिच्छुभयोगकारकत्वे, केषांचिदशुभयोगकारकत्वे, मिश्रं फलं पूर्णमित्यादि ज्ञेयम् । एकस्यैव ग्रहस्य शुभाशुभयोगद्वयकारकत्वेऽपि मिश्रं फलं पूर्णमित्यादि ज्ञेयम् । तेष्वेकस्यापि योगकारकत्वाभावेपि मिश्रं फलं पूर्णमित्यादि ज्ञेयम् । एवं द्वादशांशफलनिरूपणव्याजेन सप्तवर्गफलमप्येवमेव विभावनीयमिति सूचितम् । १ भौमादित्रिंशांशे कुजशनिगुरुबुधशुक्रत्रिंशांशे सूर्ये क्रमेण फलं शूर इत्यादि । भौमत्रिंशांशे शूरः, शनेः त्रिंशांशे विषमः, गुरोस्त्रिंशांशे गुणी, बुधत्रिंशांशे सुखी, शुक्रत्रिंशांशे सुतनुः स्यात् । एवमग्रेपि ।

स्वत्रिंशांशे महीपुत्रे तेजस्वी साहसा वि(न्वि)तः ॥
विभूषणकलत्रार्थबलसत्य(त्व)युतो नरः ॥ २ ॥

रोगी मृतस्वदारः स्याद्विषमः परदारगः ॥
स्वत्रिंशांशेऽर्कजे दुःखीमलिनः सपरिच्छदः ॥ ३ ॥

स्वत्रिंशांशे गुरौ वित्तयशोबुद्धिसम(सुखा)न्वितः ॥
नीरुक् पूज्योऽतितेजस्वी भोगी स्यादुद्यमी नरः ॥ ४ ॥

स्वत्रिंशांशे बुधे काव्यकलाशिल्पविवादवा(भा)क् ॥
शास्त्रार्थसाहसैर्युक्तो मान्यः कपटवाक् सुखी ॥ ५ ॥

बहुपुत्रसुरा(खा)रोग्यशास्त्रार्थ(र्थ)सहितानरः(तो मृदुः) ॥
स्वत्रिंशांशे सिते तीक्ष्णः सुप्रकीर्णेऽद्रियो नरः ॥ ६ ॥

**इति होराप्रदीपे ।**

॥ इति श्रीजातकसारदीपे त्रिंशांशफलाध्यायः एकत्रिंशः ॥

---

## ॥ अथ ग्रहाणां राशिफलानि दृष्टिफलानि च लिख्यंते ॥

## ॥ अथ सूर्यचाराध्ययो द्वात्रिंशः ॥

## ॥ अथ सूर्यराशिफलम् ॥

मेषगतेऽर्के साहसकर्मोऽद्युक्तो दृढास्थि त बं(स्थिबं)धश्च ॥
नुद्भूत(श्रेष्ठः प्र)बलो (ल)व्याधिः प्रियप्रतापः समरचंडः ॥ १ ॥

शास्त्रार्थकर्मचतुरः ख्यातः सत्वाधिकोऽटनोऽल्पधनः ॥

पित्तासृक्सांगः [1]स्व(गो वि)तुंगभागे नयो(रो) द्युतिमान् ॥ २ ॥

वृषगेऽर्के प्रियगंधाच्छादनमिष्टा(वाद्या)न्नमाल्यसंगीतः ॥
रतिवित्कृशोऽबुभीरुर्व्यवहा[र]रतोऽल्पधैर्य(पुत्र)श्च ॥ ३ ॥

तेजस्वी स्त्रीबंधुद्वेषी वदनाक्षिरुग्दुरंत(गल्पशत्रु)श्च ॥
क्लेशसहिष्णुर्मतिमान्सममूर्तिः स्वल्पपुण्यश्च ॥ ४ ॥

मिथुनेऽर्के बहुवित्तो मेधावी मधुरवाक् प्युना(श्रुता)र्थश्च ॥
निपुणो मध्यमरूपो द्विमातृको विनयसंपन्नः ॥ ५ ॥

विद्याज्यौतिषकुशलो रतिविद्वेषी गुणान्वितः ख्यातः ॥
धर्मपरो नृपमान्यो भवति नरो(पुमानु)दारचेष्टश्च ॥ ६ ॥

कर्कटगेऽर्के तीक्ष्णो निजपक्षे(क्ष)[द्वे]षकृद्धनविहीनः ॥
व्यसनाधिश्रमतप्तः परदेशरतोऽन्यवश्यश्च(वरवाक्यदेशदिग्वेत्ता) ॥ ७ ॥

कर्मस्वभिरतः स्यान्नारीरतिदुर्भगो नरो मानी ॥
(कर्मसु चपलः ख्यातो नृपगुणयुक्तः पितृगणद्वेष्टा ।)
कफपित्तरोगयुक्तो मधुररुचिर्दुःप्रलापी च ॥ ८ ॥

(स्त्रीदुर्भगः सुरूपः कफपित्तार्तो बहुस्थितिश्च समधर्मा ॥)

---

१ अत्र स्वतुंगभागे इत्यस्य स्थाने वितुंगभागे इति पठनीयम् । मेषे आद्या दश भागास्तुंगभागाः । तद्गतरवेः राजयोगकारकत्वेन तत्फलं राजयोगाध्याये कथितम् । उच्चभागभिन्नेषु विंशतिभागेषु स्थितस्य फलमत्र कथ्यते । न तूच्चभागगस्य । तथात्वे "अल्पधनः" इत्यादिफलकथनायोगात् । कथितं च वराहमिहिरेणैतत्फलमुच्चभिन्नभागगस्यैवेति । तथा हि "प्रथितश्चतुरोटनोऽल्पवित्तः क्रियगे त्वायुधभृद्वितुङ्गभागे" इति । अतो वितुङ्गभागगतस्यैवैतत्फलमिति विभावनीयं । अतो वितुंगभागे इत्येव पठनीयम् । स्वतुङ्गभागे इति पाठः असाधुरेव ।

सिंहेऽर्के रिपुहंतोऽद्युक्तश्चारक्रु(क्त)को धनो शूरः ॥
वनदुर्गगोकुलरतो गंभीरः सत्त्य(त्व)वान् स्थि(क्षि)तिद्युतिमान् ॥ ९ ॥

उत्साही क्रोध [परः] ख्यातः सीधुवर्तनो हिंसः (तो बधिरोऽति-
वाग्मौद्रः) ॥
प्रियमा(मां)सो विशि[ष्टचे]ष्टो बलवान् [1]श्रुतिशास्त्रतोऽबाह्यः ॥ १० ॥

कन्यास्थेऽर्के लिपि[लेख्य]गणितकाव्यविद्व(द्व)[ये]लोऽल्पसत्वश्च ॥
देवद्विजगु(गु)रुभक्तो ह्रीमान्प्राज्ञो मृदुदंतिः(दीन)[वाक्यश्च] ॥ ११ ॥

उद्वर्तन(मेधावी) संवाहनकर्मकर(रः) स्त्रीसमानमूर्तिश्च ॥
श्रुतिगीतवाद्यनिरतो वल्गुकथो जायते मनुजः ॥ १२ ॥

सूर्ये तुलाधरस्थे व्यसनक्षयभंगदुः[ख]संतप्तः ॥
देशांतरमार्गरतो नीचो हीनः प्रचेष्टश्च(हीनोऽन्यकर्मकृद्द्विष्टः)
॥ १३ ॥

परदाररतो नृपतिः(ति)परिभूतः स्याछ्रौं(स्याच्छौं)डिको मलिनः ॥
नष्टप्रथमस्त्रीको हिरण्यलोहावि(दि)पण्यरतः ॥ १४ ॥

[2]वृश्चिकगेऽर्के लोभानृताभ्यसूया[न्वितो] नृशंसः स्यात् ॥
स्यात्कु(कु)स्त्रीवश्यः क्रूरो(क्रोधी) मूर्खः स्वाधा (स्त्वदा) रहीनः[स्यात्]
॥ १५ ॥

---

१ अत्र श्रुतिशास्त्रतः अबाह्य इत्येव पदच्छेदः। सूर्यो ह्यात्मकारकः सत्वगुणात्मा, सकलप्रकाशकश्च। स च स्वमूलत्रिकोणे सिंहे स्थितः सत्वप्रधानेषु श्रुत्यादिषु प्रवर्तयेत्। अतः श्रुतिशास्त्रतो बाह्य इति पदच्छेदो न युक्तः। अत्र श्रुतिशास्त्रतः अबाह्य इति बाह्यत्वनिषेधेन तत्र रतत्वं द्रढयति। २ अत्र वराहः—क्रूरः साहसिको विषार्जितधनः शस्त्रांतगोऽलिस्थिते, इति।

पृथुकलिरसभ्यवृत्तो शस्त्रविषानलक्षतांगश्च ॥
कुत्सितशीलो विकृतोपचारकर्ता जनकमात्रे(त्रोः) ॥ १६ ॥

चापधरेऽर्के शांतः सुरातिथिद्विजपरो धीरः(रःप्राज्ञः) ॥
नीतिव्यवहाररतो धनसहित उदारसत्वश्च ॥ १७ ॥

पृथुपीनोन्नतसुतनुः शिक्षाशा(ल्पी श)स्त्रार्थ(स्त्र)निपुणधीरमावाम्
(धीर्भिषक्) ॥
भवति नरेंद्राभिमतो बंधुजनहीनः(हितः)सतां पूज्यः ॥ १८ ॥

मृगसंस्थिते दिनकरे स्वपक्षवि पक्ष क्षो (विक्षो)मनष्टधनशीलः
(नाशितसमस्तः) ॥
कुस्त्रीरतोऽल्पसत्वः कुवणिक(कु)[क]र्मार्जिता(मेवृद्धोऽ)ल्पधनः ॥ १९ ॥

हृद्रोगो(गी) बहुटनः शठो भिषक्कारुकोऽन्यभाग(ग्य)रतः) ॥
(बहुशनाटनतृष्णाकार्यरतश्चलो विहीनबान्धवो भीरुः ॥)
नीचै(च)स्तीक्ष्णो लुब्धस्त्वनल्पभावः सतामज्ञः(हैः) ॥ २० ॥

कुंभस्थेऽर्के दुःखी कर्मसु चपलश्च कुत्सिताचारः (लोऽतिसत्वहृ-
द्रोगी) ॥
हठरोषी गतभाग्यो दुष्टस्त्रीवल्लभो दुरालापः ॥ २१ ॥

कुत्सितवेषो मलि(नः पिशु)नः शंकितमैत्रः प्रजायते मनुजः
(शठः सद्वगर्धः) ॥
अनृतवचनः परिच्युतपुत्रो नीचोऽधनो मूर्खः ॥ २२ ॥

मीनस्थेऽर्के[हृत]बहुरिपुपक्षो जलसंश्रय[लब्ध]भाग्यधनः ॥
क्षीणोपचितद्रव्योग(व्यांगः)[स्यादत्यन्त]कीर्तिरानिनः(तः) प्राज्ञः
॥ २३ ॥

स्त्रीपतिररतिदुःखी(प्रीतिलब्धसौख्यो) सुहृद्गुरुप्रा(प्री)तिकृद्गुदरु(वरो)
गार्तः ॥
बहुसुजनप्रियमाल्यश्चारुवचा [जा]यते मनुजः ॥ २४ ॥
(सत्सुतभृत्यासयशाः प्रियसहजः सुवागनृतवादी ॥)

॥ इति सूर्यराशिफलम् ॥

---

## ॥ अथ सूर्यस्य दृष्टिफलं ॥

## अथ कुजराशौ सूर्यस्य दृष्टिफलम्

[1]दाता प्रभूतभृतको ललितो मृदुः स्यात्
नारीप्रियः कुजगृहे शशिवीक्षितेऽर्के ।

---

१ शनिः स्वाश्रितस्थानात् तृतीयं, सप्तमं, दशमं, पूर्णदृष्ट्या पश्यति । गुरुः स्वस्थानात् पंचमं, सप्तमं, नवमं च पूर्णदृष्ट्या पश्यति । कुजः स्वस्थानात् चतुर्थं, सप्तमं, अष्टमं च पूर्णदृष्ट्या पश्यति । शनिभिन्ना ग्रहाः तृतीयं, दशमं च पाददृष्ट्या, गुरुभिन्ना ग्रहाः पञ्चम, नवमं च पादद्वयदृष्ट्या, कुजभिन्ना ग्रहाः चतुर्थं, अष्टमं च पादत्रयदृष्ट्या, सर्वे ग्रहाः सप्तमं पूर्णदृष्ट्या पश्यंति । तस्या दृष्टेः फलमस्मिन्नध्याये, आगामिषु चाध्यायेषु निगद्यते । तत्र येषां ग्रहाणां दृश्यद्रष्टृग्रहयोर्मध्ये पूर्णदृष्टियोग्यमन्तरं गणितेन संभावितं तेषां वक्ष्यमाणं दृष्टिफलं दृष्टौ पूर्णायां पूर्णं, पादत्रयमितायां पादत्रयमितं, पादद्वयमितायामर्धमितं, पादमितायां पादमितं संभवति । रविशुक्रयो रविबुधयोः बुधशुक्रयोश्चान्योन्यं सप्तमावस्थितेर्वा, पञ्चमनवमाव-स्थितेर्वा, चतुर्थाष्टमावस्थितेर्वा असंभवेन पूर्णपादोनार्धदृष्टयः गणितरीत्या नैव संभवंति । तत्र बुधशुक्रयोः मिथः पाददृष्टिः संभवति । रविबुधयोः रविशुक्रयोश्च गणितरीत्या

संस(र)क्तपादकररुक्प्रस(हक्सम)रप्रचंडः
कूर(रः) प्रभो(भा)बलयुतः कुसुतेन न(ह)ष्टे ॥ २५ ॥

प्रेष्यो न(ऽन्य)कर्मनिरतोऽल्पकसत्त्वचित्तो(धनो विसत्त्वो)
दुःखी रवौ कुजगृहे मलिनो ज्ञदृष्टे ।

स्तेनोऽ(दाताऽ)थ वा भवति दंडपतिः सुमंत्री
चेष्टः(श्रेष्ठः) सुखी बहुधनः सुरपूज्यदृष्टे ॥ २६ ॥

प्रक्षीणबंधुरतिमान् कुवधूपतिश्च(शत्रुरसद्वधूगः)
कुष्ठी सितेक्षित इने कुजभेऽतिदीनः ।

कार्यं विनाशयति दुःखपरिप्लुतांगो
मूर्खोऽतिमूढमतिरर्कसुतेऽक्षितेऽर्के ॥ २७ ॥

॥ इति कुजगृहे सूर्यस्य दृष्टिफलम् ॥

---

## ॥ अथ शुक्रगृहे सूर्यस्य दृष्टिफलम् ॥

वेश्यारतो मृदुवचा वनिताश्रयोऽर्के
चंद्रो(द्रे)क्षिते सितगृहे सलिलोपजीवी ।

---

पाददृष्टिरपि पूर्णा न संभवति । पाददृष्टेरप्यल्पा परमा दृष्टिर्लभ्यते । तथा च बुधशुक्रयोः, रविबुधयोः, रविशुक्रयोश्च यावती दृष्टिर्गणितेन परमा लभ्यते तावतीमेव दृष्टिं पूर्णां प्रकल्प्य दृष्टिफलं तावता एव दृष्टेः पूर्णं वक्तव्यम् । ततो गणितेन श्रीपतिपद्धत्याद्युक्तेन दृष्टिं प्रसाध्य परमदृष्ट्या तां विभज्य यावल्लभ्यते तावद्दृष्टिफलं वक्तव्यम् । दृष्टौ पूर्णायामेव दृष्टिफलं पूर्णं वक्तव्यमिति कथनं न युक्तं । तथा रवे बहुषु सारावल्यादिषु प्रामाणिकग्रन्थेषु परमदृष्टेः पादोनत्वेऽपि पूर्वनिदर्शितस्थले फलकथनं निर्बीजं स्यादिति सुधीभिर्विभावनीयम् ।

तेनो(जोऽ)तिहास(साह)सयुतः क्षितिजेन दृष्टे
स्याद्वा विनि(शूरः समा)र्जितधनो विकलो यशस्वी ॥ २८ ॥

सौम्येऽक्षिते दिनकरे लिपिलेख्यकाव्य
ज्ञो वित्तयुक्सु(गेयादिकार्य)निपुणः सुतनुः सितर्क्षे ।
मंत्रा(त्री) सुलोचनतनुर्बहुमित्रशत्रु-
पक्षः सुरेंद्रगुरुणा च निरीक्षिते स्यात्(क्षो नृपोऽतिमुदितश्च सुरेज्यदृष्टे)
॥ २९ ॥

स्त्रीवित्तभोगसहितः सचित्तो (वो) नृपो वा
धीमान् सुधीः(भीः) सितगृहे कुसु(च सि)तेऽक्षितेऽर्के ।
वृद्धों(द्धां)गनापरिवृतः सगतो(दो) दरिद्रो
नीचा(चोऽ)लसो विषमवर्ण(शील) इना(ना)त्मजेन ॥ ३० ॥

॥ इति शुक्रराशौ सूर्यस्य दृष्टिफलम् ॥

---

## ॥ अथ बुधराशौ सूर्यस्य दृष्टिफलम् ॥

स्याद्बांधवारिकृतपीडनको विलासी(पी)
ज्ञक्षे(क्षे) विदर्श(देश)गमनोऽरुण इंदुदृष्टे ।
सद्दोष(द्वेषि)भीतिकल[हः] श्रप(सम)राक्वादी
हीनाश्र(हीनो हि)याऽचि(न्वि)त इलातनयेन दृष्टे(दुःखी) ॥ ३१ ॥

ख्यातो नरेंद्रचरितो रिपुवर्जि[त]श्च
यायात्स(क्षीणः स)बांधव इनै[ऽक्षितदो]ज्ञदृष्टे ।

सोन्माद इंद्रगुरुणा च विदारितस्या(तास्यो)

दू(दू)तो विदेशनिरतो बहुशास्त्रविधः ॥ ३२ ॥

[1](सोन्मादचण्डनृपदूतविदारितास्यो

वैदेशिकश्च गुरुणा बहुशास्त्रविधः ।)

जायासुतार्थसुखभाक् सुभगश्चलोऽल्प

स्नेहः स(हो वि)ल्बुधगृहे सितवीक्षितेऽर्के ।

नृत्यो(भृत्या)न्वितःकिन(त)वहेनि(कः प्र)विलोकिते च

सोगेह(सौरेण)बंधुवि(भ)रहै(णै)रुपतप्तदेहः ॥ ३३ ॥

॥ इति बुधगृहे रवेर्दृष्टिफलम् ॥

---

## ॥ अथ चन्द्रगृहे रवेर्दृष्टिफलम् ॥

भूपोऽथ वा नृपसमो जलपण्यजीवः (सम्पत्)

क्रूरः स्थिरः शशिगृहे शशिवीक्षितेऽर्के ।

स्याद्बंधुभिः सह विरुद्ध इथा(ला)जदृष्टे

तप्तो गदैरनयनो(तनयो) हि भगंदराद्यैः ॥ ३४ ॥

मानो(नी)दुमे विगतहकनृ(गतरिपुर्नृ)पवल्लभो वा

विद्यायशोयुत इने निपुणो ज्ञदृष्टे ।

[मन्त्री]कु(क)लाभ्यधिक ईज्यविलोकिते च

ज्ये(श्रे)ष्ठोऽवनीप(पि दण्ड)सचिवो भवति प्रसिद्धः ॥ ३५ ॥

---

१ सोन्मादः, चण्डः, नृपदूतः, विदारितास्यश्च भवतीति भावः ।

चंडा(डो) रणेऽधन इने(प्रियवचाः) परकार्यकर्ता
शुक्रेऽक्षिते शशिगृहे कुवधूरतिः स्यात्(तिस्वः) ।
स्याद्वा [1]सु(वि)चेष्टितमतिः पिशुना(नः) परस्व
हारी कफानिलगदार्तित (आ)श्वा(युगा)र्किदृष्टे ॥ ३६ ॥

॥ इति चन्द्रराशौ सूर्यस्य दृष्टिफलम् ॥

---

## ॥ अथ सिंहराशौ सूर्यस्य दृष्टिफलम् ॥

चंद्रेऽक्षिते हरिगृहे तरुणः(रणौ) सुदारो
भूत(प)प्रियः कफगदश्च भवेत्सुमेधाः ।
चोरोऽन्यदारनिरतः कुसुतेन दृष्टे
दु(श्रे)ष्ठोऽतिहास(साह)सकरः पुरुषोऽति(कुदुद्यमकृत्सु)रौद्रः ॥ ३७ ॥

विद्वांश्च लेख्यलिपिकैतवसत्ययुक्तः(युग्विसत्वः)
सिंहे पराक्रमवि(रिभ्रमति) हीन इने ज्ञदृष्टे ।
आशेष(राम)दैवततटाककरः सुबुद्धिः
सत्वाधिकः स्वरकरे(को वनरतिः) सुरपूज्यदृष्टे ॥ ३८ ॥

दुर्नामकुष्ठम(ग)दतप्ततनुर्विलज्जः
शुक्रेऽक्षिते दिनकरे विध(घृ)णश्च सिंहे ।

---

१ दुष्टवधूषु आसक्तिमान्, तन्निमित्तधनलाभवांश्चेति भावः । २ विचेष्टितमतिः, विरुद्धचेष्टः विरुद्धमतिश्चेति भावः ।

कार्यप्रणाशनकरश्चतुरश्च षंढ(षण्ड)

चो(श्चो)रोऽप(न्य)तापनिरतो रविपुत्रदृष्टे ॥ ३९ ॥

॥ इति सिंहे सूर्यस्य दृष्टिफलम् ॥

---

## ॥ अथ गुरुराशौ रवेर्दृष्टिफलम् ॥

वाग्बुद्धिचि(वि)त्तसुतभाक् सुतनुर्विशोको

जीवर्क्षगे नृपसमः शशिवीक्षितेऽर्के ।

सौख्यार्थभाक् समरलब्धयशाः प्रचंडः

स्यात्स्पष्टवाक् क्षितिसुतेन विलोकिते च ॥ ४० ॥

स्याद्धातुवाद(यान)लिपिकाव्यकु(क)लासु(सु) दक्षः

सौम्येऽक्षिते मधुरवाक् जनसंमतोऽर्के ।

जीवर्क्षगे च नृपतिर्धनवाहनाढ्यो

जीवेक्षि[ते] नृपसमो यदि वा सुविद्यः ॥ ४१ ॥

सद्गंधमाल्यवनितांव(ब)रभोगभोगी

शुक्रेऽक्षिते गुरुगृहे तपने च कांतः ।

कांत(नीच)श्चपु(तु)ष्पदरनश्चपलः(तिस्त्वशुचिः) पराम

कांक्षी च पापनिरतोऽर्कसुतेन दृष्टे ॥ ४२ ॥

॥ इति गुरुगृहे सूर्यस्य दृष्टिफलम् ॥

---

## ॥ अथ शनिगृहे सूर्यस्य दृष्टिफलम् ॥

श्रीसंम(ग)तो विगतसौख्यधनोऽर्कजर्क्षे
माथापटुश्चलमतिः शशिवीक्षितेऽर्के ।
विद्वेष(षि)रो[ग]सा(स)हितः कलहाच्च शा(श)स्त्रा
द्धंगो भवेत् क्षितिसुतेन विलोकिते च ॥ ४३ ॥

क्रूरः शठो न शुभसर्वतनुर्दिनेशे
सौम्येऽक्षिते शनिगृहेऽप्य(न्य)धनापहारी ।
सर्वाश्रयो विपुलकीर्तिमतिर्मनस्वी
जीवेऽक्षतैर्भ(क्षिते भ)वति शोभनकर्मशीलः ॥ ४४ ॥

शंखप्रवाळमणिभिर्गणिकार्थभाग(गा)
ज्जीवेद्रवौ(त्सुखी) शनिगृहे भृगुजेन दृष्टे ।
भूपालमानपरिवर्धितहर्षचित्तः
संस्तंभयत्य(त्य)रिगणान्रविपुत्रदृष्टे ॥ ४५ ॥

॥ इति श्रीजातकसारदीपे सूर्यचाराध्यायो द्वात्रिंशः ॥

---

## ॥ अथ चन्द्रचाराध्यायस्त्रयस्त्रिंशः ॥

## ॥ अथ चन्द्रराशिस्वभावः ॥

[1]वृतानामूढ(त्ताताम्रदृ)[2]गुष्णशाकलघुभुक् क्षिप्रप्रसादोऽटनः

१ भौमश्चक्षुश्च तेजोमयौ । भौमश्च रक्तवर्णः । मेषस्य भौमराशित्वेन तज्जात-पुरुषनेत्रस्य भौमवर्णभूतरक्तवर्णत्वं युक्तमेवेति भावः । २ उष्णशाकलघुभुक्, उष्णभोजी शाकभोजी शीघ्रभोजी चेति भावः ।

कामी दुर्बलजातु(नु)रस्थिर[1][(धनः शूरोऽङ्गनावल्लभः ।
सेवाज्ञः कुनखी व्रणाङ्कितशिरा मानी[2] सहोत्थाग्रजः
[3]शक्त्या पाणितलेऽङ्कितोऽतिचपलस्तोये च भीरुः क्रिये ॥ १ ॥

कान्तः खेलगतिः पृथूरुवदनः पृष्ठास्यभागेऽङ्कित-
स्त्यागी क्लेशसहः प्रभुः ककुदवान् कन्याप्रजः श्लेष्मलः ।
[4]पूर्वैर्बन्धुभिरात्मजैर्विरहितः सौभाग्ययुक्तः क्षमी
दीप्ताग्निः प्रमदाप्रियः स्थिर)] सुहृन्मध्यांत्यसौख्यो गवि ॥ २ ॥

स्त्रीलोलः सुरतोपचारकुशलस्ताम्रे(लः श्यामे)क्षणे(णः) शास्त्रवि
च्चावेगः प्रियवाक् प्रभक्षणरुचि(रति)र्गे(र्गी)तिप्रियो नृत्यवित् ।
क्लीबे(बै)र्याति रतिं समुन्नतनसश्चंद्रे तृतीयर्क्षगे
दूतः कुंचितमूर्धजः पटुमतिर्हास्येंऽगितद्यूतवित् ॥ ३ ॥

आवक्रदु(द्रु)तगः समुन्नतकटिः स्त्रीभि(नि)र्जितः सत्सुहृ
द्दैवज्ञः प्रचुरालयैः(यः) क्षयधनैः संयुज्यते चंद्रवत् ।
ह्रस्वः पीनगलः समेति च वशं साम्ना सुहृद्वत्सल
स्तोयोद्यानरतिः स्ववेश्मसहिते जातः शशांके नरः ॥ ४ ॥

तीक्ष्णा(क्ष्णः) स्थूलहनुर्विशालतनयः(वदनः) पिंगेऽक्षणोऽल्पात्मजः
स्त्रीद्वेषी प्रियमा(मां)सकाननगः कुप्यत्यकार्ये चिरं ।
क्षुत्तृष्णोदरदंतमानसरुजा संपीडितस्त्यागवान्
विक्रांत(तः) स्थिरधीः सुगर्वितमना मातुर्विधेयोऽर्कभे ॥ ५ ॥

---

१ अत्र कुण्डलीस्थभागो मूले लुप्तः । स च मया बृहज्जातकादुद्धृतः ।
२ सहोत्थेषु सहोदरेषु अग्रजः सहोत्थाग्रजः । अयमेव ज्येष्ठभ्रातेति भावः । ३ शक्त्या रेखया । ४ पूर्वैर्बन्धुभिर्विरहित इत्यनेनापरैर्बन्धुभिर्युक्त इत्यर्थाद्गम्यते ।

क्री(श्री)डामन्थरचारुवीक्षणगतिः स्रस्तांसबाहुः सुखी

श्लक्ष्णः सत्यपरः कलासु निपुणः शास्त्रार्थविद्धार्मिकः ।

मेधावी सुरतप्रियः [1]परगृहे वि(हैर्वि)त्तैश्च संयुज्यते

कन्यायां परदेशगः प्रियवचाः कन्याप्रजोऽल्पात्मजः ॥ ६ ॥

देवब्राह्मणसाधुपूजनरतः प्राज्ञः शुचि(चिः) स्त्रीजितः

प्रांशुस्तुन्नतनासिकः कृशशलु(चल)द्गात्रोऽ[ट]नोऽर्थान्वितः ।

हीनांगः क्रयविक्रयेषु कुशलो [2]देवद्विजानाम(नामा स)रु

ग्बंधूनामुपकारकृद्विलसि(रुषि)तस्त्यक्तश्च तैः सप्तमे ॥ ७ ॥

पृथुलनयनवक्षा वृत्तजंघोरुजानु-

र्जनकगुरुवियुक्तः [3]शैशवे व्याधितश्च- ।

नरपतिकुलपूज्यः पिंगलः क्रूरचेष्टः

खगकुलिशसे(झ)षांकाछि(कश्छ)न्नपापोऽलिजातः ॥ ८ ॥

व्य(व्या)दीर्घास्यशिरोधरः पितृधनस्त्यागी कविर्वीर्यवान्

वक्ता स्थूलरदश्च(श्र)वोधरनसः कर्मोद्यतः शिल्पवित् ।

कुचां(ब्जा)सः कुनखी स(सु)मांसलभुजो द्राग्वाग्मि(जः प्रागल्भ्य)वान्धर्मवित् ।

बंधुद्विट्(ण्) न बलात्समेति च वशं साम्नैव साध्योऽश्व(श्वि)जः ॥ ९ ॥

नित्यं लालयति स्वदारतनयान् धर्मध्वजोऽधःकृशः

स्वच्छः क्षामकटिर्ग(र्गृ)हीतवचनः सौभाग्ययुक्तोऽलसः ।

---

१ परगृहाः परवित्तानि च स्वाधीनतां भजन्तीति भावः । २ देवद्विनामा देवनिमित्तककार्यवशाद्द्वितीयनामयुक्तः । ३ शैशवे इत्येतत् जनकगुरुवियुक्तः व्याधितः इत्युभयत्रान्वेति ।

शीतालुर्मनुजोऽटनश्च मकरे सत्वाधिकः काव्यकृ

ल्लुब्धोऽगम्यजरांगनासु निरतः संत्यक्तलज्जोऽघृणी(णः) ॥ १० ॥

करभक(ग)लः शिरालुः(ल)खररोमशदीर्घतनुः

पृथुचरणोऽरुपृष्ठजघनास्यलर्टिवे[1] (वे)ठरः ।

परवनितार्थपापनिरतः क्षयवृद्धियुतः

प्रियकुसुम(मा)[नु]केपनसुहृद्धट मृ जो(टजोऽ)ध्वसहः ॥ ११ ॥

जलप(च)रधनभोक्ता दारवासोऽनुरक्तः

समरुचिरशरीरस्तुंगनासो बृहत्कः ।

अभिभवति सपत्नांन(त्नान्) स्त्रीजितश्चारुदृष्टि

र्युनि[2] (र्द्युति)निधिधनभोगी पंडितश्चांत्यराशौ ॥ १२ ॥

[3]बलवति राशौ तदधिपतौ वा(च)

[स्व]बलयुक्तः(तः) स्याघ(द्य)दि तुहिनांशुः ।

---

१ बठरः निष्ठुरो बधिरो मूर्खो वा । ११ द्युतिनिधिधनभोगी, द्युतिः, स्वतेजः । निधिः, पूर्वैर्भूमौ निहितं द्रव्यं । स्वतेजसा निधिलाभेन च लब्धस्य धनस्य भोक्ता इत्यर्थः । १२ राशौ, राश्यधिपे, चन्द्रे च बलवति पूर्वोक्तं फलमविकलं भवति । एषां त्रयाणां मध्ये एकस्य दुर्बलत्वे पूर्वोक्तं फलं किंचिन्न्यूनं भवति । द्वयोर्दौर्बल्ये कानिचिद्भवन्ति कानिचिन्न भवन्ति । त्रयाणां बलशून्यत्वे असाराणि वा स्वप्नगतानि वा मनोरथगतानि वा भवन्ति । "वृत्तातान्नदृक्" इत्यादौ राशिस्वभावनिमित्तकानि "उष्णशाकलघुभुक्" इत्यादीनि, राश्यधिपतिस्वभावनिमित्तानि, "वृत्तातान्नदृक्" इत्यादीनि च कथितानि । तत्र राशिदौर्बल्ये राशिस्वभावजनितानि, राश्यधिपदौर्बल्ये राश्यधिपस्वभावजनितानि च फलानि न भवन्ति । एवं चन्द्रस्य राशिफलसाकल्यासाकल्यनिमित्तमभिधायेमं न्यायमन्यत्राप्यतिदिशति । शशिवदिति । अतः चन्द्रात् अन्येऽपि ग्रहाः शशिवत् अनुपरिचिन्त्याः, इत्थंभावेन यथावन्निरूपणीयाः

कथितफलानामविकलदाता
शशिवदतोऽन्येऽप्यनुपरिचिंत्याः ॥ १३ ॥

॥ इति चंद्रराशिस्वभावः ॥

---

बृहज्जातके ॥

## अथ चंद्रं प्रति दृष्टिफलानि

## ॥ अथ मेषे चन्द्रस्य दृष्टिफलम् ॥

**होराप्रदीपे—**

उग्रदण्डो नरो धीरः संग्रामेप्सुर्महीपतिः ॥
प्रणतानां मृदुर्मेषे शशांके रविवीक्षिते ॥ १४ ॥

---

इत्यर्थः । राशौ, तदधिपतौ, सूर्यादिग्रहेषु च बलिष्ठेषु तेषां राशिफलं पूर्णं स्यादित्यादि पूर्ववज्ज्ञेयम् । अत्र वृत्तातात्प्रदगित्यादिना कथितं फलं मेषादिद्वादशलग्नानामपि संभवति । लग्नफलकथनावसरे राशिराश्यधिपयोर्द्वयोरेव बलवत्वे पूर्णं फलम्, एकस्य बलवत्वे मध्यममित्यादि पूर्ववज्ज्ञेयम् । अत्रायमाक्षेपः—"लग्नस्यापि स्वामिवीर्यं हि वीर्यम्" इत्युक्तदिशा राश्यधिपस्य दौर्बल्ये राशेरपि दौर्बल्यमेव, राश्यधिपस्य प्राबल्ये राशेरपि प्राबल्यमेवेति राशिराशिपयोः पृथग्वीर्याभावेन "बलवति राशौ तदधिपतौ वा" राशिराशिपयोः पृथक्कीर्तनं न युज्यत एवेति । अत्रैतत्समाधानं — राशीनां द्विविधं बलं; स्वस्वामिबलं नैसर्गिकं चेति । तत्र स्वस्वामिबलं च "लग्नस्यापि स्वामिवीर्यं हि वीर्यं" इत्यादिना निरूपितं । नैसर्गिकं च बलं "होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटा" इत्यादिना कथितं । स्वस्वामिना, गुरुणा, बुधेन, पूर्णचन्द्रेण, शुक्रेण च युक्तः, शुभमित्रैः पूर्वोक्तग्रहैर्दृष्टः, रविकुजशनिक्षीणचन्द्रैरयुक्तः रविकुजशनिक्षीण-चन्द्रशुक्रैरदृष्टश्च राशिः पूर्णबलः । तथा लग्नचतुर्थसप्तमदशमभावाश्रिता राशयः पूर्णबलाः । द्वितीयपंचमाष्टमैकादशभावाश्रिता मध्यमबलाः । तृतीयषष्ठनवमद्वादश-भावाश्रिता राशयो दुर्बलाः । मिथुनकन्यातुलाधनुःपूर्वार्धकुंभाः दिवा पूर्णबलाः, संध्यायां

विषाग्निवातशस्त्रादिक्षतांगो दंततेऽरुक् ॥
विधौ मांडलिको गेषु(मेषे) मूत्रकृच्छ्री कुजेऽक्षिते ॥ १५ ॥

कविर्विद्वान् सतामिष्टः सद्वाक्यः कीर्तिमान् भवेत्(नरः) ॥
शशांके मेषराशिस्थे बुधदृष्टे प्रजायते ॥ १६ ॥

बहुभृत्यज(ध:)नो भोगी भूपतिः सचिवोऽथ वा ॥
जायते मेषराशिस्थे(दण्डपो मेषे)शशांके गुरुवीक्षिते ॥ १७ ॥

क्रयविक्रयवित्प्राज्ञो गुणभाग्भूपसत्कृतः ॥
शशांके मेषराशिस्थे समृद्धः शुक्रवीक्षिते ॥ १८ ॥
(सुभगः सुतवित्ताढ्यो वरनारीविभूषणः ।)
(शशांके मेषराशिस्थे स्वल्पभोक्ता सितेऽक्षिते ॥)
चोरमुख्यो भवेन्मूर्खो विकीर्णार्थः परान्नभुक् ॥
(मलीमसो दुरालापो विद्विष्टो बहुदुःखवान् ।)
दरिद्रो मेषराशिस्थो(स्थे) शशांके शनिवीक्षिते ॥ १९ ॥

॥ इति मेषे चन्द्रस्य दृष्टिफलम् ॥

---

## ॥ अथ वृषभे चन्द्रस्य दृष्टिफलम् ॥

द्विचतुष्पदसंपन्नः कर्षकश्चातिकर्मकृत् ॥
प्रायों(यो)गिकोऽन्यचित्तः स्यात्सू(धनी भृत्यः सू)र्यदृष्टे वृषे विधौ ॥ २० ॥

---

मध्यबलाः, रात्रौ दुर्बलाः। मेषवृषमसिंहधनुःपश्चार्धमकरपूर्वार्धाः दिवा दुर्बलाः, संध्यायां मध्यबलाः, रात्रौ पूर्णबलाः। कर्काटकवृश्चिकमकरोत्तरार्धमीनाः संध्यायां प्रबलाः। एवं च राश्यधिपस्य दौर्बल्येपि नैसर्गिकं बलमाश्रित्य राशेर्बलवत्वं संभवतीति युक्तमेव पृथक्कीर्तनमिति।

[1]प्रनष्टमित्रसन्मानः स्त्रीकृते वनिताप्रियः ॥
मातुर्न शोभनं चंद्रे(नो निःस्वो) वृषेऽद्रो(दा)रः कुजेऽक्षिते ॥ २१ ॥

प्राज्ञः स(प्र)मुदितो वाऽथ विधिज्ञो जनसंमतः ॥
प्रभूतगुणसंपन्नो(वान् स्तेनो) गवींदौ बुधवीक्षिते ॥ २२ ॥

स्थिरदारात्मजसुहृज्जननीपितृभक्तिमान् ॥
गवींदौ(नृमान्यो) निपुणो धर्मसमृ(प्रसि)द्धो गुरुवीक्षिते ॥ २३ ॥

सुगन्धवस्त्रमाल्यान्नशयनासनयानभाक् ॥
गृहालंकारभाक् भूपो गवींदौ शुक्रवीक्षिते ॥ २४ ॥

मातुर्नेष्टोऽगनानां च मित्रबंधुजनोऽ(सुतोऽ)ज्झितः ॥
पुनर्भूपतिरिंदौ(राढ्यः) स्याद्वृषस्थे(षेन्दौ) शनिवीक्षिते ॥ २५ ॥

वृषे पूर्वार्धगश्चंद्रो न वि(चि)रान्मानदुःख(तृमृत्यु)कृत् ॥
अपरार्धस्थितो घ(द)त्ते वियोगं जनकेन च ॥ २६ ॥

॥ इति वृषभे चन्द्रस्य दृष्टिफलम् ॥

---

## ॥ अथ मिथुने चन्द्रस्य दृष्टिफलम् ॥

प्रकाश्यो निर्धनः प्राज्ञो रूपवानतिदुःखितः ॥
अन्यायो(या)धर्महीनश्च मिथुनेऽर्केऽक्षिते विधौ ॥ २७ ॥

प्राज्ञः शूरः सुखी रूपसंयुतो विभवान्वितः ॥
कुजदृष्टे विधौ चोरो मिथुनस्थे(लोहपण्यः) सुवाहनः ॥ २८ ॥

---

१ स्त्रीकृते प्रनष्टमित्रसन्मानः इति योजना ।

अर्थाजनपदे धी(दुर्धी)रः पार्थिवश्चापराजितः ॥
पूर्णांगो(र्णाङ्गो) मिथुने चंद्रे जायते बुधवीक्षिते ॥ २९ ॥

सत्यवाक्(ङ्)मुखरो मान्यः ख्यातो रूपसमन्वितः ॥
शास्त्राचार्यो विधौ ज्ञानी मिथुने जीववीक्षिते ॥ ३० ॥

वरस्त्रीवस्त्रमाल्यात्रयोवद्र(र्थयानम् )षणभाग्विधौ ॥
गीतवाद्यकलावित्तो मिथुनस्थे(निर्भयुग्मे) सितेऽ[क्षिते] ॥ ३१ ॥

विभूतिवनितासौख्यबंधुहीनः प्रजायते ॥
लोकद्वेष्यो विधौ मन्दवीक्षिते मिथुनास्थिते ॥ ३२ ॥

(लोकद्वेष्योऽधनस्तन्तुवायो युग्मे शनीक्षिते ।)

॥ इति मिथुने चन्द्रस्य दृष्टिफलम् ॥

---

## ॥ अथ कर्काटके चन्द्रस्य दृष्टिफलम् ॥

हृद्रो(दृग्रो)गी निर्धनो लेखं(ख)हारको भूपति(ते)श्वरः ॥
दुर्गा(र्ग)पालोऽथ वा चंद्रे कर्कटे रविवीक्षिते ॥ ३३ ॥

विकलांगः प्रियो दक्षः शूरो मातुरनर्थकृत् ॥
कुलस्यापि(आयोधकः) कुलीरस्थे चन्द्रे भौमनिरीक्षिते ॥ ३४ ॥

नयज्ञो मतिमान्वित्तपुत्रदारसम(सुखा)न्वितः ॥
नृपमंत्री कुलीरस्थे(कविश्चान्द्रे) चन्द्रे बुधनिरीक्षिते ॥ ३५ ॥

विनीतो मतिमान्श्रेयसमो(गुणवान् राजा नय)विक्रमसौख्यभाक् ॥
सुकके(सुभार्यो) [ज्ञो] विधौ जीववीक्षिते कर्कटस्थिते ॥ ३६ ॥

वित्तवस्त्रांगनारत्नभोगी ख्यातगुणो नृपः ॥
वेश्याजनाधिपः कान्तः कर्किणींदौ सितेऽक्षिते ॥ ३७ ॥

दीनोऽ(नीचोऽ)नृतोऽटनः पापी दुःखरोगदरिद्र(दारिद्र्यरोग)भाक् ॥
नेऽष्टौ मातुरयोजा(जी)वी कर्किणींदौ शनीक्षिते ॥ ३८ ॥

॥ इति कर्काटके चन्द्रस्य दृष्टिफलं ॥

---

## ॥ अथ सिंहे चन्द्रस्य दृष्टिफलम् ॥

अपुत्रो भूपतिः पापरतो धीरो विनि(ऽतिवि)श्रुतः ॥
सिंहस्थिते गुणी चन्द्रे सूर्यदृष्टे महास्पदः(खनः) ॥ ३९ ॥

सुतस्त्र(नरस्त्री)सुतसौख्यार्थवाहनाढ्यश्चभू(भू )पतिः ॥
हिंस्र(नृप)श्चण्डो महान्सिहे शशांके कुजवीक्षिते ॥ ४० ॥

स्त्रीसख्यः(स्वः) स्त्रीरतो विद्वान् ज्योतिःशास्त्रविशारदः ॥
सिंहस्थिते विधौ दृष्टे बुधेन धनपुत्र(सौख्य)भाक् ॥ ४१ ॥

बहुश्रुतः समृद्धश्च गुणी नृपसमो भवेत्(धनी) ॥
कुलमुख्योऽथ वा मन्त्री सिंहे जीवेऽक्षिते विधौ ॥ ४२ ॥

वनितासेवकः स्फीतधनी सुरतविन्नरः(न्नृपः) ॥
प्राज्ञो नु रा(रो)गवान् सिंहे शशांके शुक्रवीक्षिते ॥ ४३ ॥

कर्षकः कृपणो नि(कोऽनृतवाङ्निः)स्वो नापितो दुर्गतपौनृपः (पालकः) ॥
स्त्रीसौख्यवर्जितो मूर्खः सिंहे चन्द्रे शनीक्षिते ॥ ४४ ॥

॥ इति सिंहे चन्द्रस्य दृष्टिफलम् ॥

---

## ॥ अथ कन्यायां चन्द्रस्य दृष्टिफलम् ॥

नृपकोष(श)करोऽभार्यः स्त्र्याश्रयः स्व(सु)गृहीतभा(वा)क् ॥
विदेशनिरतश्चं(ख्यातः सत्कर्मभाक् चं)द्रे कन्यास्थे सूर्यवीक्षिते
॥ ४५ ॥

शिल्पाचार्यो धनी [धी]रो भवेन्मातुरनिष्टकृत् ॥
पित्तरोगी विधौ (रुक् शिक्षितः) ख्यातः कन्यास्थे (स्त्र्याश्रयो)
भौमवीक्षिते ॥ ४६ ॥

काव्यज्यौतिषविद्भू१(पो) विवादी कलहे जयी ॥
सुभगो निपुणश्चंद्रे(णः श्रेष्ठः) कन्यास्थे बुधवीक्षिते ॥ ४७ ॥

बंधुयुक्तः सुखी भूपकृत्यकर्ता गृहीतवाक् ॥
समृद्धो जीवसंदृष्टे कन्यास्थे च निशाकरे(चन्द्रे चमूपतिः) ॥ ४८ ॥

नानालंकारभाग्य(गृ)द्धिसमृद्धो निपुणो भवेत् ॥
बहुसा(दा)रश्च कन्यास्थे शशांके शुक्रवीक्षिते ॥ ४९ ॥

क्लीवे(व)श्योऽमातृको दुःखी दरिद्रश्चादृढस्मृतिः ॥
नृशं[सः] स्त्र्याश्रयश्चंद्रे कन्यास्थे मन्दवीक्षिते ॥ ५० ॥

॥ इति कन्यायां चन्द्रस्य दृष्टिफलम् ॥

---

## ॥ अथ तुलायां चन्द्रस्य दृष्टिफलम् ॥

अपुत्रदारभा(भो)गार्थ(र्थः) परिभूतोऽटनः सरुक् ॥
नीचः सूर्येऽक्षिते चन्द्रे तुलाधरगते भवेत् (यां निकृतिप्रियः) ॥ ५१ ॥

निःस्वो बंधुग(र)तः क्रुद्धो विकृतोऽन्यवधूरतः ॥
कलिकृतिं दिनांगश्च ? जूके चन्द्रे कुजेऽक्षिते ॥ ५२ ॥

(तीक्ष्णश्चोरोऽन्ययुवतिगन्धमाल्ययुतोऽल्पकः ।

धीमान् शीघ्रगतिः स्वक्षः कपटी कुजवीक्षिते ॥)

विद्वान् ख्यातः सुवाक्य(क्यः) स्यात्प्रभूतधनधान्यभाक् ॥
कलाज्ञो बुधसंदृष्टे तुलाधरगते विधौ(नृपः) ॥ ५३ ॥

सर्वत्र पूजितो है(हे)मकारो रत्नादिकृद्भवेत्(नृपः) ॥

क्रयविक्रयदक्षश्च जूके जीवेऽक्षिते विधौ ॥ ५४ ॥

विविधोपायवित्प्राज्ञः सुखस्त्रीसा(नारी)धनान्वितः ॥
नीरोगः सुभगो भूपो जूके (जूके वणिक्)चन्द्रे सितेऽक्षिते ॥ ५५ ॥

निस्वपो(निःसुखो) विव(ष)यासक्तः स[धनो] वाहनान्वितः ॥
मातुर्विधौ(हिंतो) घटे[1] दृष्टे सौरिणा वलितानृपः(कपटी सुवाक्) ॥ ५६ ॥

॥ इति तुलायां चन्द्रस्य दृष्टिफलम् ॥

---

## ॥ अथ वृश्चिके चन्द्रस्य दृष्टिफलम् ॥

कर्मोद्युक्तः समृद्धश्च लोकद्वेष्यः सुखोऽज्झितः ॥
हृतार्थो वृश्चिके चंद्रे भास्करेण निरी(द्रेऽटनो विद्वान् रवी)क्षिते ॥ ५७ ॥

---

१ घटे तुलायां ।

शूरो नृपसमो धीरः समृद्धः समरे जयी ॥
प्रभक्षणरवि(ति)श्चंद्रे वृश्चिके भौमवीक्षिते ॥ ५८ ॥

अमृष्टमार्ग(वाग)चतुरो [1]युग्मायत(पत्य)श्च कूटकृत् ॥
मु(यु)क्तिमार्गे भवे(न् गीतवि)चंद्रे वृश्चिके बोधनेऽक्षिते ॥ ५९ ॥

कर्मोद्युक्तः(बहुवित्त) समृद्धश्च स्वकर्मनिरतो नरः(नृपः) ॥
लोकद्वेष्यः सुरूपश्च जीवदृष्टेऽलिगे विधौ ॥ ६० ॥

रजकोऽतिमदः सार्थवाहनः सुभगो भवेत् ॥
स्त्रीविनाशितसारश्च को(की)टे चंद्रे सितेऽक्षिते ॥ ६१ ॥

नीचापत्योऽटनो रोगी कृपणो निर्धनोनृ(ऽनृतः) ॥
विकलांगो भवेच्चंद्रे वृश्चिके शनिवीक्षिते ॥ ६२ ॥

॥ इति वृश्चिके चन्द्रस्य दृष्टिफलम् ॥

---

१ युग्मस्य पितृद्वयस्य अपत्यं, इति रुद्रभट्टो व्याचष्टे। परमेतद्व्याख्यानं सारावलीगतेनैतत्समानार्थेकेन "यमलापत्यम्" इत्यनेन विरुद्ध्यते। तत्र हि अपत्ययोर्यमलत्वस्येव पित्रोर्यमलत्वस्य व्यवहाराभावेन यमलस्य पितृद्वयस्यापत्यमिति व्याख्यानं न संगच्छते। परं तु यमलं अपत्यं यस्य तत् यमलापत्यं इत्येव व्याख्येयम्। तथा च तत्समानार्थकस्य युग्मापत्य इत्यस्यापि युग्मं अपत्यं यस्य सः युग्मापत्य इत्येव व्याख्यानं युक्तम्। तथा सति युग्मापत्य इति पुंलिंगप्रयोगोऽपि साधुतां भजते। अन्यथा युग्मस्यापत्यं युग्मापत्यमिति स्यात्। अत एवैतत्समानार्थकस्य बृहज्जातकगतस्य "युग्मपिता" इत्यस्यापि युग्म पिता यस्य सः इति व्याख्यानं न साधु। युग्मस्य पिता इत्येव व्याख्यानं सहृदयमनोरंजनकरमिति विभावयामः।

## ॥ अथ चापे चन्द्रस्य दृष्टिफलम् ॥

विख्यातपौरुषः सौख्यवाहनार्थयुतः[1] शठः ॥
नृपो वा जायते चा(डाम्भिकश्चा)पे शशांके सूर्यवीक्षिते ॥ ६३ ॥

सेनानीः सुभगः(सधनः) ख्यातः पौ(तपौ)रुषः सुभगः शठः ॥
नृपो वा जायते चापे शशांके भौमवी(डाम्भिकः श्रेष्ठभृत्यश्चन्द्रे कुजेऽ)क्षिते ॥ ६४ ॥

शिल्पज्यौतिषविज्ञानी ज्ञातिज्ञो भृत्यवान् विधौ ॥
नम्रा(नाट्या)चार्यो धनत्युयो(ज्ञातिसेव्यो) वाक्प(त्वक्सा)रो बुधवीक्षिते ॥ ६५ ॥

सुदेहः सचिवः सौख्यधनधर्मसमन्वितः ॥
भूपो वा जायते च(पाश्रयो भवेच्च)न्द्रे चापे जीवनिरीक्षिते ॥ ६६ ॥

पुत्रार्थकामसौभाग्यसौख्यभाक् चापगे विधौ ॥
शक्तिमान् सुसुहृद्दारः सितदृष्टे जनाश्रयः ॥ ६७ ॥

सत्यप्रियवचा राज्ञः(डम्भी) सुरूपश्च बहुश्रुतः ॥
सिंहंनो (सुशठो) निर्धनश्चन्द्रे चापगे मन्दवीक्षिते ॥ ६८ ॥

॥ इति चापे चन्द्रस्य दृष्टिफलम् ॥

---

## ॥ अथ मकरे चन्द्रस्य दृष्टिफलम् ॥

मलिनो निर्धनो दुःखी परकर्मकरो नरः(रोऽटनः) ॥
विषमोऽल्पमतिश्चंद्रे मृगस्थे रविवीक्षिते ॥ ६९ ॥

---

१ शठः स्वकार्यैकपरः ।

धी(श्री)मानुदारः सुभगः सुवाहनयुतो धनी ॥
चंडो मृगस्थिते चंद्रे नृपो वा भौमवीक्षिते ॥ ७० ॥

विक्लां(तीक्ष्णो) गतांगतो(नो) मूर्खः प्रवासी निःसुखश्चलः ॥
बुधदृष्टे मृगे चन्द्रे वाग्मी वा निर्धनो नृपः ॥ ७१ ॥

बहुदारसुहृच्छूरो(त्पुत्रो) नृपो नृपसमोऽथ वा ॥
विख्यातो जायते चन्द्रे मृगगे तौ [गुरु]वीक्षिते ॥ ७२ ॥

मान(स्थ)वाहनशास्त्रार्थवरस्त्रीभूषणान्वितः ॥
मकरस्थे निशानाथे जायते शुक्रवीक्षिते ॥ ७३ ॥

(सोपक्रोशो ह्यपुत्रश्च मृगे चन्द्रे सितेऽक्षिते ।)

अलसं मलिनमन्दार(दारं) विसुखम(खं स)धनं पारदारिकमसत्यं ॥

[(अलसं मलिनं सधनं मदनार्तं पारदारिकमसत्यं ।)]
दिवसकरपुत्रदृष्टः करोति चन्द्रो नरं मकरे ॥ ७४ ॥

॥ इति मकरे चन्द्रस्य दृष्टिफलम् ॥

---

## ॥ अथ कुम्भे चन्द्रस्य दृष्टिफलम् ॥

कृषिकृन्मलिनः शूरो नृपतुल्योऽथ वा भवेत् ॥
संगमार्तो विधौ कुम्भे जायते(धार्मिकः) सूर्यवीक्षिते ॥ ७५ ॥

सत्यवाग्विषमो मातृपितृवित्तगृहैर्यु(विवर्जि)तः ॥
कुजेऽक्षिते घटे चन्द्रेऽन्यार्थहृत्प(तेऽलसः कुंभेऽन्यस्त्रीगः प)रकार्यकृत्
॥ ७६ ॥

दक्षः श(शी)तोपचारेषु गीतज्ञो वनिताप्रियः ॥
स्वप(स्वल्प)वित्तसुखः कुंभ महां(मे नृप)श्चन्द्रे बुधेऽक्षिते ॥ ७७ ॥

वरांगनागृहक्षेत्रग्रामपादपपालकः ॥
साधुराढ्यो(र्यो) घटे चन्द्रे जायते(भूपसमानो) गुरुवीक्षिते ॥ ७८ ॥

नीचः पुत्रसुहृद्धीर(नः) पापः स्वाचारविं(र्यनिं)वितः ॥
कुदारोऽल्पसुखश्चन्द्रे कुम्भस्थे सूर्यवी(खो भीतोऽन्यनारीगः सितेऽ)
क्षिते ॥ ७९ ॥

विधर्मा मलिनो रोमनखहृ(धृ)त्परदारगः ॥
आढ्यः स्वाचा(स्थाव)रभाक् चन्द्रे कुम्भस्थे मन्दवी(भूपः शठः कुंभे
शनी)क्षिते ॥ ८० ॥

॥ इति कुंभे चन्द्रस्य दृष्टिफलम् ॥

---

## ॥ अथ मीने चन्द्रस्य दृष्टिफलम् ॥

तीव्रकामः सुखी नेता प्रचण्डो बहु(दण्डनेता पापः सु)विग्रहः ॥
धनी मुदितदारश्च झषे सूर्येऽक्षिते विधौ ॥ ८१ ॥

कुलटातनयः पाप(पः) परिभूता(तः) सुखोऽज्झितः ॥
शूरो मीनस्थिते चन्द्रे जायते भौमवीक्षिते ॥ ८२ ॥

भूपतिः सौख्यसंयुक्तो वरनारीसमाश्रितः ॥
हास्योपजीवि[वी] मीनस्थे शशांके बुधवीक्षिते ॥ ८३ ॥

मण्डलीकः समृद्धः स्याद्बहुस्त्रीभिः समावृतः ॥
सुकुमारो झषे चन्द्रे जायते गु(नृगतिर्गु)रुवीक्षिते ॥ ८४ ॥

सुशीलो रतिसंगीतरतः पण्डित ईश्वरः (नृत्यवाद्यरतो बुधः) ॥
स्त्रीणां हृदयहारी च झषे चन्द्रे सितेऽक्षिते ॥ ८५ ॥

का[मा]र्तो मातुरव्यंगो हितो दारसुखोन्स(ज्झि)तः ॥
चन्द्रे नीचविरूपस्त्रीसक्तो मीनेऽर्कजेऽक्षिते ॥ ८६ ॥

(कामार्तो मातुरहितो व्यङ्गो दारसुखोऽज्झितः ॥
पापो नीचविरूपस्त्रीसक्तो मूर्खः शनीक्षिते ॥)

॥ इति मीने चन्द्रस्य दृष्टिफलम् ॥

॥ इति चन्द्रं प्रति दृष्टिफलानि ॥

॥ इति श्रीजातकसारदीपे चन्द्रचाराध्यायस्त्रयस्त्रिंशः ॥

---

## अथ भौमचाराध्यायश्चतुस्त्रिंशः

### ॥ अथ भौमराशिफलम् ॥

ऊर्जितोऽज्ञाविधान्यार्थस्त्रो(न्यस्त्रोदान)भृत्यसुखान्वितः ॥
चमूग्रामगणाधीशो नृपो वा मेषगे कुजे ॥ १ ॥

उद्धृ(द्ध)तः पुंश्चलो द्वेष्यो विस्त्रंभस्थिवि[ति]वर्जितः ॥
विधर्म(धनः) कुहका(को) भीरु स्व(रुः स्त्री)जितो वृषगे कुजे ॥ २ ॥

धर्मबुद्धिश्च शिल्पास्त्रस्तवकाव्यकलापटुः ॥
विदशगोऽट(ट)नो भौमे विनीतो नियुत(नृयुग)स्थिते ॥ ३ ॥

पराल[ये प]विना(राज्ञा)शी ततः(कृपेः) सलिलसंश्रयात् ॥
श्रमाद्वा वित्तमाप्नोति कर्कटस्थे धरासुते ॥ ४ ॥

[1]पूर्वनष्टां(नंष्टपूर्वां)गनः सर्पमृगहा स्वल्पनन्दनः ॥
धर्महीनः क्रियास्व(स)क्तो वपुष्मान् सिंहगे कुजे ॥ ५ ॥

अग्निप्रणी[त]पार्श्वौ(र्श्वो)ऽल्पशौर्यश्चावस्य(तिम)[नो]ज्ञभा(वाक्) ॥
खलोद्वेजनभीरुश्च कन्यास्थे निपुणः कुजे ॥ ६ ॥

संग्रहेच्छुर्वितप्तादा(नष्टाद्य)दारो वेश्यांगनारतः ॥
क्षीणार्थस्तौलिनि कुजे वेश्याशौण्डकसंयुतः ॥ ७ ॥

बहुचोरादिबाधा(धिपोऽथा)ग्निविषशस्त्रव्रणार्दितः ॥
गोभूसुताङ्गनायुक्तोऽ(क्तः) सत्यवृत्तिः कुजेऽलिगे ॥ ८ ॥

व्यर्थश्रमः स्वतन्त्रः स्यादसत्यनिरतो [2]गुरुं(रौ) ॥
अन्योन्यवैरिपाताच्च म(रतो नष्टवि)त्तो धनुषि भूमिजे ॥ ९ ॥

बंधुद्वेष्यात्मवंशस्थान्प्र(वश्यः स्यात्प्र)दाता रक्षको नरः ॥
बहूपचारसंयुक्तः समृद्धः स्वोच्चगे कुजे ॥ १० ॥

[3]द्यूतान्या(द्य)र्थो व्ययी वृद्धाकृतिरंते च दुर्गतिः ॥
रोमशः [4]पात(न)परस्तीक्ष्णः शौचहीनो घटे कुजे ॥ ११ ॥

वादी चेष्टिग(त)विज्जिह्मो नासे(ह्मोऽल्पाप)त्यः प्रयतः शुचिः ॥
करोति गुरुविप्राणामवज्ञा(ज्ञां) मीनगे कुजे ॥ १२ ॥

॥ इति भौमराशिफलम् ॥

---

१ बहुविवाहवानिति, तत्र प्रथमभार्या नष्टेति च भावः । २ गुरौ असत्यनिरत इति योजना । गुरुसंनिधौ मिथ्याभाषीत्यर्थः । ३. द्यूतादिलब्धधन इत्यर्थः । ४ मद्यादिपानरत इत्यर्थः ।

## ॥ अथ स्वगृहे भौमस्य दृष्टिफलम् ॥

धीमान्धनी भवति चौर्यरतिः सकोणे(पो)
दाता कुजे निजगृहे रविवीक्षिते स्यात् ।

(दारार्थपुत्रसहितः सचिवो नृपो वा
सेनापतिर्निजगृहेऽसृजि सूर्यदृष्टे ॥)

कन्याप्रियः स्वजनवैरभृ(यु)तो विमित्रः(माता)
सेव्य(र्ष्यः) क्षत(तः) स्वकजनै रहितोऽब्जदृष्टे ॥ १३ ॥

स्वर्क्षे कुजेऽन्यधनहृत् गणिकापतिश्च
द्वेष्यः शुभाकृतिरदेवरतो ज्ञदृष्टे ।

मान्यः सुधीर्मधुरवाक् सुनयः(भगः) समृद्धो
जीवेऽक्षिते च जननीपितृवत्सलः स्यात् ॥ १४ ॥

[1]स्त्रीभोग(बन्ध)भागसहते(कृदे)ति तदर्थमर्थो
नाशं कुजे निजगृहे सितवीक्षिते च ।

वा(चो)राभिधान(घात)निरता(तोऽ)न्यवधूपतिश्च
शूरोदय(ऽसृजि) स्वजनवर्जित आर्किदृष्टे ॥ १५ ॥

॥ इति स्वगृहे भौमस्य दृष्टिफलम् ॥

---

१ स्त्रीनिमित्तं कारागृहादिबन्धनाग्नित्यर्थः । तदर्थं, स्त्र्यर्थं । अर्थः असकृत् नाशं एति इत्यन्वयः ।

## ॥ अथ शुक्रगृहे भौमस्य दृष्टिफलम् ॥

स्त्रीद्विड्वनायि(द्रि)निरतो बहुशत्रुपक्षो
धीरोऽर्कवीक्षितकुजे सितभे सरोषः ।
चंद्रेऽक्षिते च पिशुनो(विषमो) [न] शिरश्च मातु
र्भ[र्भी]रू रणे कुल(बहु)वधूदयितो नर(रः) स्यात् ॥ १६ ॥

विद्वान्कुजे मृदुतनुः कलहप्रियोऽल्प
चि(वि)त्तात्मजो बहुविना(वचाः) सितभे ज्ञदृष्टे ।
बंधुप्रियो भवति वादित[गीत]विज्ञः
स्फीतो नरोऽतिसुभगः सुरपूज्यदृष्टे ॥ १७ ॥

नेता सुखी च सचिवो नृपतिप्रियो वा
[1]ख्यातः सुखार्थ.................................... ॥
सौभाग्यभाक् कुललनासमसत्वयुक्तः
(ख्यातः कुजे सितगृहे सितवीक्षिते स्यात् ।
ख्यातः सुहृत्स्वजनबुद्धिसुखार्थयुक्तः
श्रेणीपुराधिपतिरार्किविलोकिते स्यात् ॥ १८ ॥

॥ इति शुक्रगृहे भौमस्य दृष्टिफलम् ॥

---

## ॥ अथ बुधगृहे भौमस्य दृष्टिफलम् ॥

विद्यार्थशौर्यसहितो बुधभेऽर्कदृष्टे
रक्तेऽद्रिदुर्गवनगोऽरुणभाः सुसत्वः ।)

---

१ अत्र ग्रंथपातो दृश्यते । तत्र सारावल्यनुसारेण मया निबद्धाः श्लोकाः कुण्डल्यां निवेशिताः ।

(कन्यापुर युवतिपः सुभगो विनीत

श्चन्द्रेऽक्षिते बुधगृहे सुखवित्तयुक्तः ॥ १९ ॥)

संख्यानक(का)व्यलिपिनि(वि)न्मृदुभूरिवाक्यो

दूतोऽ[नृतोऽ]सृजि च दुःखसहो ज्ञदृष्टे ।

जीवेऽक्षिते [1]नृपतिदै(दौ)त्यविदेशसक्तः

शूरः(दक्षः) प्रभुर्ज्ञगृहगे पुरुषः प्रकाशयः ॥ २० ॥

वस्त्रान्नभाग्युवतिकृत्यकरः समृद्धः

[2]शुक्रेक्षितारो(शुक्रेऽक्षितेऽरुणवपुः सुभगो बुधर्क्षे ।)

मालिन्यशौर्यकृषिदुःखयुतोऽद्रिदुर्ग

खन्याश्रयो नविभवी रविपुत्रदृष्टे ॥ २१ ॥

॥ इति बुधराशौ भौमस्य दृष्टिफलम् ॥

---

## ॥ अथ कुलीरे भौमस्य दृष्टिफलम् ॥

सूर्येऽक्षितेऽसृजि कुळीरगते वि(ऽति)तेजाः

पित्तान्वि(र्दि)तो भवति दण्डपतिश्च वा(धी)रः ।

नीचो विरूपतनुरिन्दुनिरीक्षिते च

शोकान्वितो भवति रोगनिपीडितांगः ॥ २२ ॥

आचारवान् स्वजनवांश्च गतः कुलीरे

(स्वैर्न्यकृतो बहुलपापकृतिर्गतह्रीः)

सौम्येऽक्षिते च मलिनोऽसृजि दुःकुटुंबः ।

---

१ नृपतिदौत्येन 'राजदूतकर्मणा निमित्तेन विदेशगमनरत इति भावः ।

२ अत्र ग्रन्थलोपो दृश्यते । तत्र कुण्डलीस्थो मन्निबद्धः श्लोकः पठनीयः ।

भा(भो)गोज्झितश्च सचिवः प्रथितो विदाता
विद्वान्धनी भवति दैवतपूज्यदृष्टे ॥ २३ ॥

स्त्रीभिः क्षितेः(कृतैः) परिभवं समुपे(पै)ति दोषै :(षै)
लिप्त(वित्त)क्षयं च भृगुदृष्टकुजे कुळीरे ।
कांतः पुमान्[७] जलगमोऽपधनोऽर्कपुत्र
संवीक्षिते सुललितः क्षितिपोपमो वा ॥ २४ ॥

॥ इति कुलीरे भौमस्य दृष्टिफलम् ॥

---

## ॥ अथ सिंहे भौमस्य दृष्टिफलम् ॥

गोष्ठाद्रिकाननरतः स्वजनेषु(नैश्च) युक्तः
चण्डः कुजे नम(त)हितो हरिभेऽर्कदृष्टे ।
चन्द्रेऽक्षिते च मतिमात्र(त्र) शुभो जनन्याः
ख्यातोऽङ्गनाप्ति(प्त)विभवः कुटिलां(कठिनां)गयष्टिः ॥ २५ ॥

सौम्येक्षितेऽसृजि कलावह(बहु)शिल्पकाव्य
दक्षो हरो(रौ) निपुणधीर्विषमश्च लुब्धः ।
सेनापतिर्भवति भूपतिसत्कृतश्च
विद्वान्सुबुद्धिरमरेऽज्यविलोकिते च ॥ २६ ॥

स्त्रीभोगभास्व(क्त)रुणमूर्तिरिनर्क्षसंस्थे
शुक्रेऽक्षिते क्षितिसुते सुभगोऽतिहृष्टः ।

---

७ जलगमः, जले गमो गमनं यस्य सः जलगमः ।

अन्यालयभ्रमणवान् विधनश्च दुःखी
वृद्धाकृतिर्भवति सूर्यसुतेऽक्षिते च ॥ २७ ॥

॥ इति सिंहराशौ भौमस्य दृष्टिफलम् ॥

---

## ॥ अथ गुरुराशौ भौमस्य दृष्टिफलम् ॥

दुर्गाम्रि(द्रि)काननरतः सुभगो नमस्य(स्यः)
क्रूरः कुजे गुरुगृहे दिननाथदृष्टे ।

चन्द्रेऽक्षिते कलिरुचिर्विकलः सुमेधा
विद्वान्नरो भवति भूमिपति(ते)र्विरुद्धः ॥ २८ ॥

विद्वान्कुजे भवति शिल्पविदां वरिष्ठो
मेधान्वितो गुरुगृहे निपुणो ज्ञदृष्टे ।

जीवेऽक्षिते च विमु(सु)खो द्विषतामदृष्टे(धृष्यो)
व्यायामवित्तसकलत्रयुतो मनुष्यः(सहितो न कलत्रयुक्तः) ॥ २९ ॥

कन्याप्रियोऽतिसुभगः सितदृष्टभौमे
दाता विभूषणरुचिर्विषयेषु सक्तः ।

मन्देक्षितो(ते) गुरुगृहे निरतोऽन्य(कुशरीर्यु)दारः
पापे रतो(पोऽटनोऽ)न्यजनकर्मकरोऽसुखश्च ॥ ३० ॥

॥ इति गुरुराशौ भौमस्य दृष्टिफलम् ॥

---

## ॥ अथ शनिराशौ भौमस्य दृष्टिफलम् ॥

[1]सूर्येऽक्षितेऽविकृतवो(तिमलिनो)[ब]घतश्चेवे (दुःखितयो)धा

परपा(त्या)न्वितः शशि(नि)गृहेऽसृति(जि) शूर उग्रः ॥

(बहुर्थयोषिदतिपुत्रयुतोऽतिकृष्णः

सूर्येऽक्षिते शनिगृहेऽसृजि शूर उग्रः)

**चन्द्रेक्षिते च निस्तृतसत्वहीनः पान्वितः**

**स्थरद्रंलेशगुणश्चिरायुर्वर्ध्वा प्रंतु गुरुणा च**

**निरीचिते स्यात् ।**

(मातू रिपुर्धनविभूषणभागुदारो

चन्द्रेऽक्षिते चलसुहृच्चपलो यमर्क्षे ॥ ३१ ॥

सौख्यार्थसत्वरहितो मधुरोऽटनश्च

सौम्येक्षिते कपटवृत्तिरधर्मवृत्तिः ।

बन्धुप्रियो नृपगुणः स्थिरकार्यकर्ता

गुर्वीक्षिते शनिगृहे सुतनुश्चिरायुः ॥ ३२ ॥)

स्त्रीपोषणानुरत आर्किगृहे समृद्ध

भोगी कुजे(धनी) कलिरुचिर्भृगुपुत्रदृष्टे ।

प्राज्ञः(ज्ञोऽ)सुखो बहुधनो नर(नप्रज) आर्किदृष्टे

॥ इति शनिगृहे भौमस्य दृष्टिफलम् ॥

---

१ अतः परं श्लोकद्वयं लुप्तप्रायम् अत्यन्तमशुद्धं च वर्तते । अतो मन्निबद्धः श्लोकः पठनीयः ।

शूरो रणे नरपतिर्वनिताविरोधी ॥ ३३ ॥

॥ इति भौमिराशिदृष्टिफलामि होराप्रदीपे ॥

॥ इति श्रीजातकसारदीपे भौमचाराध्यायश्चतुस्त्रिंशः ॥

---

## ॥ अथ बुधचाराध्यायः पञ्चत्रिंशः ॥

## ॥ अथ बुधराशिदृष्टिफलानि ॥

### ॥ अथ बुधराशिफलम् ॥

मेषस्थे ज्ञेऽट(ध)नो मिथ्याप्रलापी कूटकृच्छ(च)लः ॥
कुशली प्रियसंगीतरतिदूतोस्ननि(द्यूताग्नचि)ग्रहः ॥ १ ॥

बुधे वृषस्थिते त्यागी सुदारतनयः स्थिरः ॥
विज्ञात(न)शास्त्रवित्स्फीतधनो दक्षो गृहीतवाक् ॥ २ ॥

मिथुने ज्ञे सुखी विद्वानुद्धतः कर्मतोटनः(स्थनो धनी) ॥
तादा(वादी) बहुसुहृहात(द्दाता) जयी द्विस्त्रीयु(सु)तः कविः ॥ ३ ॥

कर्कटस्थे बुधे प्राज्ञो विदेशनिरतः कविः ॥
विवाद(दी) बन्धुविद्वेषी चपलो बहुभाषणः ॥ ४ ॥

सिंहस्थिते बुधे नारीदुर्भगा सेर्ष्य(गः प्रेष्य)कोऽनृतः ॥
वित्तज्ञानकलोत्साहु(ह)सत्वस्थि(स्मृ)तिसुखोऽज्झितः ॥ ५ ॥

कन्यास्थे बोधने, दाता मु(यु)क्तिज्ञो विभव(यः) क्षमी ॥
आलोच्य(लेख्य)श्रुतिकाव्यार्थशिल्पादि(ल्पवि)ज्ञाननिश्चितः ॥ ६ ॥

तुलाधरे बुधे वाग्मी विवादी कितवः शठः ॥
पण्यक्रियापटुः शिल्पी नष्टचेष्टो(वित्तो) वृथाटनः ॥ ७ ॥

वृश्चिकस्थे बुधेऽनर्थदुःखशोकश्रमार्दितः ॥
परदार(द्रव्य)परो मूर्ख ऋणवान्दुर्वधूपतिः ॥ ८ ॥

धनुर्धरे बुधे ख्यातः श्रुतिशास्त्रसुशिल्पवित् ॥
प्राज्ञः शूरनरो यज्ञम(व्र)ताध्य(ध्याप)नदानकृत् ॥ ९ ॥

मकरस्थे बुधे प्रेष्यो नीचोऽनर्थः शठो नरः ॥
अनेकदुःखसंतप्तोऽलसो बन्धुभिरुत्सि(ज्झि)तः ॥ १० ॥

कुम्भस्थिते बुधे सौख्यधर्मशीलनयोत्सि(ज्झि)तः ॥
[1]कर्मधीवागुपहतो हताशो रतिदुर्भगः ॥ ११ ॥

सूच्यादिकर्मकुशलो विज्ञानश्रुतिकलावियुक्तश्च ॥
परधनसंचयनिरतो मीने शशिजे नरः(जेऽधनः) प्रकीर्णश्च ॥ १२ ॥

॥ इति बुधस्य राशिफलम् ॥

---

## ॥ अथ भौमगृहे बुधस्य दृष्टिफलम् ॥

भौमर्क्षगे सुखयुतो नृपसत्कृत(तः) स्या
द्बन्धुप्रियो विधुसुते तपनेऽक्षिते च ।
चन्द्रेऽक्षिते कुजगृहे(तेऽतिमलिनो) वनिताप्रियश्च
गीतः(त)प्रियः शशिसुते स(खलगुणोप्य)तिसेवकश्च ॥ १३ ॥

---

१ कर्म च धीश्च वाक् च कर्मधीवाचः ता उपहता यस्य सः ।

भौमेऽक्षिते कुजगृहे हि कला(मतियुतः कलहैः)समेतो

भूपप्रियोऽनृतवचा धतवाः(नवान्) सुवाग्मे(क्यः) ।

आज्ञापको हि सुखभाक् धनवान्सुकेश

ईज्येक्षिते कुजगृहे(ऽतिसुभगो) विधुने(जे)ऽतिशूर (पापः) ॥ १४ ॥

शुक्रेऽक्षिते च सुभगो वनितात्मजाढ्यः

सौम्ये हि नृत्यकुशलः कुजने(भे) सुवाक्यः ।

(शुक्रेऽक्षिते गणपुरप्रमुखः सुवाक्यः

स्त्रीसंयुतश्च सुभगो नृपमुख्यभृत्यः ॥)

मन्देऽक्षिते कुलजनैर्वियुतोऽतिहिंस्रो

दुःखान्वितो विधुसुते कुजभे नरः स्यात् ॥ १५ ॥

॥ इति कुजराशौ बुधस्य दृष्टिफलम् ॥

---

## ॥ अथ शुक्रराशौ बुधस्य दृष्टिफलम् ॥

[1]दारिद्र्यवान् शशिसुते सितभेऽर्कदृष्टे

(दुःखी गदी च भृतको जनधिकृतश्च ।)

---

१ अत्र द्वितीयपादोक्तं फलं शुक्रक्षेत्रस्थो बुधो विधुदृष्टो ददाति, न तु रविदृष्टः, तथा द्वितीयपादादारभ्य प्रतिपादद्वयं चन्द्रादिदृष्टिफलपरमिति सारावल्यादि संमतं । अतोऽस्य श्लोकस्य द्वितीयः पादो लुप्त इति भाति । तत्स्थाने मन्निर्मितः कुण्डलीगतो द्वितीयः पादः पठनीयः । षोडशतमश्लोकस्य द्वितीयतृतीयपादौ चन्द्रदृष्टि-फलपरौ । तस्य चतुर्थः पादः सप्तदशतमश्लोकस्य प्रथमः पादश्च कुजदृष्टिफलपरौ । तस्यावशिष्टेषु त्रिषु पादेषु द्वितीयचतुर्थौ पादौ गुरुदृष्टिफलपरौ । तृतीयः पादश्च प्रायः सूर्यदृष्टिफलपरः । अतः षोडशश्लोकस्य द्वितीयः पादो मूलकोषलेखकप्रमादेन सप्तदशश्लोकतृतीयपादतां गतः स्यादिति विभावयामः ।

स्यात्प्रत्ययी दृढकुटुंबयुतो धनाढ्यः ।
ख्यातो नरेन्द्रसचिवो ति(वि)रुगिन्दुदृष्टे
रोगा[1](भूपा)वमानबहु(गद)वैर(रि)युतः सितर्क्षे ॥ १६ ॥

[2]बाह्यः कृतश्च विषयात्कुजवीक्षितेऽज्ञे
प्राज्ञो गृहीतवचनः पृतनाधिपः स्यात् ।
रोगार्दितो विभवयुक्[च] कुकर्मसक्तो
नाथो भवेत्त्रिदशपूजितवीक्षिते ज्ञे ॥ १७ ॥

शुक्रेऽक्षिते सितगृहे सच(सुख)वस्त्रभूषा
सौभाग्यभाक् सुललितो वनिताप्रियः स्यात् ।
रोगी त्वनर्थबहुलो मलिनः स्वबंधु
शोकार्दितो विमु(सु)ख आर्किनिरीक्षिते ज्ञे ॥ १८ ॥

॥ इति शुक्रराशौ बुधस्य दृष्टिफलम् ॥

---

## ॥ अथ बुधराशौ बुधस्य दृष्टिफलम् ॥

भूपप्रियश्च ललितो मधुरः समृद्धः
सत्यो बुधे जन(च द)यितः स्वगृहेऽर्कदृष्टे ।
चन्द्रेऽक्षिते च मधुरो मुखरः कलासु
शस्तः क्रियासु सुदृढो रिपुवत्सलश्च ॥ १९ ॥

---

१ भूपकृतेनावमानेन, गदैः रोगैः, वैरिभिश्च युत इति भावः । २ विषयादिति जात्येकवचनम् । सर्वेभ्यो देशेभ्यो बाह्यः कृतः- बहिष्कृत इति तात्पर्यम् ।

भौमेऽक्षिते नृपतिकर्मकरः क्षतांगः
स्वर्क्षे प्रियोऽतिमलिनः प्रतिभायुतो ज्ञे ।
शूरोऽप्युदारविभवः परिवारयुक्तो
मन्त्री नृपस्य सुरपूज्यनिरीक्षिते ज्ञे ॥ २० ॥

स्यात्सन्धिकृन्नरपतेर्मृत[क]श्च दूतो
नीचांगना[स्व]भिरतः सितवीक्षिते ज्ञे ।
स्वोपि(स्वक्षोंप)गे च सततं चप(सफ)लोऽध(घ)मी स्या
न्मंदेऽक्षिते विनयभूपपरिछद्रार्थः(ढ्यः) ॥ २१ ॥

॥ इति बुधगृहे बुधस्य दृष्टिफलम् ॥

---

## ॥ अथ कुलीरे बुधस्य दृष्टिफलम् ॥

स्वर्का[रकोऽथ] रजको मणिकारको वा
सूर्येऽक्षिते विधुगृहे विदि वासुचेत(स्तुवेत्ता) ।
चन्द्रेऽक्षिते युवतिनाशितसर्वसारो
नारीनिमित्तबहुदुःखसमन्वित(युतोऽसुख)श्च ॥ २२ ॥

अन्य(स्य)श्रुतोऽनृतरुचिर्मुखरश्च चोरो
वक्रेऽक्षिते विधुगृहे(प्रियवचा) विदि कूटकश्च(कृच्च) ।
विद्वान्नरो(न् प्रियो) भवति भाग्ययुतः सुमेधा
दृष्टे सुरेन्द्रगुरुणा नृपवल्लभश्च ॥ २३ ॥

सौभाग्यभाक् सुललितः स्मरतुल्यमूर्तिः
संगीतवित्प्रियवचाः सितवीक्षिते ज्ञे ।

आचारशीलरहितः शशिभे सदंभः

(आचार्यसोदररिपुर्विगुणः सदंभः)

स्याद्बन्धु(न्ध)भागयरुचिः शनिवीक्षिते च ॥ २४ ॥

॥ इति कुळीरे बुधस्य दृष्टिफलम् ॥

---

## ॥ अथ सिंहे बुधस्य दृष्टिफलम् ॥

क्षुद्रो धनी गुणयुतश्चपलोऽतिहिंस्रो

निर्हि (र्ह्री)श्च सौख्य(सेव्य) इनदृष्टबुधे(बुधेऽ)र्कराशौ ।

नारीप्रियोऽतिचतुरो धनवान्सुवेशः(षः)

संगीतकाव्यनिरतः शशिवीक्षिते च ॥ २५ ॥

दुःखी खकृत्तनुरतः(ख्यल्पकः क्षततनुः) कुजवीक्षिते ज्ञे

क्लीबो वराह(हराव)चतुरश्च नरः सुरूपः ।

प्राज्ञः प्रभूतविभवः सुकुमारमूर्तिः

ख्यातो विवादचतुरो गुरुवीक्षिते च ॥ २६ ॥

धीरः सुवाहनधन(नः) प्रियवाक् सुरूपः

शुक्रेऽक्षिते विदि हरौ(सुललितः) सचिवो नृपो वा ।

स्याच्छौण्डिकोऽ(त्स्वेदनोऽ)प्रतरगन्धविरूपचक्षु(रूक्ष)

र्दी(दी)र्घांगयष्टिरसुखाच्छ(खी श)निवीक्षिते च ॥ २७ ॥

॥ इति सिंहे बुधस्य दृष्टिफलम् ॥

---

## ॥ अथ गुरुगृहे बुधस्य दृष्टिफलम् ॥

शूरोऽश्मरीहततनू रविवीक्षिते ज्ञे
शांतः प्रमेहसहितश्च सुरेज्यराशौ ।
कल्यार्थसौख्यसहितः सुकुमारमूर्तिः
स्यात्स्त्रीप्रियश्च(त्वप्रत्ययी च) कुलसंमत इन्दुदृष्टे ॥ २८ ॥

चोरोऽधनो वनरुचिर्गुरुभे दुत(लिपि)ज्ञो
भौमेऽक्षिते विदि चमूभृतको मनुष्यः ।
जीवेऽक्षिते स्मृत(ति)मतिः प्र(तिप्र)तिभासमृद्धः
कोशाधिपो लिपिकरः सचिवोऽथ वा स्यात् ॥ २९ ॥

शौर्यान्वितः सुकरलेख्यगुरुर्धनी ज्ञे
शुक्रेऽक्षिते गुरुगृहे सुकुमारमूर्तिः ।
ध्वस्ताकपोऽ(स्तक्रियोऽ)तिमलिनो बहुभुक्कशा(कुशी)लो
दुर्गाटि(दि)केऽज्यगृह आर्किविलोकिते स्यात् ॥ ३० ॥

॥ इति गुरुगृहे बुधस्य दृष्टिफलम् ॥

---

## ॥ अथ शनिगृहे बुधस्य दृष्टिफलम् ॥

स्वाभिष्ठुरः शनिगृहे विदि भूरिप(भ)क्षो
मान(मल्लः) प्रियः प्रियवचा दिननाथदृष्टे ।
दारिद्र्यदुःखपरिकर्मरतोऽतिदीनः
पापान्वितः कुमुदिनीपतिवीक्षिते च ॥ ३१ ॥

(स्यान्मूलमघवणिगंबुधनोऽपजीवी
भीरुर्धनी विचतुरो रजनीशदृष्टे ॥)

भौमेऽक्षिते भवति वाक्चपलोऽतिसौम्यः(म्यो)
क्री(श्री)डालसः स्थिरगतिः शनिभे सुशि(खी) ज्ञे ।
सौख्यार्थधान्यसहितः खलु सार्थवाहो
जीवेऽक्षिते सु(पु)रचमूगणपूजितः स्यात् ॥ ३२ ॥

नीचाधिपः स्मरवशाद्वि(शो वि)मतिर्विरूपः
पुत्रान्वितः शनिगृहे भृगुवीक्षिते ज्ञे ।
[1]स्यान्मूलमेघ(मघ)वणिगंबुधनोऽपजीवी
भूमिर्नरोमिवठरो(भीरुर्धनी विचतुरो) रविपुत्रदृष्टे ॥ ३३ ॥

(दारिद्र्यदुःखपरिकर्मरतोऽतिदीनः
पापान्वितः कमलिनीपतिसूनुदृष्टे ॥)

इति शनिराशौ बुधस्य दृष्टिफलम्

॥ इति बुधराशिदृष्टिफलानि ॥

॥ इति श्रीजातकसारदीपे बुधचाराध्यायः पञ्चत्रिंशः

---

## ॥ अथ गुरुचाराध्यायः षट्त्रिंशः ॥

## ॥ अथ गुरुराशिदृष्टिफलानि ॥

### अथ गुरुराशिफलम्

मेषस्थिते गुरोर्बु(रौ बु)द्धिर्ध(ध)र्मसत्त्वबलान्वितः ॥
दाता दण्डोग्र(तोऽग्रदण्ड)नेनार्थप्रगल्भो द्युतिमान् भवेत् ॥ १ ॥

---

१ सारावलीरीत्यैतच्चन्द्रदृष्टिफलं तथा पूर्वोक्तं चन्द्रदृष्टिफलमेव शनिदृष्टिफलम् । तथा च श्लोकार्धयोरनयोर्विपर्यासः कार्य इति भाति । तं च विपर्यासं कृत्वा कुण्डल्यां तदधो निवेशितम् ।

वृषसंस्थे गुरौ कांतः सुवेशः(षः) सुभगः स्थितः(प्रियः) ॥
स्वदारनिरतो देवद्विजाचार्यकृतादरः ॥ २ ॥

मिथुनस्थे गुरौ प्राज्ञो धर्मदाक्षिण्यनीतिवा(मा)न् ॥
आहितार्थः क्रियासक्तः कविज्ञा(ज्ञा)नविशारदः ॥ ३ ॥

कर्कटस्थे गुरौ प्राज्ञो विद्वांस्तेजोबलान्वितः ॥
यशस्वी प्रियधर्मश्च लोकमान्यस्थिरास्पदः(न्यः स्थिरात्मजः) ॥ ४ ॥

सिंहस्थे च गुरौ धीरः स्थिरः शूरश्च सात्विकः ॥
विद्वान्बहुसुहृद्दाता नृपो वा बलनायकः ॥ ५ ॥

कन्यास्थिते गुरौ शास्त्रकाव्यशिल्पधनो व्ययी ॥
सुदर्शनः सुशीलश्च क्रियाज्ञानविशुद्धधीः ॥ ६ ॥

तुलाधरस्थिते जीवे[1] वणिक्सार्थमहत्तरः ॥
विदेशगमनात्पूज्यो द्विजो वा वेदविद्भवेत् ॥ ७ ॥

[2]वृश्चिकस्थे गुरौ क्षुद्रो हिंसको वंचकः खलः ॥
सुहृल्लब्धप्रभूतारि(तिं)र्निन्दिताचारसंयुतः ॥ ८ ॥

(भाष्यकारो नृपो देवालयकृद्धार्मिकोऽलिनि ।
बहुदारोऽल्पपुत्रः स्याद्गुरौ व्याधिश्रमान्वितः ॥)
धनुर्धरस्थिते जीवे प्रदाता बहुमित्रभाक् ॥
श्रुतियज्ञव्रताचारधर्मतीर्थक्रियारतः ॥ ९ ॥

---

१ वणिजश्च सार्था (धनिन)श्च वणिक्सार्थाः तेषु महत्तरः अतिश्रेष्ठ इत्यर्थः ।
२ वृश्चिकस्थे गुरौ सारावल्यादिग्रन्थानुसारेण शुभं दृश्यते । एतद्ग्रन्थानुसारेणाशुभं । अतो जनोपयोगाय सारावलीस्थो विषयः कुण्डलीस्थश्लोकेन संगृहीतः ।

मकरस्थे गुरौ शौचश्रुति(बन्धु)धर्मजपो(दयो)ऽज्झितः ॥
नीचाचाररतो मूर्खो दुरंतो मृदुरल्पवित्(ऽल्पधनोऽसुखी) ॥ १० ॥

[1]कुंभस्थिते गुरौ नीच(चः) प्रज्ञादिगुणवर्जितः ॥
निजदोषोऽज्झितधनो नृशंसः पिशुनोऽनृतः ॥ ११ ॥

मीनस्थिते गुरौ शास्त्रकाव्यश्रुतिधन(नः) स्थिरः ॥
दृढ(ढः) सत्वाधिकः श्लाघ्यो गुरुगौ(गौं)रवकृन्नरः(वान्नृपः) ॥ १२ ॥

॥ इति गुरुराशिफलम् ॥

---

## ॥ अथ भौमगृहे गुरोर्दृष्टिफलम् ॥

भोगी(भाग्यी) प्रसिद्धतनयोऽनृतभीरुरीज्यं
धर्मे वि(र्मी सु)रोमशतनुः कुजभेऽर्कदृष्टे ।
स्यात्काव्यहास्य(काव्येऽतिहास)कुशलो नृपतिः सुमेधा
श्चन्द्रेऽक्षिते च बहुरत्नयुतः सुदारः ॥ १३ ॥

राज्ञो नरोऽर्थनयशौर्ययुनोजराशौ(विनीतः)
वक्रेऽक्षिते न हि विधेयकलत्रभृत्यः ।
सौम्येऽक्षिते कपटकृत्व (त्व)नृतो विलोमो(नीतो)
धीमान्(भृत्यो) [2]गुरावपरंध्रकरः कृतज्ञः ॥ १४ ॥

---

१ बृहज्जातके कुम्भगुरुफलं शुभं दृश्यते "कुम्भे रत्नसुतस्वदारविभवः प्राज्ञः सुखैरन्वितः" इति । अत्र चाशुभमुक्तम् । २ अपरेषां अन्येषां रन्ध्रस्य छिद्रान्वेषणस्य करः कर्ता इत्यर्थः ।

धीमान्नरः कुजगृहे सितवीक्षिते स्या

च्छ्रीरः समस्व(स्त)विभवैः सहितश्च लो(भो)गैः ।

तीक्ष्णोऽतिहास(साह)सयुतो मलिनश्च लुब्धः

सिद्धः स्थि(द्धोऽस्थि)रात्मजसुहृच्छनिवीक्षिते च ॥ १५ ॥

॥ इति भौमराशौ गुरोर्दृष्टिफलम् ॥

---

## ॥ अथ शुक्रराशौ गुरोर्दृष्टिफलम् ॥

प्राज्ञो द्विपादचतुरंघ्रियुतः समृद्धो

मन्त्र्यायतांग इनदृष्टगुरौ सितर्क्षे ।

नार(री)प्रियो मधुरवाक् धनवांश्च भोगी

मातुर्हितो भवति चन्द्रनिरीक्षिते च ॥ १६ ॥

प्राज्ञोऽर्थशौर्यसुखभाक् पुरुषो नृपश्च(स्य)

वारा(बाला)ङ्गनाप्रियतमः कुजदृष्टि(ष्ट)जीवे ।

[1]सौभाग्यधीचतुरतोविहेभृगुदृष्टजीवे

(सौभाग्यधीचतुरताधनकान्तिशील

माधुर्यवैभवयुतो बुधवीक्षिते स्यात् ॥ १७ ॥

शुद्धोऽन्यभूषणभरो ललितो धनाढ्यः

स्याच्छ्रेष्ठवस्त्रशयनो भृगुदृष्टजीवे ॥)

---

१ अत्र बुधदृष्टिपरे श्लोकार्धे आदिभागः, शुक्रदृष्टिपरे श्लोकार्धे अन्त्यभागश्च दृश्यते । अवशिष्टो भागो मया पूरितः ।

सौरेऽक्षिते पुरजनेषु महानरूप(पोऽ)

भार्यः सुधीश्च मलिनो बहुधान्यवित्तः ॥ १८ ॥

॥ इति शुक्रगृहे गुरोर्दृष्टिफलम् ॥

---

## ॥ अथ बुधगृहे गुरोर्दृष्टिफलम् ॥

आर्यः कलत्रसुतवित्तयुतः कुटुंबी

[ग्रामा]ग्रणीर्बुधगृहेऽङ्गिरिमी(रसी)नदृष्टे ।

चन्द्रेऽक्षिते युवतिसौख्यसुतार्थयुक्तो

धन्यो भवेदनुपमो ज[न]नीहितश्च ॥ १९ ॥

भौमेऽक्षिते समरलब्धजयः क्षतांगो

जीवे धनी बुधगृहे जवसंमतमः(श्च) ।

**[1]सुखवेश्मकृत्याधीशो गुरौ बुधगृहे सितवीक्षिते समरलब्धजयः क्षतांगो जीवे धनी बुध—जनसंमतश्च ॥**

सौम्येक्(ऽक्षि)ते बहुसुतार्थकलत्रमानः

स्याज्ज्यौतिषेऽतिचतुरोऽतिविरुद्धवाक्यः ॥ २० ॥

भोक्तां(वारां)गनाप्रियतमः सुख(र)वेश्मकृत्या-

धीशो गुरौ बुधगृहे सितवीक्षिते स्यात् ।

सिद्धांत(चार्वंग)भाम(ङ्न)गरराष्ट्रचमूगणाना

मीशो भवेद्दिनकरात्मजवीक्षिते च ॥ २१ ॥

॥ इति बुधगृहे गुरोर्दृष्टिफलम् ॥

---

१ अत्र स्थूलाक्षरनिर्दिष्टो भागोऽधिको दृश्यते । स च त्याज्यः ।

## ॥ अथ कुलीरे गुरोर्दृष्टिफलम् ॥

वृन्दाग्रगो विसुतदारधनी कुळीर(रे)
सूर्येऽक्षितेऽगिरसि वित्तसु(यु)तस्त्व(स्तु) [1]पस्या(श्चा)त् ।
चंद्रेऽक्षिते नरपतिर्बहुवाहनार्थ
सत्पुत्रदारसहितो द्युतिमान्प्रसिद्धः ॥ २२ ॥

शौर्यार्थधीकनकभूषणलक्षि(वान् क्ष)तांगो
बालांगनो विधुगृहे कुजदृष्टजीवे ।
स्यान्मातृबान्धवनिमित्तधनो पि(वि)पापः
सत्प्रत्ययी कलिरुचिः सचिवो ज्ञदृष्टे ॥ २३ ॥

शुक्रेक्षितेऽबहुकलत्रविभूषणार्थ
सौभाग्यसौख्यसहितः शशिभे सुरेज्ये ।
सौम्येऽ(सौरेऽ)क्षिते नगरसौम्य(सैन्य)महत्तरोऽर्थ(र्थी)
[2]वाद्यः सु(धक्य)भोगललनो(विभवो) मुखरो नरः स्यात् ॥ २४ ॥

॥ इति कुळीरे गुरोर्दृष्टिफलम् ॥

---

## ॥ अथ सिंहे गुरोर्दृष्टिफलम् ॥

लोकप्रियो नरपतिर्धनभाक् सुशीलो
ख्यातो गुरौ हरिगते दिननाथदृष्टे ।
चन्द्रेऽक्षिते च मलिनः सुभगः समृद्ध(द्धः)
स्त्रीभोग(भाग्य)वर्जि(र्धि)तधनो विजितेंद्रियश्च ॥ २५ ॥

---

१ पश्चात् अन्त्ये वयसि, वित्तयुत इति योजना । २ वार्धके भोगवैभवयुत इत्यर्थः ।

क्रूरः कुजेऽक्षितगुरौ सुभगः सुकर्मा
स्वः(शुद्धः) सतामृतवचो हरिगेऽ(चा निपुणोऽ)तिशूरः ।
विज्ञानवान् रुचिरवाक्सचिवः प्रसिद्धः
सौम्येऽक्षिते सुरगुरौ विनयान्वितः स्यात्(गुणयुतो गृहवास्त्वभिज्ञः)
॥ २६ ॥

नारीप्रियोऽतिसुभगो नृपसत्कृतश्च
सत्वाधिको हरिगते सितदृष्टजीवे ।
सौख्योज्झितो मधुरवाग्धनवांश्च भोक्ता
तीक्ष्णो भवेदतिकटो(थो) रविपुत्रदृष्टे ॥ २७ ॥

॥ इति सिंहे गुरोर्दृष्टिफलम् ॥

---

## ॥ अथ स्वगृहे गुरोर्दृष्टिफलम् ॥

वित्तस्वबंधुरहितो नृपतेर्विरुद्ध-
स्तप्तो गुरौ निजगृहे रविवीक्षिते स्यात् ।
ऐश्वर्यगर्वितमनो(ना) धनवान्सु(मान)सौख्य
युक्तां(क्तोऽ)गनासुभग इन्दुनिरीक्षिते च ॥ २८ ॥

क्रूरः कुजेऽक्षितगुरौ च परोपतापी
युद्धायुधक्षततनुः परिवारहीनः ।
सौम्येऽक्षिते तु सचिवः सुभगः सुरूप
आनन्दसौख्यशुभचि(सुतवि)त्तयुतो नृपो वा ॥ २९ ॥

---

१ सतां विषये ऋतवचाः सत्यभाषी । अन्यविषये मिथ्याभाषीति भावः ।

चार्वङ्गनाविभवभूषणभोगयुक्तः
स्वर्क्षे परोपकरणः सितदृष्टजीवे ।
(सौभाग्यसौख्यधनधीसहितो विदोषः
शुक्रेऽक्षितेऽब्धितनयामहितश्चिरायुः ॥)
सौख्येऽष्टभोगरहितो मलिनोऽतिभीरु-
र्दीनश्चमूनगरधिकृत आर्किदृष्टेः(ष्टे) ॥ ३० ॥

॥ इति गुरुगृहे गुरोर्दृष्टिफलम् ॥

---

## ॥ अथ शनिगृहे गुरोर्दृष्टिफलम् ॥

विक्रांत आर्किभवने रविदृष्टजीवे
भोगान्वितो भ(धीभोगयुग्भ)वति भूमिपतिः समृद्धः ।
चन्द्रेऽक्षिते कुलविधिः(भवः) पितृमातृभक्त
आढ्यो(र्योऽ)र्थधर्ममतिशीलसमन्वितश्च ॥ ३१ ॥

योद्धाऽतिशौर्यसहितः प्रय(थि)तः सुवेशो(षो)
मान्यो(न्या)र्किभे द्युतियुतः कुजदृष्टजीवे ।
सौम्येऽक्षिते गु(ग)णपते(ति)स्त(स्त्व)थ सार्थवाह(हः)
श्रेष्ठो(ख्यातो) धनी स्मररतिर्बहुमित्रयुक्तः ॥ ३२ ॥

श्रीमान्सुखी च सुभगो धनवानदोषो
दीर्घायुरर्कजगृहे भृगुपुत्रदृष्टे ।
(श्रेष्ठान्नपानशयनासनगेहयुक्तो
वस्त्रांगनाभरणवान् भृगुपुत्रदृष्टे ॥)

विद्वान्नरेन्द्रपुरदेशमह(हा)न्नरः स्यात्
सौरेऽक्षिते सुरगुरौ हि समृद्धियुक्तः ॥ ३३ ॥

॥ इति शनिगृहे गुरोर्दृष्टिफलम् ॥

॥ इति जीवराशिदृष्टिफलानि ॥

इति श्रीजातकसारदीपे गुरुचाराध्यायः षट्त्रिंशः

---

## अथ शुक्रचाराध्यायः सप्तत्रिंशः

## अथ शुक्रराशिदृष्टिफलानि

### अथ शुक्रराशिफलम्

मेषस्थे भार्गवे क्षुद्रो बहुक्षोभो(दोषो) विरोधवान् ॥
अविश्वासो तवा(सस्तथा)रण्यनिवासी नष्टसौहृदः(पारदारिकः) ॥ १ ॥

वृषस्थे भार्गवे भूरिस्त्रीरत्नधनपुत्र(वस्त्र)भाक् ॥
दाता स्वबन्धुभर्ता च भूरिविच्छः(द्यः) कृषीवलः ॥ २ ॥

मिथुनस्थे सिते वाग्मी नृत्तशास्त्रकथा(ला)रतः ॥
सुरातिथि(थि)द्विजरतः कृतज्ञः ससुहृज्जनः ॥ ३ ॥

कर्कटस्थे सिते प्राज्ञो द्विभार्यो मदशोकभाक् ॥
प्रमेहव्याधिविद्वेषनरस्त्रीदोषपीडितः ॥ ४ ॥

सिंहस्थिते [शुक्रे] देवद्विजा[चा]र्यपरायणः ॥
विचित्रसौख्यव्यसनः स्वल्पसत्वात्मजो भवेत् ॥ ५ ॥

कन्याराशिस्थिते शुक्रे परपोषणजीवनः ॥
रतिगेया(प्रियोऽ)ल्पचित्तश्च लिपि(विधि)ज्ञो मधुरः पटुः ॥ ६ ॥

तुलाधारे सिते शूरो द्विजदेवार्चने रतः ॥
प्रवास(सी) श्रमलश्वा(ब्धा)र्थो गु(पु)ण्यो माल्यांबरप्रियः ॥ ७ ॥

शुक्रे वृश्चिकगे दुष्टप(द्वेषर)तिः कुलगतः(लनः) शठः ॥
परांगनारतो मुक्तधर्मो हिंस्रो विगर्हितः ॥ ८ ॥

धनुर्धरगते शुक्रे नृपामात्य(त्यो) जनप्रियः ॥
पूज्यः सतागु(तां ग)णानां च शास्त्रार्थकुशलः कविः ॥ ९ ॥

शुक्रे मृगस्थिते वृद्धाङ्गनासक्तो नरः खलः ॥
क्लीबौ(बो) विपन्नचेष्टश्च भये(वे)त्क्लेशसमर्दितः ॥ १० ॥

कुंभे मृग(भृगु)सुते पानद्यूते(त)सक्तोऽङ्गनाजितः ॥
व्यसनोऽद्वेगरोगार्तो ड(र)तो विक(फ)लकर्मसु ॥ ११ ॥

शुक्रे मा(मी)नस्थिते ज्ञानी धीमान्यः सधनः शुचिः ॥
सुदारः सुभगो दाता दाक्षिण्यादिगुणान्वितः ॥ १२ ॥

॥ इति शुक्रराशिफलम् ॥

---

## ॥ अथ कुजगृहे शुक्रस्य दृष्टिफलम् ॥

सूर्येऽक्षिते कुजगृहे भृगुजेऽवनीशः
प्रायो(ज्ञो) विनष्टविभवो(वा)र्थसुखा(खो नार्थः(र्थे) ।
आर्योऽ(नीचा)ङ्गनाप्रियतमश्चपलः स्मरार्तः
उद्वेगधीर्भ(द्धन्धनो)(भ)वति चन्द्रनिरीक्षितः च ॥ १३ ॥

दीनः कुजेऽक्षितभृगौ कुजभेऽर्थसौख्य
मानोज्झितोऽतिमलिनः परनिंद(सेव)कः स्यात् ।
मूर्खश्च बन्धुपरिवादकरोऽतितीक्ष्ण
श्चोरश्च लोलनयनः शशिपुत्रदृष्टे ॥ १४ ॥

जीवेऽक्षिते बहुसुतः सुनयः सु(योऽस्यु)दारः
शुक्रे शुभायततनुर्धरणीसुतर्क्षे ।
स्यात्सेवकोऽतिमलिनो विधनोऽलसात्मा
चोरो दिवाकरसुतेन निरीक्षिते च ॥ १५ ॥

॥ इति कुजगृहे शुक्रस्य दृष्टिफलम् ॥

---

## ॥ अथ स्वगृहे शुक्रस्य दृष्टिफलम् ॥

स्वर्क्षेऽर्कदृष्टभृगुजेऽर्थकलत्रभोगी
स्यादुत्तमश्च विजितो ललनानिमित्तं ।
चन्द्रेऽ(न्द्रेऽ)क्षिते सुतसुखार्थकलत्रयुक्तो
नारीप्रियः स्वकुलनिर्ममताकरः स्यात् ॥ १६ ॥

(कान्तोऽतिपूज्यधिषणः कुलजासुतः स्यात्)
स्वर्क्षे भृगौ स्मरवशः कुलटापतिः स्यात्
भौमेऽक्षिते क्षतधनो वनितानिमित्तं ।
सौभाग्यकांतिधृतिधीसुखसत्वयुक्तः
सौम्येऽक्षिते मधुरवान्(क्) प्रथितो मनुष्यः ॥ १७ ॥

पुत्रांगनासध(द)न[वाहन]भाग्नि(ह्नि)जर्क्षे
प्रेमाधिको भृगुसुते सुरपूज्यदृष्टे ।
स्याद्धन्धक(की)प्रियतमोऽल्य(ल्प)सुखार्थ आर्कि
दृष्टे च रोगसहितो मनुजः कुशीलः ॥ १८ ॥

॥ इति स्वगृहे शुक्रस्य दृष्टिफलम् ॥

---

## ॥ अथ बुधगृहे शुक्रस्य दृष्टिफलम् ॥

शुक्रे ज्ञभे नृपतिमातृकलत्रकृत्य
युक्तः सुधीः सुखधनैः सहितोऽर्कदृष्टे ।
चन्द्रेऽक्षिते च शयनासनयानकांति
सौभाग्यभाग्रुचिरकुन्तलकृष्णनेत्रः ॥ १९ ॥

वक्रेऽक्षिते स्मरपरः सुभगो ज्ञराशौ
शुक्रे विनष्टविभवो वनिताकृते स्यात् ।
स्वाचारभोग(माधुर्यबुद्धि)धनवाहनभाग्यशेषः(भाणेशः)
सौम्येऽक्षिते हि(ऽति)सुभगो यदि वेऽश्वरश्च ॥ २० ॥

आचार्य इन्दुजगृहे सुरमंत्रिदृष्टो(ष्टे)
प्राज्ञः सुखार्थसहितो भृगुजे नरः स्यात् ।
मूर्खोऽतिदुःखितमनाश्चपलो विरोधी
दृष्टे दिवाकरसुतेन खलाभिभूतः ॥ २१ ॥

॥ इति बुधगृहे शुक्रस्य दृष्टिफलम् ॥

---

## ॥ अथ कुलीरे शुक्रस्य दृष्टिफलम् ॥

स्वर्क्षे(शुद्धां)गरोष[ध]नकर्मयुतो(तां) महीपः(प)
[पुत्रीं]रवीक्षि[तसि] ते लभते कुलीरे ।
कन्यादिपुत्रसहितः सधनः सुखी च
चन्द्रेऽक्षिते च कुरुते जननीं(नी)सपर्त्नी ॥ २२ ॥

स्त्रीहेतुदुःखसहितः सुभगः कलावान्
आढ्यः स्वबन्धुहितकृत्कुजदृष्टशुक्रे ।
प्राज्ञोऽध(ट)नो भवति वे(बं)धुनिमित्तदुःखो
विद्वान्क(द्वत्क)लत्रसहितः शशिभे ज्ञदृष्टे[1] ॥ २३ ॥

नृपप्रियः शशिगृहे गुरुदृष्टशुक्रे
मित्रार्थभृत्यसुख(त)वाहनभोगयुक्तः ।
स्त्रीनिर्जितोऽतिचपलो विमु(सु)खो दरिद्रो
मन्देऽक्षिते च पतितो मनुजः कुरूपः ॥ २४ ॥

॥ इति कुलीरे शुक्रस्य दृष्टिफलम् ॥

---

## ॥ अथ सिंहे शुक्रस्य दृष्टिफलम् ॥

सेर्ष्या(र्ष्यो) हराः(रौ) समुख(रव)शो ललनाप्रचि(सवि)त्तः
कन्याप्रियः कनक(रम)भाग्भृगुजेऽर्कदृष्टे ।

---

१ विद्यायुक्तं यत्कलत्रं तेन सहित इति भावः ।

स्त्रीहेत(तु)दुःखितमना मतिमान् धनी च
चन्द्रेऽक्षिते च कुरुते जननीं सपत्नीं ॥ २५ ॥

स्त्रीवल्लभो नृपपरः सुभगः समृद्धः
सिंहे कुजेऽक्षितभृगौ परदारकांक्षी ।

शूरश्च संग्रहरतः शठमातृकार्थ(कोऽनृतोऽर्थी)
स्त्रीपा(लो)लकोऽन्यरमणीनिरतो ज्ञदृष्टे ॥ २६ ॥

भृत्यार्थवाहनयुतो बहुदारभोगी
जीवेऽक्षिते हर(रि)गते भृगुजे च मन्त्री ।

मन्देऽक्षिते नृपसमो धनवाहनाढ्यो
रण्डापतिर्भवति दुःखयुतः सुरूपः ॥ २७ ॥

॥ इति सिंहे शुक्रस्य दृष्टिफलम् ॥

---

## ॥ अथ गुरुराशौ शुक्रस्य दृष्टिफलम् ॥

कोपार्थशौर्यमतिसत्त्वयुतोऽर्कदृष्टे
शुक्रे विदेशनिरतो गुरुभे प्रियः स्यात् ।

ख्यातो नरेन्द्रपुरुषो बहुभोगयुक्तः
चन्द्रेऽक्षिते विभवसौख्य(ऽनुपमसार)समन्वितश्च ॥ २८ ॥

सौख्यार्थगोधनयुतो वनिताजनस्य
द्वेष्यो भृगौ गुरुगृहे क्षितिजेऽक्षिते स्यात् ।

सौम्येऽक्षिते बहु(वि)भूषणवाहनार्थ
मृद्वङ्गपा(नि)सुखभोगसमन्वितः स्यात् ॥ २९ ॥

गोवाजिहस्तिबहुपुत्रकलत्रसौख्य
वित्तान्वि(त)ो गुरुगृहे(धीवित्तभाक् सुविभवो) गुरुदृष्टशुक्रे ।

मानी नरो भवति भोगसुखार्थयुक्तः
सौभाग्यभाक्तु रविपुत्रनिरीक्षिते च ॥ ३० ॥

॥ इति गुरुगृहे शुक्रस्य दृष्टिफलम् ॥

---

## ॥ अथ शनिगृहे शुक्रस्य दृष्टिफलम् ॥

नारीप्रियोऽर्थसुखभाक् स्तिमितोऽर्कदृष्टे
सौरालयं भृगुसुते पुरुषोऽतितीक्ष्णः(शूरः) ।
तेजोऽतिरूपसहितः सुभगो वपुष्मान्
कांतो धनी भवति चन्द्रनिरीक्षिते च ॥ ३१ ॥

छा(जा)याविनाशकृदनर्थकरः समृद्धो(श्रमार्तो)
रोगार्दितोऽतसुखभाक्कुजदृष्टशुक्रे ।
प्राज्ञोऽर्थसौख्य(सत्य)सुखभोगसमन्वितो वा(ऽति)
विद्वान्त्रि(न्नि)धानरुचिराति(किं)गृहे ज्ञदृष्टे ॥ ३२ ॥

सङ्गीतवस्त्रसुकलत्रसुगन्धमाल्य-
भोगी सिते(वाद्यप्रियः) शनिगृहे सुरमन्त्रिदृष्टे ।
सौरेऽक्षितेऽन्यव(र्थन)रवाहनभोगयुक्तः
श्यामो नरोऽतिमलिनो रुचिरांगयष्टिः(रोग्यदेहः) ॥ ३३ ॥

॥ इति शनिगृहे शुक्रस्य दृष्टिफलम् ॥

॥ इति शुक्रराशिदृष्टिफलानि ॥

इति श्रीजातकसारदीपे शुक्रचाराध्यायः सप्तत्रिंशः

---

# अथ शनिचाराध्यायोऽष्टत्रिंशः

## ॥ अथ शनिराशिदृष्टिफलानि ॥

### अथ शनिराशिफलम्

शनौ मेषस्थितेऽनार्यो बन्धुघ्नो निर्धनोऽटनः ॥
आधिव्यसनसंतप्तः कुवेशस्थः(षः स्यात् )प्रपं(वं)चकः ॥ १ ॥

स्वल्पवित्तो वृषे मन्दे दुष्टकर्मरतोऽनृत:(तः) ।
वृद्धाङ्गनारतोऽन्यस्त्रीप्रेष्यो नैकृतिकास्पदः ॥ २ ॥

भूरिभार्यः सु(कु)मित्र(त्रः) स्त्रीऽग्यपनीतवचा(सनोऽयुक्तवाक्) भवेत् ॥
समशीलकृतिः स्त्रीभिर्बुद्धिहीनो बहुश्रमः ॥ ३ ॥

शनौ मिथुनगे जातो(निःस्वो) निह्री:(र्ह्री)सुतस(सु)खः शठः ॥
दांभिकश्च(श्छ)लकूटज्ञः कुशीली च श्रमातुरः ॥ ४ ॥

कर्कटस्थे शनौ बाल्ये रोगी दारिद्र्यवान्मृदुः ॥
विकरालरदः स्त्रीयबन्धुवृध्या(दो बन्धुविरुद्धो ध्या)हतः(तोऽ)सुतः
॥ ५ ॥

मातृहीन(नोऽ)क्रिया(यो) दाता विशिष्ट(ष्टः) परिवाद(स्वाध)कः ॥
वर्धितोऽन्यान्नभोगै(गैः)[1] प्राक्सर्जैनेरनु(ङ्मध्यमे बहु)वित्तभाक् ॥ ६ ॥

---

१ प्राक् पूर्वे वयसि अन्यान्नभोगैः वर्धितः । मध्यमे वयसि बहुवित्तभाक् इति योजना ।

शनौ सिंहस्थिते भारश्रमो(मी) भृतकजीवनः ॥
अनाहिताधनस्त्यक्तस्वपक्षे मलिनात्मजः ॥ ७ ॥

(विगर्हितोऽधनस्त्यक्तः स्वपक्ष्यैर्विमुखात्मजः ।)

कन्यास्थिते शनौ कन्यादुःखका(दूषकोऽ)ल्पसुतोऽलसः(धनः) ।
ख(ष)ण्डाकारोऽस्वत(ल्पम)न्त्रश्च परान्नगणिकारतः ॥ ८ ॥

तुलाधरस्थिते मन्दे सभाश्रेष्ठ उदारवाक् ॥
देशाटनासमानार्थो वित्त(ट)स्त्रीकुलय(टा)रतः ॥ ९ ॥

सौरे वृश्चिकगे आधिव्याधिक्षयरुगा(ग)र्दितः ॥
विधर्मो विषमः शस्त्रविषज्ञो(घ्नो) ह्रीन्दरो(घृणो)ऽज्झितः ॥ १० ॥

कोणे कोदंडके स्वीयम(ध)र्मकृत्प्रत्ययी मृदुः ॥
सुदारपुत्रवित्तोऽल्पवाक्यो मानगुणान्वितः ॥ ११ ॥

मकरस्थे शनौ भोक्ता स्ववंशजनपूजितः ॥
प्रभुः पराङ्गनाक्षेत्रगृहस्था(हादी)नां च शिल्पवित् ॥ १२ ॥

घटस्थे सूर्यजेऽन्यस्त्रीधनव्यसनयानभाक् ॥
अनृतो वंचको धूर्तः कुमित्रश्च क्रियाप(व)हः ॥ १३ ॥

शनौ मीनगते बंधुसंबन्धिसुहृदर्चितः ॥
विद्याशिल्पपटुः शान्तो विनयादिगुणान्वितः ॥ १४ ॥

व्यवहारपटुः सत्यो रत्नादिकपरीक्षकः ॥
नीतिबर्हि(र्धि)तवित्तश्च कामि(धार्मि)कोऽविपद्दो भवेत् ॥ १५ ॥

॥ इति शनिराशिफलम् ॥

## ॥ अथ प्रसंगाद्राशिफलस्य नवांशफलेऽतिदेशः ॥

**तथा च यवनः—**

यथैव राशिक्रमसन्निवेशे
निदर्शिता क्लृप्तिरियं फलानां ।
तथैव राश्यंशकसंस्थितेषु
स्वभावजो भोगविधिर्विचार्यः ॥ १६ ॥

केन्द्रस्ववर्गांश(क)लवोपगास्तु
ग्रहा यथोद्दिष्टफलप्रदा(दाः) स्युः ।
अन्योन्यराभाष्य(श्यंश)कमागले(मे)न
सि(स्थि)ता विपर्यस्तफलाकुला(लाः) स्युः ॥ १७ ॥

॥ इति प्रसंगाद्राशिफलस्य नवांशफलेऽतिदेशः ॥

---

## ॥ अथ कुजराशौ शनेर्दृष्टिफलम् ॥

कर्मायतः कृषिकरो महिषाजगोभि(ऽवि)
र्यु(यु)क्तो धनी कुजगृहे रविजेऽर्कदृष्टे ।
नीचश्चलः सुखधनोऽज्झित इन्दुदृष्टः(ष्टे)
सक्तो विरूपवनितास्वधमासु च स्यात् ॥ १८ ॥

मांसांगत(ना)सवरुचिर्वधकः खलश्च
चोराधिपः कुजगृहे कुजदृष्टमन्दे ।

चोरो बहुप्रलपनः सु[ख]वित्त(त्त)हीनः
सौम्येऽक्षिते घचर आभृति विषमः परवंचकश्च ।
(बह्वाशकोऽनृतपरोऽसुखभागधर्मी
चोरो विहीनविभवः कुजभे ज्ञदृष्टे ॥ १९ ॥)
(सौभाग्यसौख्यधनभाक् सचिवोत्तमः स्यात्
भौमालये रविसुते सुरपूज्यदृष्टे ॥)
(भोगोज्झितोऽतिचपलोऽतिविरूपदेहः )
शुक्रेऽक्षितेऽन्यवनितागणिकासु सक्तः ॥ २० ॥

॥ इति कुजगृहे शनेर्दृष्टिफलम् ॥

---

## ॥ अथ शुक्रगृहे शनेर्दृष्टिफलम् ॥

स्यात्स्पष्टवागा(ग्)तदतः(धनः) परगेहभोक्ता
विद्वान्शनौ सितगृहे दिननाथदृष्टे ।
भूपार्थि(र्चि)तो युवतिलब्धधनश्च कान्तः(त)
च(श्च)न्द्रेक्षितेऽत्र(त्र)कुसुमांबरभृत्ययुक्तः ॥ २१ ॥
भीरू रणे रणकथारत आरदृष्टे
मन्दे जनार्थसहितः सितभे प्रलापी ।
स्त्रीसेवकः प्रहसनाभिरतश्च नीचो
जिह्मो(क्लीबो) नरो भवति चन्द्रसुतेन दृष्टे ॥ २२ ॥

---

१ इदं श्लोकार्धमशुद्धम् । ततः परं पादत्रयं लुप्तम् । तत्स्थाने कुण्डलीगतः श्लोकः पठनीयः ।

दान्तो य(तोऽय)मी परविपत्परिखिन्नचित्तो
लोकप्रियो भृगुगृहे गुरुदृष्टमन्दे(परकार्यकर्ता) ।
प्नुयां (मग्रां)गनासु निरतो बहुरत्नभोगी
सत्या(त्वा)धिको नृपहितो भृगुपुत्रदृष्टे ॥ २३ ॥

॥ इति शुक्रगृहे शनेर्दृष्टिफलम् ॥

## ॥ अथ बुधगृहे शनेर्दृष्टिफलम् ॥

धीरः सुखार्थरहितो बुधभे क्षमावान्
स्यात्क्लेशवित्त(वांश्च) रविदृष्टशनौ च धर्मी ।
स्निग्धोऽगनाप्तविभवोऽवनिपोपनश्च
स्त्रीकृत्यवि(कृ)द्भवति चन्द्रनिरीक्षिते च ॥ २४ ॥
रप्यातो(ख्यातो) विकृष्टमतिरारविलोकिते स्या
ज्झर्षे(ज्ज्ञर्क्षे) शनौ भवति चे(वि)ष्टिकरश्च मल्ल ।
शिल्पी नियुद्धकुशलो निपुणश्च गेय(ये)
नृत्ये रतो धनयुतो बुधवीक्षिते च ॥ २५ ॥
इष्टः सतां बहुगुणैर्गु(णो गु)णगुह्यवेत्ता वित्तो)
[1]स्यात्प्रत्ययी नृपकुले गुरुदृष्टमन्दे ।
स्त्रीमन्त्रशास्त्र(ण्डनेषु) कुशलो दय(यि)तोऽगनानां
स्याद्योगविद्बुधगृहे भृगुवीक्षिते च ॥ २६ ॥

॥ इति बुधगृहे शनेर्दृष्टिफलम् ॥

---

१ नृपकुले प्रत्ययी इत्यन्वयः ।

## ॥ अथ कुलीरे शनेर्दृष्टिफलम् ॥

स्वाच्छे(च्छो)शवे विजनः(न)[कः] शशिमेऽर्कदृष्टे

मन्देर्य(र्थ)दा[र]सुखहीननरोऽतिदुष्टः(रः कर्दमः) ।

मातुर्हितो(र्नरो) न हितकृत्सहजार्दितश्च

जातः प्रभूतधनसंयुत इन्दुदृष्टे ॥ २७ ॥

व्यंगो नृपार्पितधनो बहुभृत्यदारः(रत्नहेमा)

स्वाधीन(स्वामीच)बन्धुललनः कुजदृष्टमन्दे ।

धर्मध्वजः पुरुष इन्दुगृहे प्रचारः

(धर्मध्वजः परुषवाङ्मतिरस्तशत्रुः)

सौम्येऽक्षिते भवति [1]नोत्तमचेष्टितश्च ॥ २८ ॥

क्षेत्रालयाध्य(र्थ)वनितात्मजरत्नयुक्तः

पूर्वे वयस्य(सन्मित्रभाग)मरपूजितवीक्षिते च ।

शुक्रेऽक्षिते भवति रूपविलाससौख्य

हीनः शशांकभवने(नो विशालकुलजो) दिननाथपुत्रे ॥ २९ ॥

॥ इति कुलीरे शनेर्दृष्टिफलम् ॥

---

## ॥ अथ सिंहे शनेर्दृष्टिफलम् ॥

मूर्खः सुखार्थरहितः कुतनुश्च(नुः स)पापो(नो)

भृत्योऽनृतो रविगृहे रविजेऽर्कदृष्टे ।

---

१ ना उत्तमचेष्टितः इति छेदः । नां पुरुषः

भूपप्रियः सुयुवतिर्धनरत्नभोगी
चन्द्रेऽक्षिते विपुलकीर्तियुतो मनुष्यः ॥ ३० ॥

दुर्गाद्रिगो विसुख(त)दारधनश्च चोरः
क्रुद्धोऽ(क्षुद्रोऽ)टनो हरिगते कुजदृष्टमंदे ।
स्त्रीकर्मकृद्धृतधनो मलिनोऽतिदीनः
सौम्येऽक्षिते भवति नैकृतिकोऽलसश्च ॥ ३१ ॥

स्यात्मत्ययी विभवशीलयुतोऽर्क(तः स)पुत्रे(त्रो)
जीवेऽक्षिते पुरचमूपतिरर्कराशौ ।
शान्तोऽर्थसौख्यसहितः स्वजनैर्वि(रमणीवि)रोधी
शुक्रेऽक्षितो(तेऽ)[1]तिबठरो मनुजः सुकांतिः ॥ ३२ ॥

॥ इति सिंहे शनेर्दृष्टिफलम् ॥

---

## ॥ अथ गुरुगृहे शनेर्दृष्टिफलम् ॥

मन्दे हितो गुरुगृहे च परात्मजानां
तेभ्योऽर्थमानसहितः प्रहि(थि)तोऽर्कदृष्टे ।
भार्यासुतार्थसहितो जननीविहीन
श्चन्द्रेऽक्षिते भवति शीलयुतो विमानः(द्विनामा) ॥ ३३ ॥

द्वेष्यो जनस्य पवनामयभाक् सु(कु)शीलः
क्षुद्रोऽटनो गुरुगृहे कुजदृष्टमन्दे ।

---

१ अतिबठरः अतिकठिनस्वभाव इत्यर्थः ।

सौभाग्यमानघनभाक्(क्)नृपसंम(मि)तश्च
साभा(स्वाचा)रवान्नरपतिर्यदि वा ज्ञदृष्टे ॥ ३४ ॥

भूपोऽथ वा नृप[समः] सचिवश्चभूपो
दुःखोऽज्झितो गुरुगृहे सुरमन्त्रिदृष्टे ।
सौरे द्विमातृपितृको विपिनानुचारी
शुक्रेऽक्षिते भवति कर्मरतः सु(तोऽति)शीलः ॥ ३५ ॥

॥ इति गुरुगृहे शनेर्दृष्टिफलम् ॥

---

## ॥ अथ स्वगृहे शनेर्दृष्टिफलम् ॥

भारान्य(ध्व)दुःखसहनः कुसुतः(तनुः) कुदारः
स्वर्क्षे(रोगी) पराध(न्न)निरतोऽर्कसुतेऽर्कदृष्टे ।
चन्द्रेऽक्षितेऽनृतनरश्चपलश्च पापो
दुःखी च मान(तु)रहितो मनुजो रतः(सधनोऽटनः) स्यात् ॥ ३६ ॥

तीक्ष्णोऽतिसाहसयुतः प्रथितः प्रभुश्च
शूरोऽतिविक्रमयुतः कुजदृष्टमन्दे ।
स्यात्साहसी स्वगृहगे वि(ध)टमल्लचि(नोऽल्पवि)त्तो
धर्मे रतो भवति भारव(स)हो ज्ञदृष्टे ॥ ३७ ॥

रोगोज्झितो नृपसमो(वरो) गुणवांश्चिरायुः
स्वर्क्षोपगे रविसुते सुरपूज्यदृष्टे ।

उत्पन्नभक्षणरुचिः परदारगामी

निःस्वः(सार्थः) सुखी च सुभगो भृगुपुत्रदृष्टे ॥ ३८ ॥

॥ इति स्वगृहे शनेर्दृष्टिफलम् ॥

---

## ॥ इति शनिराशिदृष्टिफलानि ॥

॥ इति श्रीजातकसारदीपे शनिचाराध्यायोऽष्टत्रिंशः ॥

## ॥ अथ तन्वादिद्वादशभावचिन्ता ॥

## ॥ प्रथमं तनुचिन्ताध्याय एकोनचत्वारिंशः ॥

तनुधनसहजसुहृत्सुतरिपुजायामृत्य(त्यु)धर्मकर्मायाः ॥

व्यय इति लग्नाद्भावाश्चतुरस्राख्येऽष्टमचतुर्थे ॥ १ ॥

### ॥ तनुर्चिंतायां शरीराकारवर्णाद्युच्यते ॥

समान्यभावफलम्

[1]यो यो भावः स्वामिदृष्टो युतो वा

सौम्ये वा(म्यैर्वा) स्यात्तस्य तस्याभिवृद्धिः ।

पापैरेवं तस्य भावस्य हानि

निर्देष्टव्या पृच्छतां जन्मतो वा ॥ २ ॥

---

१ लग्नादिद्वादशभावाः स्वाधिपैः सौम्यैर्वा ग्रहैर्दृष्टाः भावोक्तशुभफलवृद्धिकराः दुष्टफलनाशकराश्च भवन्ति । एवं पापैर्ग्रहैर्दृष्टा वा युक्ता वा भावाः स्वोक्ताशुभवृद्धिकराः शुभफलनाशकराश्च भवन्ति । प्रश्नकाले जन्मकाले वा द्वादशभावानां फलमेवं समं ज्ञेयमिति तात्पर्यम् ।

लग्नगतचन्द्रफलम्

[1]कर्कीजगे(गो)तनुविधौ धनवान् सुरूपो
[ल]न्यग्न(ग्नेऽन्य)गेऽतिविकलोऽतिजडश्च कृष्ण(ष्णः) ।

लग्नगतसूर्यविशेषफलम्

सूर्ये दरिद्र इह तौलितनौ निशा(शां)धः
सिंहे क्रिये सतिमिरः शशिभेऽक्षिण रुग्युक् ॥ ३ ॥

जातकस्य शरीरलक्षणम्

[2]लग्नांशपस्य च बलाढ्यखगस्य मूर्ति(र्तिं)

जातकस्य सात्त्विकादिप्रकृतिज्ञानम्

[3]त्रिंशांशपादिह रवेः प्रकृतिं च विद्यात् ।

ग्रहाणां सात्त्विकादिप्रकृतिज्ञानम्

सत्त्वं शशीऽज्यरवयोऽथ रजः सितज्ञौ
भौमार्कजौ तम इमे ददतीह जन्तोः ॥ ४ ॥

---

१ कर्काटकमेषवृषभान्यतमलग्नगते चन्द्रे इत्यर्थः । २ तत्काललग्नस्य यो नवांशः, तस्य यो ग्रहोऽधिपतिस्तस्य सदृशीं मूर्तिं स्थूलां कृशां वा वक्ष्यमाणां जातकस्य वदेत् । अथ वा तत्काले सर्वेभ्यो ग्रहेभ्य अधिकबलवान् यो ग्रहस्तस्य सदृशीं मूर्तिं वदेत् । ३ अथ सात्त्विकादिप्रकृतिविभागमाह । त्रिंशांशेति । रवेस्त्रिंशांशाधिपात् सात्त्विकादिप्रकृतिं विद्यादित्यर्थः । तस्य सात्त्विकत्वे सात्त्विकप्रकृती राजसत्वे राजसप्रकृतिस्तामसत्वे तामसप्रकृतिः स्यादिति भावः । तस्याः सात्त्विकादिप्रकृतेर्लक्षणं "यः सात्त्विकस्तस्य दया स्थिरत्वं" इत्यादिना वक्ष्यते । ग्रहाणां सत्विकादिविभाग उत्तरार्धेनोच्यते ।

### सूर्यस्वरूपम्

अल्पाकुंचितमूर्धजः पटुमतिर्मुख्यः सु(स्थस्व)रूपश्चलो(स्वनो)
नात्युच्चो मधुपिंगचारुनयनः शूरः प्रचण्ड(ण्डः) स्थिरः ।
रक्तश्यामतनुर्निगूढचरणः पित्तास्थिसारो महा[न्]
नां(गं)भीरश्चतुरस्रकः पृथुलकः(कर) कौसुंभवासा रविः ॥ ५ ॥

### चन्द्रस्वरूपम्

सौम्यः कान्तविलोचनो मधुरवाग्गौरः कृशांगो युवा
प्रांशुः सूक्ष्मनिकुंचितासितकचः प्राज्ञो मृदुः सात्विकः ।
चारुर्वातकफात्मकः प्रियसखा(खो) रक्तैकसारो घृणी
वृत्त(द्ध)स्त्रीषु रतश्चलोऽतिसुभगः शुक्लांबरश्चन्द्रमाः ॥ ६ ॥

### भौमस्वरूपम्

ह्रस्वः पिङ्गललोचनो दृढवपुर्दीप्तीति(साग्नि)कांत(ति)श्चलो
मज्जावानरुणांबरः पटुतरः शूरश्च विस्पष्ट(निष्पन्न)वाक् ।
हिंसा(स्रः) कुंचितदीर्घकेश(केशदीप्त)तरुणः पित्तात्मकस्तामस
श्चण्डः साहसिकोऽरि(वि)घातकुशलः संरक्तगौरः कुजः ॥ ७ ॥

### बुधस्वरूपम्

रक्तांतायतलोचनो मधुरवाक् दूर्वालता(दल)श्यामल
स्त्वक्सारोऽतिरजोधिक(कः) स्फुटव[illegible]ः(चाः) पान(स्फीत)स्त्रिदोषा[illegible]कः ।
हृष्टो मध्यमरूपवाक्(न्) सुनिपुणो वृत्तः [illegible]राभिस्ततः
सर्वस्यानुकरोति वेषवचने वा(नैः पा)लाशवासा बुधः ॥ ८ ॥

### गुरुस्वरूपम्

ईषत्पिंगललोचनः श्रुतिधरः सिंहध्वनिः सु(शब्दनादः) स्थिरः
सत्वाढ्यः शुचि(सुवि)शुद्धकांचनतनुः पीनोऽन्नतोऽरस्थलः ।
ह्रस्वो धर्मरतिर्वि(तो वि)नीति(त)निपुणो बद्धोऽर्ध्वजूटः(त्कटाक्षः) क्षमी
वा पी(स्यात्पी)तांबरभृत्कफाधिकतनुर्मेदःप्रधानो गुरुः ॥ ९ ॥

### शुक्रस्वरूपम्

चारुर्दीर्घभुजः पृथूरुवदनः शुक्राधि(क्कालि)कः कांतिवाक्(मान् )
कृष्णाकुंचितसूक्ष्मलंब(बि)चिकुरो दूर्वादलश्यामलः ।
कामी वातकफाधिकोऽतिसुभगश्चित्रांबरो राजसो
लीलावि(वा)न्मतिमान् विलासतनयः(शालनयनः) स्थूलांसदेशस्थि
(शः सि)तः ॥ १० ॥

### शनिस्वरूपम्

पिंगो निम्नविलोचनः कृशतनुर्दीर्घः शिरालोऽलसः
कृष्णांगः पवनात्मकोऽतिपिशुनः स्नाय्वाननो(स्नाय्वाततो)निर्घृणः ।
मूर्ख(र्खः) स्थूलनखदि(द्वि)जोऽतिमलिनो रूक्षोऽशुचिस्तामसो
रौद्रः क्रोधपरो जरापरपतिः(तः) कृष्णांबरो भास्करिः ॥ ११ ॥

### कालपुरुषावयवाः

शीर्षमुखबाहुहृदयोऽदराणि(रं च)कटिगुह्यवस्ति(बस्तिगुह्य)संज्ञानि ।
ऊरु(रू) जानु(नू) जंघे चरणाविति राशयोऽजाद्याः ॥ १२ ॥

ज्ञातकस्यांगलक्षणम्

[1]कालनरस्यावयवात्पु(न्पु)रुषाणां चिंतयेत्प्रसवकाले ॥
सद्(द)सद्ग्र(द्ग्र)हसंयोगात्पुष्टाः(ष्टान्) सोपद्रवा(वां)श्चापि ॥ १२ ॥

## अथ व्रणचिह्नज्ञानं

**बृहज्जातके—**

[2]कं दृक् श्रोत्रनसाकपोलहनवो वक्त्रं च होरादय
स्तो(स्ते) कण्ठांस[क]बाहुपार्श्वहृदयक्रो(क्रो)डाभि(नि) नाभिस्ततः।

---

१ पूर्वश्लोके मेषादिषु द्वादशसु राशिषु शीर्षाद्यवयवविभागः कृतः। त एवावयवा द्वादशराश्यात्मकस्य कालपुरुषस्य भवन्ति। जन्मकाले प्रश्नकाले च यस्मिन् राशौ शुभग्रहयोगस्तद्राशिसंबंधिनः कालनरावयवस्य पुष्टिः, यस्मिंश्च पापग्रहयोगस्तस्य सोपद्रवता च स्यादिति भावः। २ शरीरे भागत्रयम्। मूर्धादिवक्त्रान्तः प्रथमो भागः। कण्ठादिनाभ्यन्तो द्वितीयो भागः। बस्त्यादिपादान्तस्तृतीयो भागः। प्रतिभागं सप्तावयवा विभक्ताः। तेष्ववयवेषु जन्मलग्नद्रेष्काणवशाच्चिह्नव्रणादिज्ञानार्थमाह (कं दृगिति) होरादयः होरा लग्नं सैवादिर्येषां ते। लग्नात्सप्तमभावान्ता राशय इति यावत्। उभयत्र क्रमेण व्युत्क्रमेण च। कं, दृक्, श्रोत्रं, नासा, कपोलः, हनुः, वक्त्रं च भवति इति योजना। लग्ने गतगम्यभागौ शिरः, द्वितीयद्वादशौ नेत्रं, तृतीयैकादशौ श्रोत्रं, चतुर्थदशमौ नासा, पंचमनवमौ कपोलः, षष्ठाष्टमौ हनुः, सप्तमे गतगम्यभागौ वक्त्रम् स्यादिति भावः। एवं कण्ठेत्यादौ व्याख्येयम्। एवं लग्नादिषु भावेषु सप्तमभावान्तेषु क्रमेण व्युत्क्रमेण च विभक्तानां मूर्धादीनां, कण्ठादीनां, बस्त्यादीनां च दक्षिणवामपार्श्वविभागमाह (वाममिति) सप्तमे राशावागामिभागाः अष्टमनवमदशमैकादश-द्वादशभावाः लग्ने गतभागाश्च उदिताः। लग्ने एष्यभागाः सप्तमे गतभागाः द्वितीयतृतीय-चतुर्थपञ्चमषष्ठभावाश्चानुदिताः। एवं लग्नद्रेकाणे भोग्यभागाः, सप्तमभावद्रेकाणे भुक्तभागा श्चानुदिताः। तथा लग्नद्रेष्काणादारभ्य सप्तमभावद्रेकाणं यावन्मध्यगतानि सप्तदशद्रेकाणानि चानुदितानि। सप्तमभावद्रेकाणे भोग्यभागाः, लग्नद्रेकाणे गतभागाश्चोऽदिताः। सप्तम-भावद्रेकाणादारभ्य लग्नद्रेकाणं यावन्मध्यगतानि सप्तदशद्रेकाणानि चोऽदितानि।

बस्तिः शिश्नगुदे ततश्च वृषणावूरुद्वयं जानुनी
जंघेऽङ्घ्रीत्युभयत्र वाममुदितैर्द्रेक्काणभागैस्त्रिधा ॥ १४ ॥

---

एतैरुदितैर्द्रेक्काणभागैः त्रिधा पूर्वोक्तं मूर्धादि, कण्ठादि, बस्त्यादि च स्थानं वामं सव्यभागगतं; ज्ञेयम्। तदपि वामं लग्नाद्विलोमक्रमेण, ज्ञेयम्। अर्थात् अनुदितैर्द्रेक्काणभागैर्दक्षिणभागगतं मूर्धादि, कण्ठादि, बस्त्यादि च स्थानं लग्नात्क्रमेण ज्ञेयम्। तथा त्रिभिर्द्रेक्काणैः क्रमेण मूर्धादि, कण्ठादि, बस्त्यादि च ज्ञेयम्। लग्ने प्रथमद्रेक्काणे मूर्धादिसप्तकं, द्वितीयद्रेक्काणे कण्ठादिसप्तकं, तृतीयद्रेक्काणे बस्त्यादिसप्तकं ज्ञेयमिति तात्पर्यम्। एतदुक्तं भवति—लग्ने प्रथमद्रेक्काणे; लग्नगतभागः शिरसो वामभागः, लग्नगन्तव्यभागः शिरसो दक्षिणभागः, द्वादशभावो वामनेत्रम्, द्वितीयभावो दक्षिणनेत्रम्, एकादशभावो वामश्रोत्रं, तृतीयभावो दक्षिणश्रोत्रं, दशमभावो वामनासा, चतुर्थभावो दक्षिणनासा, नवमभावो वामकपोलः, पंचमभावो दक्षिणकपोलः, अष्टमभावो वामहनुः, षष्ठभावो दक्षिणहनुः, सप्तमभावो गन्तव्यभागो वक्त्रे वामभागः, गतभागो वक्त्रे दक्षिणभागः इति ज्ञेयम्। एवं लग्ने द्वितीयद्रेक्काणे; लग्नगतभागः कण्ठस्य वामभागः इत्यादि व्याख्येयम्। एवं लग्ने तृतीयद्रेक्काणे; लग्नगतभागो बस्तिवामभाग इत्यादि पूर्वोक्तदिशा ज्ञेयम्। अन्ये पुनरन्यथा व्याचक्षते। तथा हि—लग्ने प्रथमद्रेक्काणे जातश्चेत्; लग्नप्रथमद्रेक्काणे गन्तव्यभागो शिरसो दक्षिणभागः, गतभागो वामार्धम्, द्वितीयद्वादशभावयोः प्रथमद्रेक्काणौ क्रमेण दक्षिणवामचक्षुषी, तृतीयैकादशयोः प्रथमद्रेक्काणौ दक्षिणवामश्रोत्रे, चतुर्थदशमयोः प्रथमद्रेक्काणौ दक्षिणवामनासे, पंचमनवमयोः प्रथमद्रेक्काणौ दक्षिणवामकपोलौ, षष्ठाष्टमयोः प्रथमद्रेक्काणौ दक्षिणवामहनू, सप्तमे प्रथमद्रेक्काणस्य गतभागो वक्त्रस्य दक्षिणार्धं, गन्तव्यभागो वामार्धं भवति। लग्नमध्यद्रेक्काणः कण्ठः, द्वितीयद्वादशभावयोर्मध्यद्रेक्काणावंसदक्षिणवामभागावित्यादि व्याख्येयम्। लग्नतृतीयद्रेक्काणो बस्तिः, द्वितीयद्वादशभावयोस्तृतीयद्रेक्काणौ शिश्नगुदयोर्दक्षिणवामभागावित्यादि व्याख्येयम। लग्ने मध्यद्रेक्काणे जातश्चेत्—प्रथमद्रेक्काणजस्य द्वादशभावगतप्रथमद्रेक्काणोक्तानि मूर्धादिस्थानानि तेनैव क्रमेण द्वादशभावगद्वितीयद्रेक्काणेषु, द्वितीयद्रेक्काणोक्तानि स्थानानि कण्ठादीनि तृतीयद्रेक्काणेषु, तृतीयद्रेक्काणोक्तानि बस्त्यादीनि प्रथमद्रेक्काणेषु भवन्ति। लग्ने तृतीयद्रेक्काणे जातश्चेत्—प्रथमद्रेक्काणजस्य द्वादशभावगतप्रथमद्रेक्काणोक्तानि मूर्धादिस्थानानि तेनैव क्रमेण द्वादशभावगततृतीय-

[1]हृदये भागद्वयं इति केचित् अनुपपत्त्या क्रमानुरोधाद्वा इति ॥ [2]वामभागः क्रमेण उर्ध्व परषट्कम् वामम्। पूर्वषट्कं दक्षिणांगं। लग्नादित्यर्थः। द्रेक्काणप्रमाणेन वा।

[1]तस्मिन्पापयुते व्रणः शुभयुते दृष्टे च लक्ष्मादिश(शे)
स्वर्क्षांशस्थिरसंयुते तु सहजः स्यादन्यथाऽऽगंतुकः।
मन्देऽश्मानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः
सूर्ये काष्ठचतुष्पदेन हिमगौ शृंग्यब्जजोऽन्यैः शुभं(भः) ॥ १५ ॥

व्रणकृत्कालं(ल)पुंसोऽङ्गे पापः षष्ठे विलग्नगः(तः)।
लक्ष्म कुर्याच्छुभैर्युक्त(क्तो) दृष्टः सतिलकः(कं) स च ॥ १६ ॥

इति व्रणचिह्नज्ञानम्

---

द्रेक्काणेषु, द्वितीयद्रेक्काणोक्तानि कण्ठादीनि स्थानानि प्रथमेष्काणेषु, तृतीयद्रेक्काणोक्तानि बस्त्यादीनि स्थानानि द्वितीयद्रेक्काणेषु भवन्ति। तदिदमुक्तम् त्रिधा विभक्तैः द्रेष्काणभागैः प्रत्येकं मूर्धादि, कण्ठादि बस्त्यादि त्रिधा कथितमिति ॥ १४ ॥ १ पूर्वश्लोकोक्तरीत्या ज्ञाते मूर्धाद्यवयवसंबंधिनि भावे, द्रेष्काणे वा पापयुते तत्संबन्ध्यवयवे व्रणः स्यात्। पापयुतयोर्भावद्रेष्काणयोः शुभेन दृष्टौ युतौ वा लक्ष्म किणादिचिह्नं भवेत्। न तु व्रणः। व्रणलक्ष्मकारको ग्रहः स्वर्क्षे, स्वनवांशे, स्थिरराशौ वा गतश्चेत् स व्रणादिः स्वाभाविकः। अन्यथा जननानन्तरं कारणजनितः। तानि व्रणकारणान्याह :- मन्दे इति। अत्र पापयुक्तबुधस्य क्षीणचन्द्रस्य च व्रणकारकत्वं; "तस्मिन् पापयुते" इति स्मरणात्। एवं सति अन्यैरिति बहुवचनं च संगच्छते। अन्यथा गुरुशुक्रयोरेव व्रणकारकत्वाभावेन अन्याभ्यां इति भवितव्यम्। न त्वन्यैरिति। प्रकृते च पूर्णचन्द्रपापरहितबुधगुरुशुक्रैः शुभं भूषणादिकं भवतीति सर्वमवदातम् ॥ १५ ॥

## तनुं प्रति दृक्फलं

**होराप्रदीपात्—**

सूर्यावलोकिततनौ पितृपक्षचि(वि)त्तो
विक्रांतवक्त्र(रोष)नृपसेवनकीर्तियुक्तः ।
चन्द्रेऽक्षिते जलविपण्ययुतः सुदक्षः
स्त्रीणां वशो मृदुवपुर्बहुमत्सराढ्यः ॥ १७ ॥

संग्रामसाहसरुचिः क्षितिजेन चण्डो
विद्वान् स्वधर्मनिरतो गुरुशिष्ट(श्र) एव ।
-स्नातेव(मानी न)रो निपुणधीः शशिजेन शिल्प-
विद्याकलातिचतुरो विधनो यशस्वी ॥ १८ ॥

ख्यातो व्रतातिथिगुरुद्विजदेवभक्तो
मान्यः सतां च मनुजो गुरुदृष्टलग्ने ।
सौभाग्यभोगधनसौख्ययुतः स(सु)रूपा(पो)
वेश्यांगनापरिवृतो भृगुजेऽक्षिते च ॥ १९ ॥

भाराध्वरोगमलकुत्सित(भागति)वृद्धनारी-
युक्तस्तनौ(कः सरुट्) गतसुखः शनिनाऽतिमूर्खः ।
स्वामीक्षितेऽतिसुखवान्नृपवल्लभश्च
वाच्यः(सार्धः) शुभेन च शुभोऽत्र खलः खलेन ॥ २० ॥

॥ इति लग्नं प्रति दृक्फलम् ॥

## ॥ अथान्यद्व्रणचिह्नज्ञानं ॥

### अथ एकग्रहकृतव्रणचिह्नयोगः

[1]लग्नात्सप्तमगो भौमः शुक्रो वापि बृहस्पतिः ॥
चिह्नं मूर्धस्थितं ज्ञेयं जातकस्य न संशयः ॥ २१ ॥

[2]यदा शुक्रोऽथ वा भौमो लग्नस्थेऽ(स्थोऽ)पि निशाकरः ॥
द्वादशाब्दे भवेत्तस्य मस्तके वह्निदर्शनं ॥ २२ ॥

### अथ ग्रहद्वयकृतव्रणचिह्नयोगः

[3]अष्टमेऽपि यदा राहौ शुक्रे वापि तनुस्थिते ॥
वामकर्णे भवेत्तस्य चिह्नं लग्नाद्धि निश्चितं ॥ २३ ॥

[4]जायास्थाने यदा राहुर्मन्त्री वापि तनुस्थितः ॥
वामे भुजे भवेच्चिह्नं लग्नाच्चैव यथाक्रमं ॥ २४ ॥

[5]द्वादशाष्टमशुक्रोऽपि [भौ]मं च(मश्च) तनुसंस्थितः ॥
बाह्वोश्चिह्नं विजानीयाज्जन्मलग्नाद्विचक्षणः ॥ २५ ॥

[6]त्रिषडायगतो भौमः शुक्रो वापि व्ययस्थितः ॥
वामपार्श्वे भवेच्चिह्नं भुजदेशसमीपतः ॥ २६ ॥

---

१ सप्तमे भौमे, शुक्रे, गुरौ वा स्थिते त्रयो योगाः । २ लग्ने शुक्रे, भौमे, चन्द्रे वा स्थिते त्रयो योगाः । ३ राहावष्टमे, शुक्रे लग्ने एको योगः । ४ सप्तमे राहौ, लग्ने गुरौ, एको योगः । ५-भौमे लग्ने, द्वादशे अष्टमे वा शुक्रे द्वौ योगौ । ६ व्यये शुक्रे, तृतीये षष्ठे लाभे वा भौमे त्रयो योगाः ।

[1]बुधे(धो) मन्दे (न्दो) भवेल्लग्ने कर्मगे वा दिवाकरे ॥
दक्षिणे पार्श्वके चिह्नं तस्य ज्ञेयं परिस्फुटं ॥ २७ ॥

[2]कुजे सौम्येऽथ वा लग्ने राहुः षष्ठत्रिकोणगः ॥
लिंगे गुदे भवेच्चिह्नं तिलमाषादिकं स्फुटं ॥ २८ ॥

अथ त्र्यादिग्रहकृतव्रणचिह्नयोगः

[3]त्रिकोणेऽपि भवेच्छुक्रो जीवे सौम्ये मूर्तिस्थिते ॥
पाताले हिबुके मन्दे कुक्षौ चिह्नं समादिशेत् ॥ २९ ॥

[4]धनस्थाने यदा शुक्रे त्वष्टमेपि दिवाकरे ॥
कर्मगौ राहुमे(मं)दौ च ना(नेत्रा)भौ चिह्नं समादिशेत् ॥ ३० ॥

[5]कर्मगोऽपि यदा मे(मं)त्री द्वितीयोऽ(येऽ)पि निशाकरः ॥
सहजे शुक्रवा(रा)हुभ्यां कट्या(ट्यां) चिह्नं समादिशेत् ॥ ३१ ॥

[6]व्ययस्थाने यदा मंत्री बुधोऽपि त्रिषडायगः ॥
सहजस्थो यदा शुक्रो हृदि चिह्नं समादिशेत् ॥ ३२ ॥

---

१ रवौ दशमे, बुधे शनौ वा लग्ने द्वौ योगौ । २ षष्ठे पंचमे नवमे वा राहौ कुजे लग्ने त्रयो योगाः । तादृश एव राहौ, बुधे लग्ने त्रयो योगाः । एवं षट् । ३ चतुर्थे शनौ, अष्टमे गुरौ, पंचमे नवमे वा शुक्रे द्वौ योगौ । तादृशयोरेव शनिशुक्रयोश्चतुर्थे गुरौ द्वौ योगौ । पूर्वोक्तेषु चतुर्षु योगेषु गुरुस्थाने बुधसंबन्धेन चत्वारो योगाः । एवमष्टौ योगाः । ४ द्वितीये शुक्रे, अष्टमे रवौ, दशमे राहौ मन्दे चैको योगः । ५ कर्मगे गुरौ, द्वितीये चन्द्रे, तृतीये शुक्रे राहौ चैको योगः । ६ तृतीये शुक्रे, व्यये गुरौ, तृतीये षष्ठे लाभे वा बुधे त्रयो योगाः ।

[1]सहजस्थो यदा शुक्रो मन्त्री वा त्रिषडायगः ॥

धर्मस्थाने निशानाथे गुदे गोलकमादिशेत् ॥ ३३ ॥

[2]पाताले शुक्रराहुभ्यां कुजे मन्दे तनुस्थिते ॥

गुल्फयोः पादबाहुभ्यां मत्स्यचिह्नं समादिशेत् ॥ ३४ ॥

[3]मृतिस्थाने निशानाथे मंदे शुक्रे व्ययस्थिते ॥

सप्तमे बुधमन्दाभ्यां बाह्वोश्चिह्नं समादिशेत् ॥ ३५ ॥

॥ इति व्रणचिह्नज्ञानम् ॥

---

## ॥ अथ तनुगतसूर्यादिग्रहान् प्रति दृष्टिफलानि ॥

### लग्नगतसूर्यं प्रति दृष्टिफलम्

[4]चन्द्रादयस्तनुरविं प्रियमातरं च

तातघ्नसव्रणमथाप्तसुकीर्तिसुज्ञं ।

सन्मित्रकं बहुकलत्रवरस्वमिच्छं

त्यत्र स्वनाशमगदा(नकरं) स्वपदच्युतं च ॥ ३६ ॥

### लग्नगतचन्द्रं प्रति दृष्टिफलम्

सूर्यादयस्तनुविधुं त्वश्रु(सु)तोऽल्पजीवी

बुध्या(द्ध्याऽ)न्वितो धनयुतः सुभगो रुगार्तः ।

---

१ तृतीये शुक्रे, नवमे चन्द्रे, तृतीये षष्ठे लाभे वा गुरौ त्रयो योगाः । २ चतुर्थे शुक्रराह्वोः, कुजे शनौ वा लग्ने द्वौ योगौ । ३ सप्तमे बुधशन्योः, अष्टमे चन्द्रे, शनौ शुक्रे वा व्यये द्वौ योगौ । ४ चन्द्रादयः तनुगतं रविं यदि पश्यंति तर्हि प्रियमातरमिच्छंति इति क्रमेणान्वयः । एवमग्रेऽपि ।

लग्नगतकुजं प्रति दृष्टिफलम्

लग्ना(ग्ने) [कु]जे रविमुखा विषशस्त्रवध्यो
मात्रायोग्निकृतनिर्धज्यविद्विट् ॥ ३७ ॥
(मात्रामयोऽग्निहतपूज्यगतार्थविद्विट् ।)

लग्नगतबुधं प्रति दृष्टिफलम्

अन्याङ्गनाधन इ(नमि)होऽद्र(द्र)मगज्ञमर्का
हीनद्युति(तिं) धनयुतं क्षुदु(धु)पद्रुतं(द्रुतं) च ।
कार्पण्यकं प्रततकीर्तिधनं च नीचे
से(चोऽ)न्मानि(दि)तं विदधते प्रविलोकयंतः ॥ ३८ ॥

लग्नगतगुरुं प्रति दृष्टिफलम्

लग्ने गुरुं [1]रधि(वि)मुखा धनसो(सौ)हृदो(दा)ढ्यः
स्वाढ्यस्त्वरुक् शुभकृतिः सधनः समानः ।

लग्नगतशुक्रं प्रति दृष्टिफलम्

शुक्रे सुदृक् स्त्र्यपहृतिः कलहात्य(होत्थ)दोषी
दुष्टांगना न्य (नोऽप्य)तिकलिः न(र्लिर्न)रयोषिता(दा)ढ्यः ॥ ३९ ॥

लग्नगतशनिं प्रति दृष्टिफलम्

धर्म(र्म्यै) विवृद्धवनिताध्व(तं च)विलग्नसंस्थे
मन्दे पितुस्त्व(स्त्व)धिगुणं क्षुधि पीडितं च ।

---

१. लग्ने गुरुं रविमुखा यदि पश्यंति तर्हि धनसौहृदाढ्यो भवेदिति योजना । एवमग्रेपि ।

रक्तोत्थरोगसहितं त्वथ शिल्पविद्या-
सन्मानिनं च सधनं परिलोकयंतः ॥ ४० ॥

लग्नं प्रति सर्वदृष्टिफलम्

लग्ने सर्वग्रहे ई(हैर्दृ)ष्टे दीर्घायुर्नृपतिर्भवेत् ॥

लग्नं प्रति ब्यादिग्रहदृष्टिफलम्

आ(ब्या)द्यैः प्रायः सभाग्यः स्यात्

लग्नं प्रति ग्रहदृष्टयभावफलम्

र्निंद्यो धृ(दृ)ष्टिविवर्जिते ॥ ४१ ॥

## अथ लग्नस्थद्विग्रहयोगफलं

**होराप्रदीपात्—**

लग्नेर्केऽन्द्वोर्दुःखदैन्यपितृमातृवियोगवान् ॥
भौमार्कयोः क्षततनुः पित्तलः क्रोधशौर्यवान् ॥ ४२ ॥

वाचालो ज्ञार्कयोर्लग्ने दीर्घायुर्बहुवाक्भृ(ङ्म)तिः ॥
मन्त्री जीवार्कयोः साधुः सेनानाथो बुधो गुणी ॥ ४३ ॥

दुःखी शुक्रार्कयोर्नीचो मलिनः कलहप्रियः ॥
मन्दार्कयोर्मलिनधीः पापाचारः सु(कु)वृत्तिवा(मा)न् ॥ ४४ ॥

भौमेन्द्वोर्नृपतिस्तीक्ष्णः पित्तरक्ताग्निदोषवान् ॥
सत्वधीमु(सु)खसं[प]न्नः कांते(तोऽ)तिसुभगो भवेत् ॥ ४५ ॥

वाचालो निपुणो लग्नसंस्थयोः शशिसौम्ययोः ॥
बहुपुत्रसुहृद्भार्यः सुदेहो बन्धुसेवितः ॥ ४६ ॥

सुपीनपृथुवक्षाः स्याल्लग्ने(नृपः) शशिसुरेज्ययोः ॥
बहुवेश्यांगनासक्तः कल्यां(ल्पां)गो गुरुसंमतः ॥ ४७ ॥

स्याच्चन्द्रसिव(त)योर्लग्ने गन्धमाल्यांबरप्रियः ॥
रौद्रो दासः खलो लुब्धो मति(मान)वो मानवर्जितः ॥ ४८ ॥

भवेन्निद्रालसः पापो लग्ने शीतांशुमन्दयोः ॥
हिंस्रोऽग्निकर्मकुशलो धातुर्वादकरः स(वादकृतश्र)मः ॥ ४९ ॥

दूतो गुप्तवि(ह्यधि)कारी च विलग्ने भौमसौम्ययोः ॥
मन्त्री वाग्मी सुतैर्युक्तो लब्धकीर्तिर्महाधनः(गुणः) ॥ ५० ॥

नित्योत्साही तु धर्मिष्ठो लग्ने भौमपु(सु)रेज्ययोः ॥
द्विजदेवी(वा)र्चनरतो धनी नृपतिपूजितः ॥ ५१ ॥

([१]वेश्यारतः कुशिल्पाद्यो दुष्कर्मा स्वल्पजीवितः ॥
स्त्रीहेतोर्नष्टसर्वस्वो लग्ने भौमासुरेज्ययोः ॥ ५२ ॥

संग्रामप्राप्तविजयो ह्रस्वायुर्यमभौमयोः ॥
लग्नस्थयोः क्षीणभाग्यो मातृशत्रुर्भवेन्नरः ॥ ५३ ॥

सुशीलः सुतनुर्विद्वान्नृपपूज्यः सुवाहनः ॥
सुखभोगयुतो लग्ने देशनाथो बुधेज्ययोः ॥ ५४ ॥)

---

१ अत्र भौमशुक्रयोः, भौमशन्योः, बुधगुर्वोश्च लग्नगतयोः फलप्रतिपादनपराश्चयः श्लोका लुप्ताः । ते च मया निबद्धाः कुण्डल्यां निवेशिताः ।

सुभगः पण्डितः ख्यातो लग्ने बोधनशुक्रयोः ॥
विद्यार्थवाहने ही(नै)नो मलिनः पापसंयुतः ॥ ५५ ॥

अल्पायुः क्षीणभाग्यश्च लग्ने चन्द्रजमन्दयोः ॥
सत्कर्मकुशलो राजा सुदेहो भूपवंशजः ॥ ५६ ॥

नृपतुल्यः कुलेऽन्यस्मिन् विलग्ने जीवशुक्रयोः ॥
मन्दो(न्दा)लसः खलो विद्वान्निष्ठुरोऽल्पसुखी भवेत् ॥ ५७ ॥

धनसारो विलग्नस्थसुरेज्यरविपुत्रयोः ॥
सर्वनारीभोगयुतः कान्तः सौख्यार्थभोगभाक् ॥ ५८ ॥

बहुपुत्रो वि(भृत्योऽति)शोकः स्याद्विलग्ने शुक्रमन्दयोः ॥ ५९ ॥

॥ इति लग्नस्थद्विग्रहयोगफलम् ॥

---

## ॥ अथ तनुस्वामिनो द्वादशभावफलं ॥

**लेख्यं फलं प्रदीपात्—**

लग्नाधिपतिर्लग्ने ति(नी)रोगं दीर्घजीवितं कुरुते ॥
अतिबलमवनिपतिं वा भूलाभसमन्वितं जातं ॥ ६० ॥

लग्नपतिर्धनभवने धनवन्तं विपुलजीवितं स्थूलं ॥
स्थानप्रधानमनिशं सत्कर्मरतं नरं कुरुते ॥ ६१ ॥

सहजगतो लग्नपतिः सद्बन्ध(न्धु) प्रवरमित्रपरिकल्पि(ल्पि)तं ॥
धर्मरतं दातारं शूलं(रं) सबले(बलं) करोति नरं ॥ ६२ ॥

लग्नेशस्तुर्यगतो नृपप्रियं प्रचुरजीवितं पुरुषं ॥
सल्लु(संल)ब्धपित(सुखं) पित्रोर्भक्तमबहुभोजनं कुरुते ॥ ६३ ॥

पंचमगो लग्नपतिः ससुतं सत्यागमीश्वरं विदितं ॥
बहुजीविनं च सुखिनं सुकर्मनिरतं नरं तनुते ॥ ६४ ॥

रिपुभवने लग्नेशो नीरोगं भूमिलाभिनं सबलं ॥
कृपणं धनिनमरिघ्नं सुकर्मपक्षान्वितं कुरुते ॥ ६५ ॥

प्रथमपतौ सप्तमगे तेजस्वी शीलवान् भवेत्पुरुषः ॥
तद्भार्यापि सुशीला तेजःकलिता सुरूपा च ॥ ६६ ॥

लग्नपतावष्टमगे कृपणो धनसंचकः(यी) सुदीर्घायुः ॥
क्रूरश्च नरे कटुजल्पश्च वपुषा भवेत्पीनः ॥ ६७ ॥

मूर्तिपतिर्यदि नवमस्त(मे त)दा भवेत्प्रवरबान्धवः सुकृति(ती) ॥
समसत्त्वश्च सुशीलः सुकृतः ख्यातः सुतेजस्वी ॥ ६८ ॥

प्रथमेशे दशमस्थे नृपलाभः पण्डितः सुशीलश्च ॥
गुरुमातृपूजनमतिर्नृपप्रसिद्धः पुमान्भवति ॥ ६९ ॥

एकादशगस्तनुपः सुजीवितं सुतसमन्वितं विदितम् ॥
तेजस्कलितं कुरुते पुरुषं बलिनं न सीदति चेत्! ॥ ७० ॥

द्वादशगे मूर्तिपतौ कटुवाग्वादकरो मतिमान् ॥
सहगोत्रकैर्मिलनमेति विदेशो(शे) दत्तभुक्तनरः ॥ ७१ ॥

॥ इति लग्नपतेर्द्वादशभावस्थितिफलम् ॥

---

## ॥ अथ ग्रहाणामात्मादिकारकत्वम् ॥

[1]आत्मा रविः शशी तेजः(चेतः) सत्वं भौमो बुधो वचः ॥
गुरुर्ज्ञानं सितः स्नेहः(कामः) शनिः स्मर उ(र्दुःखमु)दाहृतः ॥ ७२ ॥

---

१ आत्मा देहाधिष्ठाता जीवो रविः। अनात्ममनसोरितरेतराश्रयत्वेन तत्कारकयो रविचन्द्रयोरेकतरस्य बलवत्वे इतरस्य बलवत्वसिद्धिरिति ध्वन्यते। तदुक्तं बृहत्संहितायां—

" आत्मा सहैति मनसा मन इन्द्रियेण
स्वार्थेन चेन्द्रियगणः क्रम एवमेषः।
योगोऽयमेव मनसः किमगम्यमस्ति
यस्मिन्मनो व्रजति तत्र गतोऽयमात्मा " ॥ इति ॥

एवं सर्वप्रवृत्तीनां मनोमूलकत्वेन चन्द्रस्य बलवत्वे इतरेषां दौर्बल्येऽपि शुभफलप्रदत्वमिति ध्वन्यते। तथा तस्य दुर्बलत्वे अन्येषां बलवत्वेऽपि न किंचित्प्रयोजनमिति ध्वन्यते। तदुक्तं—

" चान्द्रं बलं हि निखिलग्रहवीर्यबीजं " इति
" चन्द्रार्कौ बलयुक्तौ कुजादयः प्रोक्तमार्गबलहीनाः ॥
शुभफलदास्ते सर्वे दशासु योगेषु संचिन्त्याः ॥ " इति च।

सत्वं कुजः। पूर्वं "सत्वं शशीज्यरवय" इत्युक्तं, इदानीं सत्वं कुज इत्युच्यते। चतुर्णामपि सत्वात्मकत्वे एकत्रैव कुतो न कथितम्?। तथा पूर्वत्र " मंदार्कजौ तमः " इति कुजस्तम इत्युक्तम्, अत्र च सत्वं कुज इत्युच्यते। अतः कुतो न विरोधः? इति चेन्न। अत्रोक्तं सत्वं शौर्यं, यत्सिंहादीनां तामसजीवानामप्यस्ति। तदुक्तं—

### आत्मादिकारकफलम्

आत्मादिभिर्ग(दयो ग)गनगैर्बलिभिर्बलवत्तराः ॥
दुर्बलैर्दुर्बलास्तेषु विपरीतं शनेः स्मृतं ॥ ७३ ॥

स्थानदिग्बलसंपन्नास्तान्पुष्णंति नभश्चराः ॥
विहन्युः शत्रुनीचस्था (स्था)स्तया(था) च रविरश्मिगाः ॥ ७४ ॥

### उक्तस्यात्मादिकारकफलस्य छायादावतिदेशः

ग्रहाणां कथिता छाया वातपित्तकफास्तया(था) ॥
पंचभूतस्वभावाश्च तथा सत्वं रजस्तमः ॥ ७५ ॥

### सात्विकादिप्रकृतिफलम्

भूः सात्विकस्तस्य दया स्थिरत्वं
सत्यार्जवं ब्राह्मणदेवभक्तिः ।
रजोधि[कः] काव(व्य)कलाज(क्र)तुस्त्री
संसक्तचित्तः पुरुषोऽतिशूरः ।
तमोऽधिको वंचयिता परेषां
मूर्खोऽलसः क्रोधपरश्च नित्यं ॥ ७६ ॥

---

" एकाकिनि वनवासिन्यराजलक्ष्मण्यनीतिशास्त्रे ॥
सत्वाश्रयान्मृगपतौ राजेति गिरः परिणमन्ति ॥ " इति ।

पूर्वमोक्तं सत्वाधिकं तु गुणः । अतो न विरोधादिकम् ॥ ७२ ॥ १ छायाकारके ग्रहे बलिनि ग्रहाणां कथिता छाया बलवती, अन्यथा दुर्बला । एवं वातादित्रिदोष-कारकेषु, पंचभूतस्वभाव कारकेषु, सत्वादिगुणकारकेषु च यो बली तत्संबंधिनं वातादिदोषं, पंचभूतस्वभावं, सत्वादिगुणं च दद्यादिति तात्पर्यम् ।

ग्रहाणां त्रिदोषकारकत्वं

पित्तं प्रभाकरक्ष्माजौ कफवातौ सितान्ज(ब्ज)कौ ॥
वातापित्तकफ (फाः) सौम्यः कफो जीवोऽनिलः शनिः ॥ ७७ ॥

अथ वातप्रकृतिफलम्

शीतार्तो बहुभाषी दृष्टिर्निरीर्थचलः(चलदृष्टिर्नरोऽर्थी) कृमी नेता ॥
मित्रोपार्जितनिपुणश्चोरः सुभगश्च गीतज्ञः ॥ ७८ ॥

र(रू)क्षः स्फुटितांघ्रिकरः क्रोधी धैर्योऽज्झितः कृतघ्नश्च ॥
पश्यन्स्थं(त्य)बरगमनं स्वप्ने पुरुषोऽनिलप्रकृतिः ॥ ७९ ॥

॥ इति वातप्रकृतिलक्षणम् ॥

---

## ॥ अथ पित्तांगलक्षणम् ॥

प्यातं रक्तनखाक्षिकरांघ्रिर्मेधावी निर्भयस्तुषाररुचिः ॥
वृताश्रुतो ? सदाढ्यो बहुक्षिप्रप्रसादश्च ॥ ८० ॥

स पश्यति रविं स्वप्ने त्रुटितं च हुताशनं ॥
कांचनं रक्तपुष्पाणि शस्त्राणि रुधिरं तथा ॥ ८१ ॥

॥ इति पित्तांगलक्षणं ॥

---

## ॥ अथ कफप्रकृतिलक्षणं ॥

श्लिष्टांगसन्धिः पृथुवीर्यसत्व-
तेजोहि(यु)तो लोकहितः कृतज्ञः ।

गंभीरशब्दो मधुराशनश्च
रक्तांतरेवेनि(नेत्रोऽति)रतः स्व(सु)गौरः ॥ ८२ ॥
ग्राही सहिष्णुश्च कफप्रधानो
जलाश्रयान्पश्यति वारिपूर्णाम्(न्) ।
स्वप्ने तुषारेन्दुसिताक्ष(श्व)तारा-
ह(हं)सांस्तथाऽब्जानि च शुक्र(क्ल)वर्णान् ॥ ८३ ॥

॥ इति कफप्रकृतिलक्षणम् ॥

---

## ॥ अथ पञ्चभूतस्वभावः ॥

शुभः(भ)पुष्पादिगन्धः स्यात्स्थिरो भोगो(गी) सुखान्वितः ॥
शुभ(भूस्व)भावः सत्ववांश्च कण्ठीरवघनस्वनः ॥ ८४ ॥
आप्प(प्य)स्वभावको भूरि वारया वारियायि(पायी) श(शि)वाशनं (नः) ॥
नरो नातिप्रगल्भः स्यात्प्रियवाक् ससुहृच्चलः ॥ ८५ ॥
अग्निस्वभावत(ज)स्तीक्ष्णः चलः क्रूरः क्षुधान्वितः ॥
विद्वान्मानी कृशः प्र(प्रा)ज्ञो विरोधी बहुभुग्भवेत् ॥ ८६ ॥
वायुः स्व(युस्व)भावतः(जः) क्षिप्रकोपी दाता कृशश्चलः ॥
कृतघी भ्र(भ्रे)मणासक्तः प्रघृष्यो जायतेऽसितः ॥ ८७ ॥
शब्दन्याये पटुर्ज्ञानी दीर्घो व्योमस्वभावतः ॥
छिद्रा(द्रां)गः कृशहस्तांघ्रिः प्रगल्भो विनताननः ॥ ८८ ॥

॥ इति पंचभूतस्वभावः ॥

---

## ॥ अथ पञ्चभूतछायाफलम् ॥

स्निग्धदेहरोमरद(त्वग्रोमरदन)नस्वाक्षि(स्वाढ्या) [1]केशनिर्मला ॥
सुखधर्मवृद्धिभोग(तुष्ट्यर्थलाभसद्गन्ध)करी छाया च भूजिजाः(जा)
॥ ८९ ॥

स्निग्धा सिता हरिद्वर्णा सौभाग्यसुखमार्दवा ॥
सर्वसिद्धिकरी नित्वं(त्यं) जलच्छाया बुधौ(धैः) स्मृता ॥ ९० ॥

आप्याब्ज(अग्न्यब्ज)हेमवर्णा च प्रचण्डदेह(डा सिद्धि)कारिणी ॥
यशस्तेजोजयारोग्यविक्रमा चे(ते)जसोद्भु(द्भ)वा ॥ ९१ ॥

मलिना पु(प)रुषा(षा) कष्टा(कृष्णा) दुर्गन्धा दैन्यकारिणी ॥
व्याधिबन्धनशोकाढ्या मारुना(ती) परिकीर्तिता ॥ ९२ ॥

स्फटिकोत्पलकान्तिर्या सौभाग्यं(सुभगा) भाग्यवर्धिनी ॥
धनार्थकामदा नित्यं छाया गगनसंभवा ॥ ९३ ॥

॥ इति पञ्चभूतच्छायालक्षणम् ॥

---

## ॥ अथ ग्रहाणां छायाकारकत्वं ॥

सूर्यासृजौ च शिखिनः शशिजो परिस्यात्(धरित्र्याः)
छाया(यां) गुरुश्च नभसः शनि(सित)शीतरश्मी ।

---

१ निर्मलकेशेत्यर्थः ।

[1]वारोऽर्कजोऽपि कुरुते मरुतः स्वपाके
हृग्राणकर्णवदनत्वगुपाहितां तु ॥ ९४ ॥

॥ इति ग्रहाणां छायाकारकत्वं ॥

---

## ॥ अथ ग्रहाणां भावफलं ॥

### लग्नगतसूर्यफलम्

लग्नेऽर्केऽल्पकचोऽ(सुतोऽ)लसो नयनरुङ्मानी प्रचंडोऽघृणः
शूरः क्रोधपरोऽतिकर्कशतनुः सिंहे निशा(शां)धो नरः ।
स्वॆक्ष(सस्व)स्तैमिरिकः क्रिये शशिगृहे स्याद्बुद्बुदाक्षस्तथा
नीचर्क्षे नयनोऽनितः क्षितिपतेर्जातोऽपि दारिद्र्यवान् ॥ ९५ ॥

### लग्नगतचन्द्रफलम्

दाक्षिण्यरूपधनभोगगुण(णैः) प्रधान
श्चन्द्रे कुलीरवृषभाजगते विलग्ने ।
उत्पन्नवीर(नीच)बधिरो विकलश्च मूकः
कोपी(शेषे) नरः कृश(रोऽसित)तनुश्च विशेषतः स्यात् ॥ ९६ ॥

### लग्नगतभौमफलम्

हिंसानृतस्तेयविधानशीलं
कृशं(स्तब्धं) नरं संक्षतमुग्ररोषं ।

---

1 वारः जलस्येत्यर्थः ।

रक्तत्वगच्छं(पित्तामयार्तं) कपि(चप)लं महीजः
 ससाहसं लग्न[ग]तः करोति ॥ ९७ ॥

लग्नगतबुधफलम्

लग्ने बुधो ज्ञानकलाप्रकृष्टं
 कविं कृशं रोगविवर्जितं च ।
मेधाविनं सेवकमिष्ट(गाणितिकं सु)लेख्यं
 श्यामं त(न)रं वाक्चतुरं करोति ॥ ९८ ॥

लग्नगतगुरुफलम्

बृहस्पतिः पीतविशालदेहं
 गंभीर[धीर]प्रकृति(तिं) प्रसिद्धं ।
धर्मिष्ठमिष्टस्वजनं करोति
 प्राग्लग्नगो बुद्धिगुणैरुपेतं ॥ ९९ ॥

लग्नगतशुक्रफलम्

शुक्रे विलग्ने सुशरीरवेषं
 करोत्यरोगं प्रियगन्धमाल्यं ।
विलाससङ्गीतविशारदं च
 रामामनःके(कै)रवबोधचन्द्रे(न्द्रं) ॥ १०० ॥

लग्नगतशनिफलम्

स्वर्क्षोच्चजीवर्क्षतनौ शनौ च
 विद्या(द्वा)न्महीशोऽप्यपरर्क्षलग्ने ।

कामातुरो दुःखदरिद्ररोग(तारु)

वा(ग्वा)णिज्ययुक् पण्डि(पीडि)त एव वास्य(वाश्ये) ॥ १०९ ॥

॥ इति लग्नभावगतप्रत्येकग्रहफलम् ॥

॥ इति श्रीजातकसारदीपे तनुचिन्ताध्याय एकोनचत्वारिंशः ॥

---

## ॥ अथ धनभावचिंताध्यायश्चत्वारिंशः ॥

## ॥ अथ धनभावगतग्रहविशेषफलम् ॥

धनभं स्वामिसत्खेटै(टै)र्युग्दृष्टं धनवृद्धिदं ॥
क्षीणेऽन्दुपापयुक्दृष्टं विना स्वर्क्षं धनापहं ॥ १ ॥

स्थानेषु त्रिषु सप्तषण्मृतिषु सत्खेटैस्तनोर्वा विधो
दी(र्दी)र्घायुर्धनवान्नृपो दलपतिश्चाथो [1]त्रिभिर्वृद्धिगैः ।
लग्नेंद्वोश्च शुभैर्धनाढ्य इति तद्वा(द्वा)भ्यां च मध्ये स्थिते(ध्यार्थभा)
केनाल्पं हि(गेकेनाल्प)धनं(नी) यदोऽपचयगो न स्याद्दरिद्रोऽशुभः
॥ २ ॥

केन्द्रे विधौ दिनमणेरगुणो दरिद्रः
स्यान्मध्यमः [2]पणफरेऽथ परे धनाढ्यः ।
[3]जीवेक्षितेऽह्नि निशि सौख्ययुतो वि[लग्ने]
[चं]द्रे धनी त्वथ निजांशसुहृद्भवे च ॥ ३ ॥

---

१ तृतीयषष्ठदशमैकादशस्थानान्युपचयस्थानानि । वृद्धिरुपचयः । तद्गतै-रित्यर्थः । २ द्वितीयपञ्चमाष्टमैकादशस्थानानि पणफराणि । ततः पराणि तृतीय षष्ठनवमद्वादशस्थानान्यापोक्लिमानि । तद्गते विधौ धनाढ्य इति भावः । ३ विधौ अह्नि जीवेक्षिते, निशि विलग्नगते च सौख्ययुतः स्यादिति योजना ।

क्रूरर्क्षगे खलखगे धनगे दरिद्रः
केंद्रे तथैव तनुगेऽब्जसुजोर्धनी स्यात् ।
नो स्वं भुनक्ति पितुरत्र रवौ धनस्थे
मेषे विधौ घटशनौ मकरे सिते च ॥ ४ ॥

**सारावल्यां—**

भौमेन्दू(रविभौमौ) धनसंस्थौ त्वग्दोषदरिद्रवा(ता)करौ कथितौ ॥
मन्दः कुरुते शुद्ध(द्धो) महार्थयुक्तं बुधेऽक्षितस्तत्र ॥ ५ ॥

रविरपि विधनं जनयति यमेक्षितोऽन्येन [1]सन्दृष्टः ॥
सौम्यः(म्याः) कुटुम्बराशौ बहुप्रकार(रं) धनं दद्यात्(द्युः) ॥ ६ ॥

बुधदृष्टस्त्रिदशगुरुः कुटुंबसंह(स्थ)श्च निःस्वतां कुरुते ॥
सोमतनयोऽपि शशिना निरीक्षितो हन्ति सर्वधनं ॥ ७ ॥

चंद्रोऽपि धनस्थाने क्षीणो बुधवीक्षितः कुरुते ॥
पूर्वार्जितार्थनाशं निरोधमपि चान्यवित्तस्य ॥ ८ ॥

शुक्रः कुटुंबभवने सूर्येन्दु(चन्द्रेण) निरीक्षितो न(तः प्र)धनदाता ॥
सौम्यगृहे शुभ(म्यग्रहेण) दृष्टः स एव धनदः सदा ज्ञेयः ॥ ९ ॥

॥ इति धनभावगतग्रहविशेषफलम् ॥

---

## अथ धनस्वामिनो द्वादशभावफलं

**फलप्रदीपात्—**

लग्नस्वतुंगगखगे प्रभवेच्च लक्ष्मी
स्तुर्य(र्ये)स्वतुङ्गखचैररपि वित्तलाभः ।

---

१ अन्येन शनिभिन्नेन ग्रहेण दृष्टः सन् शुभः इति योजना ।

आयस्थतुङ्गगखगे च तथैव वित्तं
कर्मस्थतुङ्गगखगे बहुराजसंपत् ॥ १० ॥

द्रव्यपतिर्लग्न[ग]तः कृपणव्यवसत्वि(सायि)नं सुकर्माणं ॥
नि(सु)धन(नं) श्रीपविविदितं करोति नरमतुलभोगभुजं ॥ ११ ॥

धनपो धनभवनस्थे(स्थो) धनवन्तं धर्मकर्मनिरतं च ॥
लाभाधिकं सलोभं कुरुते पुरुषं सदा दक्षं ॥ १२ ॥

सहजगते तु धनेशे व्यवसायी कलिकरः कलाहीनः ॥
चोरश्चत(श्चंच)लचित्तो भवति नरो(रः) [स्वो]चित(ता)यरहितः ॥ १३ ॥

तुर्यगते द्रविणपतौ पितृलाभपरः(रोऽ)सत्यदयः पुरुषः ॥
दीर्घायुः क्रूरखगे पुनरंवा(बा)भरणकं विनिर्देश्यं ॥ १४ ॥

कमलाविलासितनयं कर्मणि कष्टेऽतरे प्रसिद्धं च ॥
कृपणं दुःखनिधानं तनग्र(य)गतो धनपतिः कुरुते ॥ १५ ॥

षष्ठगतो द्रविणपतिध(र्ध)नतत्परं रिपुघ्नं च ॥
मूलाभिनं व(च) खचरे पापे धनवर्जित(तं) पुरुषं ॥ १६ ॥

धनपे सप्तमगृहगे श्रेष्ठगर्विता विलासभोगवती ॥
धनसंग्रहिणी भार्या क्रूरे खचरे भवति वन्ध्या ॥ १७ ॥

धनपे वाऽ(चाऽ)ष्टमभवने अष्टकपाली चात्य(त्म)घातकः पुरुषः ॥
उत्पन्नभुग्विलासी परहिंसी(स्रो) भवति देवपरः ॥ १८ ॥

धनपे धर्मगृह(हं) गतसौम्ये [स]दा प्रसिद्ध(द्धि)भाग्भवति ॥
क्रूरे दरिद्रभिक्षुकविडंबवृत्तिस्तथा मनुजः ॥ १९ ॥

एकादशगः स्वपतिव्य(र्व्य)वहारपरां(रं) श्रियः पतिं स्वा(ख्या)तं ॥
लोकौघप्रतिपालनं(न)[नि]रतं कुरुते नरं जातं ॥ २० ॥

द्वादशगे द्रव्यपतावष्टकश(पा)ली विदेशऋद्धि(गर्धि)श्च ॥
दुःकरकर्मा भिक्षुः क्रूरे सौम्ये च सद्ग्रामी ॥ २१ ॥

॥ इति धनस्वामिनो द्वादशभावफलम् ॥

---

## ॥ अथ धनभावस्थितप्रत्येकग्रहफलं ॥

अत्यष्टि १७वर्षधनहानिमी(मि)नो धनेऽदु
भौ २७ ब्दे प्रपीडनमसृग्म(ङ्न)वभे(मे) ९ स्वनाशं ॥
षड्विंशके २६ धनहृति(तिं) विदस्था(थो) गुरुर्भा२७
ब्दे भूय(रि)मानमुशना हि षड ६ ब्दलक्ष्मीं ॥ २२ ॥

धने रवौ द्रव्यचतुष्पदाढ्यः
स्याद्वक्त्ररुक्स्तनुजै(क्चोरनृपै)र्हृतस्वः ।
श्रीविक्रमाढ्यः सुभगो जितारिः
सूर्ये तृतीये कृपणोऽतिहिंस्रः ॥ २३ ॥

बहुधान्यो बहुधानो(सुतो) बहुभृत्यो बहुश्रुतः ॥
धनस्थाम(न)स्थिते चन्द्रे शनौ चन्द्रविपर्ययः ॥ २४ ॥

अधनः ककध(दश)नरु(तु)ष्टः पुरुष्टः पु(प)रुषो विकृताननो धनस्थाने ॥
कुजनाश्रयश्च रुधिरे भवति नरो विघया रहितः ॥ २५ ॥

बुध्योऽपार्जितविभवो भवेत् द्वितीयेऽन्नपानभोगी च ॥
शोभनवाक्यः सुनयः शशितनये माना(न)वो भवति ॥ २६ ॥

धनवान्भोजनसारो वाग्मी[सुवपुः] सुवाक् सुबन्धुश्च ॥
कल्याणवपुस्त्यागी सुमुखो जीवे भवेद्धनगे ॥ २७ ॥

बह्वन्नपानभोक्ता च विलासधनसंयुतः ॥
सुखार्थ(वाक्य)सहितः शुक्रे स्त्रीप्रियो धनभावगे ॥ २८ ॥

स्यादू(द्र)क्षकोऽर्थो(र्थी) विधृ(कृ)ताननः स्या(नोऽर्थे)
ज्ज(ज)नार्थहीनो दिननाथपुत्रे ।
विन्द(वद)न्ति केचित्परदेशमित्वा
प्राप्नोति भोगं जनवाहनानि ॥ २९ ॥

॥ इति धनभावस्थितप्रत्येकग्रहफलम् ॥

॥ इति श्रीजातकसारदीपे धनभावचिन्ताध्यायश्चत्वारिंशः ॥

---

## ॥ अथ सहजभावचिन्ताध्याय एकचत्वारिंशः ॥

### ॥ अथ सहजभावाश्रितग्रहविशेषफलम् ॥

सहजलाभनाशयोगौ

स्वस्वामिना शुभैः खेटैः सहजं युतवीक्षितं ॥
भ्रातृसंपत्तिदं क्रूरैः सहजा[तिं]त्र(प्र)दं स्मृतं ॥ १ ॥

[1]भौमेन्दुदृष्टसहजस्थल(न)वांशपं(पुं)स्त्री
संख्यानुजाः सहजगे कुजदृष्टमन्दे )
नाश(शं) सिते तु गुरुदृग्युजि पुष्टिरेषां
सौम्ये कुजेऽक्षित इहैव सुहृत्क्षयः स्यात् ॥ २ ॥

---

१ तृतीये भौमदृष्टे तृतीयभावोदितनवांशसंख्याः सोदराः, चन्द्रदृष्टे तत्संख्याः सोदर्यश्च भवन्ति । तृतीयगते शनौ कुजदृष्टे भ्रातृनाशः, तृतीयगे शुक्रे गुरुदृष्टे भ्रातृपुष्टिः, तृतीयगे बुधे कुजेक्षिते मित्रनाशः इति भावः ।

[1]स्वर्क्षे रवौ नवमगे सहजस्य नाशः
पित्रा सहाश्व(होत्थ)रविरभ्रभवं तृतीये ।
षष्ठोत्समा(ष्ठेऽब्दकेऽ)किरवनीतनयो द्व्यं च(द्वितीये)
हन्यात्तथैव च तमस्वि(स्त्वि)ति केचिदाहुः ॥ ३ ॥

नवांश(शा) भ्रातृभावे स्युया(र्या)वन्तोऽब्जकुजेऽक्षितः(ताः) ॥
तत्संख्याः सहजा ज्ञेया दृष्टा अन्यैश्च योषितः ॥ ४ ॥

॥ इति सहजभावाश्रितग्रहविशेषफलम ॥

---

## ॥ अथ सहजस्वामिनो द्वादशभावफलं ॥

सहजपतौ लग्नगते वाग्वादी लंपटः स्वजनभेदी ॥
सेवापरः कुमित्रः क्रूरवो(व)[चा] भवति पुरुषश्च ॥ ५ ॥

धनगृहगे सहजेशे भिक्षुर्विधनोऽल्पजीवितः पुरुषः ॥
बंधुविरोधी क्रूरे सौम्ये पुनरीश्वरः खचरे ॥ ६ ॥

सहजगतः सहजपतिः समसत्वं सुहृदं शुभस्वजनं ॥
देवगुरुपूजनरतं नृपलाभपरं नृपं कुरुते ॥ ७ ॥

भ्रातृपतौ तुर्यगते पितृसोदरसुखकृदुदयकृत्तेषां ॥
मात्रा सह वैरकरः पितृवित्तभक्षकः पुरुषः ॥ ८ ॥

१ रवौ नवमे स्वक्षेत्रगे पित्रा सह सहजस्य नाशः। तृतीये रवौ तृतीये वत्सरे, शनौ षष्ठे वत्सरे, कुजे द्वितीये वत्सरे, राहौ द्वितीये वत्सरे ज्येष्ठभ्रातृनाशः स्यादिति तात्पर्यम् ।

दुश्चिक्यपतौ सुगते(तगे) सुबान्धवसुतसहोदरैः पाल्यः ॥
दीर्घायुर्भवति नरः परोपकारैकनिरतमतिः ॥ ९ ॥

षष्ठगते सहजविभौ बन्धुविरोधी नयनरोगी च ॥
मूलाभी भवति भृशं कदाचिदपि [१]रोगरयकलितः ॥ १० ॥

सहजपतौ सप्तमगे नरस्य भार्या भवेत्प्रवररूपा ॥
सौभाग्यवती युवती क्रूरे देवरगृहे याति ॥ ११ ॥

भ्रातुः प्रभुरष्टमगः सरुजं मृतसोदरं कुरुते ॥
क्रूरे(रोऽ)बाहुं(हुं) पंगुं जीवति यद्यष्टवर्षाणि ॥ १२ ॥

धर्मे(र्म)गते सहजपतौ क्रूरे बन्धूज्झितस्तथा सौम्ये ॥
सद्बान्धवश्च सुकृती सोदरभक्तो भवति मनुजः ॥ १३ ॥

दुश्चिक्येऽशे दशमे नृपपूज्यौ(ज्यो) मातृबन्धुपरिभक्तः ॥
उत्तमबन्धुर्बन्धुषु विनिश्चितो जायते मनुजः ॥ १४ ॥

लाभस्थः सहजेशः सुबान्धवं राज(ज्य)लाभिनं कुरुते ॥
पुरुषं बन्धुषु सेवा(सुसेवं) [२]विविधायिनं भोगवि[षय]रजं(तं) ॥ १५

व्ययगे दुश्चिक्येशे मित्रविरोधी स्वबन्धुसन्तापी ॥
दूरे वासितबन्धुर्विदेशगामी नरो भवति ॥ १६ ॥

॥ इति सहजस्वामिनो द्वादशभावफलम् ॥

---

१ रोगस्य रयो वेगः तेन कलितः मध्ये मध्ये क्रूरतमेन रोगेण पीडित इति तात्पर्यम् । २ विविधः आयः लाभः अस्यास्तीति विविधायी तं ।

## ॥ अथ तृतीयभावाश्रितप्रत्येकग्रहफलं ॥

सूर्यो धनं नख२०मिते सहजे विधुश्च
त्र्यब्जे(ब्दे)३नुजं क्षितिसुतोऽनुजमु(ह)च विश्वे१३ ॥
ज्ञोऽर्का१२ब्द्विचलयमीज्य इहाभ्रनेत्रे२०
मित्रासिर(म)त्र च सितः प्रकरोति तीर्थं ॥ १७ ॥

विक्रान्तो बलवियु(सहि)तो विनष्टसहजस्तृतीयगे सूर्ये ॥
लोके मनोऽ(तोऽ)भिरामः प्राज्ञो जितदुष्टपक्षश्च ॥ १८ ॥

गर्वी गुरुद्रोहरतो मलिम्लुचः
चन्द्रे भवेद्यः कृपणोऽतिहिंस्रः ।
तृतीयगे संग्रहवांश्च लोभ(भी)
प्रकांक्षित(सुखान्वितो) भ्रातृजनाश्रयः स्यात् ॥ १९ ॥

विक्षतगात्रः शूरो(शूरो भवत्यधृष्यो) भ्रातृवियुक्तो म(मु)दान्वितः
पुरुषः ॥
भूपुत्रः(त्रे) सहजस्थे समस्तगुणभाजनः(नं) ख्यातः ॥ २० ॥

श्रमनिरतः परिदीना(न)स्तृतीयराशौ बुधे भवति निपुणः ॥
[सचलः] सहजसमेतो मायाबहुलो नरः स्खलितः ॥ २१ ॥

अतिपरिभूतः कृपणः सहजजितो(सदा जितो) मानवो भवति जीवे ॥
मन्दाग्निः स्त्रीविजितो दुश्चिक्ये पापकर्मा च ॥ २२ ॥

सुत(ख)धनर(स)हितं शुक्रो दुश्चिक्ये स्त्रीजितं तथा कृपणं ॥
जनयति मन्दोऽत्साहं सौभाग्यपरिच्छदातीतं ॥ २३ ॥

मलिनः संतत(सहज)देहो नीचोऽलसपरिजनो भवति सौरे ॥
शूरो दाता(ना)नुरतो दुश्चिक्ये(क्य)[गते] पापकर्मा च(विपुलबुद्धिः) ।
॥ २४ ॥

॥ इति तृतीयभावाश्रितप्रत्येकग्रहफलम् ॥

॥ इति श्रीजातकसारदीपे सहजभावचिन्ताध्याय एकचत्वारिंशः ॥

---

## ॥ अथ सुहृद्भावचिन्ताध्यायो द्विचत्वारिंशः ॥

### चतुर्थस्थानगतग्रहविशेषफलम्

स्वस्वामिशुभषु(भयु)ग्दृष्टं चतुर्थं मित्रसौख्यदं
ब(ब्र)ध्नो भौमेन संदृष्टः कुरुतेऽत्र सुहृत्क्षयं ॥ १ ॥

यवनः—

चन्द्राद्विलग्नाच्च रविश्चतुर्थे
कुर्यासि(त्पि)तृद्रव्यगृहास्पदं च ।
शुक्रस्तु दाराश्रयसौख्यवृत्तं(त)·
सवस्त्रसौभाग्यगृहं प्र(हाणि) दद्यात् ॥ २ ॥

[1]गुरुस्तु यत्नाहितबन्धुसौख्यं
श्रमे(चन्द्रः) परोवास(रक्षेत्र)कृताधिवासम् ।
सुदुःखितं ज्ञोऽन्यगृहाटनानां(ढ्यं)
कुजोऽर्कजो दासगृहालयानां(यं च) ॥ ३ ॥

---

१ गुरुरित्यादीनामध्याहृतेन कुर्यादित्यनेन संबंधः । दासगृहा एव आलयो यस्य सः दासगृहालयः । तं ।

पापश्चतुर्थे परवेश्मसंस्थं
तदीक्षितेऽन्यैः शुभदैरदृष्टे ।
करोत्यसंस्थानपरोपतापं
प्राय(यः) स्वबन्धूद्भवजं च दुःखः(खं) ॥ ४ ॥

**हिल्लाजे—**

तुर्ये रविर्मनुमिते १४ कलहं हि चन्द्रो
द्व्यब्द२२पुत्रमसृगष्ट८सहोदरार्तिं ।
ज्ञो वित्र(त्त)हा यमयमै२२र्गुरुराकृतौ २२ स्वं
शुक्रोऽनुजे (जैः) सुखमथो कुन(ज)वच्छनिश्च ॥ ५ ॥

॥ इति चतुर्थस्थानगतग्रहविशेषफलम् ॥

---

## ॥ अथ चतुर्थस्थानगतद्विग्रहयोगफलम् ॥

**सारावल्यां—**

बान्धवसुते(त)सुखहीनो दारिद्र्ययुतो महाजडप्रकृतिः ॥
सूर्ये रसातलस्थे शशांकसहिते पुमान्जातः ॥ ६ ॥

बन्धुजनमित्रहीनः समस्तसुखवर्जितस्तथा क्षुधि(भि)तः
सूर्यकुजयोश्चतुर्थे भवति नरः सर्वतो द्वेष्यः ॥ ७ ॥

नृपतिसमो विख्यातो गृहीतवाक्यः(काव्यः) कुबेरसमविभवः ॥
सूर्यबुधयोश्चतुर्थे स्थूलतनुविभ्रालश्च(नुर्वक्नासश्च) ॥ ८ ॥

श्रुतिनीतिकाव्यनिरतं भव्यं जनसंमनं(पदं) प्रियालापा(पम्) स्तु ॥
सूर्यसुरेज्यौ हिबुके भृत्या(के निभृता)चारं नरं कुरुतः ॥ ९ ॥

आदित्ये हिबुकस्थे भार्गवसहिते [नरो] भवेज्जातः ॥
परभृत्यः शोकार्तो लोकद्वेष्यो दरिद्रश्च ॥ १० ॥

सूर्यश्च(र्ये च)तुर्थराशौ शनैश्चरसमन्वितो(ते) भवति ॥
नीचो दारिद्र्यहतः प्रेष्यः परबन्धुपरिभूतः ॥ ११ ॥

सक्लेशो निर्द्रव्यो बान्धवसुखवाहन(ना)स्पदसुख(त)विहीनः ॥
पाताले शशिकुजयोर्विकलश्च भवेन्नरो जातः ॥ १२ ॥

बन्धुसुहृत्तनयन(त्तनय)सुखप्रतापकाता(हेमा)श्वरत्नसंयुक्तः(क्तं) ॥
जनयति बोधनसहितो हिबुकोऽपगतो निशानाथः ॥ १३ ॥

मन्त्री नृपसमः शास्त्रसुखबन्धुसमन्वितः ॥
महाविभवसंपन्नश्चतुर्थे चन्द्रजीवयोः ॥ १४ ॥

जलपा(नप्रि)योऽगनाबन्धुसौख्यभाग्भोगसंयुतः ॥
जलयानादवासस्वश्चतुर्थे शशिशुक्रयोः ॥ १५ ॥

श्रेष्ठः स्यात्सम्मतो वारिपा(पो)तेन खननेन च ॥
मणिमुक्तादिभिर्जीवेच्चतुर्थे चन्द्रमन्दयोः ॥ १६ ॥

मत्र(अन्न)वाहनवित्तानां भोगभाक् शत्रु(बन्धु)निर्जितः ॥
जायते बान्धवैर्हीनश्चतुर्थे भौमसौम्ययोः ॥ १७ ॥

सुहृद्बान्धवसंपन्नः स्थिरविज्ञः(त्तः) सुखान्वितः ॥
गुरुदेवरतो भूपसेवी बंधो(धौ) कुजेड्ज्ययोः ॥ १८ ॥

बन्धुमि(पु)त्रसुहृद्धीनोऽर्दितो मानसपीडया ॥
नानादुःखैश्च सन्तप्तश्चतुर्थे भौमशुक्रयोः ॥ १९ ॥

प्रभूतशत्रुर्मतिमान् बन्धुमित्रोप्रतापवान्(त्रविवर्जितः) ॥
भवेदुदररोगार्तश्चतुर्थे भौममन्दयोः ॥ २० ॥

¹सुजिह्वः शुभशीलः स्याद्विद्वान्नृपतिसत्कृतः ॥
(बन्धुमित्रसुखार्थस्त्रीसौभाग्यसहितो नरः ।)
निपुणो ज्ञेज्ययोर्बुधौ देशेशो नृपसम्मतः ॥ २१ ॥

बन्धुमित्रसुतैर्युक्तो भूपतिः सचिवोऽथ वा ॥
कल्याणभाक्सुखी सौ(ग्यभाक्सौ)म्यशुक्रयो(यो)र्हिबुकस्थयोः ॥ २२ ॥

पाता(ना)न्नबन्धुरहितः स्वजनैश्च तिरस्कृतः ॥
मूर्खो(ढो) मित्रोऽज्झितः सौम्यमन्दयोर्हिबुकस्थयोः ॥ २३ ॥

जितारातिः सुहृद्वित्तवाहनैः सहितो भवेत्(स्वजनैर्युतः) ॥
गुरुद्विजामररतश्चतुर्थे जीवशुक्रयोः ॥ २४ ॥

अरोगः सचिवो बन्धुसुहृद्भिश्च क्ष(ज)योदयी ॥
न चा(संप्री)तिध[न]सौख्यः स्याच्चतुर्थे जीवमन्दयोः ॥ २५ ॥

मित्रेभ्यो लभते वित्तं बन्धुभिः सत्कृतस्तथा ॥
नृपतेः सम(तेराप्त)तां याति चतुर्थे शुक्रमन्दयोः ॥ २६ ॥

॥ इति चतुर्थस्थानगतद्विग्रहयोगफलम् ॥

---

१ इदं श्लोकार्धं बुधगुर्वोर्लग्नस्थितिफलपरं । अतस्तत्स्थाने कुण्डलीगतं मदीयं श्लोकार्धं पठनीयं ।

## ॥ अथ चतुर्थस्थानगतप्रत्येकग्रहफलम् ॥

यवनः—

चतुर्थे भास्करे सौख्यं(ख्य)बन्धुमित्रवि(वाहन)वर्जितः ॥
[1]भवेत्क(त्कु)[नृ]पसेवी च (पितृगेहार्थनाशकृत् ॥ २७ ॥

चन्द्रे चतुर्थगे दाता सबन्धुः सपरिच्छदः ॥
सुखासुखोऽत्कर्षहीनो जलचारी सवाहनः ॥ २८ ॥

विवाह)नः कुजे बन्धुपरिच्छदविवर्जितः ॥
अतिदुःखैश्च संतप्तश्चतुर्थे स्थानसंस्थिते (न्यगृहाश्रयः) ॥ २९ ॥

पण्डितो प(तः पि)ण्डितभुजः सुभगः सपरिच्छदः ॥
वाहनैर्बन्धुभिर्युक्तश्चन्द्रपुत्रे चतुर्थगे ॥ ३० ॥

चतुर्थे वाक्यवौ(क्पतौ) भोगस्वजनार्थसुखान्वितः ॥
श्रेष्ठ(ष्ठः) शत्रुविषादी च सवाहनपरिच्छदः ॥ ३१ ॥

शुक्रे बन्धुभिर्यु क्त(न्धुसु)हृत्सौख्यसत्परिछदवाहनैः ॥
युतः सुललितः कान्तस्त्वदीनः सुभगः सुखी(खे) ॥ ३२ ॥

वाल्ये व्याध्यन्वितः सौर(रे) सुखे पीडितमान[स]ः ॥
सौख्या(ख्य)वाहन[बं]ध्वं(ध्व)र्थविहितो(धीहीनो) नखरोग(म)भृत्
॥ ३३ ॥

---

१ अत्र चतुर्थगतरविफलप्रतिपादनपरश्लोकस्य चतुर्थः पादः, चतुर्थगतचन्द्रफलप्रतिपादनपरः श्लोकः, चतुर्थगतकुजफलप्रतिपादनपरश्लोकपूर्वार्धे आदिभागश्च मूलकोशे न संति। तत्स्थाने कुण्डलीगतः श्लोकः पठनीयः।

## ॥ अथ चतुर्थस्वामिनो द्वादशभावाश्रयफलम् ॥

**जन्मप्रदीपे—**

तुर्यपतिर्लग्न[ग]नः पितृपुत्रौ स्नेहकौ मिथः कुरुते ॥
पितृपक्षवैरकलितं पितृनाम्ना सुप्रसिद्धं च ॥ ३४ ॥

पातालपे धनस्थे क्रूरखगे पितृविरोधकृच्च शुभे ॥
पितृपालकः प्रसिद्धः पिता भुव(न)क्ति च तल्लक्ष्मीं ॥ ३५ ॥

तुर्यस्थे(र्येशे) सह[जे] चेत्पितृमातृच्छेदकं विदितपितरम् ॥
पित्रा सह [वाद]करं पितृबान्धवपालकं पुरुषं ॥ ३६ ॥

तुर्यगतेऽर्थमजे तु(र्थयुतस्तु)र्यपतौ क्षितिपाधिनाथश्च ॥
मानकरः विदितपितृ(ता) लोभपरो भवति सुर(श)र्मा सुखी निधिपः
॥ ३७ ॥

सुतगे तुर्यगृहेशे पिता सलाभोऽगजश्च दीर्घायुः ॥
भवति क्षितिप्रसिद्धः समु(सु)तः सुतपालकः सोऽपि ॥ ३८ ॥

हिबुकपतौ रिपु[सं]स्थे पितुरर्थविनाशकः पितरि वैरी ॥
पितृदोषकरः क्रूरे सौम्य(म्ये) धनसंचकस्त(यी त)नयः ॥ ३९ ॥

अंबुपतौ सप्तमगे क्रूर(रे) श्वशुरं स्नुषा न पालयति ॥
सौम्ये पालयति पुनः क(कु)लटां तां कुजकवी कुरुतः ॥ ४० ॥

छिं र(द्र)गतस्तुर्य(स्तुर्य)पति(तिः) क्रूरो रोगान्वितं दरिद्रं वा ॥
दुष्कर्मरतं मृत्युप्रियमथ वा मानवं कुरुते ॥ ४१ ॥

सुकृतगते तुर्यपतौ पितर्यसमां(तुरधिकः) समस्तविद्यावान् ॥
पितृधर्मसंग्रहपरः पितृनिरपेक्षो भवेन्मनुजः ॥ ४२ ॥

पाताल्प(पें ऽ)वरगते पापे सुतमातरं स(त्य)जेज्जनकः ॥
श्रयते त्वन्यां दयितां सौम्ये पुनरन्यसेवावान् ॥ ४३ ॥

एकादशगे तुर्याधिपतौ पितृपालकः सुकर्मा च ॥
पितृभक्तो भवति सुतः प्रचुरायुर्व्याधिविकलश्च ॥ ४४ ॥

द्वादशगे तुर्यपतौ मृतः पिता वा विदेशगो वाच्यः ॥
पुत्रस्य पापखचरे त्वन्यपितुर्जन्म निर्देश्यं ॥ ४५ ॥

इति चतुर्थस्वामिनो द्वादशभावाश्रयफलम्

॥ इति श्रीजातकसारदीपे सुहृद्भावचिन्ताध्यायो द्विचत्वारिंशः ॥

---

## ॥ अथ सुतचिन्ताध्यायस्त्रिचत्वारिंशः ॥

### पुत्रस्थानगतग्रहविशेषफलम्

#### पुत्रलाभयोगः

चंद्राद्विलग्नादपि पुत्रभावः
स्वनाथसौम्यग्रहदृष्टयुक्तः ।
अपत्यसंभूतिकरो नराणां

#### पुत्रालाभयोगः

तदन्यथा स्यात्तदलाभहेतुः ॥ १ ॥

प्रकारान्तरेण पुत्राभावयोगः

[1]लग्नेन्द्वोर्बलतः सुते खलखगे संतत(त्य)भावो..................

..........लक्षितेऽर्भकलयो मूर्खः शनौ पंचमे ॥ २ ॥

औरसपुत्रयोगः

(लग्नेऽद्वोर्बलतः सुते शुभगृहे देवेज्यवर्गे शुभै

दृष्टे स्वौरसपुत्रभागथ

पुत्रसंख्या

सुते सौम्यांशतुल्याः सुताः ।

द्विघ्नास्ते शुभदर्शने

पुत्रनाशयोगः

खललवे नष्टाः खलालोकिते

कन्याजननयोगः

कन्याः स्युः समभे सितेन्दुयुजि वा दृष्टे सुते तद्गणे ॥ २ ॥)

प्रकारान्तरेण पुत्राभावयोगः

**यवनः—**

सूर्यार्किभौमे(मै)कतराश्रिते[2] भे

तद्वीक्षिते तद्गृहभाग(नो सुतलाभ)योगः ।

एषां गृहस्थे च कुजेऽल्पवीर्ये

समुद्भवः का(की)र्तित आ(अ)प्रजानां ॥ ३ ॥

---

१ अयं श्लोकः अपूर्णः । तत्स्थाने कुण्डलीगतो मदीयः श्लोकः पठनीयः ।

२ भे पुत्रराशाविति तात्पर्यम् ।

प्रकारान्तरेण पुत्रनाशयोगः

नीचारिभांशौ(शो)पगते जिते स्यात्
काव्ये कुजे जन्म मृतप्रजानां ।

प्रकारान्तरेण कन्याजननयोगः

शुक्रेऽन्दुभस्ते(भांशे) च सुताप्रजानां

पुत्रजननयोगः

शेषा(षां)शकस्थे तु सुतप्रजानां ॥ ४ ॥

[1]हन्तारस्तनयान्सुते यदि सितेऽज्याभ्यां च दृष्टस्तदा(ष्टाः खलाः)
दा यं दास्या(सीजा)नि सितेऽक्षिते सितलवेऽपत्यानि [2]केचिद्बुधाः ।

([3]पुत्रान् हन्ति कुजः सुते प्रथमजं शुक्रेऽज्यदृष्टोऽपरै
नों दृष्टोऽथ

दासीभवपुत्रयोगः

कवीक्षिते कविलवे दासीजपुत्रः सुते ।)

एकपुत्रयोगः

[4]षट् ६ ब्ज चंद्रेऽन्त्य १२ रवौ स्त्रियैकनयनः सार्धं तथैकात्मजो

---

१ अत्र सारावळ्यनुसृतः पाठः कुण्डलीगतोऽनुसंधेयः । २ दासीप्रभवयोगोऽयं न केवलं लग्नात्, अपि तु चन्द्रादपि विचार्य वक्तव्य इति केचिदाचार्या वदन्ति इति भावः । ३ पंचमे कुजे सकलपुत्रनाशः । तस्मिन्नेव गुरुशुक्रदृष्टे अन्यैःदृष्टे च प्रथमपुत्रनाशः । पञ्चमे शुक्रनवांशयुते शुक्रदृष्टे च दास्यां पुत्रोत्पत्तिः । इति त्रयो योगाः । ४ षष्ठे चन्द्रे, द्वादशे रवौ पत्न्या सार्धमेकनेत्र एकपुत्रश्च भवति । इत्येको योगः । खोम्राभ्रेन्दुमदास्फुजित्सु, खे सुखे तुर्ये इति यावत् , तत्रउग्रेषु, अभ्रे दशमे इन्दौ, मदे सप्तमे आस्फुजिति शुक्रे, कलहः स्यात् । वन्ध्यः पुत्रहीनश्चायं स्यादिति द्वितीयो योगः । त्रिपञ्चाद्यसृक् तृतीये, पञ्चमे, आदौ प्रथमे, असृक् अंगारको यस्य तादृशोऽपि वन्ध्यः स्यादिति योजना । अयं तृतीयो योगः ।

प्रकारान्तरेण पुत्राभावयोगः

दू(लो) ४ आत्रे १० दुमदा ७ स्कु(स्फु)जिसु(त्सु)फकहा(हो)
वंध्यक्लिपंचाढ्यः(ढ्य)१-५-१ स्फु ॥ ५ ॥

सौम्यदृष्टी(ष्टि)विहीने च(च) पापैर्बलिभिरन्विते
पापभे पंचमे तत्र ह्यनपत्यो भवेन्नरः ॥ ६ ॥

वंशच्छेदयोगः

लग्नाद्दशमगे चन्द्रे भार्गवे सप्तमस्थिते ॥
अशुभेषु सुख(ख)स्थेयु(षु) वे(वं)शच्छेदोऽस्य जायते ॥ ७ ॥

**सारावळ्यां—**

पंचमगतसकलपापफलम्

धनजनसुखहीनः पंचमस्थैश्च पापै

पंचमगतकुजफलं

भवततिकृत(ति विकल) एव क्ष्मासु(सु) स्थे ते तत्र जातः ।

पंचमगतशनिफलम्

दिवसकरसुते च व्याधिभिस्तप्तदेहो

पंचमगतसकलशुभफलम्

बुधसुरगुरुशुक्रैः सौख्यसंपज्ज(द्ध)माढ्यः ॥ ८ ॥

क्षेत्रजपुत्रयोगः

सौरक्ष(र्क्षे) सौरगणे(णो) बुधदृष्टेज्यः(दृष्टश्चेज्य)कुजार्किदृग्वीनः ॥
क्षेत्रश्च(ज)पुत्रं जा(ज)नयति बौधोऽपि गणो रविजदृष्टः ॥ ९ ॥

दत्तकपुत्रयोगः—क्रीतपुत्रयोगश्च

मा(मां)दं सु(सु)तर्क्षमिन्दुर्निरीक्ष्य(क्ष)ते यदि शनैश्चरेण युतः(तं) ॥
दत्तकपुत्रोत्पत्ति(त्तिः) क्रीतस्य पुत्रस्य(बुधेन) चैवं स्यात ॥ १० ॥

कृत्रिमपुत्रयोगः

सप्तमभागे कौजे सौरयुते पंचमे सदा भवने ॥
कृत्रिमपुत्रं विधाच्छ(च्छे)षग्रहदर्शनान्मुक्ते ॥ ११ ॥

प्रयत्नेन पुत्रलाभयोगः

पंचमराशौ वर्गे सौरे सूर्ये च तत्र संयाते ॥
लोहितदृष्टे वाच्यो जातस्य सुतोऽधर्म(धम)प्रभ(स)वः ॥ १२ ॥

गूढोत्पन्नपुत्रयोगः

चन्द्रे भौमांशगते धीस्थे मन्दावलोकिते भवति ॥
गूढोत्पन्नः पुत्रः शेषग्रहदर्शनायाते ॥ १३ ॥

अपविद्धपुत्रयोगः

तस्मिन्नेव महीजे शनिवर्गस्थे निरीक्षिते रविणा ॥
पुरुषस्य भवति पुत्रोऽप रि विद्धश्चेति [कल्याण]मुनिवचनात् ॥ १४ ॥

### पौनर्भवपुत्रयोगः

शनिवर्गस्थे चन्द्रे शनियुक्ते पंचमे सदा भवने ॥
शुक्ररविभ्यां दृष्टे पुत्रः पौनर्भवो भवति ॥ १५ ॥

### सहोढपुत्रयोगः

वर्गे रविचन्द्रमसोः सुतगेहे चन्द्रसूर्यसंयुक्ते ॥
शुक्रेण दृष्टमात्रे पुत्रः कथितः सहोढश्च ॥ १६ ॥

॥ इति पञ्चमस्थानगतग्रहविशेषफलम् ॥

---

## ॥ अथ पंचमस्वामिनो द्वादशभावफलम् ॥

**जन्मप्रदीपे—**

लग्न[ग]तः पंचमयः(पः) प्रसिद्धमस्तोकतनय[परि]कलितं ॥
शास्त्रविदं गीतविदं सुकर्मणि परं नरं कुरुते ॥ १७ ॥

पंचमपतिर्धनस्थः क्रूरः खचरो धनोस्मि(ज्झि)तं कुरुते ॥
गीतादिकलाकलितं कष्टभुजं स्थानकमवरं ॥ १८ ॥

तनयपतिः सहजगतः समधुरवाचं सुबन्धुजनविदितं ॥
कुरुते [1]सुतास्तदीयास्तनयाः परिपालयंति तद्बन्धुं ॥ १९ ॥

सुतपः पातालगतः पितृकर्मणि (रतं) प्रपालिते(तं) पित्रा ॥
जननीभक्तं कुरुते क्रूरस्तु विशो(रो)धकं पितरि ॥ २० ॥

---

१ सुताः पुत्राः । तनयाः कन्याः

तनयगतस्तनयपतिर्मतिमंतं मानिनां(नं) वचनकुशलं ।
सुतकलितं प्रवरजनख्यातं वै मानवं कुरुते ॥ २१ ॥

पंचमपतिश्च षष्ठे [1]शत्रुप्रतिमांगसंभवं दीनं ॥
रोगधनं धनरहितं क्रूरः खचरः करोति नरं ॥ २२ ॥

तनयपतौ सप्तमगे ससुता सुभगाऽथ देवगुरुभक्ता ॥
प्रियवादिनी सुशीला नरस्य ननु जायते दयिता ॥ २३ ॥

सुतपे निधनगृहस्थे कुवाक्कुरु(सु)तो नि(निः)स्त्रियो भवति चंडः ॥
नष्टव्यंगाः स ह(गा दुः)स्थास्तनयाः संभवंति तथा ॥ २४ ॥

सुकृतगति(त)स्तनयम(प)तिः सुबोधविद्याकविं सुगीतज्ञं ॥
नृपपूजितं सुरूपं नाटकरसिकं नरं कुरुते ॥ २५ ॥

सुर(त)पतिं(ति)ख(रंब)रलीनो नृपकर्माणं नृपात्कलितभावं ॥
सत्कर्मरतं प्रवरं जनमीकृतशतसुखं कुरुते ॥ २६ ॥

सुतनाथे लाभस्थे शूरः सुनवान् सुकृत्यकृतभोगी ॥
गीतादिकलाकलितो नृपे(पो)ऽभीजा(र्जा)यते जातः ॥ २७ ॥

पंचमपे द्वादशगे क्रूरे सुतविरहितः शुभे ससुतः ॥
सुतसन्तापपरः स्याद्विदेशगमनोऽथतो मनुजः ॥ २८ ॥

॥ इति पञ्चमस्वामिनो द्वादशभावफलम् ॥

---

१ शत्रुप्रतिमः शत्रुसदृशः अगसंभवः°पुत्रो यस्य सः । तं ।

## ॥ अथ पंचमभावाश्रितप्रत्येकग्रहफलम् ॥

### हिल्लाजे—

पुत्रे रविः(वौ) पितृमृतिं [1]न(तिर्न)वमेऽ ९ थ चंद्रः(न्द्रे)
षष्ठंग्र(ष्ठेऽ ६ ग्नि)भीर्धरिणी(रणि)जेऽनुजहा शरद्व(राब्दे) ५ ॥
मातुर्लयं रसयमे २६ विदथाऽमि(म)रेज्येऽ(ज्योऽ)
गे ७ मातुलार्तिमुशनाः शर ५ वर्षलक्ष्मां(क्ष्मीं) ॥ २९ ॥

### होराप्रदीपे—

सुतार्थहीनश्चफ(प)लश्च धीमान्
कान्तारदुर्गानुचरः सुत(तेऽ)र्के ।
वस्त्राम्नविद्यात्मजमित्रसौख्य
धीतीक्ष्ण(तैक्ष्ण्य)शौर्यैश्च युतः शशांके ॥ ३० ॥
चन्द्रे विचित्रव्यसनोऽपचारः
प्रनष्टमित्रात्मज [2]आहुरन्ये ।
कुजेऽर्थसौख्यात्मजमित्रहीनो
नीचः खलः स्याद्व्यसनोऽपतप्तः(त्पिशुनोऽज्ञहीनः) ॥ ३१ ॥
बुधे च विद्यासुतहर्षयुक्तो
मंत्राभिचारे कुशलः सुतस्थे ।

---

१ नवमे इत्यस्याध्याहृतेन वत्सरे इत्यनेनान्वयः । एवं षष्ठे इत्यादावपि बोध्यम् । २ चन्द्रे पंचमगे पुत्रमित्रात्मजलाभ इत्येकं मतम्, तन्नाश इत्यपरं मतम् । चन्द्रे पूर्णे मित्रात्मजलाभः, क्षीणे तन्नाश इत्येवं व्यवस्थाश्रयणे मुनिमतयोरु-भयोरप्यविरोधः ।

प्राज्ञः सुखी मित्रसुतैः समृद्धो
धीरः सुरेज्ये विभवो(वी) प्रभूष्य:(ष्ट:) ॥ ३२ ॥

मन्त्री च भूपोऽथ(मित्रार्थ)सुखात्मजाढ्यः
शुक्रे सुतस्थे रतितत्परोऽन्ये[1] ।
[2]प्रोक्तो(क्तौ)गता(ना)यानकृतापराधः
कन्याप्रजः प्रीत्युपशान्तवैरः ॥ ३३ ॥

सुता(खा)र्थमित्रात्मजबुद्धि(बुद्धि)हीनः
सोन्माद एनो(ने) सुतगेऽतिदीनः ।
[3]परात्मजो भीरुरसद्गुणस्तु
ततो निरुक्तो यवनैः पुराणैः ॥ ३४ ॥

॥ इति श्रीजातकसारदीपे सुतचिन्ताध्यायस्त्रिचत्वारिंशः ॥

---

## ॥ अथ रिपुचिन्ताध्यायश्चतुश्चत्वारिंशः ॥

**होराप्रकाशि**[कायां]—

षष्ठस्थानगतग्रहविशेषफलम्

रिपुं(पून्) कुर्यात्कुजः षष्ठो(ष्ठे) विलग्नस्थ(ग्नाच्छ)निवीक्षितः ॥

साधारणशत्रुभययोगः

सौम्ययुक्तो(क्तेऽ)क्षिते भौमे नात्यंतमरिजं भयं ॥ १ ॥

---

१ अन्ये उत्तरार्धोक्तरीत्या आहुः इति योजना । २ अंगनायानः अंगनाविषये कृतापराधश्चेति भावः । अंगनासु यानं गमनं यस्य सः । अर्थात् परांगनासंगवानिति लभ्यते । ३ परात्मजः परः परोत्पन्नः आत्मजो यस्य सः । अस्य पुत्रा नोत्पद्यन्ते । परपुत्रपोषणेनैव कृतार्थः स्यादिति भावः ।

नियमेन शत्रुभययोगः

षष्ठे पापाक्रान्ते शत्रुभयं भवति नियमेन ॥

शत्रोर्मित्रत्वयोगः

[1]सौम्याक्रान्ते सौम्ये क्षितितनये भवति शत्रुमित्रत्वं ॥ २ ॥

विषशस्त्रदाहादियोगः

षष्ठाश्रितोऽर्को विषशस्त्रदाह
क्षुद्वीप(द्रोग)शत्रुव्यसनोऽपतप्तं ।
काष्ठाश्मघाताधिविशीर्णदेहं
सूतेऽद(थ) वा दंष्ट्रिनखक्षतांगं ॥ ३ ॥

जलोदररोगयोगः

जलोदरेणामथ(य)जैवि(विं)कारै
श्चन्द्रो(न्द्रो) बुधे(जै)र्वाप्यु[प]तप्तदेहं ।

शोफक्षययोगः

स एव शोप(फ)क्षयमृत्युकृत्स्या
दत्रैव सूर्येण विमिश्रमूर्तिः ॥ ४ ॥

किलासकुष्ठादिचर्मरोगयोगः

मीनांशके मेषगृहांशके वा
चन्द्रा(द्रः) स्थितोऽत्रे(त्रै)व हि पापदृष्टः ।

१ षष्ठे सौम्यग्रहराशौ, सौम्यग्रहयुक्ते, तत्रैवाङ्गारके शत्रवो मित्राण्यस भवन्तीति भावः ।

किलासकुष्ठादिविनष्टदेह

कन्दुरोगयोगः

मिष्टी(ष्टे)क्षितः कन्दुविकारिणं च ॥ ५ ॥

गुल्मरोगयोगः

षष्ठे स चेद्वृश्चिककर्कटांशे
कुजेऽक्षिते(तो) गुल्मरुगार्दितांगं ।

वातरक्तरोगयोगः

शौर(सौरेऽ)क्षितो मारुतशोणितार्थ(ढ्यं)

हृद्रोगयोगः

हृद्रोगिणं सूर्यगृहांशकस्थः ॥ ६ ॥

नेत्ररोगाग्निदाहयोगौ

शस्त्रप्रहाराक्षिरुगग्निदाह
प्रतप्तमिन्दुः क्षितिसूनुयुक्तः ।

वाताश्मचतुष्पदमरणयोगः

सौरेण षष्ठे तु विमिश्रमूर्ति
नि(र्नि)हन्ति वाताश्मचतुष्पदाद्यैः ॥ ७ ॥

रक्तनेत्रामययोगः

कुजोऽब्य(न्य)सृक्शस्त्रपरिक्षतांगं

शिरोरोगयोगः

[1]दृग्या वन चा(दृगामयैः पित्तरुजा युतं च ।)

**सौरः शिरोश्मानिनिवापाता**
**ह्विभुज्य पापोपहृतं च कुर्यात् ॥ ८ ॥**

(सौरः शिरोरोगिणमश्मवातं
रुग्भग्नपादं विहृतं च कुर्यात् ।)

स्खलितप्रपातादिना भग्नांगयोगः

बुधः [2]क्षितिप्रसह्लि(स्खलि)तप्रपात
लोष्टाहताङ्गं जितविद्विषं च ।

रिपुवधयोगः

ख्यातं रिपु(पौ) द्वेष(षि)भव(वध)प्रसक्त(क्तं)
प्रस्वस्थदेहं भृगुसूनुजीवौ ॥ ९ ॥

[3]त्रिकोणकेन्द्रोपगतास्तु सौम्याः
पापा यथोऽक्तं विनिवर्तयन्ति ।

मृत्युवैकल्ययोगौ

पापेक्षितास्ते त्वशुभांशसंस्थाः
कुर्वन्ति मृत्युं विकलांगतां वा ॥ १० ॥

---

१ अयं पादो न पूर्णो मूले । उत्तरार्धं च दुर्बोधं । तत्र मभिर्मितः पाठोऽनुसर्तव्यः । २ क्षितौ प्रस्खलितेन स्खलनेन, ...तेन ऊर्ध्वदेशात्पतनेन, लोष्टैरश्मभिश्च आहतांग । ३ त्रिकोणकेन्द्रोपगताः सौम्याः पापा वा ग्रहाः यथोक्तं पूर्वोक्तप्रकारेण

### चोरयोगः, करपादनाशयोगश्च

षष्ठस्थाने बुधारौ चे(चे)त्तदा भवति तस्करः ॥
स्वकर्मणः प्रभावेन करौ पादौ विनश्यतः ॥ ११ ॥

॥ इति षष्ठस्थानगतग्रहविशेषफलम् ॥

---

## ॥ अथ षष्ठस्वामिनो द्वादशभावाश्रयफलम् ॥

**जन्मप्रदीपात्—**

षष्ठेशे लग्नगतेऽनि(ति)रुक् सबलः कुटुंबकष्टकरः ॥
बहुप(भ)क्षो रिपुहन्ता भवति नरः स्वैरचव(वच)नधनः ॥ १२ ॥

षष्ठपतौ द्रविणस्थे दुष्टश्चतुरो हि संग्रहयतिष्ठः ॥
स्थानप्रवरो विदितः सव्याधिस्तनुजहृतवित्तः ॥ १३ ॥

षष्ठपतिः सहजस्थः क्रूरः कुरुते सुलोककष्टकरं ॥
जनकरमारमणरतिं रतिकष्टं ग्रामतस्तस्य(वित्रस्तं)॥ १४ ॥

षष्ठाधिपवि(ति) ष स्तुर्ये पिकु(तृ)तनयो(यौ) वैरिणो(णौ) मिथः कुरुते ॥
[1]संकटजसुतपितासौ(युक्सुततातो) ध[न]लक्ष्मीं लभते नरः सुचिरं
॥ १५ ॥

---

वक्ष्यमाणप्रकारेण च फलं विनिवर्तयन्ति। ते शुभाः पापाश्च ग्रहाः नापेक्षिताः पापांशकस्थाश्च मृत्युं अंगवैकल्यं वा कुर्युरिति भावः। १ अस्य सुतस्तातश्च दरिद्रौ, अयं च लक्ष्मीयुत इति भावः।

रिपुभवनपतौ सुतगे पितृसुतयोर्वै(वैं)रता मूर्ति(तिः) सुतत ॥
[1]क्रूरे(रः) [सुत]मे व(च) निर्धनपदवीदुष्टश्च(ष्टं च) तत्कलयति
॥ १६ ॥

रिपुभवनपे रिपुस्थे नीरुग्वैरी सुखी कृपणरूपः ॥
न हि जन्मतोऽपि सीदति [2]स्थानकवासी भवति नरः ॥ १७ ॥

अहितपतौ सप्तमगे क्रूर(रे) भार्या विरोधिनी चण्डा ॥
तापकरी त्वथ सौम्ये वन्ध्या व(वा) गर्भगलनपरा ॥ १८ ॥

वातरोगमरणसर्पमरणयोगौ

[3]शनेर्ग्रहणकारिज्ञो(तो) विषधराद्बनंदानेतो(रित्रीसुता)

विषमरणाकस्मिकमरणयोगौ

बु(हु)धाच्च विषदोषतः सपदि मृत्युरेणांकतः ।

सिंहादिमृगनिमित्तमरणयोगः

रवेमृ(मृ)गपतेमृ(मृ)पापापुरु(वचनतोऽ)ष्टमा(मे) षष्ठपा

पतनमरणनयनदोषयोगौ

हु(हु)रोल्परित शशी न(पतेन्न)यनदोषवान् शु[illegible]तः ॥ १९ ॥

---

१ क्रूरो रिपुभवनपतिः सुतमे निर्धनं, पदवीदुष्टं दुर्मार्गं, [illegible]यति । तत् पूर्वार्धोक्तं पितृसुतयोर्वैरादिकं च कलयति इति भावः । २ स्थानकवासी [illegible] [illegible]स्थानाधिकृत इत्यर्थः । ३ अष्टमे विषमानात् षष्ठाधिपतेः शनेः ग्रहणकारितो बा[illegible] [illegible]नतसंध्यादिग्रहणनिमित्तो मृत्युः । धरित्रीसुतात् अष्टमस्थात् विषधरात् सर्पान्मृत्युः । एवमग्रेऽपि ।

शत्रुपतिर्यदि नवमः(मे) क्रूरः खचरस्तदा भवेत् [कुमतिः] ॥
विबुधविरोधी शास्त्रं न मन्यते याचकं च गुरुं ॥ २० ॥

अरिगृहपे दशमस्थे क्रूरे मान(नि)रिपुस्तदा दुष्टः ॥
धर्मसुतपालकमतिर्मातुर्द्वेषी भवेद्वैरी ॥ २१ ॥

वैरिपतौ लो(ला)भगते क्रूरे मरणं[1] विक्षि(क्षे)पतौ(तो) भवति ॥
वैरित[स्त]स्करकेन हानिः स्याच्चतुष्पदलाभवान्मनुजः ॥ २२ ॥

षष्ठपतौ द्वादशगे चतुष्पद इव धान्यनाशकरः ॥
गमनागमनं(ने) लक्ष्म्या ह्वाद(दी) देवपरो नरो नरो भवति ॥ २३ ॥

अथ षष्ठभावस्थितप्रत्येकग्रहफलम्

........[2]शरदि स्वमरौ ६ हिमांशु
मृत्युं कुजो जनिमिते प्रददाति पुत्रं या ।
सप्तत्रिके २१ विदिरिं(दरि)भीमृतिमीज्यको(के) स्वा
ब्धौ(ब्धौ) ४० शत्रुभीः सित इलायं(क)[र] २१ शस्त्रमृत्युं ॥ २४ ॥

[श्रीमान्] षष्ठस्थिते भानावनि(ति)कामोऽदरानलः ॥
बली ख्यातगुणो भूपो दण्डनेताऽथ वा भवेत् ॥ २५ ॥

---

१ युद्धादिवार्ताश्रवणजनितेन मनोविक्षेपेण हृदयस्तंभकारणेनाकस्मिकं मरणं भवति। २ अत्राद्यानि पंचाक्षराणि मूले न संति। तानि च षष्ठस्थानस्थित-सूर्यफलपराणीति ज्ञायते। सूर्यः...शरदि स्वं षष्ठगो ददाति। षष्ठगो हिमांशुः अरौ षष्ठे वत्सरे मृत्युं, कुजो जनिमिते दिने पुत्रं ददाति। सप्तत्रिके एकत्रिंशे वत्सरे वित् बुधः, अरिभीमृतिं शत्रुभयनिमित्तमरणं ददाति षष्ठे ईज्यके खाब्धौ ४० वर्षे शत्रुभीर्भवति। सितः षष्ठगः इलाकर २१ मिते वर्षे शस्त्रमृत्युं दद्यादित्यर्थः।

लग्नात् षष्ठस्थिते चन्द्रे मृदुकायः स्वरावकः ॥
अनेकारिर्भवेत्तीक्ष्णो रिष्टं स्यान्मृत्युरेव च ॥ २६ ॥

बहुदा(हृद)राग्निपुंस्कः(स्त्वः) स्यात्सुकार्यो बलवान् कुजे ॥
स्वबन्धुविजयी जातः प्रधानश्च रिपुस्थिते ॥ २७ ॥

विवादकलहव्याधियुतो निष्ठुरस्ताङ्गनरः ॥
न गोपालस्य शत्रुः स्याल्लग्नात्(नष्टकोपोऽलसः शत्रुजितः) षष्ठस्थिते बुधे ॥ २८ ॥

स्वल्पोऽदराग्नि(ग्नि)पुंस्त्वस्थग्(स्त्वः स्यात्) स्त्रीजितो रिपुहा गुरौ ॥
लग्नात्षष्ठस्थिते जातो दुर्बलोऽलससंयुतः(लः प्रथितोऽलसः) ॥ २९ ॥

भीरु(नीचो) भूरिरिपु(पुः) स्त्रीणामनिलो(ष्टो) विभवोऽज्झितः ॥
विक्त(क्त)वश्च भव(वे)लग्नाद्भार्गवे रिपुराशिगे ॥ ३० ॥

[५]विद्वेषिपक्षक्षपितः शूरो विषमवे(चे)ष्टितः ॥
बह्वाशी बहुकाव्यश्चारि(मश्च सु)देहे(हो) रिपुगे शनौ ॥ ३१ ॥

इति षष्ठभावस्थितप्रत्येकग्रहफलम्

॥ इति श्रीजातकसारदीपे रिपुचिंताध्यायश्चतुश्चत्वारिंशः ॥

---

५ विद्वेषिपक्षः क्षपितो येन सः । तं ।

## ॥ अथ सप्तमभावचिन्ताऽध्यायः पञ्चचत्वारिंशः ॥

जातकरत्ने(त्ने)—

### ॥ अथ सप्तमभावगतग्रहविशेषफलम् ॥

कलत्रलाभालाभयोगौ

[1]लग्नाच्चन्द्राच्च वा(वी)र्याढ्यात्कलत्रं सप्तमं(सुतभं) यदि ॥
स्वेशसौम्येऽक्षितं युक्तं स्त्रीप्राप्तौ वा(सुताव)न्यथा न हि ॥ १ ॥

---

१ अत्र कलत्रलाभालाभयोगवत्पुत्रलाभालाभयोगावप्यभिधीयेते । कलत्राध्याये तत्कथनं न युक्तमिति भाति । तथापि यथा सुतभं स्वेशसौम्येक्षितयुतं सुतदं तथा कलत्रभमपीति दृष्टान्तदार्ष्टान्तिकभावेन योजनीयं । दृष्टान्ततया सुतभस्य स्वीकारस्तु सहजभावादावप्येवमेवेति द्योतनाय । अपि च वराहोऽप्येकोक्तया पुत्रकलत्रयोर्लाभालाभयोगावाचष्टे । तथा च तद्वाक्यम्—“ लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथ वाऽऽलोकिते चन्द्राद्वा यदि संपदस्ति हि तयोर्ज्ञेयोऽन्यथाऽसंभवः ” इति । तदनुवादरूपोऽयं श्लोकः । अतोऽत्रापि कलत्रसुतभयोरेकोक्तया फलकथनं नानुपपन्नमिति यत्किंचिदेतत् । अत्र सप्तमभं स्वाधिपतिना सौम्यैश्च दृष्टं अथ वा तैरेव युतं चेत्स्त्रीलाभः । अन्यथा असंभवः । स्वाधिपतिना शुभैश्च न युक्तं दृष्टं वा स्वाधिपतिभिन्नैरशुभैश्च ग्रहैर्युक्तं वा दृष्टं वा यदि तर्हि कलत्रलाभो न भवति । अत्र बहवः प्रकाराः संभवन्ति । १ शुभेन अधिपतिना शुभैर्ग्रहैश्च दृष्टयुतं कलत्रभं । २ अशुभेन पतिना शुभैर्ग्रहैश्च दृष्टयुतं कलत्रभं । ३ शुभेनाधिपतिना दृष्टयुतं कलत्रभं । ४ अशुभेनाधिपतिना दृष्टयुतं कलत्रभं । ५ सौम्यैर्ग्रहैर्दृष्टयुतं कलत्रभं । ६ शुभेनाधिपतिना शुभैः पापैश्च ग्रहैर्युतदृष्टं कलत्रभं । ७ अशुभेनाधिपतिना शुभैः पापैर्ग्रहैश्च दृष्टयुतं कलत्रभं । ८ शुभेनाधिपतिना पापैश्च ग्रहैर्दृष्टयुतं कलत्रभं । ९ अशुभेनाधिपतिना पापैश्च ग्रहैर्दृष्टयुतं कलत्रभं इति । एषु प्रकारेषु पूर्वपूर्वतरपक्षे कलत्रसौलभ्यं उत्तरोत्तरपक्षे कलत्रदौर्घट्यं ज्ञेयम् । एवमेव कलत्रासंभवयोगेऽप्यूह्यम् ॥ १ ॥

### कलत्रसंख्या-तन्मृतियोगौ

¹लग्नेन्द्वोर्मदने सितेऽन्दुसहिते दृष्टेऽथ तद्वे गणे (वर्गे तयोः)
स्त्रीबाहुल्यमिनेऽथवित्कुजलवे चैका मृतिः सोग्रके ।

### विकलपत्नीयोगः

व्यङ्गा धीघुनधर्मभे सहितयोः शुक्रार्कयो(योः) स्यात्प्रिया

### सुतकलत्रवियोगयोगः

सप्तांत्योदयगैः खलैः क्षयविधौ पुत्रे सुतस्त्रीवियुक् ॥ २ ॥

---

१ लग्नेन्द्वोरेकराशिगयोर्वा भिन्नराशिगयोर्वा सप्तमे शुक्रचन्द्राभ्यां दृष्टे एको योगः । ताभ्यां युक्ते द्वितीयः । तयोर्मध्ये एकेन युक्ते अपरेण दृष्टे तृतीयः । सप्तमे शुक्रेन्दुसप्तवर्गयुते चतुर्थः । एवं चत्वारो बहुस्त्रीयोगाः । सप्तमे रविकुज बुधगुरूणामन्यतमनवांशयुते एकपत्नीयोगाश्चत्वारः । एवं सप्तमे सोग्रके पापग्रहयुते पत्नीमृतियोग: एकः । एवं धीघुनधर्मभे, पंचमे, सप्तमे, नवमे वा शुक्रार्कयोः सहितयोः प्रिया व्यंगा भवति । शुक्रार्कौ मिलितौ पंचमे, सप्तमे, नवमे वा स्थितौ चेत्त्रयो योगाः । अस्मिन्योगे शुक्रार्कयोरेकस्थानगत्वमावश्यकं । पापैः सप्तमे, व्यये, लग्ने वा यथायोगं स्थितैः क्षीणचन्द्रे पंचमस्थे पुत्रकलत्राभावः । अत्र योगे कुजरविमन्दानां त्रयाणामपि मिलितानामेव योगकारकत्वं खलैरिति बहुवचनात् । अस्मिन् योगे जातस्य विवाहो न भवति । प्रबलेन केनचिदन्येन विवाहयोगेन विवाहे जातेऽपि पत्नी नश्यति । पुत्रोऽपि न भवति । स्वीकृतोऽपि पुत्रो विनश्यति ॥ २ ॥

पत्नीनाशयोगः

[2]षष्ठेऽष्टमेऽसृजि मदे च तथैव राहौ
छिद्रे शनौ च युवतीविलयं वदन्ति ।
पापद्वयेऽक्षिति(त)तमो द्यु(द्यु)नगं न पत्नी-
संभूतिकृत्व(त्त्व)थ च मारयति प्रजनां(जातां) ॥ ३ ॥

एकपत्नीयोगः

[2]एकाऽङ्गना द्युनगयोगु(र्गु)रुसौम्ययोश्च

समानजातिपत्नीयोगः

जायापतौ गुरुसितांशगते स्व(स)वर्णा ।

नीचजातिपत्नीयोगः-पत्नीसंख्या च

सूर्यारमन्दज(ग)नवांशगते स्वजाते
र्न्यूना द्युनेशगनवांशसमानपत्न्यः ॥ ४ ॥

---

२ सप्तमे राहौ, शनावष्टमे, षष्ठेऽष्टमे वा कुजे द्वौ योगौ पत्नीनाशकरौ । सप्तमे राहौ रविकुजाभ्यां रविशनिभ्यां कुजशनिभ्यां वा दृष्टे त्रयो योगा विवाहाभावकराः । एषु योगेषु जातस्य विवाहो न भवति । जातेऽपि विवाहे पत्नी म्रियते ॥ ३ ॥
२ सप्तमे गुरुबुधौ मिलितौ यदि स्तस्तर्हि एका पत्नी भवतीत्येको योगः । सप्तमे गुर्वंशयुते शुक्रांशयुते वा सवर्णा पत्नी भवतीति द्वौ योगौ । सप्तमे सूर्यनवांशयुते कुजनवांशयुते शनिनवांशयुते वा, स्वजातेर्न्यूना पत्नी भवतीति त्रयो योगाः । सप्तमाधिपतिर्यस्मिन्नवांशे वर्तते तत्संख्यातुल्यसंख्याः पत्न्यो भवन्तीत्येको योगः ॥ ४ ॥

## वेश्यापतियोगः पुनर्भूपतियोगः दम्पत्योरेकनयनयोगः वन्ध्यापतियोगश्च

¹वेश्या सिते च हिमगौ द्युनगे शनीन्द्वोः
पौनर्भवाऽथ रिपुरिष्य(रि:फ)गयोरिनेन्द्वोः ।
भार्यायुगै(गे)कदृगथो द्युनरिष्य(रि:फ)लग्ने
पापे(पै:) सुतेऽब्ज इह योषिदपत्यहीना ॥ ५ ॥

१ सप्तमे शुक्रे चन्द्रे वा वेश्या पत्नी भवतीति द्वौ योगौ। सप्तमे शनिचन्द्रयोर्मिलितयोः पौनर्भवा विवाहान्तरेण संस्कृता पत्नी भवतीत्येको योगः। चन्द्रसूर्ययोर्मध्ये एकस्मिन् व्ययगते अन्यस्मिन् षष्ठगते च भार्यायुक् भार्यया युक्तः एकदृक् भवति। द्वावपि भार्या पतिश्च काणौ भवत इति भावः। अत्र व्यये रवौ षष्ठे चन्द्रे एको योगः। व्यये चन्द्रे षष्ठे रवावपरः। एवं द्वौ योगौ। युक्तं चैतत्। "व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रविः" इत्युक्तन्यायेन व्ययगृहगतो रविः पुरुषस्य दक्षिणनेत्रघातकरः। तादृशश्चन्द्रः पुरुषस्य वामनेत्रघातकरः। एवं षष्ठराशेः कलत्रस्थानाद्व्ययराशित्वेन तेनैव न्यायेन क्रमेण तत्रस्थौ चन्द्रसूर्यौ पत्न्या वामदक्षिणनेत्रहरौ। तत्र द्वादशे रवौ षष्ठे चन्द्रे पत्न्याः वामाक्षि पुरुषस्य दक्षिणाक्षि च विहन्यते। द्वादशे चन्द्रे रवौ षष्ठे पत्न्याः दक्षिणाक्षि पुरुषस्य वामाक्षि च विहन्यते इत्यादूह्यम्। द्युनरि:फलग्ने पापे, सप्तमे व्यये लग्ने वा यदि कश्चित्पापो भवति तर्हीत्यर्थः। अब्जे चन्द्रे सुते योषित् अपत्यहीना भवति इति त्रयो वन्ध्यापतियोगाः। "सप्तान्त्योदयगैः खलैः क्षयविधौ पुत्रे सुतस्त्रीवियुक्" इति पूर्वमुक्तं। अत्र च "द्युनरि:फलग्ने पापे सुतेऽब्ज इह योषिदपत्यहीना" इत्युच्यते। अतः पुनरुक्तमिवाभाति। तथाप्यत्र योगभेदावगमकं लिंगं फलभेदश्च वर्तते। तथा हि—तत्र च सप्तान्त्योदयगैरिति खलैरिति च बहुवचनं प्रयुक्तं। अत्र च द्युनरि:फलग्ने इति पापे इति च एकवचनं प्रयुज्यते। तेनेदमवगम्यते। पूर्वोक्तयोगे रविकुजशनीनां संहतानामेव योगकारकत्वं, नैकस्य, तथा त्रयाणामपि यथायोगं प्रत्येकं राशित्रयगतानामेव योगकारकत्वं, न मिलितानामेकराशौ राशिद्वये वा स्थितानामिति। अत्र च एक एव पापः लग्नान्त्यसप्तमेष्वन्यतमगतो योगकारको भवतीति। एवं फलभेदोऽपि दृश्यते। तथा हि—तत्र सुतस्त्रीवियुगित्युक्तं। अत्र तु योषिदपत्यहीना इत्युच्यते। तेनेदमव-

अग्निनिमित्तपत्नीमरणयोगः

[1]शुक्रात्सुखाष्टगखलैर्झषमन्दकन्या-
लग्नार्कयोर्युवतिमृत्युरिहाग्निजातः ।

अग्निनिपातद्वयनिमित्तपत्नीमरणयोगः

पापद्वयांतरसितेऽग्निनिपातम(मृ)त्यु

उद्बन्धनजातपत्नीमरणयोगः

नोंसद्युतेऽक्षितमृग(भृगा)विह पाशजातः ॥ ६ ॥

---

गम्यते । पूर्वोक्तयोगे पत्नीपुत्राभावः फलम् । अत्र तु पत्नीसद्भावः पुत्राभावश्च फलम् । तथा च फलभेदादपि योगभेद एवेति न पौनरुक्त्यम् ॥ ५ ॥

१ शुक्राच्चतुर्थेऽष्टमे वा स्थितैः पापैरभिजातो युवतिमृत्युर्भवति । अत्र च रवेर्योगकारकत्वं नास्ति । सूर्यस्य शुक्राच्चतुर्थाष्टमस्थित्ययोगात् । अवशिष्टौ च पापौ कुजशनी । अतः खलैरिति बहुवचनं कथं संगच्छते ? इति चेदत्र संप्रदायविदो वदन्ति । अनेनैव ज्ञापकेन राहुकेत्वोरप्युपरागसमीपसमयवर्तित्वादिबलसंभवे तयोरपि क्रूरग्रहेष्वन्तर्भावो भवति । अतो बहुवचनं युक्तमिति । एवं मीने शनौ, कन्यायां लग्ने, तत्रैव रवौ अग्निनिमित्तो युवतिमृत्युरित्येको योगः । शुक्रे पापद्वयमध्यगते अग्निना, निपातेन उच्चप्रदेशात्पतनेन, जनितो युवतिमृत्युः । अत्र निपातः गर्भपात इति रुद्रभट्टः । शुक्रे सद्ग्रहदृष्टियोगहीने उद्बन्धनसाधनेन पाशेन जनितो युवतिमृत्युर्भवतीत्येको योगः । रुद्रभट्टस्तु योगमिमं न सहते । शुक्रस्य शुभदृष्टियोगराहित्यमात्रेण पाशमृत्युकथनमयुक्तमिति च कथयति । परमेतद्गार्गवचनविरुद्धम् । तथा चोक्तम्—

"शुक्रे सद्योगदृग्धीने पाशाद्भार्यावधो भवेत् ।" इति

अतोऽत्रानुमत एव शरणमिति किमावयोः ।

वन्ध्यापतियोगः

[1]चक्रसन्धौ सिते द्य(द्यू)ने विलग्ने रविनन्दने ।
वन्ध्यापतिर्भवेत्सुत(त्पुत्र)स्थानं शुभयुत न चे (र) त् ॥ ७ ॥

**सारावल्यां—**

पुरुषस्य व्यभिचारयोगः

[2]मन्दारवर्गज(ग)सिते तत्स्थे(ऽस्तस्थे) तद्वीक्षिते परस्त्रीगः ॥

दंपत्योर्व्यभिचारयोगः

तौ यदि भवतः सेंदु(न्दू) पत्न्या सह पुंश्चलः पुरुषः ॥ ८ ॥

यमभूमिजयोर्वर्गे द्यूनस्थे तदवलोकिते शुक्रे ॥
जातो भवत्यवश्यं पत्न्या सह पुंश्चलः पुरुषः ॥ ९ ॥

---

१ कर्काटकवृश्चिकमीनालग्नवांशाश्चक्रसंधिः । सप्तमे शुक्रे, सप्तमे कर्काटकवृश्चिकमीनानामन्त्यनवांशेष्वन्यतमस्थे, शनौ लग्नस्थे, पुत्रे स्थाने शुभरहिते वन्ध्यापतिर्भवति इति त्रयो योगाः। पंचमे शुभयुक्ते योगभंगः ॥ ७ ॥

२ सप्तमे शुक्रे, शनिकुजाभ्यां दृष्टे, शनेर्वा कुजस्य वा वसत्र्वर्गगते परस्त्रीगो भवतीति द्वौ योगौ । अनयोरेव योगयोः शनिकुजयोश्चंद्रसंबंधे तद्ध्व्रारपत्न्यपि व्यभिचारिणी भवतीति भावः । अत्र "तौ यदि सेन्दू" इति कथनेन शनिकुजयोरेकस्थानस्थितत्वं अपेक्षितमिति ध्वन्यते । भिन्नस्थानस्थितत्वे युगपत् सेन्दुत्वायोगात् । एकस्थयोः सप्तमभावदर्शनं च लग्नगतयोरेव भवति । तथा च कुजस्य, शनेर्वा वर्गे सप्तमे शुक्रे, शनिकुजचन्द्रेषु लग्नस्थेषु जातः पत्न्या सह व्यभिचारी भवतीति वराहमिहिरमतं । कल्याणवर्मा तु पुरुषमात्रव्यभिचरिताप्रापकत्वेन भार्याव्यभिचारितानापादकत्वेन च वराहमिहिरोक्तचन्द्रसंबन्धविधुरः श्लोकपूर्वार्धोक्तो योग एव द्वयोरपि व्यभिचारितापादक इति ब्रवीति । अतोऽष्टमः श्लोको बृहज्जातकानुसारी । नवमस्तु सारावल्यनुसारीति ज्ञेयम् । अतो न पौनरुक्त्यभ्रमः कार्यः ॥ ८ ॥

पुनरपि पत्नीपुत्राभावयोगः

[1]बुधभार्गवयोरस्ते स्त्रीहीनो जायते विपुत्रश्च ॥

वृद्धाविवाहयोगः

दृष्टौ(ष्टे) शुभे(भै)स्तदा वा(स्तु वाच्याः) परिणतवयसः सदा प्रमदा(दाः) ॥ १० ॥

पुनरपि पत्नीपुत्राभावयोगः

[2]शुक्रशशिभ्यामस्ते सहिते वेदम(शन्यसृजोरत)नयो विभार्यो वा ॥

दंपत्योर्वृद्धयोर्विवाहयोगः

पुंस्त्रीभ्यां संदृष्टौ(सन्दृष्टे) तु दंपती परिणततनू स्तः ॥ ११ ॥

॥ इति सप्तमभावगतग्रहविशेषफलम् ॥

---

१ बुधशुक्रौ द्वावपि सप्तमस्थौ स्त्रीपुत्राभावकरावित्येको योगः अत्रैव योगे बुधशुक्रयोः शुभदृष्टिसद्भावे वृद्धा भार्या भवतीत्यपरोयोगः। इति द्वौ योगौ ॥ १० ॥

२ शुक्रचन्द्रयोरेकराशिस्थयोः सकाशात् सप्तमे शनिकुजौ द्वावपि यदि भवतस्तर्हि पत्नीपुत्ररहितो भवतीत्येको योगः। तथा सप्तमस्थौ शनिकुजौ लग्नगताभ्यां स्त्रीपुरुषग्रहाभ्यां दृष्टौ वृद्धस्य पुरुषस्य वृद्धां भार्यां कुरुतः। अत्र दृश्यौ शनिकुजौ। तद्भिन्नेषु पंचसु बुधो नपुंसकः। शशिशुक्रौ स्त्रियौ। रविगुरू पुमांसौ। तत्र शशिरवी, शुक्ररवी, शशिगुरू, शुक्रगुरू च लग्नस्थौ यदि सप्तमस्थौ कुजशनी पश्यतस्तर्हि दंपती परिणततनू इति चत्वारो योगाः।

लग्नात् षष्ठस्थिते चन्द्रे मृदुकायः स्मरालसः ॥
अनेकारिर्भवेत्तीक्ष्णो रिष्टं स्यान्मृत्युरेव च ॥ २६ ॥

बहुदा(हृद)राग्निपुंस्कः(स्त्वः) स्यात्सुकार्यो बलवान् कुजे ॥
स्वबन्धुविजयी जातः प्रधानश्च रिपुस्थिते ॥ २७ ॥

विवादकलहव्याधियुतो निष्ठुरवाङ्नरः ॥
न गोपालस्य शत्रुः स्याल्लग्नात्(नष्टकोपोऽलसः शत्रुजितः) षष्ठस्थिते बुधे ॥ २८ ॥

स्वल्पोऽद्राग्नि(ग्नि)पुंस्त्वस्यग्(स्त्वः स्यात्) स्त्रीजितो रिपुहा गुरौ ॥
लग्नात्षष्ठस्थिते जातो दुर्बलोऽलससंयुतः(लः प्रथितोऽलसः) ॥ २९ ॥

भीरु(नीचो) भूरिरिपु(पुः) स्त्रीणामनिलो(ष्टो) विभवोऽज्झितः ॥
विक्त(क्त)वश्च भव(वे)लग्नाद्भार्गवे रिपुराशिगे ॥ ३० ॥

[5]विद्वेषिपक्षक्षपितः शूरो विषमवे(चे)ष्टितः ॥
बह्वाशी बहुकाव्यश्चारि(मश्च सु)देहे(हो) रिपुगे शनौ ॥ ३१ ॥

इति षष्ठभावस्थितप्रत्येकग्रहफलम्

॥ इति श्रीजातकसारदीपे रिपुचिंताध्यायश्चतुश्चत्वारिंशः ॥

---

५ विद्वेषिपक्षः क्षपितो येन सः । तं ।

## ॥ अथ सप्तमभावचिन्ताध्यायः पञ्चचत्वारिंशः ॥

जातकरत्ने(त्ने)—

### ॥ अथ सप्तमभावगतग्रहविशेषफलम् ॥

कलत्रलाभालाभयोगौ

[1]लग्नाच्चन्द्राच्च वा(वी)र्याढ्यात्कलत्रं सप्तमं(सुतभं) यदि ॥
स्वेशसौम्येऽक्षितं युक्तं स्त्रीप्राप्तौ वा(सुताव)न्यथा न हि ॥ १ ॥

---

१ अत्र कलत्रलाभालाभयोगवत्पुत्रलाभालाभयोगावप्यभिधीयेते । कलत्राध्याये तत्कथनं न युक्तमिति भाति । तथापि यथा सुतभं स्वेशसौम्येक्षितयुतं सुतदं तथा कलत्रभमपीति दृष्टान्तदार्ष्टान्तिकभावेन योजनीयं । दृष्टान्ततया सुतभस्य स्वीकारस्तु सहजभावादावप्येवमेवेति द्योतनाय । अपि च वराहोऽप्येकोक्तया पुत्रकलत्रयोर्लाभालाभयोगावाचष्टे । तथा च तद्वाक्यम्—"लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथ वाऽऽलोकिते चन्द्राद्वा यदि, संपदस्ति हि तयोर्ज्ञेयोऽन्यथाऽसंभवः" इति । तदनुवादरूपोऽयं श्लोकः । अतोऽत्रापि कलत्रसुतभयोरेकोक्तया फलकथनं नानुपपन्नमिति यत्किंचिदेतत् । अत्र सप्तमभं स्वाधिपतिना सौम्यैश्च दृष्टं अथ वा तैरेव युतं चेत्स्त्रीलाभः । अन्यथा असंभवः । स्वाधिपतिना शुभैश्च न युक्तं दृष्टं वा स्वाधिपतिभिन्नैरशुभैश्च ग्रहैर्युक्तं वा दृष्टं वा यदि तर्हि कलत्रलाभो न भवति । अत्र बहवः प्रकाराः संभवन्ति । १ शुभेन अधिपतिना शुभैर्ग्रहैश्च दृष्टयुतं कलत्रभं । २ अशुभेन पतिना शुभैर्ग्रहैश्च दृष्टयुतं कलत्रभं । ३ शुभेनाधिपतिना दृष्टयुतं कलत्रभं । ४ अशुभेनाधिपतिना दृष्टयुतं कलत्रभं । ५ सौम्यैर्ग्रहैर्दृष्टयुतं कलत्रभं । ६ शुभेनाधिपतिना शुभैः पापैश्च ग्रहैर्युतदृष्टं कलत्रभं । ७ अशुभेनाधिपतिना शुभैः पापैर्ग्रहैश्च दृष्टयुतं कलत्रभं । ८ शुभेनाधिपतिना पापैश्च ग्रहैर्दृष्टयुतं कलत्रभं । ९ अशुभेनाधिपतिना पापैश्च ग्रहैर्दृष्टयुतं कलत्रभं इति । एषु प्रकारेषु पूर्वपूर्वतरपक्षे कलत्रसौलभ्यं उत्तरोत्तरपक्षे कलत्रदौर्घट्यं ज्ञेयम् । एवमेव कलत्रासंभवयोगेऽप्यूह्यम् ॥ १ ॥

कलत्रसंख्या-तन्मृतियोगौ

[1]लग्नेंद्वोर्मदने सितेऽन्दुसहिते दृष्टेऽथ तद्धे गणे (वर्गे तयोः)
स्त्रीबाहुल्यमिनेज्यथवित्कुजलवे चैका मृतिः सोग्रके ।

विकलपत्नीयोगः

व्यङ्गा धीद्युनधर्मभे सहितयोः शुक्रार्कयो(योः) स्यात्प्रिया

सुतकलत्रवियोगयोगः

सप्तांत्योदयगैः खलैः क्षयविधौ पुत्रे सुतस्त्रीवियुक् ॥ २ ॥

---

१ लग्नेन्द्वोरेकराशिगयोर्वा भिन्नराशिगयोर्वा सप्तमे शुक्रचन्द्राभ्यां दृष्टे एको योगः। ताभ्यां युक्ते द्वितीयः। तयोर्मध्ये एकेन युक्ते अपरेण दृष्टे तृतीयः। सप्तमे शुक्रेन्दुसप्तवर्गयुते चतुर्थः। एवं चत्वारो बहुस्त्रीयोगाः। सप्तमे रविकुज बुधगुरूणामन्यतमनवांशयुते एकपत्नीयोगाश्चत्वारः। एवं सप्तमे सोग्रके पापग्रहयुते पत्नीमृतियोगः एकः। एवं धीद्युनधर्मभे, पंचमे, सप्तमे, नवमे वा शुक्रार्कयोः सहितयोः प्रिया व्यंगा भवति। शुक्रार्कौ मिलितौ पंचमे, सप्तमे, नवमे वा स्थितौ चेत्त्रयो योगाः। अस्मिन्योगे शुक्रार्कयोरेकस्थानगतत्वमावश्यकं। पापैः सप्तमे, व्यये, लग्ने वा यथायोगं स्थितैः क्षीणचन्द्रे पंचमस्थे पुत्रकलत्राभावः। अत्र योगे कुजरविमन्दानां त्रयाणामपि मिलितानामेव योगकारकत्वं खलैरिति बहुवचनात्। अस्मिन् योगे जातस्य विवाहो न भवति। प्रबलेन केनचिदन्येन विवाहयोगेन विवाहे जातेऽपि पत्नी नश्यति। पुत्रोऽपि न भवति। स्वीकृतोऽपि पुत्रो विनश्यति ॥ २ ॥

पत्नीनाशयोगः

[२]षष्ठेऽष्टमेऽसृजि मदे च तथैव राहौ
छिद्रे शनौ च युवतीविलयं वदन्ति।
पापद्वयेऽक्षिति(त)तमो घु(द्यु)नगं न पत्नी-
संभूतिकृत्व(त्त्व)थ च मारयति प्रजनां(जातां) ॥ ३ ॥

एकपत्नीयोगः

[२]एकाऽङ्गना द्युनगयोगु(र्गु)रुसौम्ययोश्च

समानजातिपत्नीयोगः

जायापतौ गुरुसितांशगते स्व(स)वर्णा।

नीचजातिपत्नीयोगः-पत्नीसंख्या च

सूर्यारमन्दज(ग)नवांशगते स्वजाते
र्न्यूना द्युनेशनवांशसमानपत्न्यः ॥ ४ ॥

---

२ सप्तमे राहौ, शनावष्टमे, षष्ठेऽष्टमे वा कुजे द्वौ योगौ पत्नीनाशकरौ। सप्तमे राहौ रविकुजाभ्यां रविशनिभ्यां कुजशनिभ्यां वा दृष्टे त्रयो योगा विवाहाभावकराः। एषु योगेषु जातस्य विवाहो न भवति। जातेऽपि विवाहे पत्नी म्रियते ॥ ३ ॥
२ सप्तमे गुरुबुधौ मिलितौ यदि स्तस्तर्हि एका पत्नी भवतीत्येको योगः। सप्तमे गुर्वंशयुते शुक्रांशयुते वा सवर्णा पत्नी भवतीति द्वौ योगौ। सप्तमे सूर्यनवांशयुते कुजनवांशयुते शनिनवांशयुते वा स्वजातेर्न्यूना पत्नी भवतीति त्रयो योगाः। सप्तमाधिपतिर्यस्मिन्नवांशे वर्तते तत्संख्यातुल्यसंख्याः पत्न्यो भवन्तीत्येको योगः ॥ ४ ॥

वेश्यापतियोगः पुनर्भूपतियोगः दम्पत्योरेकनयनयोगः वन्ध्यापतियोगश्च

[1]वेश्या सिते च हिमगौ द्युनगे शनीन्द्वोः
पौनर्भवाऽथ रिपुरिष्य(रि:फ)गयोरिनेन्द्वोः ।
भार्यायुगै(गे)कदृगथो द्युनरिष्य(रि:फ)लग्ने
पापे(पै:) सुतेऽब्ज इह योषिदपत्यहीना ॥ ५ ॥

---

१ सप्तमे शुक्रे चन्द्रे वा वेश्या पत्नी भवतीति द्वौ योगौ। सप्तमे शनिचन्द्रयोर्मिलितयोः पौनर्भवा विवाहात्तरेण संस्कृता पत्नी भवतीत्येको योगः। चन्द्रसूर्ययोर्मध्ये एकस्मिन् व्ययगते अन्यस्मिन् षष्ठगते च भार्यायुक् भार्यया युक्तः एकदृक् भवति। द्वावपि भार्या पतिश्च काणौ भवत इति भावः। अत्र व्यये रवौ षष्ठे चन्द्रे एको योगः। व्यये चन्द्रे षष्ठे रवावपरः। एवं द्वौ योगौ। युक्तं चैतत्। "व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रविः" इत्युक्तन्यायेन व्ययगृहगतो रविः पुरुषस्य दक्षिणनेत्रघातकरः। तादृशश्चन्द्रः पुरुषस्य वामनेत्रघातकरः। एवं षष्ठराशेः कलत्रस्थानाद्व्ययराशित्वेन तेनैव न्यायेन क्रमेण तत्रस्थौ चन्द्रसूर्यौ पत्न्या वामदक्षिणनेत्रहरौ। तत्र द्वादशे रवौ षष्ठे चन्द्रे पत्न्याः वामाक्षि पुरुषस्य दक्षिणाक्षि च विहन्यते। द्वादशे चन्द्रे रवौ षष्ठे पत्न्याः दक्षिणाक्षि पुरुषस्य वामाक्षि च विहन्यते इत्यायूह्यम्। द्युनरि:फलग्ने पापे, सप्तमे व्यये लग्ने वा यदि कश्चित्पापो भवति तर्हीत्यर्थः। अब्जे चन्द्रे सुते योषित् अपत्यहीना भवति इति त्रयो वन्ध्यापतियोगाः। "सप्तान्त्योदयगैः खलैः क्षयविधौ पुत्रे सुतस्त्रीवियुक्" इति पूर्वमुक्तं। अत्र च "द्युनरि:फलग्ने पापे सुतेऽब्ज इह योषिदपत्यहीना" इत्युच्यते। अतः पुनरुक्तमिवाभाति। तथाप्यत्र योगभेदावगमकं लिंगं फलभेदश्च वर्तते। तथा हि—तत्र च सप्तान्त्योदयगैरिति खलैरिति च बहुवचनं प्रयुक्तं। अत्र च द्युनरि:फलग्ने इति पापे इति च एकवचनं प्रयुज्यते। तेनेदमवगम्यते। पूर्वोक्तयोगे रविकुजशनीनां संहतानामेव योगकारकत्वं, नैकस्य, तथा त्रयाणामपि यथायोगं प्रत्येकं राशित्रयगतानामेव योगकारकत्वं, न मिलितानामेकराशौ राशिद्वये वा स्थितानामिति। अत्र च एक एव पापः लग्नान्त्यसप्तमेष्वन्यतमगतो योगकारको भवतीति। एवं फलभेदोऽपि दृश्यते। तथा हि—तत्र सुतस्त्रीवियुगित्युक्तं। अत्र तु योषिदपत्यहीना इत्युच्यते। तेनेदमव-

अग्निनिमित्तपत्नीमरणयोगः

¹शुक्रात्सुखाष्टगखलैर्झषमन्दकन्या-

कुभार्कयोर्युवतिमृत्युरिहाग्निजातः ।

अग्निनिपातद्वयनिमित्तपत्नीमरणयोगः

पापद्वयांतरसितेऽग्निनिपातम(मृ)त्यु

उद्बन्धनजातपत्नीमरणयोगः

र्नोसद्युतेऽक्षितमृग(भृगा)विह पाशजातः ॥ ६ ॥

---

गम्यते । पूर्वोक्तयोगे पत्नीपुत्राभावः फलम् । अत्र तु पत्नीसद्भावः पुत्राभावश्च फलम् । तथा च फलभेदादपि योगभेद एवेति न पौनरुक्त्यम् ॥ ५ ॥

१ शुक्राच्चतुर्थेऽष्टमे वा स्थितैः पापैरभिजातो युवतिमृत्युर्भवति । अत्र च रवेर्योगकारकत्वं नास्ति । सूर्यस्य शुक्राच्चतुर्थाष्टमस्थित्ययोगात् । अवशिष्टौ च पापौ कुजशनी । अतः खलैरिति बहुवचनं कथं संगच्छते? इति चेदत्र संप्रदायविदो वदन्ति । अनेनैव ज्ञापकेन राहुकेत्वोरप्युपरागसमीपसमयवर्तित्वादिबलसंभवे तयोरपि क्रूरग्रहेष्वन्तर्भावो भवति । अतो बहुवचनं युक्तमिति । एवं मीने शनौ, कन्यायां लग्ने, तत्रैव रवौ अग्निनिमित्तो युवतिमृत्युरित्येको योगः । शुक्रे पापद्वयमध्यगते अग्निना, निपातेन उच्चप्रदेशात्पतनेन, जनितो युवतिमृत्युः । अत्र निपातः गर्भपात इति रुद्रभट्टः । शुक्रे सद्ग्रहदृष्टियोगहीने उद्बन्धनसाधनेन पाशेन जनितो युवतिमृत्युर्भवतीत्येको योगः । रुद्रभट्टस्तु योगमिमं न सहते । शुक्रस्य शुभदृष्टियोगराहित्यमात्रेण पाशमृत्युकथनमयुक्तमिति च कथयति । परमेतद्गार्गवचनविरुद्धम् । तथा चोक्तम्—

"शुक्रे सद्योगदृग्धीने पाशाद्भार्यावधो भवेत् ।" इति

अतोऽस्माकमुभव एव शरणमिति विभावयामः ।

वन्ध्यापतियोगः

[1]चक्रसन्धौ सिते घ(द्यू)ने विलग्ने रविनन्दने ।
वन्ध्यापतिर्भवेत्पुत्त(त्पुत्र)स्थानं शुभयुत न चे (र) त् ॥ ७ ॥

## सारावल्यां—

पुरुषस्य व्यभिचारयोगः

[2]मन्दारवर्गज(ग)सिते तत्स्थे(ऽस्तस्थे) तद्वीक्षिते परस्त्रीगः ॥

दंपत्योर्व्यभिचारयोगः

तौ यदि भवतः सेंदु(न्दू) पत्न्या सह पुंश्चलः पुरुषः ॥ ८ ॥

यमभूमिजयोर्वर्गे द्यूनस्थे तदवलोकिते शुक्रे ॥
जातो भवत्यवश्यं पत्न्या सह पुंश्चलः पुरुषः ॥ ९ ॥

---

१ कर्काटकवृश्चिकमीनात्यनवांशाश्चक्रसंधिः । सप्तमे शुक्रे, सप्तमे कर्काटकवृश्चिकमीनानामन्त्यनवांशेष्वन्यतमस्थे, शनौ लग्नस्थे, पुत्रे स्थाने शुभरहिते वन्ध्यापतिर्भवति इति त्रयो योगाः । पंचमे शुभयुक्ते योगभंगः ॥ ७ ॥

२ सप्तमे शुक्रे, शनिकुजाभ्यां दृष्टे, शनेर्वा कुजस्य वा सप्तवर्गगते परस्त्रीगो भवतीति द्वौ योगौ । अनयोरेव योगयोः शनिकुजयोश्चंद्रसंबंधे तद्भर्त्यपत्न्यपि व्यभिचारिणी भवतीति भावः । अत्र "तौ यदि सेन्दू" इति कथनेन शनिकुजयोरेकस्थानस्थितत्वं अपेक्षितमिति ध्वन्यते । भिन्नस्थानस्थितत्वे युगपत् सेन्दुत्वायोगात् । एकस्थयोः सप्तमभावदर्शनं च लग्नगतयोरेव भवति । तथा च कुजस्य, शनेर्वा वर्गे सप्तमे शुक्रे, शनिकुजचन्द्रेषु लग्नस्थेषु जातः पत्न्या सह व्यभिचारी भवतीति वराहमिहिरमतं । कल्याणवर्मा तु पुरुषमात्रव्यभिचरिताप्रापकत्वेन भार्याव्यभिचारितानापादकत्वेन च वराहमिहिरोक्तचन्द्रसंबन्धविधुरः श्लोकपूर्वार्धोक्तो योग एव द्वयोरपि व्यभिचारितापादक इति ब्रवीति । अतोऽष्टमः श्लोको बृहज्जातकानुसारी । नवमस्तु सारावल्यनुसारीति ज्ञेयम् । अतो न पौनरुक्त्यभ्रमः कार्यः ॥ ८ ॥

पुनरपि पत्नीपुत्राभावयोगः

[1]बुधभार्गवयोरस्ते स्त्रीहीनो जायते विपुत्रश्च ॥

वृद्धाविवाहयोगः

दृष्टौ(ष्टे) शुभे(भै)स्तदा वा(स्तु वाच्याः) परिणतवयसः सदा प्रमदा(दाः) ॥ १० ॥

पुनरपि पत्नीपुत्राभावयोगः

[2]शुक्रशशिभ्यामस्ते सहिते वेदम(शन्यसृजोरत)नयो विभार्यो वा ॥

दंपत्योर्वृद्धयोर्विवाहयोगः

पुंस्त्रीभ्यां संदृष्टौ(सन्दृष्टे) तु दंपती परिणततनू स्तः ॥ ११ ॥

॥ इति सप्तमभावगतग्रहविशेषफलम् ॥

---

१ बुधशुक्रौ द्वावपि सप्तमस्थौ स्त्रीपुत्राभावकराविति एको योगः अत्रैव योगे बुधशुक्रयोः शुभदृष्टिसद्भावे वृद्धा भार्या भवतीत्यपरोयोगः। इति द्वौ योगौ ॥ १० ॥
२ शुक्रचन्द्रयोरेकराशिस्थयोः सकाशात् सप्तमे शनिकुजौ द्वावपि यदि भवतस्तर्हि पत्नीपुत्ररहितो भवतीत्येको योगः। तथा सप्तमस्थौ शनिकुजौ लग्नगताभ्यां स्त्रीपुरुषग्रहाभ्यां दृष्टौ वृद्धस्य पुरुषस्य वृद्धां भार्यां कुरुतः। अत्र दृश्यौ शनिकुजौ। तद्भिन्नेषु पंचसु बुधो नपुंसकः। शशिशुक्रौ स्त्रियौ। रविगुरू पुमांसौ। तत्र शशिरवी, शुक्ररवी, शशिगुरू, शुक्रगुरू च लग्नस्थौ यदि सप्तमस्थौ कुजशनी पश्यतस्तर्हि दंपती परिणततनू इति चत्वारो योगाः।

## ॥ अथ सप्तमभावगतद्विग्रहयोगफलम् ॥

सुतमित्रोऽनित(तः) स्त्र्याढयो(तौ) द्यूनेऽर्कशशिनोर्भवेत् ॥
[1]स्त्रीवियुक् स्थिरदेहश्च(स्त्रोपराभूतो) द्यूने भौमार्कयोर्नरः ॥ १२ ॥

(वधबन्धनकृच्चोरो न लुब्धः सौम्यसूर्ययोः ॥)
स्त्रीयु(जि)तः सधनो राज(नस्तात)द्वेषी जीवार्कयोर्मदे ॥ १३ ॥

निर्धनः पृथुदेहोऽद्रिवा(चा)री स्त्र्याढ्यः(तः) सितार्कयोः ॥
[2]प्रेष्यो दारिद्र्ययुङ्नीचो भान्वार्क्योः पद्बंधयुक्(क्योर्बन्धुधिकृतः ।)
॥ १४ ॥

(मन्दोऽलसः स्त्र्यर्थहीनो भान्वार्क्योर्मृगयुर्मदे ॥)
असत्त(त्य)[वा]त्क(क्त)थेऽर्ष्यालुर्द्यून(ना)रेहो(द्वोः) प्रलापयुक् ॥
नृपो वा नृपसंमान्यो विदिंद्वोः सत्कविर्द्युने ॥ १५ ॥

कन्या(ला)ढ्यो नृपतिः प्राज्ञः सवाणिज्योऽब्जजीवयोः ॥
कल्या(न्या)युक्ता(क्तो)ऽल्पपुत्रस्व(स्वः) स्त्रीयुक् द्यूने सिताब्जयोः
॥ १६ ॥

स्त्रीहीनो नगराध्यक्षो द्यूनेऽब्जार्क्योः पुरेचरः(नृपार्चितः) ॥
मृताद्यस्त्रीर्विवादाढ्यः शूरो(ढ्योऽटनो) द्यूने बुधारयोः ॥ १७ ॥

शैलांबुवनवा(चा)री स्त्रीहीनो जीवारयोर्द्युने ॥
स्त्रीहेत्वनर्थयुक् दुष्टाचारो द्यूनारशुक्रयोः ॥ १८ ॥

---

१ अत्र बुधार्कयोः सप्तमगयोः फलप्रतिपादनपरं श्लोकार्धं लुप्तं । तत्र कुण्डलीस्थं श्लोकार्धं पठनीयम् । २ इदं श्लोकार्धं चतुर्थस्थानगतयोर्भानुसम्योः फलप्रतिपादनपरमिति साराक्ल्यां व्यक्तम् । अतस्तत्स्थाने कुण्डलीगतः श्लोकोऽनुसन्धेयः ।

[1]स्त्रीदिष्टो निर्धनोऽन्यस्त्रीरतो द्यूनार्किभौमयोः ॥

(स्त्रीपुत्रसुखहीनः स्याद्व्याधितो भौमसौरयोः ॥)

स्वाचारः सुकलत्राढ्यः स्वजनाढ्यो बुधेऽज्ययोः ॥ १९ ॥

[2]नृपमन्त्री सकल्याणः स्त्रीचेष्टः स्त्री ज्ञशुक्रयोः ॥

(बहुस्त्रीको मतो राज्ञां धनभोगी ज्ञशुक्रयोः ॥)

[3]स्त्रीपुत्रसुखहीनश्च सरुग्द्यूने शनिज्ञयोः ॥ २० ॥

(ईशभृत्योऽनृतो ज्ञार्क्योरन्योपकृतिकृन्मदे ॥)

भोगी स्त्रीरत्नसंयुक्तः सकन्यो जीवशुक्रयोः ॥

मूर्खः स्त्रीवैरनष्टस्वः पितृस्वः स्त्री(स्वार्थी)ऽज्यमन्दयोः ॥

वित्तस्त्रीरत्नसौख्याढ्यः शुक्रार्क्योः कीर्तियुग्द्युने ॥ २१ ॥

इति सप्तमभावगतद्विग्रहयोगफलम्

वैधव्यवैधुर्ययोगौ

लग्ने व्ययेऽपि पाताले जामित्रे चाष्टमे कुजे ॥

कन्या हरति भर्तारं भर्ता भार्यां हनिष्यति ॥ २२ ॥

---

१ अस्मिन् श्लोकार्धे कथितं फलं भौमार्कयोरस्तगयोर्न भवतीति सारावल्यादौ व्यक्तम् । अतस्तत्र कुण्डलीगतं श्लोकार्धमनुसंधेयम् । २ एतच्छ्लोकार्धोक्तं फलं चतुर्थस्थौ बुधशुक्रौ दत्त इति सारावल्यां व्यक्तम् । अतस्तत्स्थाने कुण्डलीगतं पद्यार्धं ग्राह्यम् । ३ इदमपि श्लोकार्धं न सप्तमस्थशनिज्ञफलपरमिति सारावल्यां व्यक्तम् । अतस्तत्र कुण्डलीस्थः पाठोऽनुसर्तव्यः ।

## ॥ अथ सप्तमस्वामिनो द्वादशभावाश्रयफलम् ॥

**जन्मप्रदीपात्—**

दयितेशो लग्नगतः शोकिनः(स्त्रीवर्ग)स्नेहमन्यरतभार्यं ॥
भोगभुजं रूपयुतं जनयति दयिताद(ज)नितवित्तं ॥ २३ ॥

जायापतौ धनस्थे दुष्टा दयिता सितेऽज्जि(र्चि)ता भवति ॥
वित्तं च कलत्रकरं सततं दसतोवि(यिताति)संगश्च ॥ २४ ॥

सप्तमपे सहजगते आत्मबलो बन्धुवत्सलो दुःखी ॥
देव[र]रता सुरूपा गृहिणी क्रूरे तु तद्दु(द्रु)हगा ॥ २५ ॥

जायेशे तुर्यस्थे लोलः पितृवैरसाधकः स्नेही ॥
अस्य पिता दुर्वाक्यस्तद्भार्यो पालयंच पिता ॥ २६ ॥

सप्तमपतौ सुतस्थे सौभाग्ययुतः सुतान्वितः पुरुषः ॥
प्रियया सह दुष्टमतिस्तत्तनय(यः) नः पालयेद्दयितां ॥ २७ ॥

रिपुगृहग(गः) तः कान्तेशः प्रियया सह वैरिणां(णं) सरुभा(ग्भा)र्यं ॥
दयितासंगक्षयिपां ? क्रूरः कुरु(रु)ते च मृत्युपदं ॥ २८ ॥

सप्तमपे सप्तमगे परमायुः प्रीतिवत्सलः पुरुषः ॥
निर्मलशीलसमेतस्तेजस्वी जायते सततं ॥ २९ ॥

कान्तेशे निधनगते गणिकासु रतः करग्र[हण]रहितः ॥
वेद(दे) हि तया(थाऽ)सक्तो निस्त्रीसेवाकरः पुरुषः ॥ ३० ॥

सुकृतगते सप्तमपे तेजोवान् शीलवान् प्रियाप्येवं ॥
क्रूरे तु ख(ष)ण्डरूपो लग्नेशावीक्षिते तपःप्रयग्नः ॥ ३१ ॥

गृहिणी[शे] दशमस्थे नृपदोषी लंपटः कुवाक्क्रूरः ॥
क्रूरे दुष्टश्वे(ष्टः श्व)शुरः ख्यातिखः(तस्वः) श्वश्रु(श्रू)वशे तु वधूः ॥ ३२ ॥

लाभस्थे जायेशे भक्ता रूपान्विता सुशीला वा ॥
दयिता परिणीता स्यान्म्रियते सा च प्रसवसमये ॥ ३३ ॥

सप्तमपे द्वादशगे गृहबन्धो नास्ति या भवेद्भार्या ॥
सा लोला दुष्टा पुनरुच्चलति तस्य पुरुषस्य ॥ ३४ ॥

॥ इति सप्तमस्वामिनो द्वादशभावाश्रयफलम् ॥

---

## ॥ अथ सप्तमभावाश्रितप्रत्येकग्रहफलम् ॥

**हिल्लाजे—**

स्त्रीनाशकृद्यु[ग]गुणे ३४ रविरिन्दुरंबा(बा)
मृत्युं तिथा १५ वसुगगाग्नि ३७ समाङ्गनाहृत् ।
स्त्रीप्राप्तिमद्रिक(कु) १७ मिते शशिजे(जः) कलत्रे
स्त्र्यसिर्गु(स्त्र्यासिं गु)रुर्यमयमै २२ र्मनुके १४ सितः स्त्रीं ॥ ३५ ॥

**होराप्रदीपे—**

नृपबन्धनसंतप्तो निःश्रीको व्याधितोऽटनः ॥
स्त्रीद्वेषी परिभूतश्च कुदेहो घुनगो रवौ ॥ ३६ ॥

सेव्ये(सौम्योऽ)घृष्यः सुधीः(खी) कामी सुदेहो मदगे विधौ ॥
दैत्य(न्य)बन्धनरोगार्तः कृशे(ष्णे) कृशतनुर्भवेत् ॥ ३७ ॥

कुष्ठत्रिदूषितो दुः(तसः शुष्कतनुर्दुः)खी मृतदारोऽटनोऽधनः ॥
नारीविरहरोगार्तो विलग्नात्सप्तमे कुजे ॥ ३८ ॥

प्राज्ञो रतिप्रगल्भोऽथ शीलो(ल)ज्ञो(ज्ञः) कथको मदे ॥
सुवेषामकुलीनां च महार्थो लभते प्रियां ॥ ३९ ॥

ख्यातो वित्तो(ज्ञः) कविर्मन्त्री मु(सु)दारः सुभगस्त्व(गः सु)रूक् ॥
पित्रोर्गुणाधिको जीवे सप्तमे सुहृदन्वितः ॥ ४० ॥

रतिगीतप्रियः खल्वटनः कलहवर्जितः ॥
शुक्रे द्यूने शक(सुखी) स्वाभोऽसमदारो धनान्वितः ॥ ४१ ॥

स्वमध्यो विभवा(स्वोऽज्झितोऽतिगदा)र्तो वा कुवेषोऽथाधकर्मकृत् ॥
मृतदारः शनौ द्यूने वृद्धान्यवनितापतिः ॥ ४२ ॥

॥ इति श्रीजातकसारदीपे सप्तमभावचिन्ताध्यायः पञ्चचत्वारिंशः ॥

---

## ॥ अथ मृत्युचिन्ताध्यायः षट्चत्वारिंशः ॥

ग्रहाणामष्टमस्थानस्थितिदृष्टिफलम् अष्टमेशाष्टमद्रेकाणेशफलं च

[1]वन्द्यं बा(हृद्यंब्वा)युधतो ज्वरामयतृषाक्षुत्तोऽर्कमुख्यैर्मृती
रन्ध्रस्थै(स्थैः) सबलेऽक्षकाच्च निधने वा र(ऽशाद्र)न्ध्रगत्र्यंशपात् ।

१ अत्र श्लोके चतुर्थपादे अन्त्यभागोऽशुद्धः । तथा अग्रे श्लोकद्वयं लुप्तं । तन्मया निर्मितं कुण्डल्यां निवेशितं । अथैतच्छ्लोकव्याख्यानं । रन्ध्रस्थैः अर्कमुख्यैः

पित्ताद्वात [कफाच्च पित्तबलतो दोषैः] कफाच्चानिल
श्लेष्मभ्यां मरुतोऽर्कतः समयनुछिद्रांके कोपतः (प्रकुपितैस्तद्गात्रगै-
र्धातुभिः) ॥ १ ॥

¹[वीर्याढ्यैर्बहुभिर्मृतिर्बहुविधा रन्ध्रेक्षकैः खेचरैः
स्वदेशेऽन्यदेशे मार्गे च मरणयोगः
छिद्रे द्वन्द्वगतेऽध्वनि स्थिरगते स्वीयेऽन्यदेशे चरे।
शवस्य दाहक्लेदशोषणयोगाः
दग्धः स्यात्कुणपस्तमोऽर्करुधिरैः शुष्कः शनीज्येऽदुजै
र्युक्ते रन्ध्रगृहे सितेन्दुसहिते क्लिन्नो जले निश्चयात् ॥ २ ॥

---

ग्रहैः अर्कतः वह्यम्ब्वायुधतः ज्वरामयतृड्क्षुत्तः मृतिः भवति। एतदुक्तं भवति—रन्ध्रस्थे रवौ अग्निना बाह्येन जाठरेण च, चन्द्रे अम्बुना बाह्येन रक्तादिरूपेणान्तरेण च, कुजे आयुधेन, बुधे ज्वरेण, गुरौ आमयेन अपरिज्ञातव्याधिना, शुक्रे तृषया पिपासया, शनौ क्षुधा मृतिरिति वक्तव्यमिति। एवं निधने सबलेऽक्षकात् अष्टमस्थानद्रष्टॄणां मध्ये प्रबलात् ग्रहात् अर्कत आरभ्य क्रमेण रविणा पित्तात्, चन्द्रेण वातसहितात्कफात् कुजेन पित्तबलतः, बुधेन दोषैः कफवातपित्तैः, गुरुणा कफात्, शुक्रेण वातसहितात्कफात्, शनिना वातात् एवंविधैः प्रकुपितैर्धातुभिः तद्गात्रगैः तस्याष्टमावेक्षकस्य गात्रं तनुचिन्ताध्याये द्वादशश्लोके उक्तं शीर्षादिस्थानं गतैः मृतिर्भवतीति योजना। एतदुक्तं भवति—अष्टमस्थानावेक्षकेषु बली शनिर्मेषस्थश्चेत् शिरसि प्रकुपितेन वातेन, वृषभस्थश्चेत् मुखे प्रकुपितेन वातेन मृतिरिति। एवमग्रेऽपि। एवं निधनेशादपि वक्तव्यम्। निधनेशे रवौ कन्यास्थे कटौ प्रकुपितेन पित्तेन मृतिरित्यादि ज्ञेयम्। एवं रन्ध्रगत्र्यंशपात् अष्टमस्थानद्रेकाणाधिपतेरपि वक्तव्यम्। अष्टमस्थानद्रेकाणाधिपतौ गुरौ धनुर्गते ऊरौ प्रकुपितेन कफेन मृतिरित्यादि ज्ञेयम् ॥ १ ॥

१ रन्ध्रेऽक्षकाणां बहूनां बलवत्वे मृतिर्बहुविधा तावद्ग्रहसंबंधिधातुप्रकोपजा भवति। अष्टमे मिथुनकन्याधनुर्मीनानामन्यतमे मार्गे मृतिः। मेषकुलीरतुलाम-

शवस्य प्राणिभक्षणयोगः

[व्यालत्र्यंशयुतेऽष्टमे शवपरैः संभक्षितः प्राणिभिः

कूपपतनजमरणयोगः

खे भौमे सुखगे शनौ मदगते चन्द्रे मृतिः कूपतः ।

मरणकाले मोहसंख्या

मोहो लग्नगतोऽदितांशसदृशः प्राणांतकाले भवेद्
द्विघ्नः स्वेशनिरीक्षिते त्रिगुणितो दृष्टे शुभैः खेचरैः ॥ २ ॥]

तीर्थमरणयोगः

[1]छिद्रेशे खभगे च तीर्थमरणं लग्नेशयुक्ते तथा

जीवाढ्यो व(ढ्ये च) सितान्वितेऽप्यथ

---

कराणामन्यतमे परदेशे मृतिः । वृषभसिंहवृश्चिककुंभानामन्यतमे स्वदेशे मृतिः । तथा अष्टमे राहुकेतुरविकुजैः शवस्य दाहः, शनिगुरुबुधैः शोषणं, चन्द्रशुक्राभ्यां जलक्लेदः, । व्यालद्रेकाणानि ९४ पृष्ठे व्याख्यायां कथितानि । अष्टमगते व्यालद्रेकाणे शवस्य भक्षणम् भवति । भक्षितश्च शवस्तच्छरीरे पुरीषरूपेण परिणमति । दशमे कुजे, चतुर्थे शनौ, सप्तमे चन्द्रे कूपे पतितो म्रियते इत्येको योगः । प्राणान्तकाले मोहः प्रज्ञाहानिः, लग्नगता उदिता नवांशा यावन्तस्तावत्संख्यो भवति । मध्ये मध्ये ज्ञानसंभवो यदा तदैको मोहो निवृत्तः, द्वितीयो मोह आरब्ध इति मोहानामनेकत्वं । तथा लग्ने लग्नेशेन दृष्टे पूर्वोक्तो मोहो द्विगुणः, शुभैर्दृष्टे त्रिगुणः इति ज्ञेयम् ॥ २-३ ॥

परदेशमरणयोगः

व(च)रे छिद्रेऽन्यदेशे विपत्

विनष्टकरपादचोरयोगः

षष्ठाष्टस्थबुधारयोर्यदि तदा चोरोऽस्य पादौ करौ

शैलाग्रपातमरणयोगः

नश्येतां क खसुख[स्थ]सूर्यकुजयोः शैलाग्रपाताद्व र धः ॥ ४ ॥

भुजच्छेदयोगः

[1]सूर्यक्ष(र्क्षे) रविजे कुजर्क्षग कु गुरौ नो पापयुक्ते भुज-

एकपादनाशयोगः

छेदो यो(थो)ऽरिगृहे शनिः शि(सि)तयुतो वीरी(वा वी)क्षितोऽथो(न्त्ये)

ऽकहृत् ॥

---

१ दशमे अष्टमाधिपतिः लग्नेशेन, गुरुणा, शुक्रेण वा युतश्चेत्तीर्थमरणमिति त्रयो योगाः। अष्टमे चरराशौ अन्यदेशे मृतिरित्येको योगः। षष्ठाष्टमयोर्यथासंभवं बुधकुजयोः स्थितौ चोरो भवतीत्येको योगः। पूर्वं रिपुचिन्ताध्याये षष्ठस्थाने बुधकुजस्थितौ चोरो भवतीत्युक्तम्। पुनरत्र तत्कथनं दृष्टांततया "यथा षष्ठस्थयोर्बुधकुजयोश्चोरो भवति तथा अष्टमस्थयोरपीति। तेनेदमवगम्यते। षष्ठाष्टमयोः साम्येनानयोर्भावयोः फलं यथासंभवं परिवर्तनीयमिति। ॥ ४ ॥

१ शनौ सिंहे, पापयोगरहिते गुरौ मेषे वृश्चिके वा भुजच्छेद इति द्वौ योगौ। षष्ठे शुक्रयुतः शनिरित्येको योगः। षष्ठे शुक्रदृष्टः शनिरित्यपरो योगः। एवं द्वौ योगौ एकपादनाशकरौ। कर्कटके राहौ सिंहे चन्द्रे शिरश्छेद इत्येको योगः। अष्टमे सूर्यचन्द्रयोर्वधकर्ता इत्येको योगः। षष्ठ पापत्रययुते शुभदृष्टिहीने नेत्रनाश इत्येको योगः।

शिरश्छेदयोगः वधकर्तृयोगश्च

कर्कीगौ हरिग(गेऽ)ब्ज रु(उ)द्धतशिराछि(श्छि)द्रेंऽन्द्विनौ कर्तकः

नेत्रनाशयोगः

सदृग्घीनविधुंश्च शत्रुगृहगः पापत्रयाढ्योऽक्षिहृत् ॥ ५ ॥

ब्रह्मघातकयोगः

[1]सूर्यार(र्यारेऽ))क्षितपापराशिगविधौ स्याद्ब्रह्मघाती पुनः

गोघातियोगः शूलघातयोगश्च

मन्दाढ्यो(ढ्ये) खलु गोवधी त्रितयकेऽजाच्छूलघातः खगै ।

गजकृतमरणयोगः

सौम्ये शत्रुगृहे रवीक्षितयुते षष्ठाष्टमे(में)दौ कजौ(गजै)

र्नाशः—

सर्पकृतमरणयोगः

शत्रुयुते कुजेऽरिगृहगे छिद्रे द्विजिह्वान्मृतिः ॥ ६ ॥

---

१ पापराशिगे चन्द्रे, सूर्यकुजाभ्यां दृष्टे अष्टमगे ब्रह्मघाती भवतीत्येको योगः। तस्मिन्नेव योगे चन्द्रे शनियुक्ते गोघाती भवतीत्येको योगः। मेषवृषभमिथुनेषु त्रिषु राशिषु सर्वेषु ग्रहेषु शूलघात इत्येको योगः। बुधे षष्ठे, षष्ठेऽष्टमे वा स्थिते चन्द्रे रविणा दृष्टे युक्ते वा गजैर्मृतिः इति चत्वारो योगाः। अष्ठमे कुजे शत्रुयुक्ते शत्रुक्षेत्रगते च सर्पमृतिरित्येको योगः।

पशुकृतमरणयोगः

[१]सिंहे कर्किणि सप्तमाष्टगविधौ सागौ विनश्येत्पशोः

अतिपीनांगयोगः

स्वा(सा)गौ स्वा(सा)रिगृहे शनौ रिपुदृशा युक्तो(क्ते)ऽतिपी[नः]
स्मृतः ।

खञ्जयोगः

कर्केंदो(दौ) सशनोप्यु(नौ शु)भग्रहदृशा हीने तु खंजो भवेत्

प्रकारान्तरेण सर्पमरणयोगः

भानौ धर्मगते शशीक्ष(क्षि)तयुते शत्रोर्गृहे सर्पतः ॥ ७ ॥

सारावल्यां—

स्वजनमरणयोगः

[२]कन्यास्थयोरिनेन्द्वोः पापेक्षितयोर्मृतिः स्वजनात् ॥

जलमज्जनमरणयोगः

[३]उभयोरप्य(दये)र्कशशिनोर्यदा तदा तोयमज्जनतः ॥ ८ ॥

---

१ सिंहे कर्किणि वा स्थिते चन्द्रे राहुयुक्ते सप्तमे अष्टमे वा स्थिते चत्वारो योगाः पशुकृतवधकराः । राहुयुक्ते शनौ षष्ठे शत्रुदृष्टे अतिपीन इत्येको योगः । शनियुक्ते चन्द्रे कर्काटके शुभादृष्टे खंजो भवेदित्येको योगः । नवमे रवौ शत्रुगृहे चन्द्रेण दृष्टे युक्ते वा सर्पमृतिरित्येको योगः । २ लग्ने इति शेषः । एवमग्रेऽपि । कन्यालग्नगतौ सूर्यचन्द्रौ पापग्रहैर्दृष्टौ यदि तर्हि स्वजननिमित्तमरणं स्यात् । ३ उभयोदये मीने लग्ने तद्गतौ सूर्यचन्द्रौ पापदृष्टौ यदि तर्हि जलमज्जनमरणयोगः ।

जलोदरमरणयोगः

[1]मृत्युर्जलादि्शे(लोदरा)न्मन्दे कुलीरे मकरे विधौ ॥

अग्निमरणशस्त्रमरणयोगौ

[2]सवह्निशस्त्रजश्चन्द्रे कुजर्क्षे पापमध्यगे ॥ ९ ॥

रक्तशोफमरणयोगः

कन्यायां पापमध्यस्थे चन्द्रे रक्तेछ(क्तोत्थ)शोफजः ॥

रज्जुमृत्युपातमृत्य्वग्निमृत्युयोगाः

[3]शस्त्रा(रज्ज्व)ग्निपाज(त)जो मृत्युः पापांशे(तः) सौरभे विधौ ॥ १० ॥

कारागृहमरणयोगः

[4]सौम्यादृष्टौ खलौ धर्मधीस्थौ बन्धान्मृतिप्रदौ ॥

वधस्त्र्यंशे स(च)पाशाहिमगुछिद्रगतस्त(निगडे छिद्रगे त)था ॥ ११ ॥

---

१ शनिः कुलीरे चन्द्रो मकरे यदि तर्हि जलोदरमृत्युयोगः । २ चन्द्रे पापमध्यगे मेषे वृश्चिके वा स्थिते द्वौ योगौ । ३ चन्द्रे पापमध्यगते मकरे कुंभे वा स्थिते द्वौ योगौ । रज्जुना वा अग्निना वा ऊर्ध्वदेशात्पतनेन वा मृतिरेतद्योगजस्य भवति । ४ एकः पापः पंचमे, अन्यश्च पापो नवमे स्थितौ, तौ द्वावपि शुभदृष्टिरहितौ यदि तर्हि बन्धान्मृतिः । अयमेको योगः । अष्टमभावगते पाशद्रेक्काणे, सर्पद्रेक्काणे, निगडद्रेक्काणे वा बन्धान्मृतिरिति त्रयो योगाः । एवं चत्वारो बन्धमरणयोगाः । सर्पद्रेक्काणानि ९४ पृष्ठे व्याख्याने कथितानि । मकरघद्रेक्काणः पाशनिगडद्रेक्काणः ।

गृहे स्त्रीनिमित्तमरणयोगः

[1]सपापे शीतगौ द्यू(द्यू)ने मीने राश्युद्गमे रवौ ॥
मेष(षे) शुक्रे(क्रेऽ)गनाहेतुमरणं मन्दिरे भवेत् ॥ १२ ॥

शूलप्रोतमरणयोगः

[2]शूलोऽद्भिन्नमृतिर्भौमे सुखेऽर्के वा यं(य)मेऽम्बरे ॥
त्रिकोणाय(य)गतैः पापैर्युगपत्सक्षशेंदुभिः ॥ १३ ॥

**सारावल्यां—**

रुधिरे सुखेप्य(ऽथ) [वा]र्के वियती(ति) यमे क्षीणचन्द्रसंयुक्ते ॥
पापैस्त्रिकोणलग्ने शूलप्रोतस्य निर्दिशेन्मरणं ॥ १४ ॥

काष्ठाभिघातमरणयोगः

[3]चतुर्थेऽर्केऽव(म्ब)रे भौमे क्षीणचन्द्रसमन्विते ॥
मन्ददृष्ट(ष्टे) मृतिं याति जातः काष्ठेन ताडितः ॥ १५ ॥

---

१ मीने लग्ने रवियुक्ते, सप्तमे पापयुते चन्द्रे, शुक्रे मेषे एको योगः। २ शनौ दशमे कुजे सूर्ये वा चतुर्थे द्वौ योगौ। लग्नपंचमनवमेषु यथासंभवं युगपत् स्थितेषु क्षीणचन्द्ररविकुजशनिष्वेको योगः। इदं वराहमिहिरमतम्। कल्याणवर्ममते तु—क्षीणचन्द्रयुक्तः शनिर्दशमे, कुजः सूर्यो वा चतुर्थे, इति द्वौ योगौ। लग्नपंचमनवमेषु यथासंभवं युगपत् स्थिता रविकुजशनय इत्येको योगः। अत्र मतद्वयानुसारेण श्लोकद्वयम्। अतो नात्र पौनरुक्त्यभ्रमः कार्यः। ३ चतुर्थे सूर्ये, दशमे शनिदृष्टे क्षीणचन्द्रयुक्ते कुजे काष्ठमरणमित्येको योगः। इदं कल्याणवर्ममतं। वराहमते तु चतुर्थे सूर्ये, क्षीणचन्द्रदृष्टे कुजे दशमे शूलप्रोतमरणमित्येको योगः। चतुर्थे सूर्ये, शनिदृष्टे कुजे दशमे काष्ठमरणमित्यपरो योगः। वराहमतरीत्या "क्षीणचन्द्रनिरीक्षिते" इति पाठः कल्पनीयः।

[1]क्षीणेऽन्दुमन्दार्कि(र्क)कुजैश्च रंध्र ८

लग्नां १ बु ४ ख १० स्थैर्लकु(गु)डाहतांगः ।

धूममृतिवह्निमृतिकारागृहमृतिशरीरनिकुट्टनमृतियोगाः

[2]तैः कर्मलग्नात्मजक(ध)[र्म]संस्थै

धूमाग्निमृत्युर्गतिकृद्धनांगः (बन्धाङ्गनिकुट्टनांतः) ॥ १६ ॥

शस्त्रमरणाग्निमरणराजकोपमरणयोगाः

[3]सुखास्तखस्थैः कुजसूर्यमन्दै

र्मृत्युस्तु शा(श)स्त्रानलभूपकोपात् ।

क्षतमरणयोगः कृमिमरणयोगश्च

[4]तथा क्षतोऽस्यः(स्थः) कृमिजोऽगपाक्षो(तो)

मन्देऽन्दुभौमैर्धनबंधुखस्थैः ॥ १७ ॥

वाहनपतनमरणयोगः (यानपतनमरणयोगः)

[5]सूर्येऽव(म्ब)रे सुखे भौमे मृत्युर्यानप्रपाततः ॥

---

१ अष्टमे क्षीणचन्द्रे, लग्ने शनौ, चतुर्थे रवौ, दशमे कुजे काष्ठमरणमित्येको योगः। २ दशमे क्षीणचन्द्रे, लग्ने शनौ, पञ्चमे रवौ, नवमे कुजे एको योगः। अत्र योगे जातः धूमेन वा अग्निना वा कारागृहबन्धनेन वा काष्ठपाषाणादिकृतेन शरीरनिकुट्टनेन वा म्रियते। ३ चतुर्थे कुजे, सप्तमे रवौ, दशमे शनावेको योगः। अत्र योगे जातः शस्त्रेण राजकोपेन वह्निना वा म्रियते। ४ द्वितीये शनौ, चतुर्थे चन्द्रे, दशमे कुजे एको योगः। अत्र योगे क्षतेन वा कृमिभिर्वा मरणं भवति। ५ दशमे सूर्ये, चतुर्थे कुजे यानपतनजो मृत्युरित्येको योगः। पूर्वं "खसुखस्थ-सूर्यकुजयोः शैलाग्रपाताद्वधः" इत्यनेनास्यैव योगस्य फलान्तरं कथितं। तेनेदमव-

यन्त्रोत्पीडनजमरणयोगः

[1]यंत्रोऽत्पीडन[जो] द्यूने भौमेऽ[र्केऽन्द्वर्कजोऽङ्गमे] ॥ १८ ॥

विण्मध्यमरणयोगः

[2][सौरर्क्षे शीतकिरणे कुजे जूके शनौ क्रिये ॥
विण्मध्ये गलितेन्द्वर्कर्कु]रये ज्ञे(जैराज्ञा)स्तबन्धुगै(गैः) ॥ १९ ॥

गुह्यरोगमरणगुदरोगमरणकृमिक्षतमरणशस्त्रदाहमरणयोगाः

[3]बलान्वितारवि(वी)क्षिते कृशे विधौ मृतौ शनौ ॥
कृमिक्षताद्गुदामयान्मृतिश्च शस्त्रदारव(हतः) स्यात् ॥ २० ॥

---

गम्यते। एतदध्यायोक्ता योगा राश्यंशयोगेक्षणवशाद्व्यभिचरन्ति। तत्र यत्फलं संभवति तदेव फलम् बुद्धिमद्भिरभ्यूह्य वक्तव्यम्। अत्रोदाहरणं प्रकृतयोग एव। शैलाग्रपतनयानपतनयोः पतनत्वेन साम्येप्यस्ति सर्षपमेर्वोरिव महदन्तरं। प्रकृतयोगे शुभराश्यंशयोगेक्षणादिसद्भावे यानप्रपातः। तदभावे शैलाप्रपात इत्यादिकमूह्यम्। सारावळीरीत्यैतद्योगजो मद्यपाननिमित्तपतनेन म्रियते। अतस्तद्रीत्या "मृत्युः पानप्रपाततः" इति पाठः कल्पनीयः। बृहज्जातकादिरीत्या यथास्थित एव पाठः।

१ अत्र श्लोकार्धे द्वितीयः पादः उत्तरः श्लोकश्च मूले लुप्तः। स च मया पूरितः कुण्डल्यां निवेशितः। अस्मिन्नर्थे कुजे सप्तमे, शनीन्दुरविषु लग्ने यन्त्रोत्पीडनजो मृत्युरित्येको योगः कथितः। २ चन्द्रे कुम्भे मकरे वा स्थिते, तुलायां कुजे, मेषे शनौ द्वौ योगौ। निर्बले चन्द्रे दशमे, रवौ सप्तमे, कुजे चतुर्थे एको योगः। एषु त्रिषु योगेषु मृतिवेलायामकृतशौचो विण्मध्यशायी म्रियते। अत्र तृतीयो योगः सिद्धसेनोक्तः। ३ क्षीणचन्द्रे बलिना कुजेन दृष्टे शनावष्टमे एको योगः। अत्र योगे चन्द्रस्य क्षीणत्वेन बलवत्कुजदृष्टत्वेन च यत्र तत्र स्थितस्यापि रक्तकोपकरत्वं। अष्टमस्थस्य शनेर्व्यञ्जनहानिकरत्वं। तेन गुदरोगादिसंभवः सहजः इति भावः ॥ २० ॥

[1]द्रेक्काणे स्वपतौ वा पुंसः श्रीबादरायणः प्राह ः
तत्रै व चांत्यभागे मृत्युरितिसारतस्तथा जीर्णात् ॥
प्लीहवागुल्मयोगैः प्रमेहमूर्छाभिघाताद्वा ॥
तत्रैव मध्ये भागे दण्डाभिहतस्य मुष्टिघाताद्वा ॥
उपश्लिष्टतो वा गीताद्भार्यामृत्युर्विवादाद्वा ॥

पक्षिमरणयोगः

[2][रवौ सरुधिरे बूने निधने रविसंभवे ॥
रसातलस्थे हिमगौ मृत्युः पक्षिकृतो भवेत् ॥ २१ ॥]

शैलाग्राशनिकुडयपातमरणयोगः

[3](लग्ने सूर्ये विधौ धर्मे शनौ छिद्रे कुजे सुते ॥
शैलाग्राशनिकुडयानां पतनैर्मरणं भवेत् ॥ २२ ॥]

[4][लग्ने सूर्ये विधौ धर्मे शनौ पुत्रे कुजेऽष्टमे ॥
शैलाग्राशनिकुडयानां पतनैर्मरणं भवेत् ॥ २३ ॥]

---

१ अत्र २० तमश्लोकानन्तरं ३१ तमश्लोकपर्यन्तं ग्रन्थलोपोऽनुमीयते । एतच्छ्लोकात्परं सार्धश्लोकद्वयं दुर्बोधमशुद्धिबहुलं च । अतस्तत्स्थाने सारावळीतः संगृह्य रचिताः श्लोकाः कुण्डल्यां निवेशिताः । २ स्पष्टार्थोऽयं श्लोकः । अयं श्लोकः सारावळीतोऽनूदितः । अत्र सरुधिरे इत्येतद्रवावित्यत्रैवान्वेति न तु रविसंभवे इत्यत्रेति स्फुटमवगम्यते । तथापि रुद्रभट्टेन बृहज्जातकव्याख्याने सरुधिरे अर्कपुत्रे इति व्याख्यातम् । तत्र कारणं न मन्यामहे । ३ अयं योगः बृहज्जातकानुसरी । ४ अयं योगः सारावल्यनुसारी ।

### मरणस्थलनिर्देशः

[1][लग्नांशाधिपतेर्भूमौ यवनेन्द्रा मृतिं जगुः ॥
परिकल्प्यो विशेषश्च ग्रहयोगेक्षणादिजः ॥ २४ ॥]

[2][लग्नांशाधिपयुग्राशिसमभूमौ मृतिं वदेत् ॥
परिकल्प्यो विशेषश्च ग्रहयोगेक्षणादिजः ॥ २५ ॥]

### अथ अष्टमराशिगतद्रेक्काणफलम्

[द्वाविंशतितमस्त्र्यंशो लग्नत्र्यंशान्मृतेर्भवेत् ॥
कारणं क्रूरसंयुक्तवीक्षितस्तत्फलं क्रमात् ॥ २६ ॥]

### मेषगतद्रेक्काणफलम्

[मेषादिमे मृतिस्त्र्यंशे पित्ताम्बुविषसर्पजा ॥
द्वितीयेऽरण्यकृम्यंबुहिमैस्त्र्यंशे मृतिं वदेत् ॥
तटाककूपपतनात्तृतीये त्र्यंशके मृतिः ॥ २७ ॥]

---

१ अयं योगः सारावल्यनुसारी । जन्मलग्नवांशाधिपतेः समानायां भूमौ मृतिर्भवतीति यवनेन्द्रमतम् । रवौ देवालये, चन्द्रे जलसमीपे, कुजे अग्निसमीपे, बुधे विहारमन्दिरे, गुरौ कोशगृहे, शुक्रे शयनगृहे, शनौ उच्छिष्टादिप्रक्षेपणस्थाने मृतिरिति भावः । तस्यैव नवांशाधिपतेः शुभग्रहयोगे दृष्टौ वा देवालयादीनां दृढत्वं, जलाग्न्यादीनां पवित्रत्वं च ज्ञेयम् । अशुभग्रहयोगे दृष्टौ वा देवालयादीनां जीर्णत्वं, जलाग्न्यादीनामपवित्रत्वं च ज्ञेयम् । उत्तरश्लोकस्तु बृहज्जातकरीत्यैतद्योगपरः । २ जन्मलग्नवांशाधिपतिना युक्तो यो राशिस्तत्समानायां भूमौ मृतिर्भवति । मेषे दिवा अरण्ये, रात्रौ ग्रामे इत्यादिकमूह्यम् । अधिकं तु पूर्वश्लोकवत् ।

वृषभगतद्रेक्काणफलम्

[वृषभाद्ये खराश्वोष्ट्रकरभेभ्योऽथ मध्यमे ॥
पित्ताग्निचोरवातेभ्योऽन्त्येऽस्त्रयानासनाश्वतः ॥ २७ ॥]

मिथुनराशिगतद्रेक्काणफलम्

[मिथुने श्वासकासाभ्यामाद्ये मृत्युर्द्वितीयके ॥
संनिपातवृकक्ष्वेळमहिषैः स्यात्तृतीयके ॥ २८

वनवासिचतुष्पादारण्यकेऽभाद्रिपाततः ॥ २९ ॥]

कर्काटकराशिगतद्रेक्काणफलम्

[कुळीराद्येऽभिशापोऽस्था मध्यमे विषपानजा ॥
मृतिरन्त्ये प्रमेहासृग्गुल्मतन्द्रीखगादिजा ॥ ३० ॥]

सिंहगतद्रेक्काणफलम्

सिंहाद्ये दृकाणे विषदोषाद्वहुचराज्ज(त्पदरुजा ज)लाद्वापि ॥
भवति मरणं निमित्तैर्नानाक(का)रैस्तथा रोगैः ॥ ३१ ॥

जलजहृदयामयकृतो मृत्युः स्यात्सिंहमध्यमे त्र्यंशे ॥
तस्यांते गुदरोगै[रभिशापाच्छस्त्रै]र्विषेण वा मृत्युः ॥ ३२ ॥

कन्यागतद्रेक्काणफलम्

कन्याद्ये चोरा[न]लपक्षिभिरन्तोऽथ वा शिरोरोगात् ॥
दुर्गाहिदंष्ट्रितुरगैस्तृषयापि मृतिर्द्वितीयेंऽशे ॥ ३३ ॥

**सारावल्यां—**

करभखरशस्त्रतोयादपि पाशात्त्वां(तिखातात्त्वो)कृतान्नपानाद्वा ॥
अन्ते(न्त्ये) कन्यात्र्यंशे नृणां मृत्युः समादिष्टः ॥ ३४ ॥

तुलागतद्रेक्काणफलम्

आद्ये तुलाद्रेष्का(ह्का)णेऽगनाचतुष्पद ह्व निपात(न)जो मृत्युः ॥
जव(ठ)रामयजो मध्यत्र्यंशेऽत्ये वा जले ज्ञेयः (न्त्ये व्यालजलजेभ्यः)
॥ ३५ ॥

वृश्चिकगतद्रेक्काणफलम्

अलिनः प्रथमत्र्यंशे शस्त्रविषस्त्रीकृतान्नपानैः स्यात् ॥
मध्ये श्वादिभिरणे लो(स्त्रसनरोगैर्लो)ष्टादिघाततोंऽत्ये मृतिर्भवति
॥ ३६ ॥

चापगतद्रेक्काणफलम्

[१]चापाद्ये शकृदनिलाद्विषावि(नि)लान्मध्यमे त्र्यंशे ॥
जठरामयैस्तृतीये [जलोद्भवैर्वा] जलेन वा मृत्युः ॥ ३७ ॥

मकरगतद्रेक्काणफलम्

हरिशु(सू )करादिराजभिरंतो मकरादिद्दकाणे **स्यात्** ॥
मध्ये जलजैऽकशफादंत्ये शस्त्राग्निचोरघातेन ॥ ३८ ॥

---

१ शकृदनिलात् गुदानिलभवैर्नानारोगैरिति यावत् । विषानिलात् विषभवैरनिलभवैश्च महादोषैरिति यावत् । उत्तरार्धं तृतीयत्र्यंशफलपरम् ।

कुंभगतद्रेकाणफलम्

[1]कुम्भाद्ये जलज(तः) स्त्रीविषमार्तो(र्ति)र्मद्नगु[ह्य]रुजा ॥
मध्यो(ध्ये)ऽयंते मृत्युश्चतुष्पदमुखरोगैर्भवति दृक्काणे ॥ ३९ ॥

मीनगतद्रेकाणफलम्

मीनाद्ये स्त्रीग्रहणात्प्र(हणीप्र)मेहगुल्मैरथ द्वितीयेंऽशे ॥
कर्पूराज्जलरोगादर्थविमूत्रोद्भवोऽन्त्येंऽशे ॥ ४० ॥

(नौभेदाज्जलमध्ये कुत्सितरोगोद्भवोऽन्त्येंऽशे ।)

॥ इति अष्टमगतद्रेकाणफलम् ॥

---

## ॥ अथाष्टमगतग्रहाणां स्वोच्चादिद्वादशवर्गफलम्

**जातकोत्तमो(मे)—**

अष्टमे द्वादशवर्गविभागः

[2]स्वोच्च(च्चे) १ स्वोच्चनवांशे च २ उ(शु)भवर्गे ३ च नीचभे र ४ ॥
क्रूरभे ५ क्रूरषड्वर्गे ६ मित्रभे ७ सुहृदंशके ८ ॥ ४१ ॥

---

१ कुम्भाद्ये जलतो मृत्युः, स्त्रीकृतैर्विषमैरार्तिश्च भवति । २ अष्टमे द्वादशधा फलं ग्रहदृष्टियोगाभ्यां कथितम् । तथा हि—अष्टमे १ स्वोच्चे रवौ मतया शरभंगादिवत्स्वयं अग्निप्रवेशेन, २ स्वोच्चनवांशे राजभयेन, ३ शुभग्रहसप्तवर्गे प्रमादेन, ४ नीचगृहे वाताभिभ्यां, ५ क्रूरग्रहगृहे डाभिकव्यापारेण, ६ क्रूरग्रहषड्वर्गे शरीरे अग्निदोपनेन, ७ मित्रगृहे विषादिमारकद्रव्येण, ८ मित्रषड्वर्गे बन्धनेन, ९ वर्गोत्तमे लोहाभिघातेन, १० शत्रुगृहे रक्तप्रकोपेन, ११ शत्रुषड्वर्गे क्षयकासुरोगैः, १२ स्वक्षेत्रे स्त्रीनिमित्तअपराधात् मरणं भवति । एवं द्वादशधा

वर्गोत्तमेऽ ९ रिभेऽ १० यंशे ११ स्वर्क्षे १२ द्वादशधा क्रमात् ॥
निर्याणं ग्रहयोगाद्यैः कथ्यते यवनोदितं ॥ ४२ ॥

अष्टमस्थरवेः स्वोच्चादिद्वादशवर्गफलम्

भक्तिजाग्निप्रवेशेन १ र(रा)जन्नी(भी)तः २ प्रमादतः ३ ॥
पवनाग्नि(वाताग्निभ्यां) ४ दंभकृत्या ५ दीपनेन ६ विषादिना ७ ॥ ४३ ॥

बन्धनाच्चैव ८ लोहाच्च ९ रक्तकोपा १० त्तथैव च १० ॥
क्षयकासा(सैः) ११ स्त्र्यपराधा १२ न्मृत्युर्मृत्युगते रवौ ॥ ४४ ॥

अष्टमस्थचन्द्रस्य स्वोच्चादिद्वादशवर्गफलम्

जलप्रवेशा १ द्धस्ताभिघारता(ततोऽ) २ शनिपाततः ३ ॥
स्त्रीहस्ता ४ त्पित्तकफलो(तो) ५ दोषत्रयभवामयात् ६ ॥ ४५ ॥

[1]ज(जा)ठरात् ७ गुदरोगाच्च ८ ................ ॥
........................[मृत्युर्मृत्युगते विधौ ॥ ४६ ॥]

---

निधनस्थस्य रवेर्निर्याणकारकत्वमुक्तं। एवमेवाष्टमभावो यदि रवेरुच्चराशिः सूर्येण दृष्टस्तदापि भक्तिजाग्निप्रवेशेन मृत्युरित्यादि पूर्वोक्तक्रमेण ज्ञेयम्। एवं चन्द्रादीनामप्यष्टमभावस्थितिदृष्टिनिमित्तं फलं क्रमेण कथितम् (जलप्रवेशादित्यादिना)।

१ अत्र ४६ श्लोके पादत्रयं लुप्तम्। ४७ श्लोके प्रथमः पादश्च लुप्तः। वर्गोत्तमे, शत्रुगृहे, शत्रुषड्वर्गे, स्वक्षेत्रे च विद्यमानस्य चन्द्रस्य फलम्, तथा स्वोच्चे, स्वोच्चनवांशे च स्थितस्य कुजस्य फलं लुप्तम्।

अष्टमस्थानगतकुजस्य स्वोच्चादिद्वादशवर्गफलम्

........................पशुपा ३ दा (द)स्त्र[शस्त्र]तः ४ ॥
द्विजपाश्वा ५ दश्मघाता ६ त्काष्ठात् ७ कूपप्रपाततः ८ ॥ ४७ ॥

भृगुपाता ९ द्रुमरोधा(गा) १० द्विषभक्षण(त)स्तथा ११ ॥
चोरप्रहरणा १२ द्भौमे मृतिः स्यान्मृतिभावगे ॥ ४८ ॥

अष्टमगतबुधस्य स्वोच्चादिद्वादशवर्गफलम्

ज्वरा[त्] १ कफविकारेभ्यो २ व्रणरोगा ३ द्व्रणेन च ४ ॥
महाभय(यात्) ५ प्रियजनवियोगा ६ द्वदनामयात ७ ॥ ४९ ॥

नेत्ररोगा ८ द्वायुरोगा ८ द्वन्धनेनोऽ १० दरामयात् ११ ॥
पादजणा(घाता) १२ द्बुधे मृत्यु[र्मृत्यु]भावगते क्रमात् ॥ ५० ॥

अष्टमगतगुरोः स्वोच्चादिद्वादशवर्गफलम्

नानारोगैः १ शूलरोगैः २ कर्णरोगात्तथैव च ३ ॥
स्वजना ४ द्विषूचिकातोऽ ५ तिसारा[त] ६ निज़मृत्युतः ७ ॥ ५१ ॥

रक्तकोपात् ८ करग(भ)तः ९ ख(स्व) केशा १० दूर्ध्वकोपतः ११ ॥
बहुभक्षणतो १२ मृत्युर्जीवे स्यान्मृत्युभावगे ॥ ५२ ॥

अष्टमगतशुक्रस्य स्वोच्चादिद्वादशवर्गफलम्

तृष्णया १ मुखरोगाच्च २ दन्तदोषा[त्] ३ त्रिदोषतः ४ ॥
विषूच्य(च्या) ५ वनसत्वेन ६ भुजंगा ७ द्विष[भ]क्षणात् ८ ॥ ५३ ॥

लूतया ९, विषकंठेन र १० सुरभो(तोऽ)स्थप्रकोपतः ११ ॥
बहुदुःखा १२ द्भवेन्मृत्युर्मृत्युभावगते सिते ॥ ५४ ॥

अष्टमगतशनेः स्वोच्चादिद्वादशवर्गफलम्

बुभुक्षया १ लंघनेन २ तथा प्रायोऽपवेशनात् ३ ॥
बन्धुवर्गा ४ दरिकरात् ५ क्षयेण ६ प(पृ)थुदद्रु(द्रु)तः ७ ॥ ५५ ॥

पित्तकै ८ जण(र्जन)कोपेन ९ हयपादाभिघातजः १० ॥
हस्तितः ११ खरतो १२ मृत्युर्मन्दे स्यान्मृत्युभावगे ॥ ५६ ॥

॥ इति अष्टमगतग्रहाणां स्वोच्चादिद्वादशवर्गफलम् ॥

---

## ॥ अथ अष्टमाधिपतेर्द्वादशभावाश्रयफलम् ॥

**जन्मप्रदीपे—**

अष्टमपे लग्नगते बहुविघ्नो दीर्घ[वैर]भृस्ते(स्ते)नः ॥
[1]नेऽष्टानुवादति(नि)[र]तो लक्ष्मीं लभते नृपतिवचसा ॥ ५७ ॥

निधनपतौ धनलीनेऽल्पजीवितो वैरवान्नरश्चोरः ॥
क्रूरे सौम्ये तु शुभं किं तु क्षितिपालतो मरणं ॥ ५८ ॥

अष्टमपतौ तृतीये बन्धुविरोधी सुहृद्विरोधी च ॥
व्यंगो दुर्वो(र्वा)ग्लोलः सोदररहितो भवत्यथ वा ॥ ५९ ॥

---

१ अनिष्टभाषणयुत इत्यर्थः ।

निधनेशे तुर्यगते पितृरिपु(पुः)[1] पितृतो नयेच्छल(ल्ल)क्ष्मीं ॥
पितृपुत्रयोश्च युद्धं पिता च रोगान्वितो भवति ॥ ६० ॥

[2]छिद्रपतौ तनयस्थे क्रूरे सुतविरहितः शुभे सुसुतः ॥
जातोऽपि नैव जीवति जीवत्यथ कै(कि)त[व]कर्मत(र)तः ॥ ६१ ॥

छिद्रेशे रिपुसंगते क्षि(दि)नकरे भूभृद्विरोधी गुरु(रा)
स्त्वं(वं)गे सीदति दृष्टिरोगकलितः शुक्रे सरोगी विधौ ।
भौमेऽध्यसि(र्थैः स)हितो बुधे हि भयभृत्तंदा(द्रा)र्तिभूतः(युक्तः) शनौ
कष्टं राहुबुधौ हि तत्र शशभृत्सौम्येऽक्षितो नैव किं(चेत्) ॥ ६२ ॥

मृत्युपतौ सप्तमगे दुष्टः कुस्त्रीप्रियो गुदव्याधिः(धि)[युतः] ॥
क्रूरे भार्याद्वेषी कलत्रदोषान्मृति[र्भवेन्नूनम्] ॥ ६३ ॥

[मृति]नाथे नवमस्थे निःसंगी जीवघातकः पापी ॥
निर्बन्धुर्निस्स्नेही पूज्यो विमु(सु)खो मुखव्यंगः ॥ ६४ ॥

काम(कर्म)गते निधनेशे नृपकर्मा नीचकर्मनिरतश्च ॥
अलसः क्रूरोऽन्यभवस्तनयो वा न जीवति माता ॥ ६५ ॥

लाभस्थे वाष्टमपे वा(चा)ल्पपे(सु)[खो] दुःखी भवति पश्चात् ॥
दीर्घायुः सौम्ये(म्य)खगे पापेऽल्पायुर्नरो भवति ॥ ६६ ॥

---

१ पितृतः लक्ष्मीं संपदं नयेत् । बलात्कारेण स्वयं गृह्णीयादित्यर्थः ।
२ अष्टमेशे क्रूरे पंचमगते पुत्रो न जायते । जातोऽपि न जीवति । जीवितोऽपि कितवकर्मरतो भवतीति योजना ।

व्ययसंस्थितेऽष्टमेशे क्रूरे वा तस्करः शठो निकृष्टश्च ॥
आत्मगतिर्व्यं(र्व्य)गवपुर्मृतस्तु काकादिभिर्भक्ष्यः ॥ ६७ ॥

॥ इति अष्टमाधिपतेर्द्वादशभावाश्रयफलम्

---

## ॥ अथ अष्टमभावाश्रितप्रत्येकग्रहफलम् ॥

### हिल्लाजमते—

[1]छिद्रे स्त्रि(त्रि)[के] ३ मृतिमिनो हिमगुः षद्रदे(डब्दे) ६
नाशं कुजो विपदमक्षियमेऽ २२ थ सौम्यः ।
मन्वब्दके १४ धनलयं गुरुरिन्दुरामे ३१
रोग शि(गं सि)तो दशमके १० स्वपराक्रमं च ॥ ६८ ॥

### होराप्रदीपे—

वियोगदुःखसन्तप्तः प्रियाणां धनवर्जितः ॥
विकलाक्षो रवौ रन्ध्रे स्वल्पापत्योऽल्पजीवितः ॥ ६९ ॥

व्याधिबधन(बन्धन) दुःखार्तस्तेजस्वी मतिमान् भवेत् ॥
लग्नादष्टमभावस्थेऽ[2]ल्पनिष्ठो रजनीकरे(ष्ठः क्षीणशीतगौ) ॥ ७० ॥

---

१ अष्टमे रवौ, तृतीये वत्सरे, चन्द्रे, षष्ठे वत्सरे मृतिः । अष्टमे कुजे द्वाविंशतितमवत्सरे विपत्, बुधे चतुर्दशवत्सरे धननाशः, गुरावेकत्रिंशे वत्सरे रोगः, सिते दशमे वत्सरे स्वपराक्रमो, भवतीति भावः । २ अल्पा निष्ठा स्थितिः जीवितकालो यस्य सः अल्पनिष्ठः अल्पायुरिति यावत् । अत्र पूर्वार्धोक्तं फलं पूर्णचन्द्रस्य, द्वितीयार्धोक्तं तु क्षीणस्येति सारावल्यां व्यक्तं ।

विषाग्निशस्त्ररोगार्तः कुदेहो नीचकर्मकृत् ॥
शोकाकुलो महीपुत्रे लग्नादष्टमभावगे(स्वल्पायुर्निधनाश्रिते) ॥ ७१ ॥

चिरायू रोगरहितो विख्यातः स्थिरसौहृदः ॥

[[1]नामसारः कुलोद्धारकरः स्याद्दण्डनायकः ॥]

नृपतुल्यो विशोकस्य(कः स्या)द्बोधनेऽष्टमभावगे ॥ ७२ ॥

दीर्घायुर्भृतको दासो मलिनः स्त्रीरतः खलः ॥
गुरावष्टमभावस्थे यवनैः सौम्यकाः(कः) स्मृतः ॥ ७३ ॥

सन्तोषसत(सुख)संपन्नो धनी नृपसमो भवेत् ॥
चिरायू रोगहीनश्च शुक्रे निधनभावगे ॥ ७४ ॥

[2]कुष्ठादिव्याधिसंतप्तः सर्वारंभविवर्जितः ॥
कितवः स्वल्पजीवी च शनौ निधनभावगे ॥ ७५ ॥

॥ इति अष्टमभावाश्रितप्रत्येकग्रहफलम् ॥

---

ग्रहाणां लोकाधिपत्यम्

[देवलोकाधिपः पूज्यो यमज्ञौ नरकाधिपौ ॥]
पितृमानुषभूतादिलोकेशौ चन्द्रभार्गवौ ॥ ७६ ॥]

---

१ नामसारः श्रेष्ठनामयुत -इति भावः। तन्नामश्रवणेनैव सर्वे नमन्तीति भावः। २ अत्र पंच श्लोका अत्यावश्यका एतद्ग्रन्थानुक्तविषयपरा ग्रन्थान्तरोपजीवनेन मया ग्रथिता एतदध्यायाति कुंण्डल्यां निवेशिताः।

### लोकतारतम्यम्

[सूर्यारी तिर्यगधिपौ [1]तुंगासन्नाः स्वलोकगान् ॥]
[वरान् कुर्युर्विपकृष्टाः स्वतुङ्गान्मध्यमाधमान् ॥ ७७ ॥]

### पूर्वजन्मज्ञानम्

[2][सूर्येन्द्वोर्बलिनस्त्र्यंशनाथात्पूर्वजनिं वदेत् ॥]

### भाविजन्मज्ञानम्

[3][अस्तार्यष्टमगः कुर्याद्बलवान्भाविनीं गतिं ॥ ७८ ॥]
[तेषु ग्रहविहीनेषु षष्ठाष्टमदृकाणपौ ॥]

### मोक्षसंभवज्ञानम्

[4][शेषेषु बलहीनेषु स्वोच्चे केन्द्रारिमृत्युगः ॥ ७९ ॥]

---

१ स्वोच्चांशाद्राशिद्वयांतरे स्थिता ग्रहाः तुंगासन्नाः। ते स्वलोकस्थान् श्रेष्ठान् कुर्युः, ततः परं राशिचतुष्टयपर्यंतं स्थिता मध्यमान् कुर्युः, ततः परं नीचांशपर्यंतं स्थिता अधमान् कुर्युः इति भावः। २ सूर्यचन्द्रयोर्यो बली, तदाश्रितस्य द्रेष्काणस्याधिपः पूर्वजन्मज्ञापकः। तदुक्तदेवलोकादिगतः पूर्वजन्मनि जीवोऽयमासीदिति भावः। ३ षष्ठसप्तमाष्टमेषु ग्रहसत्वे ते ग्रहाः, ग्रहाभावे षष्ठाष्टमभावाश्रितद्रेष्काणपौ (लग्नद्रेष्काणात् षोडशद्वाविंशद्रेष्काणाधिपौ) च आगामिजन्मकारकाः। अनेकेषां कारकत्वसंभवे बलिन एकस्यैव कारकत्वं। ते च स्वोक्तलोकं मरणानंतरं प्रापयेयुरिति भावः। ४ लग्ने तृतीयद्रेष्काणे शुभनवांशयुते सति गुरौ कर्काटकस्थे, लग्ने चतुर्थे षष्ठे सप्तमे अष्टमे दशमे वा स्थिते मोक्षो भवति। परमिदं फलं गुरुभिन्नानां सर्वेषां ग्रहाणां बलहीनत्वे एव संभवति, न त्वेकस्यापि [बलवत्वे] इति ज्ञेयम्। आगामिजन्मज्ञानं न केवलं जन्मलग्नात्, अपि तु मरणलग्नादपीति ज्ञेयम्।

[गुरुर्मोक्षप्रदो लग्नेऽन्त्यत्र्यंशे सौम्यभागके ॥]

[जन्मप्राणान्तलग्नाभ्यां वदेदागामिनीं गतिम् ॥ ८० ॥]

॥ इति श्रीजातकसारदीपे मृत्युचिन्ताध्यायः षट्चत्वारिंशः ॥

---

## ॥ अथ भाग्यचिन्ताध्यायः सप्तचत्वारिंशः ॥

### सौभाग्यदौर्भाग्ययोगौ

[1]लग्नाद्विधोर्बलयुतो(जो) नवमं हि भाग्यं

स्वेऽशाढ्यदृष्टमिह सद्गृ(द्ग्र)हयुक्तदृष्टं ।

सद्भाग्यकृत्खलयुतेऽक्षितमन्यथाकृत्

तद्दक्ष(दृष्ट)तद्गततदीय(श)वशाद्विचिंत्यं ॥ १ ॥

### सौभाग्ययोगान्तरं

[2]भाग्ये स्वभोऽच्चगखगे शुभभाग्य ईज्ये

### स्वदेशपरदेशयोर्भाग्यलाभः

वा स्वेशदृरपु(दृग्यु)जि निजे फलदं परेऽन्यैः ॥

---

१ लग्नचन्द्रयोर्मध्ये यो बली तस्मान्नवमं स्थानं भाग्यम् । तच्च तदीशेन शुभैर्ग्रहैर्वा युतं सद्भाग्यकृत् । अथ वा तैरेव दृष्टम् सद्भाग्यकृत् । भाग्येशभिन्नैः पापग्रहैश्च युतं दृष्टं वा अन्यथाकृत् दौर्भाग्यकृत् । भाग्यदौर्भाग्ययोस्तारतम्यं तु सप्तमभावचिन्ताध्यायप्रथमश्लोकव्याख्यानोक्तदिशा ज्ञेयम् । (तद्दृष्टिति) भाग्यस्थानद्रष्टुः भाग्याधिपतित्वे, तन्मित्रत्वे, शुभत्वे वा सद्भाग्यवृद्धिः । भाग्यस्थानगतस्यापीयमेव गतिः । भाग्याधिपस्य शुभत्वे बलवत्वे च नितरां भाग्यवृद्धिः, पापत्वे साधारणी भाग्यवृद्धिः, दुर्बलत्वे दौर्भाग्यमित्याधूह्यम् ॥ १ ॥ २ गुरौ भाग्ये शुभभाग्य इत्येको योगः । यः

## सौभाग्ययोगान्तराणि

केंद्रस्थजीवतनुजन्मभपैः सुभाग्यो
धीत्र्यंकलग्नगखगो यदि भाग्यदृग्वा(क् स्यात्) ॥ २ ॥

१चन्द्रात् नाष्टरिपुगैः खचरैः सुभाग्य
श्चन्द्रे स्वकेऽष्टलवगेऽहनि जीवदृष्टे ।
लक्ष्मीयुतो निशि तथाव(थैव) सितेऽक्षितेऽथ
केन्द्रादिगेऽब्ज इनतोऽधममध्यसंतः ॥ ३ ॥

### भाग्यगतपापग्रहफलम्

नीचारिभो(भां)शगखलाः शुभदृष्टिहीना
भाग्ये स्थिता मलिनदुःखितजन्म कुर्युः ।

---

कोऽपि ग्रहो भाग्ये स्वर्क्षे उच्चे वा स्थितश्चेदद्वितीयः । तथा भाग्ये स्वाधिपेन दृष्टे युक्ते वा स्वदेशे धनलाभः, स्वाधिपमित्रैर्दृष्टे युक्ते वा परदेशे धनलाभः । गुरौ, लग्नाधिपे, चन्द्रराश्यधिपे वा केन्द्रस्थे सुभाग्यो भवति । बली कश्चिद्ग्रहः लग्नगतो नवमदृष्ट्या, तृतीयगतः पूर्णदृष्ट्या, पञ्चमगतः पञ्चमदृष्ट्या च भाग्य यदि पश्यति तर्हि सुभाग्यो भवतीति भावः । अत्र योगे लग्ने, पञ्चमे वा स्थितस्य गुरोरेव भाग्ये पूर्णा दृष्टि रपेक्षिता । अन्येषां तु अर्धदृष्टिरेवापेक्षिता । पूर्णदृष्टेरयोगादिति ज्ञेयम् ॥ २ ॥ १ चन्द्रात् षष्ठे, सप्तमे, अष्टमे च सर्वे ग्रहा यथासंभवं एकत्र वा स्थानद्वये वा स्थानत्रये वा यदि स्युस्तर्हि सुभाग्यः स्यादिति भावः । बृहज्जातकादौ तु बुधगुरुशुक्रैस्त्रिभिरेव शुभग्रहैरयं योग उक्तः । तथा अहनि गुरुदृष्टे चन्द्रे स्वनवांशे, स्वमित्रनवांशे वा स्थिते लक्ष्मीयुतो भवेदिति द्वौ योगौ । एवं निशि शुक्रदृष्टे चन्द्रे पूर्ववत्स्थिते लक्ष्मीयुतो भवेदिति द्वौ योगौ । तथा चन्द्रे सूर्यकेन्द्रगते अधमभाग्यः, सूर्याद्द्वितीयपंचमाष्टमैकादशगते मध्यमभाग्यः, सूर्यात्तृतीयषष्ठनवमद्वादशगते उत्तमभाग्यो भवतीति भावः ।

भाग्ये खलाः स्वगृहगाः शुभदृष्टियुक्ताः
ख्यातं नरं विपुलसौख्यगुणैः समेतं ॥ ४ ॥

अथ भाग्यस्थगुरोः सूर्यादिप्रत्येकग्रहदृष्टिफलम्

अर्कदृष्टे गुरौ भाग्ये मन्त्री समनृपोऽथ वा ॥
कांतो भोनी(गी) शशांकेन भौमेन धनभाग्भवेत् ॥ ५ ॥

धनी बुधेन शुक्रेण गोवाहनधनान्वितः ॥
दृष्टः सौरेण महिषखरस्थावरसंयुतः ॥ ६ ॥

॥ इति भाग्यस्थगुरोः सूर्यादिदृष्टिफलम् ॥

---

## ॥ अथ भाग्यस्थगुरोः द्विग्रहदृष्टिफलम् ॥

चन्द्रसूर्यदृष्टिफलम्

ख्यातो नृपसमः प्राज्ञो बहुदारसमन्वितः ॥
पितृमातृप्रियो जीवे समृद्धे(द्धोऽ)र्केन्दुवीक्षिते ॥ ७ ॥

रविकुजदृष्टिफलम्

साहसी वाध(ह)नी स्वर्क्षे(रत्नै)[र्ध]र्थ(र्य)भृत्यधनान्वितः ॥
बली कुजार्कसन्दृष्टे जीवे भाग्यगृहस्थिते ॥ ८ ॥

रविबुधदृष्टिफलम्

सुभगो क्ष(ल)लितः कान्तो धनस्त्रीभूषणान्वितः ॥
जीवे बुधार्कसंदृष्टे भाग्ये काव्यकलाछतां(सुधीः) ॥ ९ ॥

### रविशुक्रदृष्टिफलम्

समज्ञोऽ(ज्ञोऽ)त्सवशीलो गोमहिषाजखरा(गजा)न्वितः ॥
साहि(ह)सिको गुरौ भाग्ये विमुत्रेऽ(नीतोऽ)र्कसु(सि)तेऽक्षिते ॥ १० ॥

### रविशनिदृष्टिफलम्

निधीश(शः) संग्रह(ही) प्राज्ञः रूयातो भाग्ये गुरौ गुणी ॥
भवेद्देशगुरुः(पुर)श्रेणीनायकोऽर्कार्किवीक्षिते ॥ ११ ॥

### चन्द्रकुजदृष्टिफलम्

सेनाचार्यो गुरौ भाग्ये चन्द्रभौमनिरीक्षिते ॥
सौख्यभाक्सुभगः स्फीतो मन्त्री [सं]जायते नरः ॥ १२ ॥

### चन्द्रबुधदृष्टिफलम्

श(सु)गेहशयनान्नादिभोगी तेजा(जोऽ)न्वितः क्षमी ॥
मतिमान् जायते भाग्ये गुरौ चन्द्रज्ञवीक्षिते ॥ १३ ॥

### चन्द्रशुक्रदृष्टिफलम्

कर्मोऽयुक्त(क्तोऽ)सुतः शूरः समृद्धः परिवा(रदा)रवान् ॥
चन्द्रशुक्रेऽक्षिते जीवे भाग्यस्थे जायते नरः ॥ १४ ॥

### चन्द्रशनिदृष्टिफलम्

विवादशीलः प्रियवाक् व्यये सदृशतां गुरौ ॥
(विवादशीलोऽनृतवागन्यदेशरतोऽगुणः ॥)
चिरजीवी बहुमदो भाग्य(ग्ये) चन्द्रार्किवीक्ष्य(क्षि)ते ॥ १५ ॥

कुजबुधदृष्टिफलम्

तेजस्वी प्रत्ययवान्से(यी से)वारतो निपुणधीर्नरः ॥

[सुवेषधीगुणज्ञानशीलवाक्योऽतिसौभगः ॥]

जायते बुधभौमाभ्यां दृष्टे भाग्यस्थिते गुरौ ॥ १६ ॥

कुजशुक्रदृष्टिफलम्

धनी निपुणधीर्विद्वान् सात्त्विकश्च विदेशगः ॥
भौमभार्गवसंदृष्टे भाग्यस्थे सुरमन्त्रिणि ॥ १७ ॥

कुजशनिदृष्टिफलम्

नीचो विदेशगः प्रेष्यः पिशुनः सुमनो(कुजना)न्वितः ॥
भाग्यराशिगते जीवे भौममन्दनिरीक्षिते ॥ १८ ॥

बुधशुक्रदृष्टिफलम्

शिल्पव(वि)त्सुभगो विद्वान् कृत(शुभ)वेशस्य(षः सु)शीलवान् ॥
गृहीतवचनो जीवे भाग्यस्थे ज्ञसितेऽक्षिते ॥ १९ ॥

बुधशनिदृष्टिफलम्

सुभगो लक्षितो विद्वान् वक्ता शूरः सुखी गुरौ ॥
विनीतस्य(श्च) भवेद्भाग्ये बुधमन्दनिरीक्षिते ॥ २० ॥

शुक्रशनिदृष्टिफलम्

राष्ट्रोदा(ष्ट्रे द)क्षो धनी जीवे भाग्ये शुक्रार्किवीक्षिते ॥
एवं दृष्टिफलं जीवे भाग्ये नानैनि(न्यैर्नि)रीक्षिते ॥ २१ ॥

[भाग्याधिपेन दृष्टे वा भाग्यस्थे सुरपूजिते ॥]

इति भाग्यस्थगुरोर्द्विग्रहदृष्टिफलम्

भाग्यस्थगुरोः सर्वग्रहदृष्टिफलम्

समृद्ध(द्धः) पार्थिवो जातस्तेजोरूपगुणान्वितः ॥
स्यात्समस्तग्रहैर्दृष्टे भाग्यस्थे सुरमन्त्रिणि ॥ २२ ॥

भाग्यस्थशुभग्रहफलम्

सर्वे राज्यप्रदा ज्ञेया भाग्यर्क्षस्थाः शुभग्रहाः ॥
धनस्थाम्बरधान्यायुःध(र्युध)र्मसौभाग्यवृद्धिदाः ॥ २३ ॥

भाग्यस्थपापग्रहफलम्

मलिनं दुःखितं निःस्वं ख्यातिहीनं च मानवं ॥
भाग्यो(ग्ये) नीचारिपापास्ते(गाः पापाः) कुर्वन्ति शुभवी(न शुभेऽ)
क्षिताः ॥ २४ ॥

भाग्यगतभाग्याधिपपापग्रहफलम्

स्वस्वराशिस्थिता(ताः) पापा ग्रहा भाग्यर्क्षसंस्थिताः ॥
शुभैर्दृष्टा नरं कुर्युः प्रभूतग(गु)णमुत्तमं ॥ २५ ॥

**सारावल्यां—**

भाग्यगतपूर्णेन्दुफलम्

सूर्ये(पूर्णेऽ)न्दुसंयुते भाग्ये वक्रार्की ल(च) प्रधानवीपौ(र्यौ)च ॥

**व्यस्तौ वाथ समस्तौ वा प्रधानवीर्यौ च ॥**

व्यस्तौ वाऽथ समस्तौ वा प्रधाननृपो(प)संभवो ज्ञेयः ॥ २६ ॥

[पूर्णेन्दुसंयुते भाग्ये वक्रार्किज्ञैर्बलाधिकैः ॥
व्यस्तैर्वाथ समस्तैर्वा प्रधाननृपसंभवः ॥ २६ ॥]

भाग्यगतोच्चग्रहफलम्

स्वोच्चगः खेचरो भाग्ये कुर्व(करो)ति विभवान्वितं ॥
स चेच्छुभेऽक्षितो भूपं कुर्वा(करो)ति गतविद्विषं ॥ २७ ॥

अथ भाग्यगतद्विग्रहयोगफलम्

[२](भा)ग्यर्क्षस्थौ दिनेऽसे(शे)न्दू कुरुतेऽ(तोऽ)ल्पायुषं नरं ॥
नेत्ररोगिणमाढ्यं च सुभगं कलहप्रियं ॥ २८ ॥

---

१ अत्र सारावल्यां पाठभेदो वर्तते। स च कुण्डल्यां संगृहीतः। अत्र स्थूलाक्षरनिर्दिष्टो भागोऽधिको दृश्यते। स च त्याज्यः। २ द्विग्रहयोगा एकविंशतिः। तथा हि—रवेश्चन्द्रादिषड्ग्रहसंबन्धेन षड्योगाः। एवं चन्द्रस्य कुजादिभिः पंचभिर्योगेन पंच, कुजस्य बुधादिभिश्चतुर्भिर्योगेन चत्वारः, बुधस्य गुर्वादिभिस्त्रिभिर्योगेन त्रयः, गुरोः शुक्रशनिभ्यां योगेन द्वौ, शुक्रस्य शनिसंबन्धेन एकः; एवं एकविंशतिर्द्विग्रहयोगाः। तथा पंचत्रिंशत् त्रिग्रहयोगाः। तथा हि—रविचन्द्रयोः कुजादिभिः पञ्चभिर्योगेन पञ्च, रविकुजयोर्बुधादिभिश्चतुर्भिर्योगेन

सवक्रो भास्व(स्क)रो भाग्ये दुःखिनं कलहप्रियं ॥
शूरं प्रचण्डं निपुणं करोति नृपवल्लभं ॥ २९ ॥

सु(स)बुद्धो(धो) भास्करो भाग्ये निपुणं बहुविद्विषं ॥
दुःखान्वितं नरं कुर्यानान(न्नाना)रोगसमन्वितं ॥ ३० ॥

---

चत्वारः, रविबुधयोर्गुर्वादिभिस्त्रिभिर्योगेन त्रयः, रविगुर्वोः शुक्रशनिभ्यां योगेन द्वौ, रविशुक्रयोः शनियोगेनैकः, एवं चन्द्रकुजयोर्बुधादिभिश्चतुर्भिर्योगेन चत्वारः, चन्द्रबुधयोर्गुर्वादिभिस्त्रिभिर्योगेन त्रयः, चन्द्रगुर्वोः शुक्रशनिभ्यां योगेन द्वौ, चन्द्रशुक्रयोः शनियोगेनैकः, एवं कुजबुधयोर्गुर्वादिभिस्त्रिभिर्योगेन त्रयः, कुजगुर्वोः शुक्रशनिभ्यां योगेन द्वौ, कुजशुक्रयोः शनियोगेनैकः, एवं बुधगुर्वोः शुक्रशनिभ्यां योगेन द्वौ, बुधशुक्रयोः शनियोगेनैकः, एवं गुरुशुक्रयोः शनियोगेनैकः। एवं पंचत्रिंशत्त्रिग्रहयोगाः। तथा पंचत्रिंशच्चतुर्ग्रहयोगाः। तथा हि—रविचन्द्रकुजानां बुधादिभिश्चतुर्भिर्योगेन चत्वारः, रविचन्द्रबुधानां गुर्वादिभिस्त्रिभिर्योगेन त्रयः, रविचन्द्रगुरूणां शुक्रशनिभ्यां योगेन द्वौ, रविचन्द्रशुक्राणां शनियोगेनैकः, एवं रविकुजबुधानां गुर्वादिभिस्त्रिभिर्योगेन त्रयः, रविकुजगुरूणां शुक्रशनिभ्यां योगेन द्वौ, रविकुजशुक्राणां शनियोगेनैकः; एवं रविबुधगुरूणां शुक्रशनिभ्यां योगेन द्वौ, रविबुधशुक्राणां शनियोगेनैकः, एवं रविगुरुशुक्राणां शनियोगेनैकः, एवं चन्द्रकुजबुधानां गुर्वादिभिस्त्रिभिर्योगेन त्रयः, चन्द्रकुजगुरूणां शुक्रशनिभ्यां योगेन द्वौ, चन्द्रकुजशुक्राणां शनियोगेनैकः, एवं चन्द्रबुधगुरूणां शुक्रशनिभ्यां योगेन द्वौ, चन्द्रबुधशुक्राणां शनियोगेनैकः, एवं चन्द्रगुरुशुक्राणां शनियोगेनैकः, एवं कुजबुधगुरूणां शुक्रशनिभ्यां योगेन द्वौ, कुजबुधशुक्राणां शनियोगेनैकः, एवं कुजगुरुशुक्राणां शनियोगेनैकः, एवं बुधगुरुशुक्राणां शनियोगेनैकः। एवं पंचत्रिंशच्चतुर्ग्रहयोगाः। एतेषां द्विग्रहयोगानां त्रिग्रहयोगानां चतुर्ग्रहयोगानां च भाग्यगतानां फलं क्रमेणाभिधीयते। भाग्यर्क्षस्थावित्यादिना।

¹सजीवो भास्व(स्क)रो भाग्ये [धनाढ्यं चिरजीविनम् ॥
धनाढ्यपितरं कुर्यादार्यं शूरं महामतिम् ॥ ३१ ॥]

[सशुक्रो भास्करो भाग्ये]रोगिणं कुरुते नरं ॥
अलङ्करणसद्वस्त्रगन्धमाल्यप्रियं सदा ॥ ३२ ॥

सरोगजनकं नेत्ररोगिणं कलहप्रियं ॥
निध(धनि)नं कुरुते(तो) भाग्ये सूर्यार्की स्वल्पजीवितं ॥ ३३ ॥

सवृ(मृ)द्धः सज(व्र)णो मातुरनिष्टो भाग्यसंस्थिते ॥
शशांके विकलांग(गः) स्यात् धरणीसुतसंयुते ॥ ३४ ॥

विसु(श्रु)तो विकलांग(गः) स्यात् बहुवागुत्तमो नर(रः) श्री ॥
शास्त्रज्ञः पण्डितो भाग्ये सज्ञे चन्द्रे प्रजायते ॥ ३५ ॥

सौभाग्यधनसंपन्नः सुखी धा(धी)रः प्रजायते ॥
उत्तमश्च नरो भाग्ये सजीवे हिमरोचिषि ॥ ३६ ॥

मातुः सपत्नीं कुरुते व्याधितः कुलया(टा)पतिः ॥
समृद्धपुरुषो भाग्ये स्यात्सशुक्रे विधौ नरः ॥ ३७ ॥

नरो निकृष्टकर्मा स्यात्समन्दे हिमरोचिषि ॥
भाग्यस्थे जननी वाऽस्य जायते स्वकुलच्युता ॥ ३८ ॥

प्रधान(नः) शास्त्रकुशलः सुभगो भोगसंयुतः ॥
नित्योऽद्विग्नो नरो भाग्ये सज्ञे भौमे प्रजायते ॥ ३९ ॥

---

१ अस्मिन् श्लोके पादत्रयं लुप्तम्, उत्तरश्लोके प्रथमः पादश्च लुप्तः । स च कुण्डल्यां संगृहीतोऽनुसन्धेयः ।

सजीवे भूमिजे भाग्ये पूज्यो धान्यधनान्वितः ॥
व्याधितांगो नरः क्लिष्टो जायते ज(व्र)णवी(दी)क्षितः ॥ ४० ॥

परदेशग(चण्डो वादर)तः क्रूरः प्रचण्डः(कृतघ्नः) परदेशगः ॥
चण्ड(मिथ्या)प्रधान(नः) स्त्रीद्वेषी भाग्ये भौमे सभार्गवे ॥ ४१ ॥

नष्टसौख्यधनः पापी दुराचारोऽन्यदारगः ॥
समन्दे भूमिजे भाग्ये जायते स्वजनोऽस्थि(ज्झि)तः ॥ ४२ ॥

सजीवज्ञे नरो भाग्ये शास्त्रज्ञः पण्डितो धनी ॥
प्रियवादी कलाज्ञ(ज्ञः) स्यात्प्रभविष्णुर्महान्न(हत्त)रः ॥ ४३ ॥

प्राज्ञो गीतप्रियः ख्यातः सुवाग्धीरः सुपण्डितः ॥
समर्थो जायते भाग्ये सशुक्रे सोमनन्दने ॥ ४४ ॥

आढ्यः प्रियान्वितो रोगी निपुणो विषमो नरः ॥
द्वेष्यो बहुकथो भाग्ये समन्दे ज्ञे प्रजायते ॥ ४५ ॥

[स]जीवे भार्गवे भाग्ये भाग्यवान् सुभगो नृपः ॥
चिरजीवी सुवाक्यः स्यान्ना[ना]विधसुखान्वितः ॥ ४६ ॥

समन्दे वाक्पतौ भाग्ये(ग्य)राशिस्थे धनरत्नभाक् ॥
पूज्यः स्वजनहीनश्च व्याधितः पुरुषो भवेत् ॥ ४७ ॥

यशस्वी भूमिपालाख्यो(लेष्टो) व्याधितः शीलसंयुतः ॥
ससौरे भार्गवे भाग्ये बहुमित्र(वित्त)श्च जायते ॥ ४८ ॥

॥ इति भाग्यगतद्विग्रहयोगफलम् ॥

## ॥ अथ भाग्यगतत्रिग्रहयोगफलम् ॥

**सारावल्यां—**

सज(व्र)णगात्रं रूक्षं मृतिपितृक(कं) मातृवर्जितं [बाल्ये] ॥
कुर्युः रुद्र(क्षुद्रं) द्वेष्यं हिंस्रं भाग्ये रविचन्द्र[भू]पुत्राः ॥ ४९ ॥

रविचन्द्रबुधा भाग्ये क्लीबाचा(का)रं नरं प्रसूयंते (सुदुःखितं कुर्युः) ॥
सर्वज[ना]नां द्वेष्यं विक्रान्तं सत्यवचनं च ॥ ५० ॥

भास्करशशांकगुरवो भाग्ये पुरुषस्य संभवो(वे) यस्य ॥
स्य(स) भवत्युत्तमकु[ल]जो वाहनधनसौख्यसंयुक्तः ॥ ५१ ॥

रविचन्द्रसिता भाग्ये स्त्रीकलहान्नष्ट[सर्व]धनसौख्यं ॥
नृपसमनं नयज्ञं जनयति(न्ति) नरं प्रियालापं ॥ ५२ ॥

सूर्यनिशाकरसौरा भाग्यर्क्षस्थाः सदा नरं कुर्युः ॥
प्रख(ब)लं ख(चं)डाका(चा)रं परवृद्धि(भृत्यं) लोकविद्विष्टं ॥ ५३ ॥

रविभौमबुधा नवमे कुर्वन्ति नरं प्रियालापं ॥
भुजगमिवाऽतिक्रुद्धं सम[रप]रं निष्ठुरं पिशाचा(प्रवासा)र्तं ॥ ५४ ॥

रविकुजजीवा भाग्ये जनयन्ति नरं सदोऽद्युक्तं ॥
देवपितृपूजनरतं समृद्धदारं गुणसमृद्धं ॥ ५५ ॥

कलहप्रियं कुलीनं कन्यानां दूषकं कर्मचफ(चप)लं ॥
दिवसकरभौमशुक्रा भाग्ये द्वेष्यं नरं कुर्युः ॥ ५६ ॥

साहसिकं प(कम)तिक्षुद्रं लोकद्वेष्यं पियानृतं क्रूरं ॥
पित्रा रहितं बाल्ये कुर्युः सूर्यारसूर्यजा भाग्ये ॥ ५७ ॥

रविबुधगुरवो भाग्ये जनं भाग्यसमेतं धनान्वितं सुभगं ॥
नृप[ति]प्रियं सुवेषं जनय(यं)ति व(न)रं सुतव(सुधी)रं च ॥ ५८ ॥

रविबुधशुक्रा भाग्ये जनयंति नरं प्रकाशितं(नं) शां(कां)तं ॥
रिपुक्षय(पक्ष)परिक्षीणं नृपतिसम(मं) सारवचनं च ॥ ५९ ॥

पापं परदाररतं प्रवासशीलं च निपुणमर्तिं(ति)[धृष्टम्] ॥
[आ]मृतकं(नृतिक)मदन(दैव)परं रविबुधसौरा नरं भाग्ये ॥ ६० ॥

भाग्यगृहे रविगुरुभृगुपुत्रा मनुजं सुपण्डितं कांतं ॥
बहुविषयंत्विति(यपतिं) वीरं जनयंति सुमेधसं प्राज्ञं ॥ ६१ ॥

स(र)विसुरगुरुरविपुत्रा भाग्ये [यस्येह जायमानस्य] ॥
[स भवेदुत्तम]पुरुषो राजा गुणवान् धनसमृद्धश्च ॥ ६२ ॥

कांतिविहीनं मलिनं भूपतिपरिदण्डिनं(तं) च मति(विभव)हीनं ॥
जनयंति नरं भाग्ये रविशुक्रशनैश्चरा मूर्खं ॥ ६३ ॥

धनकनकरत्नभाग्ये(जं) जनयन्ति शशांककुजबुधाः पुरुषं ॥
प्रथमे वयसि सुतप्तं भाग्यगृहे सर्वनाशेन ॥ ६४ ॥

चन्द्रधरासुतगुरवः कुर्वन्ति नरं जितेऽन्द्रियं प्राज्ञं ॥
गुरुदेवसाधु(भक्ति)निरतं विद्याधरं भो(धनभा)गिनं सुभोगिन
सुभगं ॥ ६५ ॥

सव्रणगात्रमरूपं प्रभाक्षी(भक्ष)णं स्त्रीप्रियं युवतिवश्यं ॥
युवतिविनाशितसारं शशिकुजभृगुनन्दना भाग्ये ॥ ६६ ॥

व्यापन्नमातृवंशं क्षुद्रं बाल्ये निराकृतं मात्रा ॥
शशिभूमिजरविपुत्रा जनयंति नराधिपं(धर्म) भाग्ये ॥ ६७ ॥

शशिबुधजीवा भाग्ये कुलवंशविवर्धनं कुर्युः ॥
आचार्यविभवं (र्यं बहु) मित्रं नृपतिं बहुसाधनोऽपेतं ॥ ६८ ॥

मातृसप[त्नी]स(ज)नकं मुदितं मानान्वितं प्रचुरपितरं(मित्रम्) ।
कुर्वन्ति सौम्य(साम)शीलं शशिबुधशुक्रा नरं भाग्ये ॥ ६९ ॥

शशिबुधसौरा नवमे क्लीबा(क्रूरा)चारं सुविह्वलं(क्रमं) मलिनं ॥
जनयन्ति कुत्सितधियं सङ्ग्रामपराङ्मुखं दीनं ॥ ७० ॥

चन्द्रबृहस्पतिशुक्रा भाग्ये जातस्य यस्य पुरुषस्य ॥
स भवति नरपतितुल्यो नृपतिकुले भूपतिश्चैव ॥ ७१ ॥

शशिगुरुसौरा भाग्ये कुर्वन्ति नरं प्रियालापं ॥
तत्परज(सत्यव)तं सुशीलं विख्यात(तं) सर्वशास्त्रकुशलं [च] ॥ ७२ ॥

[1]शशिशुक्रयमा भाग्ये कृषिवृत्ति(त्तिं) योनिपोषणानुरतं ॥
कुर्युर्मनुजमपापं [नृपतुल्यं लोकविख्यातम् ॥ ७३ ॥

तेजःस्थिरवाग्ज्ञानविशिष्टं गतशोकं मण्डलाधिपतिं ॥
कुजबुधजीवा भाग्ये] शू(सु)रातिथिगुरुस्वजनभक्तं ॥ ७४ ॥

---

१ अत्र श्लोके चतुर्थः पादः, उत्तरश्लोके आद्यास्त्रयः पादाश्च लुप्ताः । ते च कुण्डल्यां निवेशिताः ।

बहुविषयंपतिं ख्यातं नरेन्द्रसत्कारसत्कृतं चण्डं ॥
कुजबुधशुक्रा भाग्ये कुर्वन्ति नरं सदा(तां) सत्यं ॥ ७५ ॥

परवंचनासु निपुणं तमोऽधिकं सर्वशास्त्रमबन्धुं(मतिबाह्यम्) ॥
कुजसौम्ययमा भाग्ये कुर्युः परतर्ककं गू(संमू)ढम् ॥ ७६ ॥

बुधगुरुशुक्रा भाग्ये जनयन्ति नरं सुरोपमं विष(श)दं ॥
विख्यातं नरनाथं विद्वांसं धर्मशीलं [च] ॥७७ ॥

पुष्टं परगुणमुख्यं प्राज्ञं नृपसचिवं प्रकाश्यं च ॥
धनिनं विधेयभृत्यं बुधगुरुशनयो नरं भाग्ये ॥ ७८ ॥

बुधशुक्रसूर्यपुत्रा नवमस्थाने स्थिताः [प्र]कुर्वन्ति ॥
मेधाविनं प्रकाश्यं सुरुचिरवाक्यं सुखोऽपेतं ॥ ७९ ॥

त्रिदशगुरुशुक्रसौरा भाग्यगृहस्था नरं प्रकुर्वन्ति ॥
प्रचुरान्नपानविभव(वं) सुस्थित(खितं) सुभगं सुरूपं च ॥ ८० ॥

॥ इति भाग्यगतत्रिग्रहयोगफलम् ॥

---

## ॥ अथ भाग्यगतचतुर्ग्रहयोगफलम् ॥

रविचन्द्रभौमशशिजा [ज]न्मनि भाग्यर्क्षमाश्रिता यस्य ॥
स न(भ)वत्युत्तमपुरुषो विदेशगो नित्यसंहृष्टः ॥ ८१ ॥

---

१ एतच्छ्लोकात्परं श्लोकत्रयं मूले नास्ति। तच्च कुजगुरुशुक्राणां, कुजगुरुशनीनां, कुजशुक्रशनीनां च भाग्यस्थानां फलप्रतिपादनपरं।

सूर्यशशिभौमगुरवो भाग्यगृहस्था नरं कुर्युः ॥
धनिनं विद्याकुशलं सुभगं नृपसंभवं(मतं) चैव ॥ ८२ ॥

रविचन्द्रभौमशुक्रा मायाचतुरं स्वदारसंतुष्टं ॥
जनयंति नरं भाग्ये समस्तजनवल्लभं ख्यातं ॥ ८३ ॥

रविचन्द्रभौमसौरांः पिशुनं मायाविनं कुशीलं च ॥
जनयन्ति सदा भाग्ये पुरुषं बहुनीचकर्माणं ॥ ८४ ॥

रविशशिबुधसुरगुरवो जन्मनि भाग्यर्क्षमाश्रिता(ताः) कुर्युः ॥
पुरुषं प्रधानमखि(च)लं नरेऽन्द्रपूज्यं सदा हृष्टं ॥ ८५ ॥

रविचन्द्रसौम्यशुक्रा नरे(धने)श्वरं धार्मिकं समृद्धिं(द्धं) च ॥
जनयन्ति भाग्यसंस्थाः पुरुषं प्रियवादिनं शान्तं ॥ ८६ ॥

तरणिशशिसौम्यसौरा जन्मनि भाग्यस्थिता नरं कुर्युः ॥
नीचाचारं दीनं परस्वहरणे सदा सक्तं ॥ ८७ ॥

रविचन्द्रगुरुसिता जन्मनि भाग्ये नरं सुधियं ॥
उत्पादयन्ति हृष्टं धर्मज्ञं सात्विकं सदा धीरं ॥ ८८ ॥

धर्मपरं सुरभक्तं विद्वांसं परगृहेषु भोक्तारं ॥
रविचन्द्र[पूज्य]सौरा भाग्यर्क्षसंस्थिताः कुर्युः ॥ ८९ ॥

रविचन्द्रशुक्रसौराः कुर्वन्ति नरं सुपण्डितं नित्यं ॥
नृपतिप्रियं सुधीरं सुभगं कलहप्रियं सुतरां ॥ ९० ॥

रविभूसुतबुधजीवा जन्मनि भाग्ये नरं प्रकुर्वन्ति ॥
देवपितृपूजनपरं वृद्धाचारं(सवृद्धदारं) गुणोऽपेतं ॥ ९१ ॥

रविभौमसौम्यशुक्रा भाग्ये जनयंति निष्ठुरं सुभगं ॥
साहसनिरतं विधनं रिपुपक्षक्षपितविभवं च ॥ ९२ ॥

रविकुजचान्द्रिसौरा भाग्ये यस्थे(स्ये)ह जायमानस्य ॥
स भवति परवाद(दार)रतो विनि(न)ष्टकोशः सदा दीनः ॥ ९३ ॥

रविभौमजीवशुक्रा लोकद्वेष्यं नरं पिपा[सा]र्तं ॥
जनयन्ति भाग्यसंस्थाः कन्यानां दूषकं [चपल]बास्ये(चित्तम्)
॥ ९४ ॥

रविभौमजी[व]सौरा भाग्ये षु सुखवर्जितं सदोऽद्युक्तं ॥
जनयन्ति नरं चण्डं विक्रमयुक्तं सदा(महा)सत्वं ॥ ९५ ॥

रविभौमशुक्रशनयो रिपुक्षयाद्विगतशोकं ॥
कुर्वन्ति नरं प्रखलं भाग्यगताः शत्रुवर्जितं चैव ॥ ९६ ॥

रविबुधजीवसिताः स्युर्भाग्ये जन्मनि यस्येऽह नग[स्य] ॥
स भवत्युत्तमपुरुषो धनकनकैऽश्वर्यसंपन्नः ॥ ९७ ॥

रविबुधगुरुरविपुत्रा भाग्ये जनयंति मानिनं धन्यं ॥
पापं परदाररतं विद्विष्टं नीचकर्माणं ॥ ९८ ॥

रविबुधसितसौराः स्युर्भाग्यस्था मानिनं सुभगं ॥
जनयंति धनसमेतं सत्यरतं लोकविख्यातं ॥ ९९ ॥

रविगुरुसितभानुसुता भाग्यर्क्षे संस्थिता नरं कुर्युः ॥
सत्यव्रतं सुवाक्यं गुरुद्विजातिथिषु भक्तं ॥ १०० ॥

चन्द्रकुजज्ञसुरेज्या जनयन्ति नरं परिच्छदसमृद्धं ॥
बाल्ये मातृवियुक्तं धनान्वितं संस्थिता भाग्ये ॥ १०१ ॥

चन्द्रकुजसौम्यशुक्रा भाग्ये जनयन्ति तापसं ख्यातं ॥
वाग्मिनमपि(ति)दातारं परलोकपरं महाप्राज्ञं ॥ १०२ ॥

चन्द्रकुजसौम्यसौरा जनयंति नरं पराङ्मुखं दीनं ॥
क्षुद्रं मायाचतुरं परदाररतं स्थिता भाग्ये ॥ १०३ ॥

चन्द्रकुजजीवशुक्रा नृपवंशकरं प्रधानमतिशूरं ॥
विद्याधनसुसमृद्धं विख्यातं च लोकसंमतं भाग्ये ॥ १०४ ॥

शशिवक्रजीवसौरा जनयन्ति सदा पिपासार्तं ॥
कलहप्रियं च भाग्ये सौभाग्यपरिच्छदातीतं ॥ १०५ ॥

[शशिवक्रशुक्रसौरा भाग्ये जनयन्ति निष्ठुरं पापम् ॥
मायाविनं च पुरुषं शौचाचारैर्विहीनं च ॥ १०६ ॥]

[शशिबुधगुरुशुक्रा वा जन्मनि भाग्यर्क्षमाश्रिता यस्य ॥
प्राज्ञं नृपतिं कुलजं प्रधानमतिवित्तसंयुतं कान्तम् ॥
जनयन्ति धर्मसक्तं नरं कलासु प्रसिद्धं च ॥ १०७ ॥]

शशिबुधगुरुसौरा जनयन्ति नरं महाकविं सुनयं ॥
भाग्यस्थिताः समृद्धिर्गान(द्धं नीति)ज्ञं चारुवेषं च ॥ १०८ ॥

शशिबुधसितरविपुत्रा जन्मनि भाग्यस्थिता नरं कुर्युः ॥
माया(मेधा)विनं प्रचण्डं [जन]नयविशारदं धन्यं ॥ १०९ ॥

चन्द्रगुरुशुक्रसौरा जनयन्ति नरं सुमेधसं प्राज्ञं ॥
धनकनकरत्न[युक्तं] सुभगं व(च) सदा स्थिता भाग्ये ॥ ११० ॥

भौमबुधजीवशुक्रा जन्मनि भाग्यस्थिताः प्रकुर्वन्ति ॥
मायाविनं प्रचण्डं रणेपूज्यं(नरेष्वजेयं) नरं धीरं ॥ १११ ॥

भौमज्ञसूरिज(श)नयो भाग्यस्थानोऽपगाः प्रकुर्वन्ति ॥
रिपुपक्षपरिक्षीणं रणप्रचंडं सुधीरं वा(च) ॥ ११२ ॥

भौमज्ञशुक्रशनयो नरं यदि देशे(परदेश)[गतं सुशीलं च ॥]
[जनयन्ति नवमसंस्था धनयुक्तं भक्तियुक्तं च ॥ ११३ ॥]

[भौमगुरुशुक्रशनयो जनयन्ति नरं] धनैः परित्यक्तं ॥
क्षुद्रं दयाविहीनं विलीनसत्वं स्थिता भाग्ये ॥ ११४ ॥

बुधगुरुभृगुरविपुत्रा जन्मनि भाग्यस्थिता नरं कुर्युः ॥
परवादविवादरतं परदो[ष]प्रीतिम[धिक]चि(वि)त्तं चे(च) ॥ ११५ ॥

॥ इति भाग्यगतचतुर्ग्रहयोगफलम् ॥

---

॥ त्र्यादिग्रहयोगसमुदायफलम् ॥

त्रिचतुःपंचखगेन्द्रास्तथा च षट् संस्थिता भाग्ये ॥
प्रत्यर्पित(प्रात्ययिकं) धनवित्तं(वन्तं) कुर्युर्नृपतिं च बुधरहिताः ॥ ११६ ॥

भाग्यगतगुरुबुधभिन्नग्रहफलम्

जनयन्ति भाग्यसंस्था गुरुभौम(सौम्य)विवर्जिता ग्रहाः पुरुषं ॥
व्याधिप्रायमकांतं ध(ज)नरहितं बन्धनार्त(र्तं)मति वि ही(तिदी)नं
॥ ११७ ॥

[1]उक्तं बहुप्रकारं भाग्यगृहे बादरायणादिकृतं ॥
ग्रहयोगैः सद्भवनै(गेक्षणभावै)र्विचि(चिं)त्य बुधो(द्ध्या) वदेदन्यत्
॥ ११८ ॥

## ॥ अथ भाग्यपतेर्द्वादशभावाश्रयफलं ॥

**जन्मप्रदीपे—**

लग्नगते नवमपतौ देवान् गुरून् [बहु]मन्यते शूरः ॥
कृपणः क्षितिपतिकर्मा स्वल्पग्रामी भवति मतिमान् ॥ ११९ ॥

[2]नवमाधिपतौ तु धनगे वृषतो(भो) विदितः सुशीलवान् मर्त्यः ॥
सुकृती वदनव्यङ्गश्चतुष्पादोऽत्तमपीडातः ॥ १२० ॥

---

१ बादरायणादिकृतं शास्त्रं विलोक्य भाग्यगृहे बहुप्रकारं फलमुक्तम् । अन्यत् फलं, ग्रहयोगेक्षणभावैः बुद्ध्या विचिन्त्य वदेत् । ग्रहाणां योगा ईक्षणानि च येषां ते भावा राशयस्तैः । पूर्वोक्तव्याधिग्रहयोगेषु योगकारकग्रहाश्रितराशेः शुभत्वे, योगकारकग्रहक्षेत्रत्वे, तदुच्चत्वे, तन्मूलत्रिकोणत्वे, तन्मित्रगृहत्वे, वा शुभं पूर्णं । अन्यथा विपरीतम् । एवं योगकारकाणां शुभाशुभदृष्टियोगादधिकं फलमित्यादि सुधिया विमृश्य वक्तव्यमिति भावः । २ वृषभः श्रेष्ठः । चतुष्पादेषु उत्तमाः सिंहादयस्तत्कृतया पीडया वदनव्यङ्गः विकृताङ्गपुरुष इति यावत् ।

[1]सहजगते सुकृतपतौ रूपस्त्रीबन्धुवत्सलः पुरुषः ॥
बन्धुश्रीरक्षणकृद्यु(ज्जी)वति जी(यु)वतिबन्धुजीविभिः सहितः ॥ १२१ ॥

सुकृतेशे हिबुकस्थे पितृभक्तः पितृकृते सुयात्रासु(स्थः) ॥
विदितः सुकृती मित्रकर्मरति [2]भूविभू[ति]स्पृक् ॥ १२२ ॥

सुकृतेशे सुतसंस्थे सुकृती गुरुदेवपूजने निरतः ॥
वपुषा सुन्दरमूर्तिः सुकृतसमेता भवन्ति सुताः ॥ १२३ ॥

शत्रुप्रणतिपरायणमधर्मकलितं कलाविकलदेहं ॥
[3]दर्शननिद्रानिरतं सुकृतपतिः षष्ठगः कुरुते ॥ १२४ ॥

नवमपतौ सप्तमगे सत्यवती सुवचना सुरूपा च ॥
शीलश्रीयुतदयिता सुकृतयुता जायते नियतं ॥ १२५ ॥

दुष्टो जन्तुविघाती गृहबन्धुविवर्जितः सुकृतरहितः ॥
नवमेऽशे मृत्युगते [क्रूरे] क्रूरः शठस्तु विज्ञेयः ॥ १२६ ॥

सुकृतपतिः सुकृतगतः सुबन्धुभिः प्रीतमलिनसम(मितमह)स्वं ॥
दातारं देवगुरुस्वजनकलत्रादिषु च भक्तं ॥ १२७ ॥

---

१ युवतिजीविभिः श्वश्र्वादिभिः पत्नीपरिवारैः सहितः, तथा बन्धुजीविभिः स्वयं द्रव्यसंग्रहयोग्यतारहितैः परान्नविध्वंसननिपुणैरन्यत्रालब्धादरैः बन्धुमिषेण कंचन धनिनं बन्धुं परिवार्य तदुपजीविभिर्बन्ध्वाभासैः सहितः, बन्धुसंपद्रक्षणपरायणः स्यादिति भावः। २ भुवो विभूतिर्वैभभवं, तत् स्पृशतीति भूविभूतिस्पृक्। यात्रार्थं गतेन तत्रत्यैः कृतमर्यादेन धनकनकादयस्तत्र तत्र बहुमतिरूपेण लभ्यंते इति भावः। ३ तत्त्वज्ञानविरोधिषु कलहमात्रपर्यवसायिषु चार्वाकादिदर्शनेषु निद्रायां च निरतमिति भावः।

नृपकर्माणि नृप[कृत]लाभं सुकर्मनिरतं [1]मातुरविघ्नं ॥
धर्मख्यातं कुरुते सुकृतिपतिर्गगनगृहलीनः ॥ १२८ ॥

दीर्घायुर्धर्मपरो धनेश्वरः स्नेहलो नृपति[कृत]लाभं(भः) ॥
सुकृतख्यातः सततं सुकृतपतौ लाभभवनस्थे ॥ १२९ ॥

द्वादशगे सुकृतेशे मानी देशांतरी सुरूपश्च ॥
विद्यावाञ्शुभखेटे क्रूरे [च] भवेत्कुमतिर्धू(धू)र्तः ॥ १३० ॥

॥ इति भाग्यपतेर्द्वादशभावाश्रयफलम् ॥

---

## ॥ अथ भाग्यगृहाश्रितप्रत्येकग्रहफलम्

**हिल्लाजे—**

[2]तीर्थं च धर्मकृदि(युगि)नो नवमे २ थ चन्द्र
स्तीर्थं नखेऽ २० सृगिहि(ह) वातभयं च शक्रे १४ ।
गोक्ष्य २९ द्रूमातृमृतिमिन्दुसुतोऽथ जीव
स्तिथ्यद्वके १५ पितृमृतिं च सितोऽत्र लक्ष्मीं ॥ १३१ ॥

सुहृद्धनसुतैर्युक्तो द्विजदेवरतो रवे(वौ) ॥
पितृयोषिद्विरोधी स्यादनृणे(स्सुतसो) धर्मभावगे ॥ १३२ ॥

---

१ मातुः अविघ्नः अविरोधीति भावः। २ नवमस्थः सूर्यो नवमे वत्सरे तीर्थं कारयेत्। तीर्थशब्दोऽत्र लक्षणया तीर्थयात्रापरः। चन्द्रः विंशतिवत्सरे तीर्थयात्रां, कुजश्चतुर्दशवत्सरे वातभयं, बुध एकोनत्रिंशद्वत्सरे मातृमृतिं, गुरुः पंचदशवत्सरे पितृमृतिं, शुक्रः पंचदशवत्सरे लक्ष्मीं कलयतीति भावः।

सौभाग्यांत्मजमित्रार्थधर्मधीसुखसंयुतः ॥

[पितृदेवपरः स्वक्षः सुवपुर्युवतिप्रियः]

धर्मभावगते चन्द्रे घृणी शान्तश्च जायते ॥ १३३ ॥

धर्महीनोऽतिपापी स्याद्द्वेष्यः प्राणिवधे रतः ॥

अन्यभे(दुष्कर्मा) धर्मभावस्थे भूमिते(जे) नृपसत्कृतः ॥ २३४ ॥

¹शुभाचारी धर्मभाव गुरोस्थे तपस्वी च प्रायते ॥

[गते चन्द्रसुते भवेत् ॥

वागीश्वरोऽतिनिपुणो धनविद्यामहत्तरः ॥ १३५ ॥]

यज्ञादिकर्मनिरतो विद्वान्नृपसमो भवेत् ॥

[पितृदेवरतः श्रेष्ठः सुभगो जनवन्दितः ॥]

मन्त्री वा दण्डनेता वा धर्मभावगते गुरौ ॥ १३६ ॥

गुरुदेवातिथिरतः सुदारो विभवान्वितः ॥

सुखी सज्जनसंपन्नो(सुहृज्जनोऽपेतो) दाताधर्मस्थिते [सिते] ॥ १३७ ॥

धर्महीनोऽवध(पथ)रतः सुहृत्सुतविवर्जितः ॥

परोपतापो रविजे धर्मसंस्थे सुखोऽत्सि(ज्झि)तः ॥ १३८ ॥

इति भाग्यगृहाश्रितप्रत्येकग्रहफलम्

॥ इति श्रीजातकसारदीपे भाग्यचिन्ताध्यायः सप्तचत्वारिंशः ॥

---

१ अत्र द्वितीयः पादोऽनन्वितो दृश्यते। उत्तरार्धं च लुप्तम्। तत्र कुण्डल्यां संगृहीतः पाठोऽनुसंधेयः। २ अपथरतः अमार्गरतः।

## ॥ अथ दशमभावचिन्ताध्यायोऽष्टचत्वारिंशः ॥

### सुखजीवनदुःखजीवनयोगौ

लग्नाद्विधोर्बलयुतो(जो) दशमं च कर्म
स्वेचा(शा)ढ्यदृष्टमथ वा शुभयुक्तदृष्टं ।
तत्सौख्यकृत्वि(त्त्वि)दमथो खलखेटयुक्त-
दृष्टं प्रवा(या)सभववृत्तिकरं वदन्ति ॥ १ ॥

### प्रकारान्तरेण सुखजीवनयोगः

[1][सूर्यात् ]खपेऽङ्गविधुतः खनवांशपे वा
खो(स्वो)च्चांशके ख(स्व)लवभे सुखवृत्तयः स्युः ।

---

१ सूर्यात्, अङ्गविधुतः लग्नाच्चन्द्राद्वा, खपे दशमाधिपतौ, स्वोच्चांशके स्वोच्चे स्वोच्चनवांशके वा, स्वलवभे स्वनवांशे स्वराशौ वा स्थिते, जाताः सुखवृत्तयः सुखजीवनाः, स्युरिति योजना। एवं खनवांशपे सूर्यलग्नचन्द्राणां दशमनवांशाधिपतौ, स्वोच्चांशके स्वलवभे सुखवृत्तयः स्युरिति योजना। अयं भावः—लग्नचन्द्रसूर्येभ्यो दशमाधिपतिर्वा तन्नवांशाधिपतेर्वा स्वोच्चे, स्वोच्चनवांशे, स्वगृहे, स्वगृहनवांशे वा यदि स्थितस्तर्हि सुखेन जीवनं निर्वहतीति। (नीचेति) पूर्वोक्ते लग्नचन्द्रसूर्येभ्यो दशमाधिपतौ, तन्नवांशाधिपतौ वा नीचारिभागगृहगे—नीचांशगते, नीचराशिगते, शत्रुनवांशगते, शत्रुराशिगते वा, सूर्यात्क्रमेण अल्पसुखाल्पपुण्यदासोपचारभृतकानुचरदासा भवन्ति एतदुक्तं भवति—सूर्ये नीचे, नीचांशे, शत्रुराशौ, शत्रुनवांशे वा स्थिते, दशमाधिपतौ तन्नवांशाधिपतौ वा सति अल्पसुखो भवति। तादृशे चन्द्रे अल्पपुण्यः, कुजे दासः, बुधे उपचारः उपसेवकः, गुरौ भृतकः, शुक्रे अनुचरः, शनौ दासः भवतीति। अत्र लग्नचन्द्रसूर्याणां मध्ये बलाबलविचारो न विधेयः। कारणं तु चतुर्थश्लोकव्याख्याने व्यक्तम्। अत्र दासो वेतनं विनैव सेवाकरः। अनुचरोपचारौ वेतनेन सेवाकरौ। भृतकस्तेषु प्रधान इति विवेको ज्ञेयः ॥ २ ॥

प्रकारान्तरेण कष्टजीवनयोगः

नीचार(रि)भागगृहगेऽल्पसुखाल्पपुण्य
दासोऽपचारभृति(त)कानुचराश्च दासाः ॥ २ ॥

सकलकर्मसिद्धियोगः

[1]खे वित्सितावथ शशीनखगोथ जीवः
खे स्यान्नृपाप्तविभवाऽखिलकर्मसिद्धिः ।

क्षणेन धनवृद्धिक्षययोगः

कर्मण्यगुः ख(स्व)गृहगैः कुजशुक्रसौम्यै
र्युक्तेक्षण(क्षितः) क्षणधनर्द्धिधनक्षयौ स्यः(स्तः) ॥ ३ ॥

लग्नचन्द्राभ्यां दशमगतसूर्यादिफलम्

[2]अर्थासिरङ्गविधुतो दशमेऽर्कमुख्यै
स्तानावि(तांबि)कारिहितबन्धुकलत्रभृत्यैः ।

---

१ लग्नचन्द्रसूर्याणां मध्ये एकस्माद्दशमे बुधशुक्रौ मिलितौ यदि स्तः तर्हि त्रयो योगाः । तथा शशीनाभ्यां सूर्यचंद्राभ्यामेकराशिस्थाभ्यां खगः दशमस्थानस्थः, यदि कश्चिद्ग्रहो भवति तर्हि एको योगः । लग्नचन्द्रसूर्याणां मध्ये एकस्माद्दशमे गुरौ स्थिते एको योगः । एतेषु योगेषु जातस्य नृपाप्तविभवा अखिलकर्मसिद्धिर्भवति । तथा सूर्यचन्द्रलग्नानामेकस्माद्दशमगतः अगुः राहुः, स्वगृहगतेन कुजेन वा, शुक्रेण वा, बुधेन वा दृष्टः, अथ वा युक्तो यदि तर्हि क्षणेन धनवृद्धिः, क्षणेन धनक्षयश्च भवतीति तात्पर्यम् । ॥ ६ ॥ २ अङ्गविधुतः लग्नाच्चन्द्राद्वा दशमे विद्यमानो रविः पितृधनप्रदः । चन्द्रो मातृधनप्रदः । कुजः सहजशत्रुभ्यः पितृव्यतत्पुत्रादिभ्यो धनं प्रापयति । बुधः

स्वसामर्थ्यशत्रुमित्रकृतधनयोगः बहुविधधनयोगश्च

तैर्वाद्यलाभधनगैः १-११-२ स्वसुहृद्रिपुभ्यः
स्वेऽष्टारिगैर्बहुविधा बलिभिः शुभैस्तैः ॥ ४ ॥

## ॥ अथ लग्नात् कर्मभावगतद्विग्रहयोगफलं ॥

**होराप्रदीपे—**

सुदेहो निर्जिताया(रा)तिनि(र्नि)र्दयो बलनायकः ॥
दुः ख शीलो राजसो लग्नात्सूर्येन्द्वोः कर्मसंस्थयोः ॥ ५ ॥

---

हितेभ्यो मातुलादिभ्यो धनं प्रापयति। गुरुर्भ्रातृभ्यः, शुक्रः पत्नीसहोदर्यादिभ्यः स्त्रीभ्यः, शनिर्भृत्येभ्यो धनं प्रापयति। अत्र लग्नचन्द्रयोर्मध्ये यो बली तस्माद्दशमस्थ एव सूर्यादिः पूर्वोक्तरीत्या धनप्रदः इति केचिद्व्याचक्षते। परं त्वत्र श्लोके बलग्रहणं नास्ति। दृश्यते चैकस्यैव पुरुषस्य बहुविधो धनागमः। गार्गिवराहादयोऽपि बलग्रहणं नाकुर्वत। तथा च तद्वाक्यम्—

“ उदयादिन्दुतो वापि ये ग्रहा दशमस्थिताः ॥
ते सर्वेऽर्थप्रदा ज्ञेयाः स्वदशासु यथोदिताः ॥ ” इति गार्गिः।

“ अर्थाप्तिः पितृजननीसपत्नमित्र
भ्रातृस्त्रीभृतकजनाद्दिवाकराद्यैः ॥
होरेन्द्वोर्दशमगतैर्विकल्पनीया ” इति वराहः।

अतोऽत्र बलचिन्तां विनैव लग्नचन्द्रयोर्दशमस्थाः सर्वेऽपि स्वदशायां स्वोक्तपित्रादिधनप्रदा इति ज्ञेयम्। अत्र दशमस्थैः सूर्यादिग्रहवर्गैरपि पूर्वोक्तवत्फलं विचिन्त्यम्। (तैर्वेति) वा अथ वा, तैः अर्कमुख्यैः आद्यलाभधनगैः लग्नद्वितीयैकादशगतैः स्वेष्टारिगैः क्रमेण

भृतको विफलारंभः प्रधाननृपसेवकः ॥
नित्योद्विग्नश्च विकलः कर्मण्यादित्यभौमयोः ॥ ६ ॥

गजाश्वमेदिनीनाथो विख्यातो जायते नरः ॥
कर्मणि ज्ञार्कयोरेवं न [1]नीचगृहसंस्थयोः ॥ ७ ॥

निन्दे(न्द्ये) कुलेऽपि संभूतो नृपः स्यादर्कजीवयोः ॥
कर्मस्थयोर्यशःसौख्यसन्मानविभवान्वितः ॥ ८ ॥

नरेन्द्रचरितः(सचिवः) शास्त्रनिपुणः कर्मसंस्थयोः ॥
सं(सौ)ख्यार्थवाहनैर्युक्तो बह्वारंभ(भोऽ)[र्क]शुक्रयोः ॥ ९ ॥

नरो विदेशगः प्रेष्यः स्याद्व्योम्नि रविमन्दयोः ॥
[2]किंचिद्भूपात्समाप्नोति चोरा मुष्णंति तत्क्वचित् ॥ १० ॥

गजाश्वकोष(श)संपत्तिपति(त्ति)युक्तं शशी नरं ॥
कुरुते भौमसंयुक्तो गम(ग)ने विक्रमान्वितं ॥ ११ ॥

---

स्वसुहृद्रिपुभ्यः अर्थाप्तिरिति योजना। अयं भावः। अर्कादयो ग्रहा लग्ने, द्वितीये, एकादशे वा स्थिताः स्वोक्तं धनं ददति। तेषु स्थानेषु ते यदि स्वगृहगास्तर्हि स्वसामर्थ्यात्, शत्रुगृहगाः शत्रुतः, मित्रगृहगा मित्रतो धनं प्रापयन्तीति। (बहुविधेति) तैः लग्नद्वितीयैकादशगतैः, बलयुतैः बहुविधा अर्थाप्तिः, तथा तैः सौम्यैः बहुविधा अर्थाप्तिरिति च योजना। अयं भावः—लग्नद्वितीयैकादशगाः पापा वा दुर्बला वा यदि स्युः तथापि धनप्रदाः। त एव यदि सबलाः सौम्या वा यदि स्युस्तर्हि बहुप्रकारैर्धनदा इति भावः ॥४॥ १ पूर्वार्धोक्तं कर्मस्थरविबुधफलं तयोर्नीचगृहस्थत्वे न वक्तव्यमिति भावः। २ राज्ञः सकाशात्किंचिद्धनं प्राप्नोति। तदपि धनं चोरैरपहृतं स्यादिति भावः।

ख्यातो मानी धनी भूपो(प)मन्त्री व्योम्नीन्दुसौम्ययोः ॥
वयसोऽन्ते भवेद्दुःखी व(बं)धुस्वजनवर्जितः ॥ १२ ॥

व्योम्नीन्दुजीवयोर्विद्याद्दाता(दान)मानार्थकीर्तिमान् ॥
स्फीतो(सौम्यो) लंबभुजः सर्वनमस्यो जायते नरः ॥ १३ ॥

मन्त्री च(ब)हुजन(नः) ख्यातः क्षमायुक्तो नृपोऽथ वा ॥
मानज्ञो(नाज्ञा)विभवैर्युक्तो व्योम्नि शीतांशुशुक्रयोः ॥ १४ ॥

[1]ख्यातो विनिर्जितारातिर्नृपतिः स्याद्द्वियोषि(कुबधूसु)तः ॥
सूर्यपुत्रयुते चन्द्रे विलग्नात्कर्मणि स्थिते ॥ १५ ॥

[सौम्यग्रहयुते दृष्टे चन्द्रे प्रायः शुभाश्रयः ॥
भौमार्किभ्यां युते दृष्टे दशमे स्याच्चभूपतिः ॥ १६ ॥]

शूरः शठोऽतितेजस्वी भूमिपाभिमतो नरः ॥
[क्रूरः] सेनापतिर्धीरः कर्मणि क्षितिजज्ञयोः ॥ १७ ॥

प्रभूते(त)परिवारार्थः पार्थिवः कीर्तिमान् भवेत् ॥
व्योम्नि कर्मसमर्थश्च संस्थ(स्थित)योर्भौमजीवयोः ॥ १८ ॥

श(अ)स्त्राचार्यो माल्य[व]स्त्रविद्यार्थमतिसंयुतः ॥
सितारयोर्भूपमन्त्री स्त्रीतुल्य(प्रख्यात)तनुरंबरे ॥ १९ ॥

आप्राप्तो(अनृणो) नृपार्थेन(पलब्धा)[र्थो] दण्डितश्चापराधि(ध)तः ॥
कुजसूर्यन(ज)योव्यो(र्व्यो)म्नि भवेद्विभव[व]र्जितः ॥ २० ॥

---

१ एतत्पद्यानन्तरं सारावलीगतमेकं पद्यं संगृहीतं कुण्डल्यां निवेशितम् ।

भूपो विनीतो मन्त्री वा मानाज्ञाख्यातिसंयुतः ॥
[1]श्रु(श्रौ)तामि(र्थ)चारो(री) दशमं(म)संस्थयोर्बुधजीवयोः ॥ २१ ॥

नीतिव(वि)त्सक(फ)लारंभः साधुनी(नीं)चानुगो नृपः ॥
समर्थश्च नया(चा)ढ्यश्च कर्मणीन्दुजशुक्रयोः ॥ २२ ॥

[2]असाधुर्मलिनो मूर्खः प्रेण(ष्य)श्चासत्यवाग्भवेत् ॥
परोपकारी मनुजो व्योम्नि बोधनमन्दयोः ॥ २३ ॥

[स्वजनार्थसुहृद्युक्तो दशमे सौम्यसौरयोः ॥
सवाहनो जितारातिर्द्विजदेवगुरुप्रियः ॥ २३ ॥]

जीवभार्गवयोर्भूपा(पो) [मा]नाज्ञाविभवान्वितः ॥
बहुभृत्यः सुशीलश्च(लोऽर्थी) जायते कर्मसंस्थयोः ॥ २४ ॥

नचलोऽल्पात्मजः सेनापतिर्भूपप्रियो नरः ॥
गोवाहनार्थयुक्तः स्यात् दशमे जीवमन्दयोः ॥ २५ ॥

विशिष्टकर्म(र्मा) त्रिख्यातः सर्वद्वन्द्वविवर्जितः ॥
नृपमन्त्री भवेद्व्योम्नि(म)संस्थयोः शुक्रमन्दयोः ॥ २६ ॥

[3]मेषूरणास्थितैः(तै)स्त्र्याद्यैरेवमेव नभश्चरैः ॥
द्वियोगकल्पनायुक्त्वा(क्त्या) फलं वाय(च्यं) मनीषिभिः ॥ २७ ॥

॥ इति लग्नात् कर्मभावगतद्विग्रहयोगफलम् ॥

---

१ श्रौतयज्ञादिकार्यकर्ता श्रौतार्थचारी। २ अयं श्लोकः सप्तमगतबुधशनिफलपर इति सारावल्यां व्यक्तम्। अतस्तत्स्थाने कुण्डलीगतो मदीयः श्लोकः पठनीयः। ३ मेषूरणे दशमे द्विग्रहयोगफलमिदानीमभिहितं। अनयैव द्विग्रहयोगकल्पनायुक्त्या

## ॥ अथ चन्द्रात् कर्मचिन्ता ॥

### अथ चन्द्रात् कर्मगतसूर्यादिप्रत्येकग्रहफलम्

चन्द्रात्कर्मास्थिते सूर्ये सिद्धारंभो भ(ध)नान्वितः ॥
सात्विको नृपतुल्यो वा(तिः श्रेष्ठो) भवेद्दुष्ट(त्पुष्टो) जनाश्रयः ॥ २८ ॥

प्रत्यंतवासी विषमो(य)लुब्धः क्रूरोऽतिसाहसी ॥
निषादचरितश्चन्द्राद्भौमे कर्मणि संस्थिते ॥ २९ ॥

बहुपुत्रो(श्रुतो) धमी(नी) विद्वान् शिल्पविद्दंडनायकः ॥
प्राज्ञः ख्यातो भवेच्चन्द्राच्चन्द्रजे कर्मसंस्थिते ॥ ३० ॥

[1]शुभाचारो विशु(ऽतिसि)द्धार्थः समृद्धो धार्मिको भवेत् ॥
[नृपमन्त्री गुरौ ख्यातः] शशाङ्कात् कर्मसंस्थिते ॥ ३१ ॥]

[गीतप्रियो विधोः शुक्रे दशमे राजपूजितः ॥
सिद्धारंभो धनी मान्यः सुभगो ललितो मृदुः ॥ ३२ ॥]

व्याधितो दुःखितो निःस्वो नित्योऽद्विग्नश्च कर्मसु ॥
प्रज्ञा(जा)हीनो नरश्चन्द्रात्कर्मभावस्थिते शनौ ॥ ३३ ॥

॥ इति चन्द्रात् कर्मगतप्रत्येकग्रहफलम् ॥

---

त्रिग्रहयोगचतुर्ग्रहयोगपञ्चग्रहयोगषड्ग्रहयोगसप्तग्रहयोगेषु फलं मनीषिभिरभ्यूह्य वक्तव्यमिति भावः । १ अस्मिन् श्लोके तृतीयः पादो लुप्तः । स च सारावळीतः संगृहीतः । तथा चंद्राद्दशमस्थशुक्रफलपरः श्लोको मूले नास्ति । सोपि संगृहीतः ।

## ॥ अथ चन्द्रात् कर्मगतद्विग्रहफलम् ॥

[1]सूर्याच्चंद्या व्योम्नि क्षुद्रो हिंस्रः कुकर्मकृत् ॥

[ज्योतिर्वित्तार्किको लाक्षणिकश्चन्द्रात्कुजार्कयोः ॥

व्योमस्थयोः कासशोषकामाढ्यः कर्मकारकः ॥ ३४ ॥]

अलंकरणचा(व)स्राभिः(ढ्यो) दृष्यवाणिज्यको नरः ॥
जलजीवी भवेच्चन्द्रात्कर्मण्यादित्यसौम्ययोः ॥ ३५ ॥

वीरः शूरः पुमान् ख्यातो नृपगान्यश्च जायते ॥
सिद्धारंभो विधोर्व्योम्नि(म)संस्थयो रविजीवयोः ॥ ३६ ॥

स्त्रीसंश्रयः(यात्) समृद्ध द्(द्धः) स्यात्सुभगो नृपवल्लभः ॥
सशुक्रभास्व(स्क)रे चन्द्रात्कर्मगे स्वजनाश्रितः ॥ ३७ ॥

भृतकः कृपणो दीनो वधबन्धनवा(भा)ग्भवेत् ॥
प्रवासी(लापी) चोरमुख्यश्च च(मुषितश्च)न्द्राद्व्योम्न्यर्कमन्दयोः ॥ ३८ ॥

भूभते(प्रभूता)रिर्महाशूरः शशांकाद्भौमसौम्ययोः ॥
भवेद्वसु(दस्र)कलादक्षः स(सु)जीवी कर्मसस्थयोः ॥ ३९ ॥

मित्रेभ्यो लब्धविभवः स्यात्तदाश्रयजीवितः ॥
बलनेवा(ता) भवेच्चन्द्राद्व्योम्नि भूसुतजीवयोः ॥ ४० ॥

विदेशगो वणिग्वृत्या हेमशुक्ता(मुक्ता)दिभिर्नरः ॥
जीवति स्त्र्याश्रयाच्चेन्दोर्व्योम्नि भूसुतशुक्रयोः ॥ ४१ ॥

---

१ अत्र पूर्वार्धमात्रं वर्तते। तदपि चन्द्राद्दशमगतरविकुजफलपरं न भवति। अतः कुण्डलीस्थो मदीयः पाठः स्वीकार्यः।

[1]साहसी जायते पुंसः कर्मयुक्तौ मृतौ स्थितः ॥
[कर्मयुक्तो रुजा युक्तोऽप्रजः क्षुद्रोऽतिसाहसी ॥]

चन्द्रात्कर्मस्थयोर्भौममन्दयोर्जायते नरः ॥ ४२ ॥

धर्मिष्ठो नायकः ख्यातो नृपपूज्यो धनान्वितः ॥
लिपिवि[च्छा]स्त्र[मं]त्रज्ञः चन्द्राद्व्योम्नि बुधेऽज्ययोः ॥ ४३ ॥

मित्रार्थवनितासौख्यभाक्सुधीः सचिवो भवेत् ॥
देशाधीशोऽथ वा चन्द्रात् खमध्ये बुधशुक्रयोः ॥ ४४ ॥

[2]मृद्भाण्डकृन्नरो लेख्यलिपिकृच्च प्रजायते ॥
[विद्याचार्यो ग्रन्थकर्ता चन्द्राद्व्योम्नि ज्ञसौरयोः ॥ ४५ ॥]

[विद्याचार्यो ब्राह्मणेशः समर्थः शोकवर्जितः ॥
नरेन्द्रवरभृत्यः स्याच्चन्द्राद्व्योम्नीज्यशुक्रयोः ॥ ४६ ॥]

[3]परोऽपमाप(कार)कृन्नीच(चः) सिद्धारंभः प्रजायते ॥
प्रसिद्धश्चे(वृद्धचे)ष्टितश्चन्द्रा[त्सिताक्यौः सुस्थिरास्पदः ॥ ४७ ॥]

[गन्धजीवी चित्रकारो नीलकारः प्रजायते ॥
चूर्णकारो भिषक् चन्द्रा]द्दशमे शुक्रमन्दयोः ॥ ४८ ॥

॥ इति चन्द्रात् कर्मगतद्विग्रहयोगफलम् ॥

---

१ अत्र पूर्वार्धं दुर्गमं । अतस्तत्र कुण्डलीस्थः पाठोऽनुसंधेयः । २ अस्मिन् पद्ये उत्तरार्धं, उत्तरः श्लोकश्च लुप्तौ । तत् सार्धपद्यं मया पूरितं । ३ अस्मिन् पद्ये तुरीयः पादो लुप्तः । तथा उत्तरश्लोके आद्यपादत्रयं लुप्तम् । तन्मया पूरितम् ।

## ॥ अथ चन्द्राद्दशमगतत्रिग्रहयोगफलम् ॥

**सारावळ्यां—**

रविभौमचन्द्रपुत्राश्चन्द्राद्दशमे स्थिता नरं धन्यं ॥
जनयन्त्युत्तमपुरुषं नृपतिजनं सर्वजनपूज्यं ॥ ४९ ॥

रविभौमदेवपूज्या दशमस्थानोऽपगा नरं सुभगं ॥
शत्रूणां जेतारं जनयन्ति समृद्धिसंयुक्तं ॥ ५० ॥

चन्द्राद्दशमे भूसुत(भास्कर)भास्कर(भूसुत)भृगुनन्दनाश्च जनयंति ॥
क्रूरं साहसनिरतं परस्वापहारिणं चैव ॥ ५१ ॥

रविभूसुतरविपुत्रा दशमस्थाः क्रूरकर्मनिरतं च ॥
उत्पादयंति मनुजं निगूढ(मूढं) पापं दुराचारात्(रम्) ॥ ५२ ॥

रविबुधगुरवो दशमे विद्वांसं रूपयुतं सुभगं ॥
उत्पादयंति पुरुषं धर्मिष्ठं [बन्धु]वल्लभं चैव ॥ ५३ ॥

रविशशिसुतभृगुपुत्रा यशस्विनं धार्मिकं विगतरोषं ॥
जनयंत्यपराभूतं सौभाग्यपरिछ(च्छ)दसमृद्धं ॥ ५४ ॥

रविबुधशनयो दशमे क्रूरं चपलं नरं विशीलं च ॥
उत्पादयंति नियतं शस्त्राग्निपरिक्षतांगं च ॥ ५५ ॥

रविसुर[गुरु]भृगुपुत्रा दशमस्थानोपगा नरं कुर्युः ॥
सुभगं विद्यासधनं धर्मरतं भोगभागिनं नित्यं ॥ ५६ ॥

रविसुरगुरुभृगु(रवि)पुत्रा दशमे युक्त(क्ता) नरं(रान्) प्रकुर्वन्ति ॥
प्रायेण लोकमान्यांश्चारित्र्यबलानलोभि(त्रविलोपि)नो धीरान् ॥ ५७ ॥

रविभार्गवभानुसुता दशमस्थानोपगा नरं कुर्युः ॥
लोभान्वितमतिचपलं समस्तजनवि[प्र]युक्तं च ॥ ५८ ॥

भौमेंदुजसुरपूज्या धर्मिष्ठो(ष्ठान्) बहुकुटुंबपरिवारान् ॥
जनयन्ति दशमसंस्था विविध(विद्या)धनभाजनान्पुरुषान् ॥ ५९ ॥

शोभनशिल्पाभिरतान्मालाकारान्सुवर्णकारांश्च ॥
कुर्युः कुजबुधशुक्रा दशमस्थाः सर्वलोकहीना(हिता)न् ॥ ६० ॥

भौमसु(बु)ध मं सूर्यपुत्रा जनयन्ति नरान्धर्मशीलांश्च ॥
निद्रानिरतान्प्रखलान्दशमस्थानोपगा [नरान]सभ्यांश्च ॥ ६१ ॥

भौमसुरमन्त्रिशुक्राश्चन्द्राद्दश म माश्रिता नरं कुर्युः ॥
धनसंयुक्तं सुनयं(शूरं) देवद्विज[पू]जनानुरतिं(तं) ॥ ६२ ॥

विद्याधनज[न]हीन(ना)धन(म)पुरुष(षं) सौख्यवर्जितं विकलं ॥
कुजसुरगुरुरविपुत्रा दशमे कुर्युर्नरं नोचं ॥ ६३ ॥

[1]भौमभृगुभानुपुत्रा दशमस्थानोपगा नरं मलिनं ॥
उत्पादयंति सत्यं वधबंधविवादनिरतं च ॥ ६४ ॥

---

१ एतस्मात्पद्यादारभ्य पञ्चसु पद्येषु कानिचिद्विपर्यस्तानि । तथा हि–दशमस्थेषु कुजभृगुशनिषु वक्तव्यं फलं दशमस्थेषु बुधभृगुशनिषूक्तं । तथा दशमस्थेषु बुधशुक्रशनिषु वक्तव्यं फलं दशमस्थेषु गुरुशुक्रशनिषूक्तम् । तथा दशमस्थेषु गुरुशुक्रशनिषु वक्तव्यं फलं दशमस्थेषु बुधगुरुशनिषूक्तम् । एतानि त्रीणि पद्यानि विपर्यस्तानि । तथा दशमस्थानां बुधगुरुशुक्राणां फलमत्र शुभममिहितम् । सारावल्यां तु शुक्रगृहस्थानामेव तेषां शुभफलदत्वम्, अन्यगृहस्थानां तु व्याधिप्रदत्वमित्युक्तम् । एवमत्रोक्तं भौमशुक्रशनिफलं तु प्रकारांतरेणैव ग्रन्थान्तरे कथितम् । अत एतेषां पद्यानां श्लोकानामधः कुण्डल्यां शुद्धः पाठो मया अनूदितः ।

[सचिवानुत्तमपुरुषान्धनधर्मरतांश्च धनिनश्च ॥
भौमभृगुसूर्यपुत्राः कुर्वन्ति नराननेककर्मरतान् ॥ ६४ ॥]

बुधगुरुशुक्रा दशमे जनयंति सदेष्टसंयुतं पुरुषं ॥
धनिनमे(म)तिसौख्ययुक्तं धर्मदूयं(परं) साधकं धीरं ॥ ६५ ॥

[बुधगुरुशुक्रा दशमे पुरुषस्य शुक्रराशिस्थाः ॥
बहुविधमिष्टं कुर्युर्व्याधिं चाऽप्यन्यगृहसंस्थाः ॥ ६५ ॥]

बुधदेवपूज्यशनयो जनयंति नरं सदा दशमसंस्थाः ॥
धनधर्मयुक्त(तं) प्राज्ञं दयान्वितं सत्यवित्तं(वन्तं) च ॥ ६६ ॥

[लिपिलेख्यकाव्यनिरतं धनवन्तं बहुविधेयभृत्यं च ॥
अटनप्रियं सुरूपं बुधगुरुसौरा नरं दशमे ॥ ६६ ॥]

बुधभृगुसुतरविपुत्रा दशमस्थानोऽपगा नरं कुर्युः ॥
सचिवं चोत्तमपुरुषं धनधर्मसमन्वितं सुभगं ॥ ६७ ॥

[दशमे विज्ञानयुतान् मल्लान् परदेशनिरतांश्च ॥
कुर्युर्बुधभृगुरविजाः कर्मोद्युक्तं सदा दान्तम् ॥ ६७ ॥]

सुरगुरुभार्गवशनयो जनयंति नरं त्वनेककर्म नि रतं ॥
दशमे विज्ञानयुतं मल्लं परदेशनिरतं च ॥ ६८ ॥

[विद्वांसं धर्मरतं दयान्वितं सत्यवचनं च ॥
सुरगुरुभार्गवशनयो दशमस्थानोपगा नरं कुर्युः ॥ ६८ ॥]

॥ इति चन्द्रात् कर्मगतत्रिग्रहयोगफलम् ॥

## ॥ अथ चन्द्रात् कर्मगतचतुर्ग्रहयोगफलम् ॥

विक्षताङ्गो नरः क्रू(शू)रो दाता सकलध(क)र्मकृत् ॥
रविभौमज्ञदेवेज्यैश्चन्द्राद्दशमगैर्भवेत् ॥ ६९ ॥

मालाकारो लेख्यचित्ररतः कर्मरतस्तथा ॥
चन्द्राद्दशमगैः सूर्यभौमचंद्र[ज]भार्गवैः ॥ ७० ॥

[1]चन्द्राद्दशमगैः सूर्यभौमचन्द्रात्मजार्किभिः ॥
जायते पुरुषो नीचरतो धर्मसमन्वितः ॥ ७१ ॥
[जायते पुरुषो वित्तगजवाहनसंयुतः ॥ ७१ ॥]

कृषिकृद्धर्मशीलश्च बहुधान्यधनान्वितः ॥
सदोद्यमी भवेच्चन्द्रात्सूर्यो(र्या)रेऽर्जेशि(ज्यसि)तैः [2]खगैः ॥ ७२ ॥

परस्वहरणे श(स)क्तः क्रूरकर्मरतो भवेत् ॥
अकरि(र्कार)जी[व]शनिभिश्चन्द्राद्दशमसंस्थितैः ॥ ७३ ॥

सक्ता(दा)चारो(रः) प्रकाश(श्य)श्च जायते निपुणो नरः ॥
चन्द्राद्दशमगैः सूर्यभौमास्कु(स्फु)जि त दिनात्मजैः ॥ ७४ ॥

वाचको मधुरो मल्ल(निन्द्य)वृत्तिः कर्षणकृन्नरः(त्सुतः) ॥
चन्द्राद्दशम[गैः] सूर्यबुधेऽज्यभृगुजैर्भवेत् ॥ ७५ ॥

[3]परेषां वचनासक्तो मेधा(माया)वी क्रूरचेष्टितः ॥
[चन्द्रात्कर्मस्थितैः सूर्यबुधेज्यशनिभिर्भवेत् ॥ ७६ ॥]

---

१ अत्र सारावल्यां फलभेदो दृष्टः। स च कुण्डलीगतः। २ खगैः दशमगैरित्यर्थः। ३ एतच्छ्लोकोत्तरार्धं, ततः परं द्वे पद्ये च कोशे न स्तः। तानि मया पूरितानि।

[कठिनः सुभगो वाग्मी कृषिकर्ता प्रजायते ॥
चन्द्रात्कर्मस्थितैः सूर्यबुधास्फुजिदिनात्मजैः ॥ ७७ ॥]

[प्रवासशीलो विविधचेष्टो मर्त्यः प्रजायते ॥
चन्द्रात्कर्मगतैः सूर्यगुरुभार्गवसूर्यजैः ॥ ७८ ॥]

प्र(अ)धृष्यः समरे शूरः पण्डितो(रश्चतुरो) निपुणो भवेत् ॥
चन्द्रात्कर्मस्थितैर्भौमबुधवाक्पतिभार्गवैः ॥ ७९ ॥

वैरिहा कठि(मलि)नः शूरः सदोद्युक्तश्च संगरे ॥
भूमिपुत्रज्ञदेवेज्यशनिभिश्चन्द्रकर्मगैः ॥ ८० ॥

[1]सुविद्वान्(या)बहुलः शूरो विशालांगो नरो भवेत् ॥
चंद्रात्कर्मस्थितैर्भौमबुधशुक्रशनैश्चरैः ॥ ८१ ॥

[धीरः कुटुम्बयुक्तश्च धनयुक्तश्च जायते ॥
चन्द्रात्कर्मस्थितैर्भौमगुरुशुक्रार्कसंभवैः ॥ ८२ ॥]

मेधावी लोकदयितः शान्तात्मा पुरुषो भवेत् ॥
कर्मसंस्थैर्विधोः सौम्यजीवभार्गवभानुजैः ॥ ८३ ॥

॥ इति चन्द्रात्कर्मगतचतुर्ग्रहयोगफलम् ॥

---

## ॥ अथ द्विग्रहादियोगानां शुभपापदृष्टिफलम् ॥

इमे योगाः प्रशस्यंते सौम्यग्रहनिरीक्षिताः ॥
अभद्राः प्रायशः प्रोक्ताः पापग्रहनिरीक्षणात्(क्षिताः) ॥ ८४ ॥

---

१ अत्र भौमगुरुशुक्रशनियोगफलपरः श्लोको लुप्तः । स च कुण्डल्यां निवेशितः ।

[1]वैद्याः पुरोहिताः शास्त्रगणाच्च वृत्तिः ॥

अथ दशमेशनवांशाधिपतिभिर्वृत्तिज्ञानम्

[2]स्वर्णौऽषधो(धौ)र्णिकतृणादिभिरर्कभागे
स्त्रीकृष्यकुप्य(रण्य)जलजैश्च हिमांशुभागे ।
शस्त्राग्निधाम(तु)समरैः क्षितिजांशके च
शिल्पादिकाव्यगणितैर्लिपितो बुधांशे ॥ ८५ ॥

---

१ अत्र ८४ तमश्लोकादनन्तरं एकः श्लोकः, ततः परमीषदून एकः पादश्च लुप्त इत्यनुमीयते । तत्संबन्धी चायं स्थूलाक्षरनिर्दिष्टो भागः ।

२ (स्वर्णमिति) उत्तरश्लोकेनायं श्लोक एकवाक्यतामापन्नः । अतः उत्तरश्लोकचतुर्थपादगतं आस्पदेशात् इति पदं प्रतिवाक्यमन्वेति । तथा हि—अर्कभागे अर्कनवांशे स्थितात्, आस्पदेशात् दशमाधिपतेः, स्वर्णौषधोर्णिकतृणादिभिः वृत्तिः जीवनं भवति इति योजना । एवं हिमांशुभागे इत्यादावपि व्याख्येयम् । स्वर्णपदं मुख्यलोहोपलक्षणम् । औषधं विविधौषधद्रव्याणि । और्णिकम् अजादिलोमजनितवस्त्रादिद्रव्यम् । तृणम् होमसाधनं दर्भादि, पशुभक्षणोपयुक्तं गृहाच्छादनोपयुक्तं च कलमकाण्डादि द्रव्यम् । आदिपदेन पूर्वोक्ततुल्यानि तत्साधनानि च गृह्यन्ते । दशमेशे सूर्यनवांशस्थे पूर्वोक्तवस्तूनां क्रयविक्रयादिजनितेन द्रव्येण जीवनं भवतीति भावः । एवमग्रेऽपि । स्त्रिया पत्न्या लब्धेन स्त्रीधनेन वा, अन्यया राजादिपत्न्या सेवितया लब्धेन वेतनेन वा, अन्येन निमित्तेन लब्धेन वा धनेन जीवनं भवति । अरण्यपदमरण्यभववृक्षाद्युपलक्षणं । जलजाः जलसंभवपद्मशङ्खमुक्तामत्स्यनौकादयः । धातवो द्विविधाः । धाम्या अधाम्याश्च । तत्र धाम्याः (प्रक्षालनयोग्याः) कनकरजतकांस्यसीसताम्रांगादयः । अधाम्याः (प्रक्षालनायोग्याः) मनःशिलाहरितालमृत्पाषाणादयः । धर्माः स्ववर्णोऽचिता अध्यापनादयः । द्विजाः ब्राह्मणक्षत्रियवैश्याः । आगमाः पञ्चरात्रादयो मीमांसादिशास्त्राणि च । सुरपदं तन्मन्त्रजपनमस्कारपूजाद्युपलक्षणम् । गोपदं

धर्म(र्मे)द्विजाकर(गम)सुरादिभिरोज्यजेऽशे
रौप्यादिगोमहिषरत्नधनैश्च शौके ।
भारश्च(श्र)माध्ववं(व)धनीचका(क)शिल्पकाद्यै
र्मन्दे लवे भवति वृत्तिरिहास्पदास्या(देशा)त् ॥ ८६ ॥

॥ इति दशमेशनवांशाधिपतिभिर्वृत्तिविज्ञानम् ॥

---

## ॥ अथ दशमेशाश्रितराश्यधिपैर्वृत्तिफलम् ॥

देस्तो(हेमौ)षदा(धा)दिभिः सूर्ये कृषियो(तो)याश्रयैर्विधौ ॥
धात्वस्त्रसाहसैर्भौमे ज्ञे कलाकाव्यलेख्य(ख)नैः ॥ ८७ ॥

धर्मक्रियादिभिर्जीवे पशुरत्नादिभिः सिते ॥
नीचशिल्पादिभिर्मन्दे वृत्तिर्ज्ञेया दशासु च ॥ ८८ ॥

॥ इति दशमेशाश्रितराश्यधिपैर्वृत्तिविज्ञानम् ॥

## ॥ अथ दशमभावगतमेषादिद्वादशराशिंवर्गफलम् ॥

आराम[पुत्र]यभिनिर्व(कृषिधीव)णिगङ्गदूत(र्कदौत्य)
सेवादिवृत्ति[सु]कृतिर्दशमेऽ(मेऽ)जवर्गे ।

---

क्षीरप्रधानप्राण्युपलक्षकम् । महिषपदम् कृषिशकटाद्युपयुक्तप्राण्युपलक्षकम् । भारपदं काष्ठभारवहनाद्युपलक्षणम् । श्रमः अध्वगमनशिलाभेदनादिजनितः । वधः कर्मकरणन्यूनतायामधिकारिणा प्रयोजितः कशाभिघातादिः । कटकरणदारुतक्षणादीनि नीचकानिशिल्पानि । अनृतवचनमोषणकौशलादीनि नीचकानां शिल्पानि ॥ ८५—८६ ॥

१ आरामादिजनितवृत्तिमान् शोभनयत्नवांश्चेति भावः । अत्र द्वितीयार्धं त्रुटम् । तत्र मदीयः श्लोकः पठनीयः ।

[स्याज्जाङ्गले वृषगणे दशमेऽब्जजाद्यैः
धान्यादिसंग्रहचतुष्पदयानमुख्यैः॥ ८९ ॥]

मुक्तादिविद्रुमजलोत्स्थ(त्थ)वणिक्य(क् च) लेख्य-
लिप्यादिशंखधवलैर्मिथुनस्य वर्गे ।

[1]शस्त्राग्नियोनिपरितो(पो)षणशंखमु(मु)क्ताऽऽ
विद्याहिको(हितुण्डिका)दि[म]कृतिः खलु काष्ठ(कर्कि)वर्गे ॥ ९० ॥

[2]अन्नाहिकष्टविपनोद्रिसुवर्णरौप्य
कुट्यैद्रवत्कृषिकधान्यमयैश्च सिंहे ।

[पाषाणरौप्यकनकैर्मणियोजनेन
गोधान्यकर्षणमुखैर्हरिगे च जीवेत् ॥]

ग(गा)न्धर्वशिल्पि(ल्प)कहिरण्मयकर्मलौल्यः(ण्यसुगन्धकृत्या)
कन्यागणैः(णे) सुमणिभिः शकटैर्नभस्थैः(स्थे) ॥ ९१ ॥

हैर(सत्य)ण्यगोमहिषधान्यवनाद्युरोये(म्बुजातै)
मू(मू)लैः कृशै(षे)र्नृपतितो हढ(धट)जेऽम्बरस्थे ।

स्त्रीसङ्गमासविभवैः कृषिकालचोद्यै(लोहचौर्यै)
किल्सिका(भैषज्यतो)नृपनृतो द(भृतैर्द)शमालिवर्गे ॥ ९२ ॥

भैषज्यगोऽश्वरसकाष्ठजयंत्रविद्या
भूषादिमंवि(त्रि)गरि(कृति)दुर्गमृतश्च चापे ।

---

१ आहितुण्डिकः सर्पाजीवी । २ इदमर्धमत्यन्ताशुद्धम् । अतस्तत्र मदीयः श्लोकः पठनीयः ।

[1][खट्‌वां]गनापणिका(क)वारिविपं(प)[ण्य]चिता(विताः)
श्रे(श्रे)ष्ठा रसायनरताश्च मृगोऽस्थ(त्थ)वर्गे ॥ ९३ ॥

[2]शस्त्राग्निभेदखननादिकचौर्यभार
स्कन्धोऽप(त्थ)वृत्तिरतिबाहुबल(ला)द्घटोत्थे(त्थे) ।
[योनिप्रपोषणजलायुधतो नभस्थे
जीवेन्नरस्तिमिगणे हयविक्रयेण ॥ ९४ ॥]

इति दशमभावगतमेषादिद्वादशराशिवर्गफलम्

दशमेशनवांशेशफलस्यान्यत्रातिदेशः

[3]खस्थे खपे खदृक्(के)शे खलवेऽशे खभांशगे ॥
चा(ख)पांशानुगतं कर्म स्वोच्चांशर्क्षेऽखिलं शुभं ॥ ९५ ॥

---

१ खट्‌वाङ्गनापणिकाः तद्विक्रयजीविनः । ते च ते वारिविपण्यविताश्चेति विग्रहः । २ अत्रोत्तरार्धं लुप्तम् । तत्र मदीयः पाठोऽनुसर्तव्यः । ३ खस्थे दशमगते, खपे दशमेशे, खदृक्केशे दशमद्रेकाणेशे, (लग्नद्रेकाणात् अष्टाविंशतितमद्रेकाणाधिपतौ) खलवेशे दशमभावाश्रितनवांशेशे, खभांशगे दशमभावाश्रितनवांशगते च ग्रहे खपांशानुगतं दशमेशाश्रितनवांशेन अनुगतं तत्सदृशमिति यावत्, कर्म भवति इति योजना । एतदुक्तं भवति—"स्वर्णौषधौर्णिकतृणादिभिरर्कभागे" इत्यादिना कर्मेशाश्रितानां सूर्यादिनवांशानां फलमुक्तम् । तत्र सूर्यनवांशेन यत्कर्मोक्तं तदेव दशमस्थे, दशमेशे, दशमद्रेकाणेशे, दशमनवांशेशे, दशमनवांशगे च सूर्ये वक्तव्यम् । एवं चन्द्रादावपि योज्यम् । (स्वोच्चेति) पूर्वोक्ताः दशमस्थः, दशमेशः इत्येवमादयो यदि स्वोच्चे, स्वर्क्षे, स्वोच्चांशे, स्वनवांशे स्युस्तर्हि अखिलं शुभं जीवनं कुर्युः । शत्रुक्षेत्रे, शत्रुनवांशे, नीचक्षेत्रे, नीचनवांशे वा यदि स्युस्तर्हि दास्येन

## दासवृत्तियोगः

शत्रुनीचलवर्क्षस्थे दास्यं श्रेष्ठाधमं पुनः ॥
सदसद्दृक्ष(द्दृष्ट)सौम्योऽग्रदत्तवात्तस्व(युक्तत्वे स्व)दशासु च
॥ २६ ॥

## दासवृत्तिभेदाः

[१]सूर्योऽन्यदेशं नर(क्रय)विक्रयेण(याभ्यां)
चन्द्रः सु(व)र्गस्थितिदासभावं ति ।
जीवेन भद्राक्षतमर्थतो वा
खु(वि)द्य(धा)त्सुवाक्योऽपचयासराधैः(यं परं ज्ञः) ॥ ९७ ॥
नियोगभग्नं वनितार्थतो वा
शुक्रः कुजः सैन्यबला[त्प]कृष्ट ।

---

जीवनं दधुः। शत्रुक्षेत्रादिगताश्च ते शुभैर्युक्ता दृष्टा वा दासश्रेष्ठं कुर्युः। तथा पापैर्युक्ता वा दृष्टा वा दासाधमं कुर्युरिति भावः। (स्वदशास्विति) पूर्वोक्ताः सर्वेऽपि स्वदशासु स्वकीयां वृत्तिं प्रापयन्तीति भावः ॥ ९५—९६ ॥ १ पूर्वोक्तमेव विवृणोति, सूर्य इत्यादिना। सूर्यः क्रयविक्रयाभ्यां निमित्तभूताभ्यां अन्यदेश-संचारिणं दासं स्वदशायां करोति। चन्द्रः सुवर्गे शुभजनसमूहे स्थितिर्यस्य सः सुवर्गस्थितिः। तादृशो यो दासस्तद्भावं करोति। शुभजनदासं करोतीति यावत्। गुरुणा अर्थतो भद्रं अक्षतं च दासं विधात्। शुभधनं अक्षतधनं मंगलस्वभावं च दासं कुर्यादिति भावः। बुधः सुवाक्योपचयं सुवाक्यैर्बहुधा स्तुतिकरं श्रेष्ठं दासं कुर्यादिति भावः। शुक्रः वनितार्थं नियोगभग्नं आज्ञाभंगकरं कुर्यात्। (तथेति) पूर्वोक्तं दशाफलमन्तर्दशायामपि योजनीयमिति भावः ॥ ९७—९८ ॥

अनाथदुःखोऽपहृतं च सौर

स्तथा तथैतेषु च यो विपाकः ॥ ९८ ॥

## ॥ अथ दशमपतेर्द्वादशभावाश्रयफलम् ॥

दश[म]पतौ लग्नगते मातरि वैरि(री) प(पि)तरि न च ति भक्तः ॥

[1]दुःखी गत(स्यस्त)पिता बाल्ये परपुरुषरता भवति माता ॥ ९९ ॥

वित्तस्थे गगनपतौ मात्रा पालितसुतो भवति लाभी ॥

मातरि दुष्टो भवति स्वल्पग्रामः सुतनुकर्मा ॥ १०० ॥

मातृस्वजनविरोधी सेवारतो न कर्मणि समर्थः ॥

मातुल[सु]पालित(तः) स्याद्दशमपतौ सहजभवनगते ॥ १०१ ॥

[2]दशमपेऽबु(म्बु)गते निरतः सुखे

पितरि मातरि पोषणपूजने ।

सकललोकदशापमृतायते

नृपतिसंभवलाभविभूषितः ॥ १०२ ॥

शुभकर्मको विडंबी नृपलाभी गीतवाद्यनिरतः स्यात् ॥

गगनपतौ तनयगते पालयति च तत्सुतं माता ॥ १०३ ॥

दशमपे निज(रिपु)राशिगते भवे

निजगुणो(णैः) सहितो नं(न) निपां(जा)जवी(नः) ।

---

१ बाल्ये अस्तपिता मृतपितृक इत्यर्थः । २ सुखे निरतः, पितरि, मातरि, तयोः पोषणे, पूजने, च निरत इत्यर्थः ।

पितृकृतं धनमत्ति नि(वि)शेषतः

शुभखगे सति पापखगे त्वसत् ॥ १०४ ॥

सुतवी(व)[ती] शुभरूपसमन्विता

रमणमातरि पालनलालसा ।

भवति तस्य नरस्य निरन्तरं

प्रियतभाव(मांऽब)रपे दयितागते ॥ १०५ ॥

पुष्करपतिरष्टमगः क्रूरश्चोरं मृषान्वितं दुष्टं ॥

मातरि संतापकरं जनयति तनुजीवितं क्षि(कि)तवं ॥ १०६ ॥

शुभशीलः सद्बन्धुः सन्मित्रो दशमपे नवमलीने ॥

तन्मातापि सुशीला सुकृतवती सत्यवचनरता ॥ १०७ ॥

गगनपतिर्गगने जनयति जननीसुखप्रदं पुरुषं ॥

जननीकुलविपुलसुखं प्रक(त्वघ)टनघटनापटीयांसं ॥ १०८ ॥

मानोऽर्जितभर्त्रा[ढ्या] जननी तथा च सुतरक्षणी भवेत् सुखिनी ॥

दीर्घायुर्मा(नघ)नः सुखपुरुषो लाभाश्रितेऽबरपे ॥ १०९ ॥

मात्रोऽ(त्रु)क्तितो(गो) निजबलशुभकर्मा नृपतिकम(र्म)रति(त)चेताः ॥

व्योमपतौ व्ययसंस्थे देशभ्रमणश्च पापखगे ॥ ११० ॥

॥ इति दशमपतेर्द्वादशभावाश्रयफलम् ॥

---

## ॥ अथ दशमस्थप्रत्येकग्रहफलम् ॥

एकोनविंशति १९ वियोगमिनोऽब्दरस्थ
श्चन्द्रस्त्रिवेद ४३ धनकृत् क्षितिजो भ २७ वर्षे ।
शस्त्राद्भयं विदह(थ) गोकु १९ शरध्व(द्ध)नं च
जीवोऽर्कके १२ धनमतो भृगुजोऽत्र सौख्यं ॥ १११ ॥

शूरो वाहनधीवीर्यविभवात्मजवान(न् र)वौ ।
प्रसत्थः(ख्यः) कर्मगेऽधृष्यः सिद्धारंभश्च जायते ॥ ११२ ॥

सिद्धारंभः शुचिः कर्मप[रः] शूरो धनोऽच्छ्रितः ॥
धर्मवानविषादी च विलग्नात्कर्मगे विधौ ॥ ११३ ॥

प्रधानसेवकः शूरः प्रताप[ध]नपुत्रवान् ॥
कर्मोद्युक्तः कुजेऽव्यप्यो(धृष्यः) नरः(सुखी) स्याद्दशमस्थिते ॥ ११४ ॥

धीमान् धीरो धर्मचेष्टः सिद्धारंभो विवादप(शारदः) रः ॥
सात्विकः कर्मगे सौम्ये नानालङ्कारभाग्म(ङ्न)रः ॥ ११५ ॥

यशोवाहनसौख्यार्थगुणसत्यसम(मानोपायजना)न्वितः ॥
सिद्धारंभोऽर्जनच(प) तु रो भा(भ)व्यः कर्मस्थिते गुरौ ॥ ११६ ॥

विवादार्जितमानार्थ(र्थ)रतिकीर्तिसमन्वितः ॥
मतिमांश्च भनी(सुखी) ख्यातो नरः स्यात्कर्मगे सिते ॥ ११७ ॥

भवेद्वृहं(द्वृन्द)पुरग्राम[प]तिर्वा दण्डनायकः ॥
प्राज्ञः शूरो धनी मन्त्री नर(रः) कर्मस्थिते शनौ ॥ ११८ ॥

इति दशमभावस्थितप्रत्येकग्रहफलम्

॥ इति दशमभावचिन्ताध्यायोऽष्टचत्वारिंशः ॥

---

## ॥ अथ लाभचिन्ताध्याय एकोनपञ्चाशः ॥

### विशेषलाभालाभयोगौ

स्वस्वामी(मि)सद्गृ(द्ग्र)हयुतेऽक्षित आयगेहे
सद्वर्गके भवति वस्तुविशेषलाभः ।
क्रूरैश्च दृष्टसहिते न च तज(त्र) लाभ
स्तद्वर्ग[के] तथा च(भवति) मिश्रफलं च मिश्रैः ॥ १ ॥

### अथ रव्यादिदृष्टियोगवर्गयुतलाभफलम्

[1]लाभे रवीक्षितयुते रविवर्म(र्ग)युक्ते
चौर्याच्चतुष्पदसु(मु)खैर्नृपलच्च(तैश्च) वित्तं ।
[नारीजनेभमुखनाशचयावपूर्ण
पूर्णेन्दुदृष्टियुतिवर्गयुते च लाभे ॥ २ ॥]
[स्यात्सा]हसैः कुजगणे कुजदृष्टयुक्ते]
[वित्तं] सुवर्णप(म)णिपावकशस्त्रजातं ।

---

१ अत्रैतच्छ्लोकोत्तरार्धं लुप्तम् । उत्तरश्लोके प्रथमः पादश्च लुप्तः । तत्र मदीयः श्लोकः पठनीयः ।

ज्ञाये(ढ्येऽ)क्षिते ज्ञगण आयगृहे धनं स्यात्

शिल्पादिकाव्यकिखितैस्तुरगैः सकांश्यैः(स्यैः) ॥ ३ ॥

जीवेऽक्षिताद्य(ढ्य)गुरुवर्गयुतायगेहे

यज्ञादिहेमहयनागरयागमुख्यैः(नयोगैः) ।

शुक्रेऽक्षिताद्य(ढ्य)सति(सित)वर्गयुगा(ता)यमे स्त्रि(स्त्री)

वेश्यागमागमज(न)रत्नस(सु)रौप्यवित्तं ॥ ४ ॥

मन्देऽक्षिताद्य(ढ्य)शनिवर्गयुते [1]महिष्यो(ष्य)

लोहादिकृष्यचलकार्यम(भ)वं पुरोघैः(रस्थैः) ।

लाभस्थग्रहफलतारतम्यम्

[2]नीचारिभार्कगखगोऽत्र फलं न दद्या

द्वीरग्रहोद्भवफले विलिनस्तु वाक्पे ॥ ५ ॥

[दृष्टे शुभैः फलमिदं च विशेषयुक्तं

पापैर्विनष्टमथ मिश्रफलं च मिश्रैः ।

सर्वग्रहेक्षितयुते बहुधाऽर्थलाभो

लाभेऽथ तत्र बलवानधिकं प्रयच्छेत् ॥ ६ ॥]

[पूर्णं स्वतुङ्गगृहगोऽस्तगतोऽष्टमांशं

शून्यं स्वनीचगृहगोऽरिगृहस्थितोऽङ्घ्रिम् ।

---

१ महिषे साधु महिष्यं युगशकटादि कृषीवलोपकरणमिति यावत् । तेन, लोहादिना, कृष्या, अचलकार्येण स्थिरगृहादिनिर्माणकार्येण, पुरप्रमुखैश्च जीवनं भवतीति भावः ।

२ इदं श्लोकार्धं दुर्बोधम् । तथा अपूर्णं चानुमीयते । तत्र ग्रन्थलोपोऽप्यनुमीयते । अतस्तत्र मदीयौ द्वौ श्लोकौ पठनीयौ ।

अर्धं सुहृत्स्वगृहगः फलमायराशौ

दद्याद्ग्रहोद्भवमिदं कथितं मुनीन्द्रैः ॥ ७ ॥

## ॥ अथ लाभस्वामिनो द्वादशभावाश्रयफलम् ॥

अल्पायुर्बहुक(फ)लितः शूरो दाता जनप्रियः सुभगः ॥
लाभपतौ लग्नगते तृमादो(मातुर्दो)षान्मृतिं लभते ॥ ८ ॥

वित्तगते लाभपतौ उत्पन्नभुगल्पभा(भो)जनोऽल्पायुः ॥
अष्टकपाली चोरः क्रूरे सौम्ये च धनकलितः ॥ ९ ॥

बन्धुश्री(स्त्री)पालनकः(कृत्) सु[त]वां(वान्) बन्धुवत्सलस्तु शुभे ॥
लाभेशे सहजगते बन्धूनां शत्रुव(वि)च्छेत्ता ॥ १० ॥

तुर्यस्थे लाभेशे दीर्घायुः पितरि भक्तिभाग्भवति ॥
समवायि(याधि)कारतः [स्यात्] सुकर्मतो लाभवान्मनुजः ॥ ११ ॥

तनयं(य)गतो लाभपतिः पितृपुत्रौ स्नेहलौ मिथः कुरुते ॥
तुल्यगुणौ च परस्परतृस्मा(मन्या)जीवी च भवति सुतः ॥ १२ ॥

लाभाधिपे षष्ठगते सुवैरं
सुदीर्घरोगं चतुरेग(रो न) संग्रही ।
मृतिं समाप्नोति च चोरहस्तात्
क्रूरे च देशांतरसङ्गतो नरः ॥ १३ ॥

सप्तमगे लाभेऽशे तेजस्वी शीलसंपदः [1]पदवी ॥
दीर्घायुर्भवति नरस्तथैव दयितापतिर्नि(पि तन्नि)यतं(ता) ॥ १४ ॥

---

१ शीलसंपदः पदवी आश्रयः।

एकादशपेऽष्टमगे क्रूरेऽल्पायुः सुदीर्घरोगी वा ॥
जीवन्मृतश्च दुःखी नरः सौम्यग(म्यैर्ग)गनचारैः ॥ १५ ॥

एकादशेशे सुकृताश्रयस्थे
बहुश्रुतः शास्त्रविशारदः स्यात् ।
धर्मप्रसिद्धो गुरुदेवभक्तः
क्रूरे च बंधुजनवर्जि(स्वजनोज्झि)तश्च ॥ १६ ॥

मातरि भक्तः सुकृतो पितरि द्वेषी सुदीर्घतरजीवी ॥
धनवान् जननीपालन[नि]रतो लाभाधिपे खगते ॥ १७ ॥

लाभाधिपो लाभगतः करोति
दीर्घायुषं पुष्कलपुत्रपुष्टं ।
सुकर्मकं रूपयुतं सुशीलं
जनप्रमोदप्रवणं पुमांसं ॥ १८ ॥

द्वादशगे लाभेशे उत्पन्नभुगस्थिरो भवति भोगी ॥
उत्पातरतो मानी दाता दुःखी सदा पुरुषः ॥ १९ ॥

॥ इति लाभस्वामिनो द्वादशभावाश्रयफलम् ॥

---

## ॥ अथ लाभभावाश्रितप्रत्येकग्रहफलम् ॥

### हिल्लाजे—

[1]लाभे रविर्जिनसमा २४ पुन(सुत)लाभमिंदौ(दु)
भू(भू)पा १६ श्व(ब्द)लाभकमसृक् जिन २४ चर्य(वर्ष)लक्ष्मीं ।
ज्ञा(ज्ञः) पंचवेद ४५ धनमीय(ज्य) इता(ना) १२ द्व(ब्द)लक्ष्मीं
शुक्रः करोति धनमार्किफलं कुजोऽक्त ॥ २० ॥

### होराप्रदीपात्—

[2]लाभेऽर्कः(र्के) सचिवो(श्चयी) द्वेष्यो बली प्रेष्यो पियोऽजि(ज्झि)तः ॥
सिद्धकर्मा च विषमो **तिधेयनरागक्षेत्राधिः** (विधेयो
भृत्यवर्जितः) ॥ २१ ॥

सद्गवीतः (बह्वायुःसुतवित्ताढ्यः) स्वीय(स्विष्ट)भृत्ययुतः सुधीः ॥
तीक्ष्णः शूरः प्रकाश्य(श्यः) स्यात् शीतगौ लाभसंस्थिते ॥ २२ ॥

विधेयः(शोकः) प्रियवा(भा)क् शूरो धनधान्यसुतान्वितः ॥
लाभे कुजे स्मृतश्चान्यैर्हृतवित्तोऽमितस्करैः ॥ २३ ॥

### सारावल्यां—

धनवान् विधेयभृत्यः प्राज्ञः सौख्यान्वितो विपुलभोग(गी) ॥
एकादशे बुधे स्याद्बह्वायुर्जायते(युः ख्यातिमान्) पुरुषः ॥ २४ ॥

---

१ लाभे रविः २४ वत्सरे पुत्रलाभं, चन्द्रः १६ वत्सरे लाभं, कुजः २४ वर्षे लक्ष्मीं, बुधः ४५ वत्सरे धनं, गुरुः १२ वत्सरे लक्ष्मीं, शुक्रः १२ वत्सरे धनं दद्यात् । पूर्वोक्तेषु हिल्लाजवाक्येषु शनिफलं नोक्तं । तच्च कुजवज्ज्ञेयम् ।
२ अस्मिन् पद्ये स्थूलाक्षरनिर्दिष्टश्चतुर्थः पादः अशुद्धः । उत्तरश्लोके प्रथमः पादश्च लुप्तः । तत्र कुण्डलीस्थो मदीयः पाठोऽनुसन्धेयः ।

[1]लाभे बुधे धनी विद्याल्पतनयः साधुरेकादशे गुरौ ॥
[बहुद्वारागतद्रव्यो बहुवाहनभृत्ययुक् ॥
अल्पविद्योऽल्पतनयः साधुरेकादशे गुरौ ॥ २५ ॥]

स्त्रीवस्त्रवृषरत्नान्नस्वस्थः शोकविवर्जितः ॥
संपन्नधनभृत्यश्च भवेल्लाभगते सिते ॥ २६ ॥

स्थिरसंपत्प्रभूतायाः(युः) शूरः शिल्पान्वितः सुखी ॥
निरलाभः(गतरोगः) शनौ कैश्चित्स्मृतः [2]प्रथमजीवकः ॥ २७ ॥

इति लाभस्थितप्रत्येकग्रहफलम्

॥ इति लाभचिन्ताध्याय एकोनपञ्चाशः ॥

---

## ॥ अथ व्ययचिन्ताध्यायः पञ्चाशः ॥

राजकृतधनापहारयोगः सद्व्ययोगश्च

[3]भानौ व्यये हरति भूपतिरत्र वित्तं
क्षीणेऽथ वा शशिनि सद्व्ययकृच्छुभे स्यात् ।
पुष्णन्ति वित्तमिह सत्खचरास्तु केचित्
पूर्णे विधावपि तथैव शुभैश्च दृष्टे ॥ १ ॥

---

१ अत्र ग्रन्थपातो दृश्यते । अतो मदीयः पाठोऽनुसंधेयः । २ प्रथमे वयसि जीवनवान् । अल्पायुरिति यावत् । ३ भानौ, क्षीणचन्द्रे वा व्ययस्थे भूपतिर्वित्तं हरति इति द्वौ योगौ । व्ययस्थे शुभग्रहे जातः सद्व्ययं करोतीत्येको योगः । केचित् यवनेन्द्रादयः व्यये शुभग्रहेषु वित्तवृद्धिं वदन्ति । व्ययगे पूर्णचन्द्रे शुभदृष्टेऽपि वित्तवृद्धिः

नियमेन द्रव्यनाशयोगः

[1]दृष्टे कुजे बुधेनैव वित्तनाशो भवेद्ध्(द् ध्रु)वं ॥

द्वादशगतग्रहफलतारतम्यम्

पुष्ट(ष्टं) स्वर्क्षादिगैः खेटैस्तुच्छं नीचार्कगैः फलं ॥ २ ॥

अथ व्ययभावाश्रितसूर्यादिप्रत्येकग्रहफलम्

**सारावल्यां—**

विकलशरीरः काणः पतितो वन्ध्यापतिः पितुरमित्रं ॥
द्वादशसंस्थे सूर्ये धन(बल)रहितो जायते क्षुद्रः ॥ ३ ॥

द्वेष्यः पतितः क्षुद्रो नयनरुगार्तोऽलसो भवेद्विकलः ॥
चन्द्रे तथाऽन्यजातो द्वादशगे निन्द्य(त्य)परिभूतः ॥ ४ ॥

नयनविकारी पतितः छा(तो जा)याघ्नः सूचकश्च दूत(रौद्र)श्च ॥
द्वादशगे परिभूतो बन्धभाग्भवति भूपुत्रे ॥ ५ ॥

सुगृहीतकावा(वाक्य)मलसं परिभूतं वाग्मिनं तथा प्राज्ञं ॥
व्ययगः करोति सौम्यः पुरुषं दीनं नृशंसं च ॥ ६ ॥

---

वदन्ति। तन्मते व्यये शुभग्रहेषु वा शुभदृष्टे चन्द्रे वा धनवृद्धिरेव, न व्ययः। पूर्वमते तु धनस्य सन्मार्गेण व्यय एव, न वृद्धिः। इति मतयोरनयोर्भेदः ॥ १ ॥

१ व्यये कुजे बुधदृष्टे वित्तनाश इत्येको योगः। शुभं फलं स्वर्क्षे, स्वमित्रभे, स्वत्रिकोणे, स्वोच्चे वा स्थिताः पुष्टं कुर्वन्ति। नीचे, शत्रुभे, वा स्थितः, अस्तंगतो वा तुच्छं करोति। पापं फलं स्वेतद्विपरीतमिति भावः ॥ २ ॥

अलसो लोकद्वेष्यो सु(ब)पगतपापैकभग्नभक्ष्यो(वाग्दैवभग्नपक्षो) वा ॥
पतितः सेवानिरतो द्वादशसंस्थे गुरौ भवति ॥ ७ ॥

अलसं सुखितं(नं) स्थूलं [पतितं] मृष्टाशिनं भृगोस्तव(न)यः ॥
शयनोऽपचारकुशलं द्वादशगः स्रोजितं जनयेत् ॥ ८ ॥

विप(क)लः पतितो मूर्खो(मुखरो) विषमाक्षो निर्घृणो विगतलज्जश्च ॥
व्ययभवनगते सौरे बहुव्ययः स्यात् सुपरिभूतः ॥ ९ ॥

॥ इति द्वादशभावगतप्रत्येकग्रहफलम् ॥

---

## ॥ अथ व्ययस्वामिनो द्वादशभावाश्रयफलम् ।

**फलप्रदीपे—**

व्ययनाथे लग्नगते विदेशगः सुवचनः सुरूपश्च ॥
असंगवादी दोषी भवति कुमारोऽथ वा खंजः ॥ १० ॥

द्वादशपे वित्तगते कृपणः कटुवागनिष्टलाभल(भ)यः ॥
भौमे तु गच्छति धनं नृपतस्करवह्निभवभयं(य)[तः] ॥ ११ ॥

सहजगते द्वादशपे क्रूरे गतबान्धवः शुभो(भे) च धी(ध)नो ॥
तनुसोदरः सुकृपणो बन्धुषु(सु)दूरे(रः) सदा भवति ॥ १२ ॥

अर्थ(बन्धु)गते व्ययनाथे कृपणो रोगोषि(ज्झि)तः सुकर्मा च ॥
मृतिमाप्नोति सुततः सततं मनु[जो] महादुःखी ॥ १३ ॥

द्वादशपतौ सुतस्थे क्रूरे सुतवर्जितः शुभे सुतयुक् ॥
जनककमलाविलासी समर्थ **मर्थ** ताविरहितः पुरुषः ॥ १४ ॥

षष्ठगते व्ययनाथे क्रूरे कृपणोऽक्षिदूषणः पुरुषः ॥
लभते मूर्ति नितर्ति **नितर्ति** (तान्तं) भृगुतनये नेत्र **वि** हीनः स्यात् ॥ १५ ॥

द्वादशपे सप्तमगे दुष्टो दुष्टेश्वराद्र(रे र)तः पटुवचनः ॥
[1]क्रूरे ण(न) स्त्री तस्य सौम्ये क्षयमेति गणिकातः ॥ १६ ॥

व्ययनाथे निधनगते अष्टकपाली कार्यसाधनारहितः ॥
द्रोहमतिः सौम्यलग्ने धनसंग्रहतत्परो भवति ॥ १७ ॥

व्ययनाथे सुकृतगते [2]तीर्थालोकोऽद्रु(द्रु)तो व्यथितः ॥
वृत्तिः क्रूरे च लगे पापी(पा) निरर्थकं याति तद्द्रव्यं ॥ १८ ॥

व्ययपे गगनगृहस्थे परायणीपरद्रुस्त्रः(रसेवापराङ्मुखः) पवित्रांगः ॥
सुतधनसङ्ग्रहनिरतो दुर्वचनपरा भवति माता ॥ १९ ॥

लाभस्थे द्वादशपे सुकुमारो दीर्घजीवितो भवति ॥
स्थानप्रवरो दाता विख्यातः सुतवचनपरः ॥ २० ॥

विभूतिभाव्य(गा)मितिवा(पतः) सचि(वि)त्तः
कार्पण्यबुद्धिः पशुसंग्रही च ।

---

१ सप्तमे पापे द्वादशेशे पत्नी नैव भवति । शुभे ग्रहे तु पत्नी भवति । परं तु सा वेश्यानिमित्तेन नश्यतीति भावः । २ गंगादितीर्थदर्शनार्थं गत इत्यर्थः ।

वेज्जीवति ग्रासयुतः स दासा
व्ययाधिनाथे व्ययगेहलीने ॥ २१ ॥

इति व्ययभावस्थितप्रत्येकग्रहफलम्

## ॥ इति व्ययभावचिन्ताध्यायः पञ्चाशः ॥

## ॥ अथ वेशिवास्युभयचरीयोगाध्याय एकपञ्चाशः ॥

### वेशिवास्युभयचरीराशिलक्षणम्

[1]सूर्याद्द्वितीयभवनं वेशिर्द्वादशमुदाहृतं वोशि(वासी) ॥
उभयात्मकमुभयफलं(चरी) तेषु फलं ग्रहवशाद्वक्ष्ये ॥ १ ॥

### वेशिजातपुरुषलक्षणम्

मन्दधीर[स्प]दृष्टिः प्रोद्विग्न(ग्नः) परिश्रयो(मी) नतोऽद्ध(ध्वे) त तनुः ॥
भवति परिभूतिकर्माऽथ धीरवाग्वेशिसंभूतः ॥ २ ॥

### अथ वेशिस्थप्रत्येकग्रहफलम्

कुजः पराज्ञापरमार्त्तिमा(वा)च
नरं सदा चे(वे)शिगृहे प्रसू यं ते ।
बुधे(धो) विनीतं बुध(मृदु)मल्पसारं
ह्रीविक्र(क्ल)वं मन्दमतिं प्रतर्क्य(सुभृत्यं) ॥ २ ॥

जीवे(वः) सुमित्रं च(व)सुसंचयज्ञं
शठं सुहृद्द्वेषिणकर्म(मर्क)सूनुः ।

---

१ सूर्याद्द्वितीयं गृहं वेशिरिति, द्वादशं गृहं वासी इति, द्वितीय द्वादशौ उभयचरी इति निगद्यते इति भावः ।

कार्यावसन्नं भृगुजोऽल्पचेष्टं
भीरुं पराज्ञावशवर्तिनं च ॥ ४ ॥

इति वेशिस्थप्रत्येकग्रहफलम्

वासिजातपुरुषलक्षणम्

प्राधान्य(उद्योगी) स्मृतिस[त्त्वव]होऽध्वगामी पृथुलपूर्वकायः स्यात् ॥
उद्दु(त्स्व)ष्टवाक्(ङ्) नरः स्याद्वो(द्वा)सौ स्तचो(तिर्य)[गता]धेदृष्टिश्च ॥ ५ ॥

अथ वासिगतप्रत्येकग्रहफलम्

भौमो रस(ण)ख्यातमनन्यवाह्यं(वाक्यं)
बुधः पराज्ञाविहितं सुवाक्यं ।
पांगृद्धि(वाग्बुद्धि)सार(रं) धृतिसत्त्वयुक्तं
सूते गुरुर्वोश्य(र्वास्य)भिधानयोगे ॥ ६ ॥

शुक्रः प्रकामं(वीरं) धनवर्जितं च
क्रियापरिख्यातयशस्करं च ।
निश्वास(क्लिश)चेष्टं प(पि)शुनं च सौर(रः)
[1]स्थानांत्म(श)कैर्भावगुणैः सुवाक्यं ॥ ७ ॥

॥ इति वासिगतप्रत्येकग्रहफलम् ॥

---

१ पूर्वोक्तं वेशिवासिफलं वक्ष्यमाणमुभयचरीफलं च स्थानांशकैः भावगुणैश्च विमृश्य वक्तव्यमिति योजना । स्थानानामंशकानां च शुभस्वामिकत्वे, शुभग्रहयोगे

## ॥ अथोऽभयचरीगतग्रहफलम् ॥

उभयचरे ग्रहयुक्ते सर्वसहः सम:(म)तनु(नुः) स्थिरः समदृक् ॥
परिपूर्णो वा(ना)त्युच्चः सिंहगी(ग्री)वः सुसत्व(त्वः) स्यात् ॥ ८ ॥

उभयचरे नृपतिसमो भोगी सुभगः प्रभूतभृत्यः स्यात्(त्यधनः) ॥
जननीत्या सारि(नित्योऽत्साही दृ)ष्टो बंधूनामाश्रयो भवति ॥ ९ ॥

इति उभयचरीगतग्रहफलम्

॥ इति श्रीजातकसारदीपे वेशिवास्युभयचरीचिन्ताध्याय एकपञ्चाशः ॥

---

## ॥ अथ चन्द्रयोगाध्यायो द्विपञ्चाशः ॥

अधमसमवरिष्ठयोगाः

स्वल्पमध्यमभूयिष्ठान् कुर्यात्केन्द्रादिगो रवेः ॥
क्रमेण वित्तनैपुण्यज्ञानधीविनयान् शशी ॥ १ ॥

वसुमद्योगः

लग्नाच्चन्द्राद्द्वयोर्वा(दथ वा) शुभग्रहै(है)रुपचयेऽपि(ति)धनयुक्ताः ॥
मह्ला(ध्या) द्रा(द्वा)भ्यामेकेनाऽल्पे(ल्प)[ध]न(नाः)कीर्तितो(ता)
नियान्ति(तम्) ॥ २ ॥

---

शुभदृष्टौ, शुभभावसंबन्धित्वे च शुभं फलं पूर्ण, अशुभं फलं शून्यं । अन्यथा विपरीतम् इति भावः । १ भाग्यचिन्ताध्याये ३ श्लोके "केन्द्रादिगेऽब्ज इनतोऽधममध्यसन्तः" इति नामतो निर्दिष्टानामधममध्यमवरिष्ठयोगानां फलमाह (स्वल्पेति) अतो न पौनरुक्तयम् । अधमयोगे वित्तं, नैपुणं, शास्त्रज्ञानं, प्रतिभा, विनयः इत्येते गुणा अधमाः, मध्यमयोगे मध्यमाः, वरिष्ठयोगे भूयिष्ठा भवन्तीति ज्ञेयम् । अधिकं तु पूर्वं व्याख्यातम् ॥ १ ॥
२ लग्नात् तृतीये, षष्ठे, दशमे, एकादशे वा यथासंभवं स्थितैः शुभैस्त्रिभिर्ग्रहैः

**तथा च यवनः—**

मूर्खो दरिद्रश्चपलोप्य(ल्प)शीली(ल)
चन्द्र(श्चन्द्रे) प्रसूतेऽ(तोऽ)केचतुष्टयस्थे ।
कुर्याद्‌द्वितीये धनितां(नां) प्रसूतिं
आपोक्ति(क्लि)मेऽर्कात्तु कुलाग्रजातं ॥ ३ ॥

## सुनफानफाधुरुधुरायोगाः

[1]हित्वार्कं शीतकरात्सुनफ(फा) धनगैर्व्यं व यस्थितैरनफा ॥
उभयस्थितैर्ग्रहेन्द्रैर्योगः प्रोक्तो दु(धु)रुधुराख्यः ॥ ४ ॥

---

अतिधनयुक्ता भवन्ति । द्वाभ्यां तेषु स्थानेषु गताभ्यां शुभाभ्यां मध्यधनाः, एकेन शुभेन तत्स्थानगतेनाल्पधना भवन्ति । (नियतमिति) अन्येष्वसत्सु योगेषु सत्स्वपि तानभिभूय इदं फलं नियमेन भवतीति भावः । तदुक्तं वराहेण "अन्येषु सत्स्वपि फलेष्विदमुत्कटेन" इति । एवं चन्द्रादपि योगोऽयं चिन्तनीयः । अत्र लग्नादिति प्रथमतो ग्रहणेन तत्कृतयोगस्योत्कर्षः, चन्द्रकृतयोगस्य अपकर्षश्च द्योत्यते । अत एव वराहेण "लग्नादतीव वसुमान् वसुमान् शशांकात् सौम्यग्रहैरुपचयोपगतैः समस्तैः" इत्युक्तम् ॥ २ ॥

१ चन्द्रात् द्वितीयगैः सूर्यभिन्नैः पञ्चभिस्ताराग्रहैः प्रत्येकं वा मिलितैर्वा सुनफायोगः । एवमेव द्वादशस्थैरनफायोगः । द्वितीयद्वादशोभयस्थानयोः एकैको वा, तदधिका वा यथासंभवं स्थिताः धुरुधुरायोगकर्तारः । एवं त्रयो योगाः । अत्र सूर्यो द्वितीये, द्वादशे वा स्थितो न योगभङ्गकृत् । किं तु योगकर्तृषु न गण्यते इति मन्तव्यम् । अत्र द्वितीये कुजे, बुधे, गुरौ, शुक्रे, शनौ वा स्थिते पञ्च एकग्रहयोगाः । एवं द्वितीयस्थे कुजे बुधादिभिश्चतुर्भिर्युक्ते चत्वारः, बुधे गुर्वादिभिस्त्रिभिर्युक्ते त्रयः, गुरौ शुक्रशनिभ्यां युक्ते द्वौ, शुक्रे शनिना युक्ते एकः, एवं द्विग्रहयोगा दश । एवं कुजबुधयोर्गुर्वादिभिस्त्रिभिर्योगेन त्रयः, कुजगुर्वोः शुक्रशनिभ्यां योगेन द्वौ, कुजशुक्रयोः शनियोगेनैकः,

## केमुद्रुमयोगः

एते योगा यदा न स्युर्योगः केमं(मु)द्रुमस्तदा ॥
ग्रहायुक्तेक्षिते चन्द्रे लग्ने(ग्न)केन्द्रे न वा ग्रहाः ॥ ५ ॥

---

बुधगुर्वोः शुक्रशनिभ्यां योगेन द्वौ, बुधशुक्रयोः शनियोगेनैकः, गुरुशुक्रयोः शनियोगेनैकः, एवं दश त्रिग्रहयोगाः। तथा कुजबुधगुरूणां शुक्रशनिभ्यां योगेन द्वौ, कुजबुधशुक्राणां शनियोगेनैकः, कुजगुरुशुक्राणां शनियोगेनैकः, बुधगुरुशुक्राणां शनियोगेनैकः, एवं पञ्च चतुर्ग्रहयोगाः। तथा कुजादिभिः पञ्चभिर्ग्रहैरेकः पञ्चग्रहयोगः। एवं द्वितीयस्थैः कुजादिभिः सुनफा योगा एकत्रिंशत्। तथा द्वादशस्थैस्तैरेव ग्रहैरनफायोगा अप्येकत्रिंशत्। अथ धुरुधुराप्रभेदाः साशीतिशतम्। तथा हि—द्वितीये कुजे द्वादशे बुधादिभिश्चतुर्भिश्चत्वार एकग्रहयोगाः। तथा बुधस्य गुर्वादिभिस्त्रिभिर्योगेन त्रयः, गुरोः शुक्रशनिभ्यां योगेन द्वौ, शुक्रस्य शनि योगेनैकः, एवं द्वादशे द्विग्रहयोगाः षट्। तथा बुधगुर्वोः शुक्रशनिभ्यां योगेन द्वौ, बुधशुक्रयोः शनियोगेनैकः, गुरुशुक्रयोः शनियोगेनैकः, एवं चत्वारो द्वादशे त्रिग्रहयोगाः। तथा चतुर्ग्रहयोग एको द्वादशे। एवं द्वितीये कुजे पञ्चदश योगाः। एवमेव द्वितीये कुजाद्येकैकग्रहयोगेन पञ्चसप्ततिर्योगाः। एवं द्वितीये कुजबुधयोः सत्वे द्वादशे गुरुशुक्रशनिभिस्त्रयः एकग्रहयोगाः। तथा गुरोः शुक्रशनिभ्यां योगेन द्वौ, शुक्रस्य शनियोगेनैकः, एवं त्रयो द्विग्रहयोगाः। तथा एकस्त्रिग्रहयोगः। एवं द्वितीये एकस्मिन् द्विग्रहयोगे सप्त योगाः संभवन्ति। द्वितीये द्विग्रहयोगाश्च दश भवन्तीति पूर्वमुक्तम्। तथा च दशभिर्द्विग्रहयोगैर्द्वितीयस्थैः सप्ततिर्योगाः। एवं द्वितीये कुजबुधगुरूणां स्थितौ, द्वादशे शुक्रशनिभ्यां योगेन द्वावेकग्रहयोगौ, एको द्विग्रहयोगः, एवं द्वितीये एकस्मिन् त्रिग्रहयोगे त्रयो योगाः। द्वितीये त्रिग्रहयोगाश्च दश भवन्तीति पूर्वमुक्तम्। तथा च दशभिर्द्वितीयस्थैस्त्रिग्रहयोगैस्त्रिंशद्योगाः। तथा द्वितीये चतुर्ग्रहयोगाः पंच संभवन्तीति पूर्वमुक्तम्। तैर्द्वितीयगैः पंचभिः पञ्च योगाः। एवं च द्वितीये एकग्रहयोगैः ७५ द्विग्रहयोगैः ७० त्रिग्रहयोगैः ३० चतुर्ग्रहयोगैः ५ आहत्य १८० धुरुधुरायोगाः ॥ ४ ॥ १ सुनफानफाधुरुधुरायोगानामभावे केमुद्रुमो योगः।

**तथा च श्रुतकीर्तिः—**

श्रुतकीर्तिमतेन सुनफानफाधुरुधुराकेमुद्रुमयोगाः

[1]चन्द्राच्चतुर्थे सुनफा दशमस्थैः कीर्तितोऽनफ(फा)योगः ॥
उभयस्थितैर्दु(धु)रुध(धु)रा केम(मु)द्रुमसंज्ञकोऽन्यः(न्य)[त्र] ॥ ६ ॥

**तथा च जीवशर्मा—**

जीवशर्ममतेन सुनफानफाधुरुधुराकेमुद्रुमयोगाः

[2]यद्राशिसंज्ञे शीतांशुर्नवांशे जन्मनि स्थितः ॥
द्वितीयस्थैर्ग्रहैर्योगः सुनफाख्यः प्रकीर्तितः ॥ ७ ॥

---

अथ केमुद्रुमयोगभङ्गमाह (ग्रहेति) चन्द्रे येन केनचिद्ग्रहेण युक्ते वा, दृष्टे वा केमुद्रुमो न भवति, तथा लग्नकेन्द्रे यः कश्चिद्ग्रहो यदि भवति तदापि केमुद्रुमो न भवति इति भावः। एतेन "केन्द्रे शीतकरेऽथ वा ग्रहयुते केमुद्रुमो नेष्यते" इति वराहवचनं "केन्द्रे लग्नकेन्द्रे, शीतकरे वा ग्रहयुते केमुद्रुमो नेष्यते" इत्येव व्याख्येयमिति सिध्यति। रुद्रभट्टादयो बहवो व्याख्याकाराः "केन्द्रे चन्द्रकेन्द्रे, शीतकरे वा ग्रहयुते केमुद्रुमो नेष्यते" इति व्याचख्युः। तन्मते चन्द्रकेन्द्रस्य ग्रहयुतत्वकथनेनैव चन्द्रस्यापि ग्रहयुतत्वलाभेन "शीतकरे ग्रहयुते" इत्येतद्व्यर्थं स्यात्। अतस्तेषां व्याख्यानं न प्रमाणवद्धमिति ज्ञेयम् ॥ ५ ॥ १ चन्द्रात् चतुर्थे ग्रहसत्वे सुनफा, एवं दशमस्थे ग्रहे अनफा, चतुर्थदशमयोरुभयोरपि ग्रहसत्वे धुरुधुरा, चतुर्थदशमयोरेकस्यापि ग्रहस्याभावे केमुद्रुम इति श्रुतकीर्तिमतम् ॥ ६ ॥ २ चन्द्रो यस्मिन्नवांशे वर्तते तस्माद्द्वितीयराशौ ग्रहसत्वे सुनफा, द्वादशे ग्रहसत्वे अनफा, द्वितीयद्वादशयोरुभयोरपि ग्रहसत्वे धुरुधुरा, उभयत्रापि ग्रहाभावे केमुद्रुमः इति जीवशर्ममतं। इदं मतद्वयं वराहेण नादृतम्। तथा च तद्वाक्यम् "केचित्केन्द्रनवांशकेषु च वदन्त्युक्तिप्रसिद्धा न ते" इति ॥ ७ ॥

[1]द्वादशगैरनफा ज्ञेयो(या) ग्रहैर्द्विहा(द्वा)दश[स्थितैः] ॥
[प्रोक्तो धुरुधुरायोगोऽन्यथा केमुद्रुमः स्मृतः ॥ ८ ॥]

### सुनफायोगफलम्

[विशालधीश्रीगुणधर्मकीर्तिः
शास्त्रार्थवित्स्वार्जितवैभवाढ्यः ।]
[ख्या]तो नृपो वा सचिवः सुखी च
योगे प्रसूतः सुनफाभिधाने ॥ ९ ॥

### अनफायोगफलम्

वाग्मी यशस्वी बहुभोगयुक्तो
नि(नी)रुक्प्रभुः ख्यातगुणः सुवेशः(षः) ।
स्यान्निर्वृतो भूरिसुखो धनाढ्यो
योगे प्रसूतस्त्वनफाभिधाने ॥ १० ॥

### धुरुधुरायोगफलम्

वाग्बुद्धिशौर्याप्तयशो(शा) धुरिस्थो
भोगी सुखी वा ध(ह)नभृत्य(वित्त)युक्तः ।
कुटुंबसंपोषणलभ्य(ब्ध)खेदो
दासो(ता) नरो दौधुरिके(रुधुरः) स्वतन्त्रः ॥ ११ ॥

---

१ अयं श्लोको न पूर्णः । उत्तरश्लोके पूर्वार्धं च लुप्तं । तत्र मदीयः कुण्डलीगतः पाठोऽनुसन्धेयः ।

केमुद्रुमयोगफलम्

कुटुंबसौख्यार्ति(दि)विवर्जितः स्यात्
जातो नरो गर्हितकर्मशीलः ।
प्रेष्यो दरिद्रः सगदः खलश्च
कोम(केमु)द्रुमे भूपतिवंशजोऽपि ॥ १२ ॥

## अथ सुनफायोगकर्तृकुजादिफलम्

सोऽत्साहशौर्यः समरप्रचण्डः
ससाहसो बन्धुविरोधशीलः ।
चमूपतिर्निष्ठुर[वा]गनल्प-
वित्तोऽतिहिंस्रः कुजसौनफायां ॥ १३ ॥

वाग्मी समृद्धः सुतनुः सुकीर्तिः
सङ्गीतशास्त्रश्रुतिवित्कविश्च ।
धर्मान्वितः सर्वहितो नरः स्यात्
शशांकसूनोः सुनफाभिधाने ॥ १४ ॥

भूपोऽथ वा भूपसमोऽथ धर्म
कुटुंबसौख्यैः सहितो यशस्वी ।
अनेकविद्याचतुरः सुवृ(वि)त्तः
सुरार्चिते स्यात्सुनफामुपेते ॥ १५ ॥

कामी सुवेषो विषयोऽपभोक्ता
नारीगृहक्षेत्रचतुष्पदेशः ।

सौभाग्यशौर्यस्थितिकांतियुक्तः
शुक्रे नृपेष्टः सुनफोऽपपन्ने ॥ १६ ॥

क्रियासु गुप्तो बहुकार्यकर्ता
भ(प)रार्थभोक्ता निपुणः समृद्धः ।
लुब्धो गु(ग)णग्राममहत्तरो वा
सूर्यात्मजे स्यात्सुनफोऽपपन्ने ॥ १७ ॥

॥ इति सुनफाकर्तृकुजादिफलम् ॥

---

## ॥ अथ अनफाकर्तृकुजादिफलम् ॥

वृत्तः प्रगल्भः समरप्रचंडः
चोराधिपः क्रोधपरश्च मानी ।
शौर्यार्थि[वा]नात्मचयः(परः) सुमूर्तिः
श्लाघी कुजे स्यात(द)नफोऽपपन्ने ॥ १८ ॥

ग(गा)न्धर्वलेख्यादिषु दुः(पटुः) प्रसिद्ध
कर्माऽऽन्य(त)विद्या(द्यः) सुभगः प्रवक्ता ।
सुनीतिसेवारतिवित्तचेष्टोऽ
नफागते ज्ञे सुतनुः कविश्च ॥ १९ ॥

गांभीर्यमेधाधृतिसत्त्ववित्त
कुटुंबसत्कीर्तियुतः कविश्च ।
द्विजो भवेन्मन्त्रवपुर्धरो वा
जीवेऽनफायोगगते प्रजातः ॥ २० ॥

शुक्रेऽनफायोगगते यशस्वी
हृष्टो वपुष्मान् वनिताप्रियश्च ।
दू(र)तिप्र(प्रि)यो गोऽवनिहेमपुण्य
प्रिय(यः) प्रदाता प्रणयी नृपः स्यात् ॥ २१ ॥

क्लीबस्वभावो महितो गृहीत
वाक्यो महीलोहचतुष्पदाढ्यः ।
दुष्टांगनो भूरिसुतो गणेशोऽ
नफोपपन्ने रविनन्दने स्यात् ॥ २२ ॥

॥ इति अनफायोगकर्तृकुजादिफलम् ॥

---

## ॥ अथ धुरुधुरायोगकर्तृकुजादिफलम् ॥

कुजज्ञजे दौधुरिके(रुधुरे) प्रला(ता)पी
प्रभूतवित्तो गुणवान् शठश्च ।
[1]असत्यवाचा(क्यः) परुषोऽलि(ति)[लु]धो(ब्धो)
[वृद्धासतीसक्तियुतः कुलीनः ॥ २३ ॥]

[ख्यातः सुकर्मा विभवी प्रहृष्टः
स्वगोत्ररक्षो बहुवैरयुक्तः ।

---

१ अस्मिन् श्लोकार्धे द्वितीयः पादो लुप्तः । उत्तरश्लोके आद्यपादत्रयं च लुप्तम् । तत्र मत्कृतः पाठः पठनीयः ।

भौमेऽज्ययोर्वौरुधुरेऽतिकोपो]
भवेत्प्रभूताकरकृत्प्रसूतः ॥ २४ ॥

भौमास्यु(स्फु)जिद्दौधुरिके(रुधुरे) जयाशी
दाता समर्थोऽत्रविवादशीलः ।
शूरः परस्त्रीसुभगश्च कान्तो
व्यायामवान् स्यात्पुरुषः प्रजातः ॥ २५ ॥

प्रभूतवैरः पिशुनश्च कोपी
कुस्त्रीरतः स्यात्पुरुषः प्रलापी ।
बह्वागमार्थो व्यसनोपतप्तो
मन्दारजातेऽच(खि)लसंचयः स्यात् ॥ २६ ॥

त्यागी कविः कृत्यकरः सुवाक्यो
विज्ञानशिल्पश्रुतिशास्त्रदक्षः ।
ख्यातः कवि(सुधी)र्धर्मपरो धनी च
ज्ञजीच(व)जे दौधुरिका(धौरुधुरा)ख्ययोगा(गे) ॥ २७ ॥

विवादगीतस्तुतिनीति(नृत्य)कान्ति-
सौभाग्यशौर्यस्थितिमि(मं)त्रयुक्तः ।
सेव्यो नरो वाऽस्त्रधरः सुभोगी
शुक्रज्ञजे दौधुरिकेऽप्रतिष्ठः ॥ २८ ॥

बुधार्किजे दौधुरिकाख्ययोगे
नरोऽल्पविद्योऽर्थपरोऽटनः स्यात् ।

अभ्य(भ्य)र्थनो(ना)दानपरोऽपरेषां
युद्धे(पूज्यो) विरुद्धस्वजनिः(नः) प्रजातिः(तः) ॥ २९ ॥

विख्यातवीर्यस्थितिसत्ययुक्तः
शूरः समृद्धो बहुसंचयश्च ।
वणिग्वरिष्ठो नृपकृत्यकारी
जीवास्युतिर्द्दौधुरिके(स्फुजिद्धोरुधुरे) प्रदिष्टः ॥ ३० ॥

विज्ञानविधा(द्या)नयविषय(यश)स्वी
कान्तः समृद्धः सुखमानयुक्तः ।
दु(धु)रंधरो दौधुरिके(धौरुधुरे) सुवाक्यः
सूते(धनी) सुरेज्यार्कजसंभवे स्यात् ॥ ३१ ॥

मान्यः प्रहृष्टः पुरुषः समृद्धो
वृद्धापतिः स्त्रीरतिवल्लभश्च ।
कुले नमस्यो निपुणो विधेयः
शुक्रार्किजे दौधुरिके प्रसूतः ॥ ३२ ॥

आ(त्र्या)दिकग्रहसंभूते योगे दौधुरिके फलं ॥
विचिन्त्य स्वधिया सम्यक् नाच्चादि(प्रवदेत्) विविधस्त(धं त)था ॥ ३३ ॥

॥ इति सुनफानफाधुरुधुरायोगाः ॥

इति श्रीजातकसारदीपे चन्द्रयोगाध्यायो द्विपञ्चाशः

---

## ॥ अथ उच्चादिचिन्ताध्यायस्त्रिपञ्चाशः ॥

### अथ रव्यादीनामुच्चफलम्

इष्टं(उग्रं) महान्तं सुधनं दिनेश
इष्टान्नभूषं व(षांब)रयुक्तमिन्दुः ।
स्वोच्चे कुजो दुःप्रच(स)हं च शूरं
करोति तेजस्विनम(मु)द्धतं च ॥ १ ॥

मेधाविनं वाग्मि(ङ्नि)पुणं कलाज्ञं
चन्द्रात्मजः स्वोच्चगतः करोति ।
विद्वांसमाढ्ढं(ढ्यं) नृपपूजितं च
धर्मान्वितं देवगुरु(रुः) प्रसिद्धं ॥ २ ॥

विलासहास्यश्रुतिशान्तिवित्तः(युक्तः)
शुक्रे निजोच्चे वनिताप्रियश्च ।
महा(ही)पतेर्लब्धवि(र्लब्धनि)योगमुच्च
स्थिते(तः) प्रसूते दिननाथपुत्रे(त्रः) ॥ ३ ॥

एको निरुद्दिष्टफलप्रदः स्यात्

स्वोच्चगतद्व्यादिग्रहफलम्

द्वाउ(वु)च्चगौ कीर्तिसुखार्थदौ स्तः ।
त्रयो विदध्युः प्रतिमा(भा)समेतं
सेनापुराध्यक्षकमीश्वरं च ॥ ४ ॥

दाता सुकीर्तिर्नृपतिः समृद्ध
	श्चतुर्भिरुच्चोपगतैः सुधर्मा ।
विमृद्धकोशः प्रथितो नृपाणां
	श्रेष्ठो भवेत्पंचखगैः सुखी च ॥ ५ ॥

स्याद्राजराजः स्व(ख)चरैश्च षड्भि
	र्महाबलः सर्वगुणैरुपेतः ।
[1]समुद्रपर्यन्तवसुन्धरेशः
	ससग्रहैः स्वोऽच्चगतैः सुकीर्तिः ॥ ६ ॥

---

१ अत्र सप्तग्रहाणामुच्चगतत्वे फलमभिहितम् । तदसंगतम् । तथा हि—रवेर्मेषगतत्वे तदैव बुधस्य कन्याराशिस्थितिरसंभाविनी । द्वयोः पञ्चराश्यन्तरितत्वस्य गणितयुक्तिप्रत्यक्षप्रमाणविरुद्धत्वात् । अतस्तयोरेकतरस्योच्चगतत्वे तदितरस्य नोच्चगतत्वम् । तथा च सप्तानां ग्रहाणामुच्चगतत्वस्यैवासंभावितत्वेन तत्फलकथनं न युक्तमिति चेदत्र वराहादयः समादधुः । युक्तिप्रत्यक्षादिविरुद्धानां योगानां कथनं तु पूर्वशास्त्रानुसारेण कृतम् । करतलामलकवदपरोक्षीकृतविश्वैर्मुनिभिर्विरचितस्य ज्योतिषशास्त्रस्य परिमितमतिभिरस्मदादिभिरपालब्धुमनर्हत्वेन युक्त्यादिविरुद्धार्थप्रतिपादकस्यापि तस्य मान्यत्वमेव । अतो युक्त्यादिविरुद्धत्वेनाऽसंभावितानामपि योगानां कथनं नानुपपन्नमिति । तदुक्तं वराहेण—

"ज्यौतिषमागमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम् ॥
स्वयमेव विकल्पयितुं किं तु बहूनां मतं वक्ष्ये" इति ॥

"पूर्वशास्त्रानुसारेण मया वज्रादयः कृताः ॥
चतुर्थे भवने सूर्याज्ज्ञसितौ भवतः कथम्" इति च ॥

"हीनातिरिक्तकाले फलमुक्तं पूर्वशास्त्रदृष्टत्वात् ॥
स्फुटगणितविदः कालः कथंचिदपि नान्यथा भवति" इति च ॥

अत्र वराहाद्युक्तं समाधानं नातीव समञ्जसम्। तत्र पूर्वशास्त्राणां युक्त्यादिविरुद्धार्थप्रतिपादकत्वे तत्कर्तॄणां करतलामलकीकृतविश्वत्वासंभवेनाप्रामाणिकत्वमेवापद्येत। अतस्तद्ग्रन्थोपजीवनेन ग्रन्थकरणं, युक्तिविरुद्धार्थप्रतिपादकतद्वाक्योक्तयोगकथनं चानुपपन्नं स्यात्। अत्रान्ये पुनरेवं समादधते। तथा हि—ग्रहचक्राणां प्रतियुगगतिभेदसंभवेनेदानीं युक्तिविरुद्धा अपि योगाः पूर्वशास्त्रकर्तॄणामाचार्याणां जीवितकाले युक्त्यादिसिद्धा इति पूर्वाचार्यैस्ते योगाः कथिताः, वराहादिभिस्तदनुवादश्च कृतः। अतो न किंचिदप्यनुपपन्नम् इति। तदुक्तं वराहेण—

"आश्लेषार्धाद्दक्षिणमुत्तरमयनं तथा धनिष्ठाद्यम्॥
नूनं कदाचिदासीद्येनोऽक्तं पूर्वशास्त्रेषु॥
साम्प्रतमयनं सवितुः कर्कटकाद्यं मृगादितश्चान्यत्" इति॥

इदमपि समाधानं न युक्तम्। तथा हि—प्रतिमन्वन्तरं शास्त्रप्रवर्तकानां शास्त्राणां च भिन्नत्वेनैतद्ग्रन्थमूलभूतशास्त्रकर्तार एतन्मन्वन्तरसंबंधिन एवेति वक्तव्यम्। गतमन्वन्तरसंबन्धिशास्त्रादीनां लुप्तत्वात्। अस्मिंश्च मन्वन्तरे रविबुधयोः कथंचित् सार्धैकराश्यन्तरितत्वसंभवेऽपि पञ्चराश्यन्तरितत्वस्य सर्वथा अयोग एव। आश्लेषार्धमखारंभयोरीषदन्तरितत्वेन कदाचित्तादृशसंभवकल्पनेऽपि ईदृशासंभावितकल्पनाया वराहादिसंमतत्वाभाव एव। अत एव सर्वदापि तदसंभवाभिप्रायेणैव "चतुर्थे भवने सूर्याज्ज्ञसितौ भवतः कथं" इत्यवादीत्। अन्यथा "कदाचिन्नूनमास्तां मे चतुर्थे ज्ञसितौ रवेः" इति ब्रूयात्, "नूनं कदाचिदासीत्" इतिवत्। अपि च कथंचित् पूर्वशास्त्रकर्तृजीवितकाले तेषां योगानां संभावितत्वकल्पनेऽपि वराहादिजीवितकाले तेषामसंभावितत्वेन तत्कालीनजनोपयुक्तेषु तदीयेषु बृहज्जातकादिषु तदनुवादोऽयुक्त एव। अत्र रुद्रभट्टः चतुर्थे भवने इत्येतच्छ्लोकगतं "कथं" इति पदं अक्षरसंख्यया एकसप्ततिमहायुगात्मकमन्वन्तरपरत्वेन व्याख्याय "कथं पूर्वमन्वन्तरे" इति व्याचख्यौ। तादृशक्लिष्टकल्पनया पूर्वमन्वन्तरे एतेषां योगानां युक्त्यादिसिद्धत्वनिरूपणेपि प्रकृतानुपयोग एवेति प्राङ्निरूपितमेव। अतः सप्तग्रहाणामुच्चगतत्वस्य युक्त्यादिविरुद्धत्वेन तत्फलकथनमसंगतमेवेति चेदत्र वयं ब्रूमः। अस्मिन्नेवाध्याये ४१ तमे श्लोके स्वोच्चगतस्य,

एकोऽपि विख्यातबलप्रतापं

स्वोऽच्चर्क्षसंस्थो नृपतिं प्रसूते ।

संस्थानकालादिबलैः सुहृष्टि(खेट)

दृष्टो युतः सन् बहुवित्तमेनं ॥ ७ ॥

॥ इति रव्यादीनामुच्चफलम् ॥

---

## ॥ अथ रव्यादीनां मूलत्रिकोणफलम् ॥

### त्रिकोणगतैकग्रहफलम्

सुखी धनाढ्यः स्वत्रिकोणगेऽर्के

भोगी समृद्धः पुरुषः शशांके ।

शूरो ध्रुव(ऽघृण)श्चोरपतिः कुजे वा

विवा(नो)दशीलो विजयी च सौम्ये ॥ ८ ॥

जीवे महान् स्यात् सुखितो नयज्ञः

शुक्रे पुरग्रामविशिष्ट आढ्यः ।

आत्मत्रिकोणोऽपगतेऽथ दुष्टः(तृप्तः)

शनौ कुले ज्येष्ठतमोऽतिशूरः ॥ ९ ॥

---

स्वोच्चनवांशगतस्य च फलं सममिति वक्ष्यते । अतः षण्णां ग्रहाणामुच्च॰तत्वे एकस्य स्वोच्चनवांशगतत्वे च सप्तानां ग्रहाणामुच्चगतत्वे यत्फलं तदेव भवति । अतः सप्तग्रहाणामुच्चगतत्वस्य युक्त्यादिविरुद्धत्वेनासंभावितत्वेऽपि तत्फलस्य संभावि॰त्वेन कथनं युक्तमेवेति विभावयामः । वज्रादियोगानां फलकथने बीजं तत्प्रकरणे वक्ष्यामः ॥ ६ ॥

१ स्वोच्चर्क्षसंस्थः एकोऽपि विख्यातबलप्रतापं नृपतिं प्रसूते । स एव स्थानचेष्टाकालदिग्बलयुतः, सद्ग्रहयुतो वा; दृष्टो वा, बहुवित्तं नृपतिं कुरुते इति भावः ॥ ७ ॥

त्रिकोणगतस्व्यादिग्रहफलम्

द्वयोस्त्रिकोणोऽपगयोः कुटुंबी
विख्यातकीर्तिः कुलभू(व)र्धरा(नोऽ)न्वयः ।
स्यादु(त्रिभिः) [सु]वंश्यः सुखकीर्तियुक्तो
महाधनो ग्रामगणाधिपश्च ॥ १० ॥

आघ(ढ्य)श्चतुर्भिः(र्भि)[र्नृ]पल्लव(लब्ध)मानः
गु(कु)लाग्रणी(णीः) स्याज्जनवल्लभश्च ।
धीमान्प्रधानः सु(पु)रभूपकोशेऽ
थ(थाऽऽ)रक्षि(क्ष)कः पंचखगैस्त्रिकोणे ॥ ११ ॥

स्वाचारविद्याबलसत्वधर्मैः
षड्भिर्नृपः स्यात् ब(ख)लवंशजोऽपि ।
राजा वपुष्मान् बलवानु(न् स)दारो
विद्वांस्त्रिकोणोऽपगतैः समस्तैः ॥ १२ ॥

॥ इति रव्यादीनां मूलत्रिकोणफलम् ॥

---

## ॥ अथ रव्यादीनां स्वक्षेत्रफलम् ॥

उद्युक्त उ[ग्र]स्तरणावनर्थो
धर्मी मनस्वी प्रियदर्शनोऽब्जे ।
आढ्यश्च(ढ्योऽच)लो भूमिसुते प्रपंचा(च)
क्रियासु दक्षः समरप्रचण्डः ॥ १३ ॥

[1]शशितनयोऽपि [(विधत्ते वल्गुकथं पण्डितं वापि ॥
काव्यश्रुतिज्ञमाढ्यं शुभचेष्टं वाक्पतिः स्वराशिस्थः ॥ १४ ॥)]

[(दानवपूज्यः कुरुते कृषीवलं स्फीतवित्तं च ॥
कुरुते शनैश्चरोऽपि)] च भात्य(मान्य)मदुःखं स्वराशिगः [पुरुषम्]
॥ १५ ॥

॥ इति रव्यादीनां स्वक्षेत्रफलम् ॥

## ॥ अथ रव्यादीनां मित्रराशिफलम् ॥

मित्रगृहेऽर्कः ख्यातं स्थिरसौहृदमन्न(र्थ)दातारं ॥
मित्रर्क्षगः शशांको यतस्ततो लब्धसौख्यबहु[मा]लं(नं) ॥ १६ ॥

अंगारकोऽपि कुरुते सुहृद्धनरक्षणे सक्तं ॥
शशिजः सुहृद्गृहगतः करोति चातुर्यहास्यधनवंतं ॥ १७ ॥

वचसामधिपः पूज्यं सतां च भुवि शिष्टकर्माणं ॥
मित्रगृहे भृगुतनयः सुहृत्प्रियं दयितवित्तमिह शूरं ॥ १८ ॥

भास्करसूनुः कुरुते परान्नभोज(जि)न[म]धर्म[कर्म]रतं च ॥

॥ इति रव्यादीनां मित्रराशिफलं ॥

---

१ अत्र १४ श्लोकः, १५ श्लोकश्चापूर्णौ । तत्र कुण्डलीस्थो भागः सारावळीतोऽनूदितः ।

## ॥ अथ रव्यादीनां नीचराशिफलम् ॥

नीचे सविता कुरुते प्रेष्यं बान्धवजनावधूतं वा ॥ १९ ॥

हिमरश्मिरल्पगुणं(पुण्यं) रा(रो)गिणम[पि] दुर्लभं(भगं) लोके ॥
नीचस्थः क्षितितनयोऽनर्थव्यसनोऽ[प]तप्तमतिनीचं ॥ २० ॥

कुरुते हिमकरपुत्रः क्षुद्र(द्रं) स्वजातिबन्धु(द्ध)वैरं वा
नीचे गुरुः प्रकुरुते मलिनं प्राप्तावमानमतिदीनं ॥ २१ ॥

असुरदयितोऽस्वतंत्रं प्रन(ण)ष्टदारं विषमशीलं ॥
कोणो विपन्नशीलं विगर्हिताचारमर्थरहितं च ॥ २२ ॥

॥ इति रव्यादीनां नीचराशिफलम् ॥

---

## ॥ अथ रव्यादीनां शत्रुराशिफलम् ॥

कुरुते शत्रुगृहेऽर्को निःस्वं विष[य]पीडितं चापि ॥
तुहिनमयूखः कुरुते क्षु(हृ)द्रोगिणमरिगृहे सततं ॥ २३ ॥

बन्धारि[भङ्ग]भाजमस्रो(जं दीनं) विकलं वा(च) दुर्भगं लोके(भौमः) ॥
अज्ञानंवा(नबु)[द्धि]रहितं बुधोऽरिभेऽनेकदुःखमतिदीनं ॥ २४ ॥

क्लीबं गुरुर्विपक्षे बठरं हीनं त्वनार्यवृत्तं च ॥
शुक्रोऽरिगृहे भृतकं कुपु(तं)त्रमतिदुःखं(खि)[नं] जनयेत् ॥ २५ ॥

भास्करसुतोऽपि मलिनं व्याध्याच्छ(दि)दोषसंतप्तं ॥

॥ इति रव्यादीनां शत्रुराशिफलं ॥

---

## ॥ अथ उच्चादिग्रहाणामुच्चफलम् ॥

[1]द्वावुच्चगौ जनयतो धनिनं कीर्त्यान्वितं सदा पुरुषं ॥ २६ ॥

नग[रा]रक्षि[क्ष]कमाढ्यं चमूपतिं च त्रयश्च संप्रति(थि)[तम्]॥

आढ्यं [नृपास]कीर्तिं चत्वार उदार(रो नरप)धर्मसंयुक्तं ॥
ख्यातं नृपतिप्रतिमं पंचानेकार्थवृद्धिकोशं च ॥ २७ ॥

षट् स्वोच्चगाः प्रकुर्वन्ति पुरुषं नृपतिं सदा ॥

प्रदानमानसंपन्नं बहुवाहनमंडलं ॥ २८ ॥

---

१ एतस्मिन्नध्याये आदौ उच्चगतग्रहादिग्रहफलं मूलत्रिकोणगतग्रहादिग्रहफलं च कथितम् । तदेवेदानीं सारावळीगतश्लोकैः पूर्वोक्तानुक्तार्थगर्भितैः प्रमाणसंमत्या दृढीक्रियते । अतो न पौनरुक्त्यभ्रमः कार्यः । स्वक्षेत्रमित्रक्षेत्रशत्रुक्षेत्रनीचक्षेत्रगतानां ग्रहादिग्रहाणां फलमत्राध्याये एकधैवाभिधीयते । स्वोच्चमूलत्रिकोणगतानां ग्रहादिग्रहाणां तु फलं द्विवारमुक्तम् । तेन उच्चमूलत्रिकोणयोर्मुख्यत्वमितरेषां चामुख्यत्वमवगम्यते । तेन च एकस्मिन् जातके एकस्य ग्रहस्य स्वोच्चमूलत्रिकोणान्यतरस्थानस्थितौ सत्यामन्यस्य स्वक्षेत्राधन्यतमस्थानगतत्वे तत्फलयोश्च मिथो विरोधे च सति स्वोच्चमूलत्रिकोणान्यतरगतः स्वक्षेत्राद्यन्यतमगतग्रहफलमभिभाव्य स्वीयमेव फलं ददातीति ज्ञायते । तथा च सर्वं समञ्जसमेव । अयं च फलयोर्विरोधः सर्वकालफलदे नाभसयोगादावेव संभवति । आजन्ममरणं एकस्य ग्रहस्य धनदातृत्वस्य, अन्यस्य तदभावस्य च विरोधात् । अतस्तत्रेयं रीतिराश्रयणीया । योगान्तरे तु स्वस्वदशाकालमात्रफलदत्वेन एकस्य ग्रहस्य स्वदशायां धनदानं, अन्यस्य स्वदशायां तदभावश्च न विरुद्ध्यते इति, तत्रोच्चत्रिकोणगतः स्वक्षेत्रादिगतफलं स्वविरुद्धं नाभिभवतीत्यूह्यम् ॥ २६ ॥

स्वोच्चं यातास्सर्वे समुद्रपर्यन्तमेदिनीभार्या(र्थम्) ॥
जनयन्ति चक्रवर्तिनवनमीश्वर(मवनिपतिं) जातकं नित्यं ॥ २९ ॥

॥ इति द्व्यादिग्रहाणामुच्चफलम् ॥

---

## ॥ अथ द्व्यादिग्रहाणां मूलत्रिकोणफलम् ॥

द्वाभ्यां त्रिकोणसंस्थाभ्यां कुटुंबी कुलवर्धनः ॥
श्रेष्ठः प्रख्यातकीर्तिश्च ग्रहाभ्यां भुवि जायते ॥ ३० ॥

महाधनास्त्रिभिश्चैव गणग्रामाधिनायकाः ॥
आढ्या नृपालय(प्त)संस्का(त्का)राश्चतुर्भिर्लोकि(क)संमि(म)ताः ॥ ३१ ॥

आरक्षि(क्ष)कः प्रधानो नेता(सेना)पुरनगरभूपकोशानां ॥
पंचग्रहैस्त्रिकोणे भवति कुटुंबी सुबहुसौख्यः ॥ ३२ ॥

विद्याधनम(दा)नाद्यैस्स[म]न्वि(न्वि)तो भवति षड्भै(ड्भि)रेव पुमान् ॥
राजं(ज्यं) प्रशास्ति नियतं गोपालकुलेऽपि संजातः ॥ ३३ ॥

स्वत्रिकोणगतैः सर्वैर्भवेज्जातो महीपतिः ॥
बहु(वसु)स्त्रीबलसंपन्नो विद्याशास्त्रविशारदः ॥ ३४ ॥

॥ इति द्व्यादिग्रहाणां स्वत्रिकोणफलम् ॥

---

## ॥ अथ द्व्यादिग्रहाणां स्वराशिफलम् ॥

द्वौ स्वगृहगौ सुवाते कुलाधिकं बन्धुजीवि(पूज)नं धनिनं(धन्यम्) ॥
वंशकरा(र)[म]र्थसहितं स्थानयशोभिस्तथा त्रयो विहगाः ॥ ३५ ॥

ख्यातं व(वि)शिष्टचेष्टं श्रेणीप(पु)रगणयुतं तु चत्वारः ॥
पंचावनीश्वर[समं प्रभूतगो]भूमियुवतिपुत्रयुतं ॥ ३६ ॥

षड्भिः प्रवृद्धशब्दो द्युतिव(को)शपरिजनवाजिमातंगः ॥
भवति [नृप]वंशजातो नियतं पृथिवीपतिः स्वर्क्षे ॥ ३७ ॥

राजाधि[नृ]पं स्वर्क्षे जनयंति जितारिपक्षमिह ससा(प्त) ॥

॥ इति व्यादिग्रहाणां स्वराशिफलम् ॥

---

## ॥ अथ द्यादिग्रहाणां मित्रराशिफलम् ॥

मित्राश्रय(यं) सुवृत्ति(त्तं) द्वौ मित्रगृहं समाश्रितौ कुरुतः ॥ ३८ ॥

[1]बान्धवसुहृदुपकर्ता त्रिभिर्व(र्वि)शिष्टो भवेद्गुणैः ख्यातः ॥
[ब्राह्मणदेवाराधनपरश्चतुर्भिर्धुरन्धरः ख्यातः ॥ ३९ ॥]

राजोऽपसेवकः स्यात् पंचभिराद्यो(ढ्यो) नर(नृप)श्च शुभकर्ता ॥
विस्तीर्णभोगवाहनवसुमान् षड्भिर्नरेन्द्रतुल्यः स्यात् ॥ ४० ॥

सर्वैर्मित्रर्क्षगतैर्बहुनागाश्वधनभृत्यसाधनो राजा ॥

॥ इति द्यादिग्रहाणां मित्रराशिफलम् ॥

---

१ अत्र ३९ तमश्लोकस्योत्तरार्धं लुप्तम् । तच्च सारावळीतः संगृहीतम् ।

## ॥ अथ द्व्यादिग्रहाणां नीचराशिफलम् ॥

द्वाभ्यां नीचे नीचो निश्चितो बहुनिवासत्राणसहितः (चश्चिन्तावहा-
ग्रहसमेतः) ॥ ४१ ॥

मूर्खो धर्माभिरतः(त)स्त्रिभिर्ग्रहैर्नीचगै[रध्वग.] प्रेष्य ॥
आलस्यनष्टचेष्टश्चतुर्भिरिह नीचके भृतकः ॥ ४२ ॥

अगृहः प्रभिन्नदारः पंचभिरिह कथ्यते दासः ॥
घातभय·(य)श्रमतप्तः षड्भिर्निःस्वो भवेत्क्षामः ॥ ४३ ॥

भैक्षिकमुक्तोऽमि(भिक्षुस्त्यक्ताशि)तभुग्भवति पुमान् विगतसर्वस्वः ।
नीचे सप्तभिरखिलैर्दिक्चीरलबांत(धृतांब)रः [सूतः] ॥ ४४ ॥

॥ इति द्व्यादिग्रहाणां नीचराशिफलम् ॥

---

## ॥ अथ द्व्यादिग्रहाणां शत्रुराशिफलम् ॥

द्वावरिभवनसमेतौ क्लेशवतां नित्यविग्रहरुचीनां ॥
अरिपरिभूतानामपि नृणां जन्मपदौ कथितौ ॥ ४५ ॥

विवधव्ययदुःखभुजां त्रयः श्रमोत्पन्ननष्टवित्तायां(नां) ॥
चत्वार इष्टयोषित्पुत्रार्थविनाशजांभितत्यन्नां(सानां) ॥ ४६ ॥

पंचारिगृहे विहगा इष्टव्यसनाभिघाततत्या(सा)नां ॥
षड्रोगानाथवतां(ड्रोगपीडितानां) दुःखवतां चैव जन्मकरा(रा)
॥ ४७ ॥

सप्तारिभे ग्रहे ग्रहेन्द्रा वी(वी)भत्सक(कु)ले च र(सं)प्रसूतानां ॥
शय्याच्छा(च्छा)दनभोजनवंचितकानां भवति(न्ति) सदा ॥ ४८ ॥

॥ इति ग्रयादिग्रहाणां शत्रुराशिफलम् ॥

---

## ॥ अथ उच्चादिराशिफलस्य तन्नवांशके अतिदेशः ॥

[1]स्वोच्चभागेषु फलं समग्रं
त्रिकोणवत्स्यात् फलमंशकेषु ।
स्वक्षेत्रतुल्यं भवनांशकेषु
नीचारिभागेषु जघन्यसे(मे)व ॥ ४९ ॥

इति र०यादिग्रहाणामुच्चादिफलानि

॥ इति श्रीजातकसारदीपे उच्चादिचिन्ताध्यायस्त्रिपञ्चाशः ॥

---

## ॥ अथ द्विग्रहयोगाध्यायश्चतुःपञ्चाशः ॥

[2]यवनाचार्योवृद्धे(र्यैर्वृद्धै)र्द्विग्रहयोगे च यत्फलं प्रोक्तं ॥
तदहमपहाय [म]त्सरमधुना वक्ष्ये विशेषेण ॥ १ ॥

---

१ स्वोच्चनवांशे स्वोच्चराश्युक्तं फलं पूर्णं । स्वोच्चनवांशयोः फलं सममिति भावः । एवं स्वत्रिकोणतन्नवांशयोः, स्वक्षेत्रतन्नवांशयोः, मित्रादिक्षेत्राणां तन्नवांशानां च फलं सममिति भावः । नीचनवांशफलं, शत्रुनवांशफलं चाधमम् । अन्यनवांशफलं तूसममिति भावः ॥ ४९ ॥ २ पूर्वं चतुर्थसप्तमादिभावविशेषाश्रयेण ग्रयादिग्रहयोगाः कथिताः । इदानीं सर्वभावसर्वराशिसाधारण्येनाभिधीयन्ते । एकस्यैव योगस्य

## अथ द्विग्रहयोगफलम्

युवतीनां वशगः स्यादव(वि)नीतः कूटवित्पलघुवि(चि)त्तः ॥
आसवविक्रयकु[श]लो रव्युडुपत्योः क्रियानिपुणाः(णः) ॥ २ ॥

ते(ओ)जस्वी साहसिको मूर्खो च(ब)लशौर्यसंयुतोऽनृतवाक् ॥
पापमतिर्विषयनिष्ठो रविकुजयो(योः) स्यात्प्रचंडश्च ॥ ३ ॥

सेवाकृद्दस्थिरधनो रविज्ञयोः प्रियवचा यशोर्था(र्थी) स्यात् ॥
भार्य(र्यः) क्षितिपतिदयितः सतां च बलरूपविद्यावान् ॥ ४ ॥

बहुधर्मो नृपसचिवः समृद्धिमान् मित्रसंश्रयकार्या(कृता)र्थः ॥
सूर्ये बृहस्पतियुते भवेदुपाध्यायसंज्ञश्च ॥ ५ ॥

शस्त्रप्रहरणा(ण)विद्याशक्तियुक्तो(तो) नेत्रदुर्बल[1]श्चर(र)[भे] ॥
रंगज्ञो रविसितयोः संस्त्री(स्त्रीसं)गाल्लब्धबन्धुज(ध)नः ॥ ६ ॥

धातुज्ञो धर्ममयः स्वकर्मनिरतः प्रन(ण)ष्टसुतदारः ॥
निजवंशगुणैः शुद्धः शनिरव्यो रंध्र(रन्ध्र)शीलश्च ॥ ७ ॥

शूरो रणप्रतापी मल्लोऽसृग्वेदनार्ति(र्त)देहश्च ॥
मृच्च[र्म]धातुशिल्पिक्रूर(शिल्पी कूट)ज्ञश्चन्द्रकुजयोगे ॥ ८ ॥

काव्यकथाश्रुतिनिपुणा(णः) सधनस्त्रीसंमतः सुरूपश्च ॥
स्मितवच(द)नः शशिबुधयोर्धर्मरुचिः स्याद्विशिष्टगुणः ॥ ९ ॥

---

पञ्चमादिभावगतस्य तदध्यायैतदध्यायोक्तफलयोर्विरोधे तदध्यायोक्तविशेषफलमेव ग्राह्यम् । अविरोधे तूभयमपि ग्राह्यम् ॥ १ ॥ १ चरभे चरराशौ नेत्रदुर्बल इति योजना ।

दर(दृढ)सौहृदो विनीतः सुबन्धुसन्मानकृद्धनेशश्च ॥
गुर्विन्द्वोः शुभशीलः सुरद्विजाद्येवृ(द्ये र)तो भवेत्पुरुषः ॥ १० ॥

रक्तरू(स्रग्धृ)पांबरस(यु)क्तः क्रियाविधिज्ञः कलि(कुल)प्रियोऽत्यशनः
(लसः) ॥
क्रयविक्रयेषु कुशलः शशिभार्गवयोः सदा योगे ॥ ११ ॥

जीर्णवधूजनरमणो गजाश्वसंपालको विगतशीलः ॥
वे(व)श्यो विघनः पुरुषः परात्मजः(जितः) स्याच्छशांकशनियोगे
॥ १२ ॥

स्त्रीदुर्भगोऽल्पवित्तः सुवर्णलोहप्रहा(का)रक(कः) स्थपतिः ॥
दुष्टस्त्रीविधना(या)नां बुधकुजयोरो(रौ)षधक्रये(क्रिया)निपुणः ॥ १३ ॥

शिल्पश्रुतिशास्त्रज्ञो मेधावी वाग्विशारदो मतिमान् ॥
अस्त्रप्रियः प्रधानः सुरगुरुकुजयोः समागतयोः ॥ १४ ॥

पूज्यो गु(ग)णप्रधानो गणितज्ञः परयुवतिगो धूर्तः ॥
द्यूतानृतशाठ्यरतो विटः सिते रुधिरसंयुते भवति ॥ १५ ॥

धन्वी(धात्वि)न्द्रजालकुशलः प्रपं(वं)चक(कः) स्तेयकर्मनिरतश्च ॥
कुजसौरयोर्विधर्मा शाश(शस्त्र)विश(ष)मः कलिरुचिः स्यात् ॥ १६ ॥

नृत्यविधेवि(र्वि)ज्ञाता प्राज्ञोपि व(च) गेयवा[द्य]विन्मनुजः ॥
बुधगुरुयोगोष्ट(गे म)तिमान् सौख्ययुतो जायतेऽवश्य(श्यं) ॥ १७ ॥

अतिशयधनो नयज्ञो बहुशिल्पो वेदव(वि)त्सुवाक्यश्च ॥
नी(गी)तिज्ञो हास्यपरो बुधसितयोगेयथाल्प(गन्धमाल्य)रुचिः ॥ १८ ॥

ऋा(ऋ)णवान् दंभप्रायः प्रपं(वं)चकः कलिरुचिर्गमनशीलः ॥
निपुणः शोभनवाक्यः शनिबुधयोगे पुमान् भ(कविर्भ)वति ॥ १९ ॥

जीवति विद्यावेदैर्विशिष्टधर्मस्थितिप्रमाणयुतः ॥
जीवसितयोर्मनुष्यो विशिष्टदारो भवेद्धनवान् ॥ २० ॥

शूरो वित्तसमृद्धो नगराधिपतिर्भवेद्यशस्वी च ॥
शनिजीवयोः प्रधानः श्रेणिसभाग्रामसंघानां ॥ २१ ॥

दारुविदारण[द]क्ष(क्षः) त्र क्ष(क्षु)रचित्रा[श्मा]दिकर्मकृच्छिल्पी ॥
मल्लो नटः(ऽटनः) पशुपतिः शनिसितयोगे पुमान् ख्यातः ॥ २२ ॥

इति द्विग्रहयोगफलम्

द्विग्रहयोगफलस्यान्योन्यवर्गगतग्रहफलसाम्यम्

[1]उक्तं फलं गगन[गा] यद्यन्योन्यगणास्थिताः ॥
अधमादिविकल्पेन कुर्वन्ति विकृतं(तिं) तदा(था) ॥ २३ ॥

॥ इति श्रीजातकसारदीपे द्विग्रहयोगाध्यायश्चतुःपञ्चाशः ॥

---

१ गगनगा अन्योन्यवर्गाश्रिता यदि भवन्ति तदा उक्तं फलं अधमं, मध्यमं, उत्तमं, इत्यादिविकल्पेन विकृतं कल्पयन्ति यवनाचार्या इति योजना। एतदुक्तं भवति—सूर्यश्चन्द्रराश्यादिसप्तवर्गे, चन्द्रः सूर्यराश्यादिसप्तवर्गे च स्थितश्चेत्सूर्यचन्द्रयोगोक्तं फलमेव भवति। तत्रापि अन्योन्योच्चक्षेत्रमूलत्रिकोणक्षेत्रस्वक्षेत्रस्वनवांशगतत्वे उत्तमं। अन्योन्यहोराद्रेक्काणसप्तांशद्वादशांशत्रिंशांशगतत्वे मध्यमं। अन्योन्यमित्रक्षेत्रमित्रनवांशगतत्वे अधमं। तत्रापि अन्योन्याश्रितोच्चादिक्षेत्राणां सप्तवर्गाणां च तारतम्येन फलतारतम्यमित्यूह्यम्। एवमेवात्र सर्वेपि द्विग्रहयोगा व्याख्येयाः ॥ २३ ।

## ॥ अथ त्रिग्रहयोगाध्यायः पञ्चपञ्चाशः ॥

### अथ त्रिग्रहयोगफलम्

[1]निर्लज्जः पापरतो व्यं(यं)त्रज्ञः शत्रुवारणः शूरः ॥
अश्मक्रियासु कुशलः सह स्थितैः सूर्यशशिभौमैः ॥ १ ॥

तेजस्वी निपुणमतिः शास्त्रकलासाधुगोष्ठिपानरतः ॥
नृपनृ(कृ)त्यकरो [धीरो] रविशशिशशिजैस्तथैऽकस्थैः ॥ २ ॥

क्रूरो(क्रुद्धो) मायानिपुणः सेवाकुशलो विदेशगमनरतः ॥
मेधावी चपलग(म)तिः सह स्थितैरर्कशशिजीवैः ॥ ३ ॥

---

१ अत्र त्रिग्रहचतुर्ग्रहयोगादिषु योगेषु योगकारकग्रहाणां सूर्यादिक्रमेण नामनिर्देशः पठितॄणां सौकर्याय भवति। तथा हि—रविचन्द्रकुजयोगः, रविकुजचन्द्रयोगः, चन्द्ररविकुजयोगः चन्द्रकुजरवियोगः, कुजरविचन्द्रयोगः, कुजचन्द्ररवियोगः इति षड्भिः प्रकारैरेक एव योगो निर्देष्टुं शक्यते। तेषु प्रकारेषु सूर्यादिक्रमेण रविचन्द्रकुजयोग इति निर्देश एव ज्यायान्। एवमेव सर्वेषामपि योगानां गतिः। एवं निर्देशे प्रथमो योगः सूर्यचन्द्रकुजयोगः, पञ्चमो योगः सूर्यचन्द्रशनियोगः, षष्ठो योगः सूर्यकुजबुधयोगः, दशमो योगः सूर्यबुधगुरुयोगः, त्रयोदशो योगः सूर्यगुरुशुक्रयोगः, पञ्चदशो योगः सूर्यशुक्रशनियोगः, षोडशो योगः चन्द्रकुजबुधयोगः, षड्विंशो योगः कुजबुधगुरुयोगः, द्वात्रिंशो योगः बुधगुरुशुक्रयोगः, पञ्चत्रिंशो योगः गुरुशुक्रशनियोगः इत्येवं क्रमेण योगफलं तत्कथनपरश्लोकान्वेषणप्रयासं विनैव ज्ञातुं शक्यते। अन्यथा योगफलज्ञानार्थं प्रतिश्लोकं योगकारकग्रहनामगवेषणनिबन्धनः प्रयास एव भूयान् स्यात्। परं तु प्राचः सारावलीकारादयः क्रममनुमनादृत्य यथामनीषं योगकारकग्रहनामनिर्देशमकुर्वन्। अयं ग्रन्थकारस्तु भाग्यचिन्ताध्यायादौ मदुक्तं क्रममेवादतवान्। एतस्मिन्नध्याये आगामिषु चाध्यायेषु सारावलीगतान् श्लोकान् शब्दतोऽनुवदन् तं क्रमं परित्यक्तवान्। अतो

रिपुगणानां क्ष[प]यिता नृपतिषु सुभगस्तथा विपुलतेजाः ॥
रविशशिशुक्रै. सहगैर्भवति नरो दन्तविकृतश्च ॥ ४ ॥

परधन[ह]रणेऽतिरतः परदाररतश्च श(शा)त्रवृत्तिश्च ॥
रविचन्द्रदैत्यपूज्यैरेकस्थैर्जायते मनुजः ॥ ५ ॥

धातु(काम)विवादे निरतो मूर्खः परतर्क(न्त्र)को दरिद्रश्च ॥
सूर्यनिशाकर[र]विजैरेकस्थैर्जायते मनुजः ॥ ६ ॥

भवति ख्यातो मल्लः साहसिको निष्ठुरो विगतलज्जः ॥
धनसुतकलत्ररहितः सह स्थितैरर्ककुजसौम्यैः ॥ ७ ॥

वचसि निपुणो महार्थः क्षितिपतिमन्त्री च भूपतिर्वापि ॥
सत्यवचनः प्रचण्डः सहि(ह) [स्थि]तैर्भौमगुरुसूर्यैः(रर्ककुजपूज्यैः)
॥ ८ ॥

नयनातुरः कुलीनः सुभगो वात्स(कृश)ल्यसंयुतो मनुजः ॥
भृगुभौमदिवसनाथै (रविभूमितनयशुक्रैः) संयुक्तैः स्याद्विभ[व]युतः
॥ ९ ॥

विकलांगो धनरहितो नित्यं शोका(रोगा)र्दितः कलहयुक्तः ॥
स्वजनरहितोऽतिमूर्खः क्षितिजार्कजभानुभिः(रविभूसुतसूर्यजैः)
सहितैः ॥ १० ॥

---

मया पष्ठिनुसौकर्याय क्रमभेदसंभवे पूर्वोक्तक्रमेण योगकारकग्रहनामनिर्देशः कृतः, कुण्डल्यां निवेशितश्च । अतो न पाठभेदकरणे बीजं गवेषणीयम् ॥ १ ॥

नेत्रातुरोऽतिधनवान् श(शा)स्त्रकला(था)काव्यगोष्ठिशिल्परतः ॥
वाचस्पतिबुधसूर्यैं(सूर्यबुधदेवपूज्यै)रेकस्थैर्लिपिकरः पुरुष ॥ ११ ॥

अतिशास्त्रोक्ति(भिशस्तोऽति)वाचाटो भवति च देशान्निराकृतो गुरुभि ॥
स्त्रीहेतोः स(सं)तप्तः शशिसुतरवि(रविशशिसुत)भार्गवैः सहितैः
॥ १२ ॥

क्लीबाचारो द्वेष्यः सर्वजितो बन्धुभिः परित्यक्तः ॥
सौरादित्यांबु(सूर्यज्ञादित्य)सुतैरेकस्थैर्जायते सचिवः ॥ १३ ॥

दुर्बलवसु:(चक्षुः) शूरः प्राज्ञो निःस्वश्च भूपतेः सचिवः ॥
परकार्यकरो नित्यं भार्गव(स्फुर)गुरुभास्करैः(र्गवैः) सहितैः ॥ १४ ॥

असदृशकायः पूज्यः स्वजनद्वेष्यः सुदारसुतमित्रः ॥
नृपतीष्टो विगतभयो जीवार्कजदिनकरैः(रविजीवार्कसंभवैः) सहितैः
॥ १५ ॥

शत्रुभयात्सोद्वेगो मानकलाकाव्यवर्जितो मनुजः ॥
कुत्सितचरितः कुष्ठी सितार्किरवि(सूर्यसितार्कि)संयुतौ भवति
॥ १६ ॥

पापकरा जायन्ते नीचाचाराः सुहृत्स्वजनहीनाः ॥
आजीविनश्च पुरुषाः शशांकबुधभूमि(कुजचन्द्र)जैः सहितैः ॥ १७ ॥

प्रण(व्राण)ताङ्ग(ङ्गः) स्त्रीलोलश्चोरः कान्तो भवति [संमतः] स्त्रीणां ॥
भौमशशांक(चन्द्रधराज)सुरेज्यै रेकस्थैश्चण्डरोषश्च ॥ १८ ॥

दुःशीलायः(याः) पुत्रः पतिश्च तस्याः सैदव निर्दिष्टः ॥
कुजभृगुशशि(शशिकुजभृगु)भिः सहितैभ्र(भ्रं)मणरुचिः शीतभीरुश्च ॥ १९ ॥

बाल्ये मृतजननीकः क्षुद्रो विषमश्च लोकविद्विष्टः ॥
जायेत नरो योगे भूसुतशशि(शशिभूसुत)भास्करसुतानां ॥ २० ॥

धनवान् कल्पो वाग्मी तेजस्वी ख्यातिमान् विपुलकोर्तिः ॥
बहुमित्रभ्रातृसुतो बुधेन्दु(विधुज्ञ)सुरपूजितैर्युक्तैः ॥ २१ ॥

विद्यासंस्कृति(त)मतिरपि नीचाचारो भवेत्पुमान् ज्ञा(जा)तः ॥
सेर्ष्यो धनपल(लु)ब्धो बुधभार्गवचन्द्र(विधुचन्द्रजशुक्र)संयोगे ॥ २२ ॥

असुतो(स्वस्थो) विकलः प्रोक्तो(प्राज्ञो) वाग्मी च सुपूजितः क्षितिपः ॥
भवति नरः संयोगे सौरे(चन्द्रेऽ)न्दुशशांक(सुतार्क)पुत्राणां ॥ २३.॥

साध्वीतनयः प्राज्ञः कल(ला)स्वभिज्ञो बहुश्रुतः साधुः ॥
भार्गव(शीतगु)गुरुशशि(भृगु)योगे जातः पुरुषो भवेत्सुभगः ॥ २४ ॥

शास्त्रे(स्त्र)[ग]बुद्धिर्नय न वान् वृद्धस्त्रीसंगतो विगतरोगः ॥
शशिवाचस्पतिसौरैरेकस्थैर्ग्रामवृन्दपतिः ॥ २५ ॥

लिपिकरपुस्तकवाचकपुरोधसां भवति जन्म सुकृतैश्च ॥
दैवविदां पुरु[षा]णां शशिभार्गवसौरिसंयोगे ॥ २६ ॥

सुकति(विः) क्षोणीनाढ्यः(थः) सद्युवतिपतिः परार्थ [उ]यु(यु)क्तः ॥
गान्धर्ववेव(वेद)कुशलः स्याद्बुधगुरुभूसुतैः(रकुजबुधपूज्यकैः) सहितैः ॥ २७ ॥

आ(अ)कुलीनो विकलांगश्चपलो घृ(दु)ष्टश्च जायते मनुजः ॥
सु(मु)खरो नित्योऽत्साही कुजबुधभृगुनन्दनैः सहितैः ॥ २८ ॥

प्रेष्यः सा(श्या)मय(ल)नेत्रः प्रवासशीलो भवेद्वदनरोगी ॥
रमते प्रसहनशीलैर्बुधार्किरुधिरैः(कुजज्ञरविजैः) सहैकत्र(स्थैः) ॥ २९ ॥

[1]**नृपतीष्टः स्त(स)त्सुतवाशंब(न् वि)लासिनीभ्यः सरो विगर्हितो मंत्रैः ॥**
**भवति नरो विगतघृ(घृ)णः सुरेज्यकुजसौरिसंयोगे ॥**
**दाप्तबहुसौख्यः सकलजनानन्दकरो भार्गवगुरुभूमिजैः सहितैः ॥**
**नृपसंमतो कृशांगो नीचासु चरित्रविहीनायाः—**
**पुत्रो भर्ता भवेत्सुखविहीनः ॥**

[(नृपतीष्टः सत्सुतवान् विलासिनीभ्यः सदाप्तबहुसौख्यः ॥
सकलजनानन्दकरो भूमिजगुरुभार्गवैः सहितैः ॥ ३० ॥)]

[(नृपसंमतः क्षताङ्गो नीचाचारो विगर्हितो मन्त्रैः ॥
भवति नरो विगतघृणः कुजसुरेज्यसौरिसंयोगे ॥ ३१ ॥)]

---

१ अत्र स्थूलाक्षरनिर्दिष्टभागे ३० तमश्लोकद्वितीयपादादिभागः ३१ तमश्लोकद्वितीयपादान्त्यभागेन तदुत्तरार्धेन चान्वितो दृश्यते। ततः परं ३० तमश्लोकद्वितीयपादान्त्यभागः तदुत्तरार्धं च लिखितं दृश्यते। एवं ३१ तमश्लोकद्वितीयपादादिभागः ३२ तमश्लोकेन संबद्धो दृश्यते। अतोऽत्र शुद्धः पाठः कुण्डल्यां निवेशितः।

[(चारित्र्यविहीनायाः पुत्रो भर्ता भवेत्सुखविहीनः ॥)]
नित्य(त्यं) प्रवासशीलः संयुक्तैः सौरिकुजशुक्रैः(कैर्भौमसितसौरैः)
॥ ३२ ॥

सुतनुः स(क्ष)पितारम(रिग)णो नृपतिः सुभगस्तथा पृथुलकीर्तिः ॥
संयुक्ते बु(बु)धगुरुशुक्रैः सहितैर्भवति नरः सत्यवचनश्च ॥ ३३ ॥

स्थानधनैश्वर्ययुतं प्राज्ञं बहुभोगिनं सुन्दरे(स्वदार)रतं ॥
धृतिसौख्ययुतं सुभगं जनयंति बुधार्किजीवा(थेज्यसौरा)ख्याः ॥ ३४ ॥

मुखरो धूर्तोऽनृतवाक् परयुवतिरतो भवेद्विषमशीलः ॥
बुधशुक्रसूर्यतनयैः कलास्वभिज्ञः स्वदेशरतः ॥ ३५ ॥

पूत(न्यून)कुलेऽपि च जातो भवति नरो भूपतिर्विपुलकीर्तिः ॥
गुरुभार्गवदिनकरजैरेकस्थैः शीलसंपन्नः ॥ ३६ ॥

सूर्यचन्द्रयोः शुभपापमिश्रग्रहयोगफलम्

[1]पापैर्युक्ते चन्द्रे मातुरभावः प्रकीर्तितः प्रायः ॥
सूर्ये पितुस्तथान्यैः शुभं वदेन्मिश्रितैर्मिश्रं ॥ ३७ ॥

---

१ त्रिग्रहयोगे द्वाभ्यां पापग्रहाभ्यां चन्द्रे युक्ते मातृहानिः। अत्र प्रायः इति कथनेन भाग्यस्थानव्यतिरिक्तस्थानेषु रविचन्द्रकुजयोगो मातृनाशकरो न भवति, तथा कुत्रापि रविचन्द्रशनियोगो मातृहानिकरो न भवतीत्यादि ज्ञेयम्। एवं रविकुजशनीनां योगः भाग्ये पितृनाशकरः, अन्यत्र न तथा इति ज्ञेयम्। एवं चन्द्रे शुभयुक्ते मातृहितं, मिश्रयुक्ते मिश्रफलं ज्ञेयम्। एवं सूर्ये शुभयुक्ते पितुः शुभं, मिश्रयुक्ते मिश्रफलं ज्ञेयम् ॥ ३७ ॥

### शुभत्रययोगफलम्

[1]प्रायः शुभा(भाः) समेता धनभूमि(ति)यशोऽन्वितं नृपतिचेष्टं ॥
उत्पादयन्ति मनुजं भूमण्डलमण्डलं(नं) श्रेष्ठं ॥ ३८ ॥

### पापत्रययोगफलम्

पापास्तुये(स्त्रयोऽ)पि मिलिताः कुर्वन्ति नरं सुदुर्बलं(भगं) लोके ॥
दारिद्र्यदुःखतप्तं गर्हितरूपं विनयहीनं ॥

इति त्रिग्रहयोगफलम्

॥ इति श्रीजातकसारदीपे त्रिग्रहयोगाध्यायः पञ्चपञ्चाशः ॥

---

## ॥ अथ चतुर्ग्रहयोगाध्यायः षट्पञ्चाशः ॥

### अथ चतुर्ग्रहयोगफलम्

लिपिका(क)रतस्करसु(मु)ख[रो] रोगी मायाप्रपंचकुशलश्च ॥
बुधरवि(रविविधु)भौमशशांके(मेन्दुसुतै)रेकर्क्षस्थैः पुमान् भवति ॥ १ ॥

धनवान् व्रणितो(वनिता)नित्यंते(न्यस्ते)जस्वी नीतिमान्
विगतशोकः ॥
कर्मसमर्थो निपुणः शशिकुजगुरुभास्करैः(रविविधुकुजपूज्यकैः) सहितैः
॥ २ ॥

---

१ अत्र प्रायः इत्यनेन चन्द्रबुधशुक्रैर्योगो नातीव शुभ इति सूचितम्

अभ्युद्ग(आर्योचि)तवाग्वृत्तिः सुखभाग्नि(ङ्नि)पुणोऽर्थसंग्रहणशीलः ॥
विद्यासुतदारयुतः शशिकुजभृगुभास्करैः(रविविधुकुजभार्गवैः) सहितैः
॥ ३ ॥

विषमाचा(का)रो ह्रस्वो धनरहितो याचिताशनो मूर्खः ॥
गर्ह्यः(म्यः) सर्वस्य तथा रविशशिकुजसौरिसंयोगे ॥ ४ ॥

सौवर्णिकः प्लुताक्षः शिल्पकरो वा महाधनो धीरः ॥
जात(तः) स्यान्नीरुजतनुः शशिबुधगुरुभास्करैः(रविशशिबुधपूज्यकैः)
सहितैः ॥ ५ ॥

विकलः सुभगो वाग्मी ह्रस्वो नृपसंमतो मनुजः ॥
जात(तः) स्यादेकस्थै रविशशिबुधभार्गवैः सततं ॥ ६ ॥

मातृपितृविसं(प्र)युक्तो धनसौख्यविवर्जितो भ्रमणशीलः ॥
भिक्षाशनोऽन्यभृ(प्यनृ)तको रवीन्दुसौम्यार्किभिर्विलग्ननेत्रः ॥ ७ ॥

सलिलमृगारण्यानां स्वामी स्यात्सौख्य(मा)गृ(ङ् नृ)पतिपूज्यः ॥
शुक्रार्कगुरुशशांकै(सूर्येन्दुगुरुभृगूत्थै)रेकर्क्षगतैः पुमान्निपुणः ॥ ८ ॥

सा(ता)मय(स)नेत्रस्तीक्ष्णो बहुसुतवित्तो वरांगनासुभगः ॥
सूर्येऽज्यचन्द्र(न्दुपूज्य)सौरैरेकस्थैर्जायते मनुजः ॥ ९ ॥

वनितासदृशाचारः पुरःसरोऽत्यन्दुर्बल शी शरीरः ॥
भीरुः सर्वत्र भवेदर्केऽन्दुसितासितैः सहितैः ॥ १० ॥

शूरोऽथ सूत्रकारश्च[क्र]चरो वा पि विपन्नधनधा(दा)रः ॥
दुःखार्तोऽटनशीलः समं चरै(सुसङ्गतै)रर्कजीवबुधभौमै(भौमबुधजीवैः)
॥ ११ ॥

परदाररतश्चोरो विषमाक्षो(क्षो) दुर्जनो विगतसख:(त्वः) ॥
भवति प्रसवे पुरुषो रविसितभौमेन्दुजैः सहि(कुजसौम्यैः सितेन यु)तैः
॥ १२ ॥

[1]योधः प्राज्ञस्तीक्ष्णो नीचा **रभुविः प्रधानश्च** चारः कविः
प्रधानश्च ॥
मन्त्री च भूपतिर्वा बुधार्किकुज(रविकुजज्ञ)सौरिसंयोगे ॥ १३ ॥

सुभगः पूज्यो लोके [नृ]म(प)मन्त्री च भूपतिर्वा[पि] ॥
बु धा(र)विभौमजीवशुक्रैरेकस्थैर्नीतिमान् पुरुषः ॥ १४ ॥

सोन्मादो गणमान्यः सिद्धार्थो बन्धुमित्रसद्य(म्पृ)क्तः ॥
भानुकुजजीवसौरैः संयुक्तैः स्यात् नृपाभिमतः ॥ १५ ॥

विकलो नीचाचारो विषमाक्षो लोकबन्धुविद्विष्टः ॥
सूर्यकुजशुक्रसौरैः पराभवं सर्वतो याति ॥ १६ ॥

धनवान् सुखी प्रधानः सिद्धार्थो बहुधन(न्धुमान्) प्रकृष्टश्च ॥
भानुबुधजीवशुक्रैर्भवति पुमानेकराशिस्थैः ॥ १७ ॥

क्लीबाचारो मानी कलहरुचिः सहृजवान्नि(ह् नि)रुत्साहः ॥
अर्कार्किबुधसुरेज्यै(अर्केन्दुजगुरुसौरै)रेकस्थैर्जायते पुरुषः ॥ १८ ॥

मुखरः सुभगः प्राज्ञो मृड(दु)सौख्य(ख्यः) सत्य(त्व)शौचसंपन्नः ॥
धीरो मित्रसहायो रविभृगुबुध(बुधसित)सौरि **कुज** संयोगे ॥ १९ ॥

---

१ अत्र स्थूलाक्षरनिर्दिष्टो भागोऽधिको दृश्यते। तत्त्यागे श्लोकः शुद्धो भवति।

लुब्धः कविः प्रधानः वा(का)रुकनाथोऽधिपश्च नीचानां ॥
आदित्यार्किसितेज्यै(रव्यार्यशुक्रसौरै) राज्ञां जातो भवेदिष्टः ॥ २० ॥

शास्त्रकुशलो नरेन्द्रः सुमहामां(मं)त्रोऽथ वा महाबुद्धिः ॥
शशिकुजसौम्यजीवैरेकस्थैर्यः पुमान् भवति ॥ २१ ॥

कलहरुचिर्निद्रालुर्नीचः स्याद्बधकां(र्धकी)पतिः सुभगः ॥
बन्धुद्विष्टो(द्वेष्टा) न सुखो(खी) शशिकुजबुधभार्गवैः सहितैः ॥ २२ ॥

शूरो हि(त्रि)मातृपितृको दुःकुलजो बहुकलत्रमित्रसुतः ॥
भवति सुकर्माभिरतः शशिकुजबुधसौरिसंयोगे ॥ २३ ॥

[1]विकलांगः सुकलत्रः साहसिको वृत्तमानसंयुक्तः ॥
प्राज्ञो बहुमित्रसुतः(खः) शशिकुजयम(गुरु)भार्गवैर्भवति ॥ २४ ॥

[बधिरो धनवान् शूरः सोन्मादो वाक्पटुः स्थिरप्रकृतिः ॥
मतिमानुदारचित्तो चन्द्रारसुरेज्यसूर्यसुतैः ॥ २५ ॥]

[कुलटापतिः प्रगल्भः सर्पाक्षो नित्यमेव सोद्वेगः ॥
जातः पुरुषोऽवश्यं चन्द्रारभृगुसूर्यजैर्भवति ॥ २६ ॥]

विद्वान् द्वि(वि)मातृपितृकः सक्रोधो(द्रूपो) धनयुतोऽतिसुभगश्च ॥
भवति नरो विगतारिर्बुधशशि(शशिबुध)गुरुभार्गवैः सहितैः ॥ २७ ॥

---

१ अत्र शशिकुजगुरुशनियोगस्य, शशिकुजशुक्रशनियोगस्य च फलप्रतिपादनपरे पद्ये मूले लुप्ते । ते च कुण्डल्यां निवेशिते ।

कृतधर्मकीर्तिरज(ध्य)स्तेजस्वी वि भुध(बन्धु)वल(ल)भो मतिमान् ॥
नृपसचिवः प्रवरकविः शशिबुधजीवार्किभिः सहितैः ॥ २८ ॥

परदारगमनशीलो विशीलभार्यो विपन्नबन्धुश्च ॥
प्राज्ञो लोकद्विष्टः स्यादिन्दुबुधार्किभृगुपुत्रैः(स्फुजिद्द्विजैः) ॥ २९ ॥

मात्रा स(र)हितः सुभगस्त्वग्दोषी दुःखितो भ्रमणशीलः ॥
बहुभाषी सत्यरतः शशिगुरुभृगुसौरिभिः सहितैः ॥ ३० ॥

स्त्रीकलहरुचिर्धनवान्पूज्यो लोके च शीलसंपन्नः ॥
भवति पुमान्नीरुजतनुर्बुधार्कि(नु कुजज्ञ)गुरुभार्गवैः सहितैः ॥ ३१ ॥

शूरो विद्वान् वाग्मी धनरहितः सत्यशौचसंपन्नः ॥
वादी द्वन्द्वसहीस्तु(हिष्णु)र्मतिमान्सहितैर्बुधार(तैः कुजज्ञ)गुरुसौरैः
॥ ३२ ॥

स्यान्मल्लः परि(र)पुष्टः कठिनाङ्गो युद्धदुर्मदः ख्यातः ॥
रमते प्रियसारमेयैर्बुधारयभार्गवैः(यैः कुजज्ञसितसूर्यजैः) सहितैः
॥ ३३ ॥

तेजस्वी वित्तयुतः स्त्रीलोलः स(सा)हसः(स)प्रियश्चपलः ॥
भौमगुरुशुक्रसौरैः सह स्थितैर्जायते कितवः ॥ ३४ ॥

मेधावी शास्त्ररतः का(तो रा)मासक्ता(क्तो) विधेयभृत्यश्च ॥
बुधजीवशुक्रसौरैः सह स्थितैस्तीव्रसंयोगः ॥ ३५ ॥

पाठान्तरं—

व्ययबन्धनरोगार्तो विद्वान् लोके च पूजितो भवति ॥
नि(निः)स्वो विकलशरीरः कुजगुरुसितसौरिसंयोगे ॥ ३६ ॥

इति चतुर्ग्रहयोगफलम्

॥ इति श्रीजातकसारदीपे चतुर्ग्रहयोगाध्यायः षट्पञ्चाशः ॥

---

## ॥ अथ पञ्चग्रहयोगाध्यायः सप्तपञ्चाशः ॥

अथ पञ्चग्रहयोगफलम्

[1]दुःखी बहुप्रपंचो जायाविरहेण तापितशरीरः ॥
भवति पुमानेकस्थै रवीन्दुकुजजीवचन्द्रसुतैः(सौम्यविबुधेज्यैः)
॥ १ ॥

परक[र्मक]रो नित्यं बन्धुसुहृद्भिः कृतो न बहुसत्वः ॥
क्लीबैर्याति च सख्यं रविकुजशुक्रसौम्यै(रवीन्दुकुजसौम्यशुक्रै)श्च
॥ २ ॥

---

१ अथ पञ्चग्रहयोगाः एकविंशतिः। तथा हि—रविचन्द्रकुजबुधानां गुर्वादिभिस्त्रिभिर्योगेन त्रयः, रविचन्द्रकुजगुरूणां शुक्रशनिभ्यां योगेन द्वौ, रविचन्द्रकुजशुक्रशनिभिरेकः, एवं रविचन्द्रबुधगुरूणां शुक्रशनिभ्यां योगेन द्वौ, रविचन्द्रबुधशुक्रशनिभिरेकः, रविचन्द्रगुरुशुक्रशनिभिरेकः, एवं रविकुजबुधगुरूणां शुक्रशनिभ्यां योगेन द्वौ, रविकुजबुधशुक्रशनिभिरेकः, रविकुजगुरुशुक्रशनिभिरेकः, रविबुधगुरुशुक्रशनिभिरेकः, एवं चन्द्रकुजबुधगुरूणां शुक्रशनिभ्यां योगेन द्वौ, चन्द्रकुजबुधशुक्रशनिभिरेकः, चन्द्रकुजगुरुशुक्रशनिभिरेकः, चन्द्रबुधगुरुशुक्रशनिभिरेकः, कुजबुधगुरुशुक्र-

[1]अल्पायुर्नच(युर्वं)धनभाग्दी[नो भवतीह सर्वसुखहीनः ॥
अकलत्रोऽसुतवित्तः सूर्येन्दुकुजज्ञसूर्यसुतैः ॥ ३ ॥]

[जात्यन्धो बहुदुःखी मातृपितृभ्यां सदैव सन्त्यक्तः ॥]
भवति नरो गेयरुचिः कुजेन्दुगुरुभार्गवार्कै(रवीन्दुकुजपूज्यशुक्रै)श्च ॥ ४ ॥

युद्धकुशलः समर्थः परवित्तहरः परोपतापी च ॥
पी(पि)शुनःख(नश्च)लश्च पुरुषः शनि(रवि)शशिकुजजीवदिवसेशैः (रविपुत्रैः) ॥ ५ ॥

धर्म(माना)र्थविभवा(व)हीनो मलिनाचारः पराङ्गनाभिरतः ॥
पंचभिरेकस्थैः स्याद्दिनेशशशिशुक्रशनिभौमैः(भौमसितसौरैः) ॥ ६ ॥

यंत्रज्ञो बहुविभवो नृपसचिवो दण्डनायकश्चापि ॥
ख्यातः शुभकीर्तियुतो बुधे(रवी)न्दुरवि(बुध)जीवशुक्रैश्च ॥ ७ ॥

भीरुः प्रियसंत्यक्तः सोन्मादो वचनेषु निपुणश्च ॥
उग्रः परान्नभोजी बुधेन्दुगुरुसूर्य(रवीन्दुबुधजीव)रविपुत्रैः ॥ ८ ॥

दीर्घो रोमशगात्रो मन्दोत्साही सुतार्थसुखविहीनः ॥
स्यात्पंचभिरेकस्थै रविचन्द्रबुधार्किभृगुपुत्रै.(स्फुजिद्रविजैः) ॥ ९ ॥

---

शनिभिरेकः। एवं एकविंशतिः पञ्चग्रहयोगाः। तेषां फलमभिधीयतेऽस्मिन्नध्याये दुःखी इत्यादिना ॥ १ ॥ १ अत्र ३ श्लोके प्रथमपाद एव दृश्यते। अवशिष्टो भागो नास्ति। चतुर्थश्लोके च पूर्वार्धं लुप्तम्। तत्स्थाने मत्संगृहीतः कुण्डलीगतः श्लोकः पठनीयः।

वाग्मीऽन्द्रजालनिरतश्चलचित्तः स्त्रीपु(षु) च वल्लभो मतिमान् ॥
बहुशत्रुर्विगतभयो रवीन्दुगुरुशुक्रभानुसुतैः ॥ १० ॥

कामी बहुतुरगनरः स्फीतः सेनापतिर्विगतशोकः ॥
राज्ञां प्रियोऽतिसुभगो बुधारवि(रविभौमज्ञ)जीवशक्रैः स्यात् ॥ ११ ॥

नित्योऽग्यु(द्वि)ग्नो रोगी भिक्षां भुंक्ते गृहाद्गृहं गत्वा ॥
जीर्णमलिनवासा रविकुजबुधजीवरविपुत्रैः ॥ १२ ॥

[1]वधबन्धज्वरोगार्तो विद्वान् लोकेषु पूजितो भवति ॥
नि(निः)स्वो विकलशरीरः कुजशशि(रविकुज)बुधशुक्रमदै(मंदैः) स्यात्
॥ १३ ॥

व्याधिभिररिभिर्ग्रस्त स्थानभ्रे(भ्र)ष्टोऽतिदुःखसंपद्ध(तप्तः) ॥
भ्रमति क्षुधितः पुरुषो कुजार्किरविशुक्रशशि(रविकुजज्ञशुक्ररवि)तनयैः
॥ १४ ॥

वि(ज)ल्पम(य)न्त्रधातुपारदरसायनेष्वतिपटुः पुमान् भवति ॥
एभः(एभिः) प्रसिद्धकर्मा क्षितिसुतरवि(रविधरणिज)जीव-
सितसौरैः ॥ १५ ॥

बहुशास्त्रज्ञानपटुस्त(र्मि)त्रहितः संमतो गुरूणां च ॥
धर्मपरः कारुणिकः सूर्यसितशुक्रबुधजीवै :(बुधेज्यास्फुजिद्वविजैः)
॥ १६ ॥

१ अत्र रविकुजबुधशुक्रशनियोगफलपरं श्लोकद्वयम् ।

साधुः कल्मषहीनो(स्थूलशरीरो) विद्याधनसत्व(त्व)सौख्यसंपन्नः ॥
बन्धुहितो बहुमित्रो बुधेऽन्दुकुज(चन्द्रारबुध)जीवभृगुपुत्रैः ॥ १७ ॥

तिमिरामयी दरिद्रः परान्नमभियाचते सदा भीरुः(दीनः) ॥
मलिनयति बन्धुवर्गं कुजार्किबुधजीवहिमकिरणैः(शशिकुजबुधजीव-
रविपुत्रैः) ॥ १८ ॥

बहुशत्रुमित्रपक्षः परार्थहन्ता भवेद्धि गत(द्विषम)शीलः ॥
एकस्थै[र]भि(ति)मानी बुधेन्दुकुज(शशिकुजज्ञ)शुक्ररविपुत्रैः ॥ १९ ॥

प्रेष्यो मूर्खः क्लीबो मलिनाचारोऽतिदुर्भगो विकलः ॥
भवति [नरो] धनरहितः शशिकुजगुरुशुक्ररविपुत्रैः ॥ २० ॥

नृपमन्त्री नृपसंगो(तुल्यो) गणनाथः सर्वलोकपूज्यश्च ॥
एकर्क्षे भवति [नरश्चन्द्रेन्दुजजीवसित]शुक्रैः(सौरैः) ॥ २१ ॥

सतम(सुमन)स्कः सोन्मादो राज्ञामतिवल्लभो विगतशोकः ॥
निद्रातुरो दरिद्रः कुजगुरुबुध(बुधगुरु)शुक्ररविपुत्रैः ॥ २२ ॥

इति पञ्चग्रहयोगफलम्

॥ इति श्रीजातकसारदीपे पंचग्रहयोगाध्यायः सप्तपञ्चाशः ॥

---

## ॥ अथ षड्ग्रहयोगाध्यायोऽष्टपञ्चाशः ॥

### अथ षड्ग्रहयोगफलम्

[१]विद्याधनधर्मयुतः क्षामो बहुभाषको विकृष्टमतिः ॥
एकभवनोऽपयातैर्बुधेन्दुरव्या(रवीन्दुभौमज्ञ)गुरुशुक्रैः ॥ १ ॥

दाता परकर्मकरश्चलस्वभावो विशुद्धत(स)त्त्वश्च ॥
रमते विजने देशे खीन्दुवक्रज्ञगुरुरविजैः ॥ २ ॥

चोरः परदाररतः कुष्ठी स्वजनैर्निराकृतो मूर्खः ॥
स्थानभ्रष्टो विमुखो(सुतो) बुधेन्दुरव्यारशनिशुक्रैः(रवीन्दुभौमज्ञ-
सितसौरैः) ॥ ३ ॥

[२]संचयशीलः सुभगो मानी रिपुहा रि(र)णेऽभिविख्यातः ॥
वनपर्वतेषु रमते रविशशिभौमज्ञसितसौरैः ॥ ४ ॥

नीचः परकर्मकरः क्षयरोगी श्वासकासपरिभूतः ॥
निंद्यः स्याद्बन्धूनां सितेन्दुरव्यागुरु(खीन्दुभौमेज्यसित)रविजैः ॥ ५ ॥

आर्यजनानां दयितो रणोत्कटस्तीव्ररोषणो लुठः(ब्धः) ॥
पिशुनः प्रिये(यो)तिसुभगो रविशशिभौमेज्यसितसौरैः ॥ ६ ॥

---

१ षड्ग्रहयोगाः सप्त। तथा हि—रव्यादिषु सप्तसु ग्रहेष्वेकैकपरित्यागेऽवशिष्टानां षण्णां योगाः सप्त भवन्ति। एवं सप्त योगाः। एतेषां फलमस्मिन्नध्यायेऽभिधीयते विद्येत्यादिना ॥ १ ॥ २ अत्र तृतीयचतुर्थश्लोकौ रविचन्द्रकुजबुधशुक्रशनियोगफलपरौ। तथा पञ्चमषष्ठौ श्लोकौ रविचन्द्रकुजगुरुशुक्रशनियोगफलपरौ। मतभेदेन फलभेदप्रदर्शनार्थं श्लोकद्वयं।

मन्त्री नृपस्य सुभगः ख्या(क्षां)तियुतो भवति शोकसंतप्तः ॥
अकलत्रो धनरहितो रवीन्दुबुधजीवसितसौरेः(रैः) ॥ ७ ॥

तीर्थेषु भ्रमति सदा पुत्रैर्दारैर्धनेन रहितश्च ॥
वनपर्वतोपसेवी बुधाररवि(रव्यारबुध)जीवशनिशुक्रैः ॥ ८ ॥

नित्यं शुचिः प्रला(ता)पी बहुयुवतिरतो नृपप्रियो मन्त्री ॥
धनसुतसौभाग्ययुतः कुजार्किसितचन्द्रबुधजीवैः(चन्द्रारबुधजीव-
सितसौरैः) ॥ ९ ॥

[१]प्रायो दरिद्रदुःखितमूर्खाः षट्पञ्चसंयुतैर्विहगैः ॥
अन्योन्यदर्शनादपि फलमेवं तुंदिलः(कन्दलाः) [प्राहुः] ॥ १० ॥

इति षड्ग्रहयोगफलम्

॥ इति श्रीजातकसारदीपे षड्ग्रहयोऽगाध्यायोऽष्टपञ्चाशः ॥

---

## ॥ अथ राजयोगाध्याय एकोनषष्ठितमः ॥

[२]स्वोच्चत्रिकोणभवनैर्बलसंयुतैश्च
चा(ञ्या)द्यैर्नृपो भवति भूपतिवंशजातः ।

---

१ पंचग्रहयोगे षड्ग्रहयोगे च जाताः दरिद्रा दुःखिता मूर्खाश्च प्रायो भवन्ति । अत्र प्राय इति कथनेन केषुचिद्योगेषु शुभफलमपि संभवतीति सूचितम् । यथा अस्मिन्नेवाध्याये रविचन्द्रकुजबुधशुक्रशनियोगफलं मतभेदेन शुभं दृष्टम् । एवं द्व्यादिग्रह-योगेषु यत्फलमुक्तं तदेव फलं द्व्यादिग्रहाणामन्योन्यदृष्ट्यापि संभवतीति कन्दलाचार्य-मतमिति भावः । २ स्वोच्चे वा, स्वत्रिकोणे वा, स्वगृहे वा स्थितास्त्रयश्चत्वारो वा महा

पंचाहि(दि)भिर्जनपदेऽपि वदन्ति सिद्धं
'हीनैः क्षितीश्वरसमो न तु भूमिपालः ॥ १ ॥

क्रूरग्रहाणां राजयोगकारकत्वविषये यवनेन्द्रमतम्

'अशुभगगनवासैः स्वोच्चगैः क्रूरचेष्टं
कथयति यवनेन्द्रो भूपतिं विक्रमोत्थं ।

राजकुलजातानां राजपदवीप्रदाः । तादृशाः पञ्च वा, षड् वा, सप्त वा ग्रहा जनपदे सिद्धानां नीचकुलजानामपि राज्यप्रदाः । द्वयोरेकस्य वा तादृशत्वे राजसाम्यमेव । न तु राजपदवीलाभ इति भावः । इदं च वक्ष्यमाणसकलराजयोगविषयमिति मन्तव्यं ॥ १ ॥ १ यवनेन्द्रमते वक्ष्यमाणराजयोगेषु क्रूराणामुच्चगतत्वे क्रूरो राजा भवति, सौम्यानामुच्चगतत्वे सौम्यस्वभावो राजा भवति, मिश्राणामुच्चगतत्वे मिश्रस्वभावो राजा भवति । जीवशर्ममते वक्ष्यमाणराजयोगेषु क्रूरग्रहाणामुच्चगतत्वे राजपदवीलाभो न भवति । तत्र कारणमाह (नृपतिपुण्यैरिति) नृपतिपदवीयोग्यैः पुण्यैः उत्कटैः भूमिपालः भवतीति योजना । अयं भावः — राज्यलाभश्च तदुचितोत्कटपुण्यप्रभवः । क्रूरग्रहाश्च न पुण्यफलप्रदाः । किं तु पापफलप्रदा एवं । अतः क्रूरग्रहाणां राज्यप्रदानसामर्थ्यं नास्त्येवेति । इदं च जीवशर्ममतं नाचार्यस्याभिप्रेतम् । तेन हि पञ्चाधिकानां ग्रहाणां स्वोच्चगतत्वे शुभाशुभसाधारण्येन राजयोग उक्तः । शुभानामेव राजयोगकारकत्वे गुरुशुक्रशुभयुक्तबुधपूर्णचन्द्राणामेव राजयोगकारकत्वसंभवेन तदधिकानां तदयोगेन तत्कथनपरमाचार्यवचनमसङ्गतं स्यात् । किं च पापग्रहाणामेकादशस्थानगतानां पुण्यफलभूतसंपदादिप्रदत्वं सर्वैरप्यनुमन्यते । तद्वद्राज्यप्रदानमपि नाविरुद्धम् । अतो जीवशर्मोक्तं कारणमसङ्गतमेव । यवनेश्वरोक्तः पन्थास्तु साधीयान् । तत्पक्षे स्वोच्चस्थितिनिबन्धनो राज्यलाभः सर्वैर्ग्रहैः साधारण्येन भवति । राजगतक्रौर्यादयस्तु ग्रहगतक्रौर्यादिनिबन्धनाः । अतो युक्तियुक्तं शास्त्रसंमतं च

## क्रूरग्रहाणां राजयोगकारकत्वविषये जीवशर्ममतम्

न नु(तु) भवति नरेन्द्रो जीवशर्मोक्तपक्षे
भवति नृपतिपुण्यैरुत्कटैर्भूमिपालः ॥ २ ॥

## अथ नीचकुलजानां राज्यप्रदा योगाः

[1]ए(ये)ष्विह भवंत्यवश्यं भूपा योगेषु जीव(नीच)कुलाः(ल)पुरुषाः ॥
तानग्रतः प्रवक्ष्ये यथामतं शास्त्रकाराणां ॥ ३ ॥

## द्वात्रिंशद्राजयोगाः

[2]स्वोच्चस्थे रविभौमसौरगुरुभिः सर्वैस्त्रि[भि]श्चैकके
लग्ने षोडश वृद्धयावनमते सन्दर्शिताः पार्थिवाः ।

---

यवनेश्वरमतम् । तदेवाचार्यस्याभिप्रेतम् । अत एव मतद्वयमध्ये यवनेन्द्रमतस्य प्रथमनिर्देशः ॥ २ ॥ १ नीचकुलजातानामपि राज्यप्रदा योगाः प्रथममभिधीयन्ते इति भावः ॥ ३ ॥ २ रविभौमसौरगुरुभिः सर्वैः स्वोच्चस्थैः, तेषां मध्ये त्रिभिर्वा स्वोच्चस्थैः, तेष्वेकके अन्यतमग्रहे लग्नगते वृद्धयावनमते षोडश पार्थिवाः सन्दर्शिता इति योजना । अत्र पार्थिवपदं पार्थिवयोगपरम् । एवमग्रेपि । अयं भावः—रविगुरुशनिकुजानां चतुर्णामप्युच्चगतत्वे, मेषे वा, कुलीरे वा, तुलायां वा मकरे वा, लग्ने चत्वारो योगाः । एवं रविगुरुशनीनां त्रयाणामुच्चगतत्वे, मेषे वा, कुलीरे वा, तुलायां वा, लग्ने त्रयो योगाः । एवं गुरुशनिकुजानां त्रयाणामप्युच्चगतत्वे, कुलीरे वा, तुलायां वा, मकरे वा, लग्ने त्रयो योगाः । एवं शनिकुजरवीणां त्रयाणामप्युच्चगतत्वे, तुलायां वा, मकरे वा, मेषे वा, लग्ने त्रयो योगाः । एवं कुजरविगुरूणां त्रयाणामप्युच्चगतत्वे, मकरे वा, मेषे वा, कुलीरे वा, लग्ने त्रयो योगाः । एवं वृद्धयवनोक्ताः षोडश योगाः पूर्वार्धे सङ्गृहीताः । एवं पूर्वोक्तेषु रविकुजशनिगुरुषु द्व्येकैरुच्चस्थैः द्वाभ्यामुच्चगताभ्यां, एकेन वा स्वोच्चगतेन, तेषु

द्वाभ्यांचै(ध्येकरे)कतमोऽद्ये स्वभवने चन्द्रे पुनः षोडश
सर्वैर्नीचकुलोद्भवोऽपि वसुधां पात्येकपा(व वा)टीमिव ॥ ४ ॥

## चतुश्चत्वारिंशद्राजयोगाः

[1]गणोत्तमो लग्ननवांशकोऽद्गमो(द्गतो)
निशाकरश्चापि गणोत्तमश्च(मेपि) वा ।

---

एकतमस्य उदये लग्नगतत्वे, चन्द्रे स्वभवनगते, पुनः षोडश राजयोगाः संदर्शिताः इति योजना। अयं भावः—उच्चस्थे रवौ, गुरौ, शनौ, कुजे वा लग्नस्थे चत्वारो योगाः। एवं रविगुर्वोरुभयोरप्युच्चगतत्वे, मेषे वा, कुलीरे वा, लग्ने द्वौ योगौ। एवं रविशन्योरुभयोरप्युच्चगतत्वे, मेषे वा, तुलायां वा, लग्ने द्वौ योगौ। एवं रविकुजयोर्द्वयो(रप्युच्चगतत्वे, मेषे वा, मकरे वा, लग्ने द्वौ योगौ। एवं गुरुशन्योरुभयोरप्युच्चगतत्वे, कुलीरे वा, तुलायां वा, लग्ने द्वौ योगौ। एवं गुरुकुजयोरुभयोरप्युच्चगतत्वे, कुलीरे वा, मकरे वा लग्ने द्वौ योगौ। एवं शनिकुजयोरुभयोरप्युच्चगतत्वे, तुलायां वा, मकरे वा, लग्ने द्वौ योगौ। एवं षोडश राजयोगाः तृतीयपादोक्ताः। एषु षोडशसु योगेषु चन्द्रस्य कर्काटकस्थितिरावश्यकी। तदभावे नैते राजयोगा भवन्ति। एषु द्वात्रिंशद्योगेषु जाताः नीचकुलजा अपि राजानो भवन्तीति भावः॥ ४ ॥ १ लग्ननवांशकेन उद्गतः उदयं प्राप्तः, गणोत्तमः वर्गोत्तमः, लग्ने वर्गोत्तमगते इति यावत्। अत्र "वर्गोत्तमगते लग्ने" इति स्पष्टोक्तिं विहायैवं कथनं "वर्गोत्तमो निजनिजे भवने नवांशः" इति ग्रन्थान्तरोक्तवर्गोत्तमस्वरूपज्ञापनाय। सप्तवर्गेषु तत्तद्राशिगततत्तद्राशिनवांशानामेव वर्गोत्तमत्वं। न तु तादृशानां सप्तांशादीनां। अत एव नवांशानामितरवर्गेभ्य उत्तमत्वं युक्तम्। अत एव च लग्ननवांशकोद्गत एव लग्नवर्गोत्तमो भवति। न तु द्वादशांशकाद्युद्गत इति भङ्ग्यन्तराश्रयणेन सूचितम्। प्रकृतमनुसरामः। लग्ने वर्गोत्तमगते, चन्द्रभिन्नैश्चतुर्भिर्ग्रहैर्दृष्टे, नीचकुलजो राजा भवतीति भावः। अत्र चन्द्रभिन्नानां षण्णां मध्ये चतुर्ग्रहयोगाः पञ्चदश भवंति।

चतुर्ग्रहैश्चन्द्रविवर्जितैर्बला(र्यदा)

द्वि(नि)रीक्षितः स्यादधमोऽद्भवो नृपः ॥ ५ ॥

विशेषराजयोगाः

[1]उदयगिरिनि[वि]ष्टैर्मेषसंस्थैर्ग्रहेन्द्रैः

शशिरुधिरसुरेज्यैर्जायते पार्थिचन्द्रैः(वेन्द्रः) ।

---

तथा हि—रविकुजबुधानां गुर्वादिभिस्त्रिभिर्योगेन त्रयः, रविकुजगुरूणां शुक्रशनिभ्यां योगेन द्वौ, रविकुजशुक्राणां शनियोगेनैकः, एवं रविबुधगुरूणां शुक्रशनिभ्यां योगेन द्वौ, रविबुधशुक्राणां शनियोगेनैकः, रविगुरुशुक्राणां शनियोगेनैकः, एवं कुजबुधगुरूणां शुक्रशनिभ्यां योगेन द्वौ, कुजबुधशुक्राणां शनियोगेनैकः, कुजगुरुशुक्राणां शनियोगेनैकः, बुधगुरुशुक्राणां शनियोगेनैकः। एवं पञ्चदशभिश्चतुर्ग्रहयोगैर्वर्गोत्तमगते लग्ने दृष्टे पञ्चदश राजयोगाः। एवं वर्गोत्तमगते चन्द्रे पञ्चदशभिश्चतुर्ग्रहयोगैर्दृष्टे, पञ्चदश राजयोगाः। एवं त्रिंशद्राजयोगा अनेन श्लोकेनोक्ताः। इदमुपलक्षणम्। वर्गोत्तमगते चन्द्रे वा, लग्ने वा, चन्द्रभिन्नैः पञ्चभिर्ग्रहैर्दृष्टे वा षड्भिर्ग्रहैर्दृष्टे वा पूर्ववद्भवति। तथा हि—चन्द्रभिन्नानां षण्णां ग्रहाणां षट् पञ्चग्रहयोगाः संभवन्ति। रविकुजबुधगुरूणां शुक्रशनिभ्यां योगेन द्वौ, रविकुजबुधशुक्राणां शनियोगेनैकः, रविकुजगुरुशुक्राणां शनियोगेनैकः, रविबुधगुरुशुक्राणां शनियोगेनैकः, कुजबुधगुरुशुक्राणां शनियोगेनैकः। एवं षट् पञ्चग्रहयोगाः। एकः षड्ग्रहयोगः। एवं षड्भिः पञ्चग्रहयोगैः, एकेन षड्ग्रहयोगेन च वर्गोत्तमगे लग्ने दृष्टे सप्त राजयोगाः। तादृशे चन्द्रे दृष्टे सप्त राजयोगाः। पूर्वोक्तास्त्रिंशद्राजयोगाः। एवमाहत्य ४४ राजयोगाः कथिताः। तदुक्तं वराहेण—

"वर्गोत्तमगते लग्ने चन्द्रे वा चन्द्रवर्जितैः ॥
चतुराद्यैर्ग्रहैर्दृष्टे योगा द्वाविंशतिः स्मृताः" इति ॥

अत्रापि वर्गोत्तमगते लग्ने द्वाविंशतिर्योगाः, तादृशे चन्द्रे द्वाविंशतिर्योगा स्मृता इति व्याख्येयम्। तेन चतुश्चत्वारिंशद्योगा इति लभ्यते।

१ मेषलग्ने चन्द्रकुजगुरुयुक्त एको योगः ॥ ६ ॥

त्रिजलधिरसनायाः पालको यश्च भूमे
बहुरिपुपरिवारं सर्वतः फूत्करोति ॥ ६ ॥

[1]स्वोच्चे गुरावथ कुजे क्रियगे विलग्ने
मेषोदये थ सकुजे वचसामधीशे ।
भूयान्महीभृदिह यस्य विपक्षसैन्यं
तिष्ठेन्न जातु पुरतः सचिवाचि(चिं)[त]स्य ॥ ७ ॥

[2]निशाभर्ता चापे भृगुतनयदेवेऽज्यसहितः
कुजः प्राप्तः स्वोच्चं मृगमुखगतः सूर्यतनयः ।
विलग्ने कन्यायां(यां) शिशिरकरसूनुर्यदि भवेत्
तदावश्यां(श्यं) राजा भवति बहुविज्ञा[न]कुशलः ॥ ८ ॥

[3]स्वर्क्षे नक्षत्रनाथः स्फुर(ट)तरकिरणालंकृतः प्राप्तलग्नो
घू(द्यू)ने सोमस्य पुत्रो यदि रिपुभवनं भास्करः संप्रयातः ।
पाताले दानवेऽज्यो गुरुरपि गगने सौरिभौमौ तृतीये
स्याद्भूपालो भवेद्यः शशिधवलचलच्चामरां राज्यलक्ष्मीं ॥ ९ ॥

[4]शिशिरकिरणः स्वोच्चे लग्ने पर्थो(र्यो)बुनिधेः समो
घटधरगतो भानोः पुत्रो मृगाधिपतौ रविः ।

---

१ मेषस्थे कुजे, कुलीरस्थे गुरौ, मेषे, कुलीरे वा लग्ने द्वौ योगौ । मेषलग्ने कुजगुरुयुते एको योगः । एवं त्रयो योगाः ॥ ७ ॥ २ कन्यालग्नस्थे बुधे, चतुर्थगतेषु चन्द्रगुरुशुक्रेषु, पञ्चमगतयोः कुजशन्योरेको योगः ॥ ८ ॥ ३ कुळीरे लग्ने चन्द्रे, तुलायां शुक्रे, कन्यायां शनिकुजयोः, धनुषि रवौ, मकरे बुधे, मेषे गुरावेको योगः ॥ ९ ॥ ४ वृषभलग्ने चन्द्रे, चतुर्थे रवौ, सप्तमे गुरौ, दशमे शनावेको योगः । १० ॥ .

अलिगृहगतो वाचां नाथः स्फु[र]त्करराजितो
यदि नरपतिः स्फीतश्रीकस्तदा बहुवाहनः ॥ १० ॥

[1]मृगे मन्दो लग्ने कुमुद्वनबन्धुश्च तिमिग
स्तथा कन्यां त्यक्त्वा बुधभवनसंस्थः कुतनयः ।
स्थितो नार्यो [चां]ति(द्रि)धंनुषि सुरमन्त्री यदि भवेत्
तदा जातो भूपः सुरपतिसमवा(मः प्रा)समहिमः(मा) ॥ ११ ॥

[2]उदयति मीने शशिनि नरेन्द्रः
सकलकलाढ्यः क्षितिसुत उच्चे ।
मृगपतिसंस्थे दशशतरश्मौ
घटधरगे स्याद्दिनकरपुत्रे ॥ १२ ॥

[3]लग्ने कुजेज्येस(जाढ्यश्च) शशी यदास्ते
स्फुटा(टां)शुसंभारविराजिताशः ।
राजा तदा शत्रुभिरप्रधृष्यो
वेदार्थविद्धेतुशतानुवादी ॥ १३ ॥

---

१ मकरलग्ने शनौ, तृतीये चन्द्रे, षष्ठे कुजे, नवमे बुधे, व्यये गुरावेको योगः ॥ ११ ॥ २ मीनलग्ने चन्द्रे, षष्ठे सूर्ये, एकादशे कुजे, द्वादशे शनावेको योगः । १२ ॥ ३ कुजसहितः स्फुटकिरणः पूर्णचन्द्रो यत्र कुत्रापि लग्नगतश्चेदेको योगः । इदं च सारावळीबृहज्जातकादिमतम् । बादरायणमते तु सूर्ये चापगते चन्द्रसहिते कुजे मकरलग्नगते एको योगः । तन्मतरीत्या "कुजोऽजगे सशशी व्ययेऽर्के" इति पाठः कल्पनीयः ॥ १३ ॥

[1]करोत्युत्कृष्टोऽर्कौ यदि(यदि)नकृदतुलामोदनिलय:(सुताभीषुसहित:)
स्थितस्ताहग्भूप:(पं) सकलभुवनानन्दजननं ।
स्म(स्मृ)तेतो(ना)पूर्वोऽलं नयनजलसिक्तोपि [नि]तरां
रिपुस्त्रीशोकाग्निज्व(र्ज्व)लति हृदये येन सततं ॥ १४ ॥

[2]शुक्रो घटे कुजो मेषे स्वोच्चे देवपुरोहितः ॥
यदि राजा भवेन्नूतं(न्नूनं)स्वयशोधौतदिङ्मुखः ॥ १५ ॥

[3]उदयति गुरुरुच्चे तस(प्त)हेमप्रभावो
हरिततुरगनाथो व्योममध्यावगाही ।
गवि शशिबुधशुक्रा यस्य सूतौ नरस्य
स्वभुजविजितभूमिः सर्वतः पार्थिवेन्द्रः ॥ १६ ॥

[4]धनुषि सुरेज्यः शशभृदुपेतो
मृगमुखसंस्थः क्षितितनयश्च ।
उदयति तुङ्गे सुररिपुवन्द्यः
शशितनयो प(य)दि भू(वा नृ)पतिः स्यात ॥ १७ ॥

---

१ षड्बलसम्पत्त्या उत्कृष्टो रविश्चन्द्रयुतो यत्र कुत्रापि लग्नगतश्चेदेको योगः। अस्मिन्योगे जातः सूर्यचन्द्रसदृशरूपयुतः सकलभुवनानन्दजननो राजा भवति। येन राज्ञा स्मृतेन निमिषेन रिपुस्त्रीशोकाग्निः अलं नयनजलसिक्तोऽपि हृदये सततं नितरां ज्वलति। अत एवायमग्निरपूर्व इति भावः। अत्र अतुलामोदनिलय इति पाठो न साधुः। तथात्वे एतदध्यायगत २४ श्लोकोत्तरार्धेन पौनरुक्त्यं स्यात् ॥ १४ ॥ २ तुलायां शुक्रे, मेषे कुजे, कुलीरे गुरावेको योगः ॥ १५ ॥ ३ कुलीरलग्नगते गुरौ, मेषे रवौ, वृषभे चन्द्रबुधशुक्रेष्वेको योगः ॥ १६ ॥ ४ धनुषि चन्द्रगुर्वोः, मकरे कुजे,

[1]चापार्धे भगवान्सहस्रकिरणस्तत्रैव ताराधिपो
लग्ने भानुसुतोऽथ वा(वी)र्यसहितः स्वोच्चैव(च्चे च) भूनन्दनः ।
यद्येवं भवति क्षितेरधिपतिः संश्रुत्य शौर्यं भयात्
दूरादेव नमन्ति यस्य रिपवो दवंदाः(ग्धाः) प्रतापाग्निना ॥ १८ ॥

अधियोगलक्षणम्

[2]द्यूनं षष्ठमथाष्टमं शिशिरगोः(गोः) प्राप्ताः समस्ताः शुभाः
क्रूराणां यदि गोचरे च(न) पतिता भान्वालयाद्दूरतः ।
भूपालः प्रभवेत्स यस्य जलधेर्वेलामन(वना)न्तोद्भवो(वैः)
सेनामत्तकवी(री)न्द्रदानसलिलं भृङ्गैर्मुहुः पीयते ॥ १९ ॥

अधियोगफलम्

न प्राप्नोति जरामाशु नो भजत्यरिजं भयं ॥
जातः स्यादधियोगेऽस्मिन् नृपः सौभाग्यसौख्यभाक् ॥ २० ॥

[3]बुधः स्वोच्चे लग्ने तिमियुगलसंस्थौ शशिगुरू
मृगे मन्दः सौ(सा)रो तिनु(जितु)मगृहगो दानवसुहृत् ।

---

मीने शुक्रे लग्नगते एको योगः । धनुषि चन्द्रगुर्वोः, मकरे कुजे, कन्यालग्ने बुधयुते एको योगः ॥ १७ ॥ १ यत्र कुत्रापि लग्नगते बलिनि शनौ, धनुर्मध्यगते सचन्द्रे सूर्ये, मकरगते कुजे, एको योगः । इदं बादरायणमतम् । माण्डव्यमते तु शनेर्मकरलग्नगतत्वे एवायं योगः । अन्यत्सर्वं बादरायणमतेन समम् ॥ १८ ॥ २ चन्द्रात् षष्ठसप्तमाष्टमेषु सर्वे शुभग्रहाः यथासंभवं एकत्र वा, स्थानद्वये वा, स्थानत्रये वा स्थिताश्चेदधियोगः । एते ग्रहाः पापैर्दृष्टा वा, युता वा, मूढा वा, यदि स्युस्तर्हि योगभङ्गः ॥ १९ ॥ ३ कन्यालग्नगते बुधे, मीनगतयोश्चन्द्रगुर्वोः,

नृपं कुर्याद्यस्य क्षितिभृदहितध्वंसनिरतो(ते)
    नि(निं)श[लोकं]लोकश्चलति गजसंघातरजसा ॥ २१ ॥

[1]केसरिगो महेन्द्रसचिवो दिनकरसहितः
    कुंभगतोऽर्कजः शशधरः खलु भवति वृषो(षे) ।
वृश्चिकसंगतः क्षितितनयो मिथुनेन्दुयु(सु)तः
    कुंभवृषाजलग्ने(ग्न) समये यदि मनुजपतिः ॥ २२ ॥

[2]कार्मुके त्रिदशनायकमन्त्री
    भानुजो वणिजि चन्द्रसमेतः ।
मेषगश्च तपनो यदि लग्ने
    भूपतिर्भवति सोऽतुलकीर्तिः ॥ २३ ॥

[3]स्वक्षीत्(क्षै) केन्द्रेषु यातैर्गुरुबुधभृगुजैर्मन्दभान्वारयुक्तैः
    स्वोच्चे चन्द्रोऽपि तिष्ठन् जनयति नृपतिं कीर्तिशुक्लीकृताशं ।
अत्युच्चे लग्नसंस्थो रविरपि भगवान् पार्थिवं क्रूरचेष्टं
    यातायातैः समन्ताच्चतुरुदधिजलं यस्य सेनाः पिबन्ति ॥ २४ ॥

[4]उदकचरनवांशके मु(सु)स्थः
    कमलरिपुः सकलाभिरामकान्तिः ।

---

मकरगतयोः शनिकुजयोः, मिथुनगते शुक्रे, एको योगः ॥ २० ॥ १ सिंहे रविगुरू, कुंभे शनिः, वृषभे चन्द्रः, वृश्चिके कुजः, मिथुने बुधः, एवं ग्रहस्थितौ मेषे वा, वृषभे वा, कुंभे वा लग्ने त्रयो योगाः । वराहस्त्वेतस्मिन् योगे रवेर्मेषस्थितिमाह । अन्यत्सर्वं समम् ॥ २१ ॥ २ सिंहे रविगुरू, कुंभे शनिः, वृषभे चन्द्रः, वृश्चिके कुजः, मिथुने बुधः, एवं ग्रहस्थितौ मेषे वा, वृषभे वा, कुंभे वा लग्ने त्रयो योगाः । वराहस्त्वेषु योगेषु रवेर्मेषस्थितिमाह । अन्यत्सर्वं समम् ॥ २२ ॥ ३ मेषलग्नगते रवौ, तुलायां चन्द्रशन्योः, धनुषि गुरावेको योगः ॥ २३ ॥ ४ वृषभस्थे चन्द्रे, धनुषि मीने वा

उदयति विहगे षु(शु)भे स्ववर्गे

भवति नृपो यदि केंद्रति(केन्द्र)गा न पापाः ॥ २५ ॥

अ[1](आ)पूर्णमंडलकलाकलितं शशांकं

पश्यन्ति शुक्रसुरपूजितसोमपुत्राः ।

लग्नाधिपोऽतिबलवान् पृथिवीश्वरः स्यात्

वर्गोत्तमश्च नवपः(मः) खलु चेद्विलग्ने ॥ २६ ॥

व[2]र्गोत्तमे त्रिप्रभृतिग्रहेन्द्राः

केन्द्रस्थिता [ना]शुभसंस्थि(यु)ताश्च ।

नो रूक्षधूम्रा न विवर्णदेहाः

कुर्वन्ति राज्ञः प्रसरं(वं) प्रसन्नाः ॥ २७ ॥

[3]एक एव ग्रहः स्वोच्चे वर्गोत्तमगतो यदि ॥

बलवान् मित्रसन्दृष्टः कुरुते [तं] महीपतिं ॥ २८ ॥

---

शनियुक्ते गुरौ लग्नकेन्द्रगते एको योगः । वृषभस्थे चन्द्रे, मिथुने कन्यायां वा रवियुक्ते बुधे लग्नकेन्द्रगते एको योगः । वृषभे तुलायां वा कुजयुक्ते बुधे लग्नकेन्द्रगते, वृषभस्थे चन्द्रे एको योगः । एवं त्रयो योगाः पूर्वार्धोक्ताः । मेषे दशमभागे लग्ने रवावेको योग उत्तरार्धोक्तः ॥ २४ ॥ ५ कर्काटकः, मकरोत्तरार्धं, मीनः एते जलचरराशयः । एष्वन्यतमो यदि चन्द्रनवांशराशिः, स च चन्द्रः चतुर्थगतः पूर्णकिरणोऽस्ति, कश्चिच्छुभः स्वीयवर्गगतो लग्नेऽस्ति तदैको योगः । अस्मिन् योगे केन्द्रे पापग्रहसत्वे भङ्गः ॥ २५ ॥ १ बुधगुरुशुक्रैस्त्रिभिरपि पूर्णचन्द्रे दृष्टे, लग्नेशेऽतिबलयुते, लग्ने च वर्गोत्तमनवांशनवमाधिपतिभ्यां युक्ते एको योगः । नवमः नवमांशः इत्यर्थः । तस्मिन् पाठे लग्ने नवमेशयोगो नापेक्षितः । अन्यत्सर्वं पूर्ववत् ॥ २६ ॥ २ त्र्यधिकेषु ग्रहेषु वर्गोत्तमगतेषु, केन्द्रगतेषु, स्फुटधवलकिरणेष्वेको योगः । अस्मिन् योगे षष्ठाष्टमद्वादशेष्वशुभस्थानेषु ग्रहसत्वे योगभङ्गः ॥ २७ ॥ ३ वर्गोत्तमगते, स्वोच्चगते, बलिनि, मित्रग्रहदृष्टे, एकस्मिन् ग्रहे यत्र कुत्रापि स्थिते एको योगः ॥ २८ ॥

[4]शीर्षोदयर्क्षेषु गताः समस्ता(स्ता)
नीचारिवर्ज(र्जं) स्वगृहे शशांकः ।
सौम्येऽक्षितोऽन्यूनकलो विलग्ने
दद्यान्महीं रत्नगजाश्वपूर्णां ॥ २९ ॥

[1]उपचयगृहसंस्थो जन्मपो यस्य चन्द्रात्
शुभगृहमथवांशे केन्द्रयाताश्च सौम्याः ।
सकल[बल]वियुक्ता ये च पा[पा]भिधानाः
स भवति नरनाथः शक्रतुल्यो बलेन ॥ ३० ॥

[2]अत्युच्चस्थः सुरुचिरवपुस्त्वेक एव ग्रहेन्द्रो
मित्रैर्दृष्टो यदि रिपुदृशां गोचरं न प्रयातः ।
कुर्व(र्या)न्नूनं प्रसभमणि(गि)भिर्गर्जिते(तै)र्गौ रणाग्रे
नागेन्द्राश्वैश्चलवि(ति) चलितैर्यस्य तं पार्थिवेन्द्रं ॥ ३१ ॥

[3]परमोच्चे स्थितश्चन्द्रो यदि शुक्रेण दृश्यते ॥
कुर्यान्महीपतिं पूर्ण पापैरापोक्लिमोऽपगैः ॥ ३२ ॥

---

४ मिथुनसिंहकन्यातुलावृश्चिकधनुःपूर्वार्धकुंभाः शीर्षोदयाः । शुभदृष्टे पूर्णचन्द्रे कर्काटकराशिगते, इतरेषु ग्रहेषु षट्सु शीर्षोदयराशिगतेष्वेको योगः । अस्मिन् योगे शीर्षोदयराशेर्नीचशत्रुगृहान्यतरत्वे योगभङ्गः ॥ २९ ॥ १ चन्द्राश्रितराश्यधिपो जन्मपः । तस्मिन् चन्द्रतः तृतीयषष्ठैकादशदशमान्यतरराशिगते, केन्द्रगतेषु सौम्यग्रहेषु शुभगृहे वा शुभनवांशे वा स्थितेषु, पापग्रहेषु सकलबलरहितेष्वेको योगः । ॥ ३० ॥ २ एतच्छ्लोकानन्तरमेकः श्लोको मूले लुप्त इति भाति । स च कुण्डल्यां निवेशितः । परमोच्चभागगतः मित्रदृष्टः शत्रुदृष्टिरहितः स्फुटकिरणः एकोऽपि ग्रहश्चैवैको योगः । गौः-भूः २८ तमश्लोकोक्तयोगे परमोच्चगतत्वं नापेक्षितम्, वर्गोत्तमगतत्वं चाधिकमपेक्षितम् । अतो न पौनरुक्त्यम् ॥ ३१ ॥ ३ वृषभे परमोच्चां-

[3]दृश्येते शुभदैः स्वकेन्द्रभवने मित्रैश्च पापैरपि
युद्धे नो रिपुभिर्जितौ च युव(बलयु)तौ जन्मोदयर्क्षाधिपौ ।
भूपः स्वाम्निजराशिनाथनवमे चंद्रो[दये चेद्यशो
यस्येभस्रुतदानलुब्धमधुपैश्चातुर्दिशं गीयते ॥ ३३ ॥]

[1][उच्चराशिर्भवेद्धोरा यस्यासौ कुरुते नृपम् ॥
स्वांशेऽथ सुहृदुच्चांशे दृष्टः केन्द्रोऽ]पगैः शुभैः ॥ ३४ ॥

स्थितो [2]भानोः पुत्रो विरचितबलः पश्चिमार्धे मृगस्य
[रविः] सिंहे शुक[स्तु]लिनि रुधिरो मेषगः कर्कटेन्दुः ।
कुमारी(रीं) संप्राप्तो वा भवतिरश्मिशर्वरीनाथश्च(यदि भवति वा शर्वरीनाथ) सूनुः
प्रजातो भूपालश्चिरमवति म ही(गा)मेकशुक्लातपत्रां ॥ ३५ ॥

[3]वर्गोत्तमस्वभवनेषु गता ग्रहेन्द्राः
सर्वे यदा रुचिररश्मिशिखाकलापः(पाः) ।

---

गते चन्द्रे शुक्रदृष्टे, तृतीयषष्ठनवमद्वादशगतेषु पापेष्वेको योगः । अत्र तृतीयादिस्थानानि लग्नाच्चन्द्राद्वा स्वीकार्याणीति केचित् । अस्य योगस्य चन्द्रकृतत्वाच्चन्द्रादेव स्वीकार्याणीति बहवः संप्रदायविदः ॥ ३२ ॥ ४ अस्मिन् श्लोके तृतीयपादान्त्यभागः चतुर्थपादश्च लुप्तौ । उत्तरश्लोके ईषदधिकात्रयः पादा लुप्ताः । ते च कुण्डल्यां निर्वेशिताः । चन्द्राश्रितराश्यधिपलग्नाधिपौ बलयुतौ, युद्धे शत्रुभिरपराजितौ, स्वोच्चस्वराशिगतौ, शुभदृष्टौ, मित्रभूतैः पापैर्दृष्टौ चेदेको योगः । अत्र योगे चन्द्राश्यधिपस्य चन्द्रात्पञ्चमस्थितिरावश्यकी । तदभावे योगभङ्गः ॥ ३३ ॥
१ यस्य कस्यचिद्ग्रहस्योच्चराशौ लग्नगते तस्मिन् ग्रहे स्वोच्चमित्रलग्नांशान्यतमस्थे केन्द्रगतैः शुभैर्दृष्टे एको योगः ॥ ३४ ॥ २ शनौ पूर्णबले मकरोत्तरार्धगते, रवौ सिंहस्थे, बुधे कन्यास्थे, शुक्रे तुलास्थे, कुजे मेषस्थे, चन्द्रे कर्कटकस्थे, एको योगः ॥ ३५ ॥ ३ सर्वेषु ग्रहेषु वर्गोत्तमे वा स्वगृहे वा स्थितेषु स्फुटकिरणेष्वेको योगः ॥ ३६ ॥

वत्पद्यते जल[धि]सीमवतीं धरित्रीं
यः पालयेत् क्षितिपतिर्जितशत्रुभृत्य:(पक्षः) ॥ ३६ ॥

[1]केन्द्रे विलग्ननाथे सुहृद्भिरिह वीक्षिते विहगैः ॥
लग्नास्थिते च सौम्ये भूपतिरिह जायते नियतं ॥ ३७ ॥

[2]सुरपतिगुरुस्सेन्दुर्लग्ने वृषे समवस्थितो
यदि बलयुतो लग्नेशश्च त्रिकोणगृहं गतः ।
रविशनिकुजैवी(वीं)र्योपेतैर्न युक्तैर्नि(क्तनि)रीक्षितो
भवति [च]नृपः कीर्त्या युक्तो हृजा(ता)खिलकण्टका:(क) ॥ ३८ ॥

[3]न नीचगृहसंस्थिता न च रिपोर्भमप्यागताः
स्वराशिमथ वांशकं च इहोच्चमां(कानुदयगोच्चमं)शं यदि ।
कलाभिरिह पूरिते कुमुदखं(षं)डबोधप्रदे
सुहृद्भिरिह(रभि)वीक्षित:(ताः) क्षितिपतिं विदध्युर्ग्रहाः ॥ ३९ ॥

[4]यो यः स्व(पू)र्णं शिशिरकिरणं प्राप्तवर्गोत्तमांशं
सुस्पष्टार्चिर्गगनगमनः पश्यति स्वोच्चसंस्थः ।
स क्षोणीशं जनयति सदा स्वां दशां प्राप्य सौम्यः
ख्यातिं(तं) लोके यदि बलयुताः कण्टकस्था न पापाः ॥ ४० ॥

---

१ लग्नेशे केन्द्रगते मित्रदृष्टे, शुभग्रहे लग्नगते एको योगः ॥ ३७ ॥ २ वृषलग्नस्थे गुरुयुक्ते चन्द्रे, शुक्रे पञ्चमे नवमे वा बलयुते, शुक्रचन्द्रयोर्बलवत्पापग्रहदृष्टिराहित्ये एको योगः ॥ ३८ ॥ ३ सर्वेषां ग्रहाणां स्वराशिस्वनवांशस्वोच्चस्वोच्चनवांशान्यतमगतत्वे शत्रुनीचराशिगतत्वाभावे, मित्रदृष्टत्वे, चन्द्रे पूर्णे लग्ने वर्गोत्तमगते एको योगः ॥ ३९ ॥ ४ पूर्णचन्द्रे वर्गोत्तमगते स्फुटकिरणेन शुभेन स्वोच्चस्थेनेक्षेण दृष्टे एको योगः । अत्र योगे केन्द्रगते बलिनि पापे योगभंगः ॥ ४० ॥

[1]जन्मोह(द)यराशिपती बलसहितौ केन्द्रगौ हिबुकसंस्थौ ॥
इन्दुर्जलगृहगश्चेत्त्रिकोणगो वा महीपालः ॥ ४१ ॥

[2]स्वगृहे मित्रज्ञा(भा)मेषु स्वाङ्के(स्वांशे) वा मित्रराशिषु ॥
कुर्वन्ति च नरं सूतौ सार्वभौमं नराधिपं ॥ ४२ ॥

[3]परमोऽच्चगताः सर्वे स्वोऽच्चांशे यदि सोमजः ॥
त्रैलोक्याधिपतिं कुर्याद्देवदानववन्दितं ॥ ४३ ॥

[4]यस्योऽत्तरस्यां भगवान् वसिष्ठो
बृहस्पतिः प्रागपरे च भार्गवः ।
अगस्ति(स्त्य)नामा खलु दक्षिणस्यां
स राक्षसर्क्षो(क्षो)[भ]णवान(न्न)राधिपः ॥ ४४ ॥

---

१ चन्द्रराशीशो लग्नेशश्च बलयुतौ चतुर्थे वा तदन्यकेन्द्रेषु वा स्थितौ यदि चन्द्रे कर्काटके मकरपश्चार्धे मीने वा त्रिकोणगते एको योगः। अत्र केन्द्रगाविलनेनैव हिबुकस्थिविलाभेऽपि हिबुकसंस्थाविति पुनःकथनेन जन्मोदयपयोश्चतुर्थे मेलनं, अन्यत्र च यथासंभवं अवस्थानमावश्यकमिति ज्ञायते ॥ ४१ ॥ २ सर्वेषु ग्रहेषु स्वगृहमित्रगृहान्यतरस्थेषु, तत्र स्वगृहगो मित्रनवांशे, मित्रगृहगः स्वनवांशे च यदि स्यात्तदैको योगः ॥ ४२ ॥ ३ बुधे कन्यानवांशगते इतरेषु ग्रहेषु षट्सु परमोच्चगतेष्वेको योगः। इदं च पूर्वं कथितप्रायम्। तथापि सप्तग्रहाणामुच्चगतत्वस्यासंभावितत्वेन तत्प्रयुक्तराजयोगोऽसंभवीति शङ्काव्युदासायैतत्कथनं। षट्सु स्वोच्चगतेषु बुधः स्वोच्चनवांशगः स्वोच्चतुल्यफलदो भवतीति नासंभवः। विवृतं चैतत् उच्चादिचिन्ताध्याये ६ श्लोकव्याख्याने ॥ ४३ ॥ ४ लग्ने गुरुः, चतुर्थे वसिष्ठः, सप्तमे शुक्रः, दशमे अगस्त्य इत्येको योगः ॥ ४४ ॥

[1] शशी पूर्णः स्वांशं स्वगृहमथ वा स्वोच्चभ(भं) वा प्रयातो
दिवः पातुर्मन्त्री दितिजगुरुणा वीक्षितः केन्द्रसंस्थः ।
रविर्लग्ने स्वांशे(शं) यदि बलयुतः पश्यति स्यात्स भूपः
प्रभग्नं पश्यै(यस्ये)भैश्चतुरुदधिभू:(भू)श(स)लकीनामरण्यं ॥ ४५ ॥

[2] कुमुदगहनबन्धौ वीक्ष्यमाणे समस्तै
र्गगनगृहनिवासैर्दीर्घजीवी विनाश्य ।
फलमशुभसमुत्थं यच्च केमद्रुमोत्थं
भवति मनुजनाथः सार्वभौमो जितारिः ॥ ४६ ॥

[3] उच्चाभिलाषी सविता त्रिकोणे
स्वर्क्षे शशी जन्मनि य[स्य] जन्तोः ।
स शास्ति पृथ्वीं बहुरत्नपूर्णां
बृहस्पतिः कर्कटके यदि स्यात् ॥ ४७ ॥

[4] तुङ्गेषु षड्विबुधमार्गचगडयेना (रा उपेताः)
स्वर्क्षे (स्वांशे) मयूखनिकरैः परिपूरितांगाः ।

---

१ स्वांशे स्वगृहे स्वोच्चे वा स्थिते पूर्णचन्द्रे, गुरौ केन्द्रस्थे शुक्रदृष्टे, सिंहांशयुते लग्ने बलयुतरविदृष्टे एको योगः ॥ ४५ ॥ २ यत्र कुत्रचित् स्थिते चन्द्रे समस्तग्रहदृष्टे एको योगः । अत्र योगे केमद्रुमोऽपि भवति । तथापि तत्फलमभिभाव्य राजयोगफलमेव भवतीति भावः ॥ ४६ ॥ ३ परमनीचभागादारभ्य परमोच्चभागं यावन्मध्ये स्थितो ग्रह उच्चाभिलाषी । तादृशे रवौ पञ्चमे नवमे वा स्थिते, चन्द्रे कर्काटकस्थे एको योगः ॥ ४७ ॥ ४ स्फुटकिरणेषु, स्वोच्चराशौ स्वनवांशगेषु च षट्सु ग्रहेष्वेको योगः ॥ ४८ ॥

उत्पादयन्ति कुलिशांकितपादपद्मं
पृथ्वीपतिं सगरवैन्ययययातितुल्यं ॥ ४८ ॥

[1]शुभभवनसमेतैः सौम्यभागेषु सौम्यैः
स्फुटरुचिरकरौघैः प्रस्फुरद्भिर्विलग्ने ।
रविमुषितमयूखैस्तैश्च पापैरमिश्रै
गिरिगहननिवासी तापसः स्यान्नरेन्द्रः ॥ ४९ ॥

[2]इह पणफरगाः शुभप्रदा
उद(भ)यगृहे यदि पापसंचयः ।
स्वभुजहतरिपुर्महीपतिः
सुरगुरुतुल्यमतिः प्रकीर्तितः ॥ ५० ॥

[3]विलग्ननाथः स्व(ख)जलास्तसंस्थः
सुहृद्गृहे मित्रदृशां पथि स्थितः ।
करोति नाथं पृथिवीतलस्य
दुर्वारवैरीपरिनाशशीलं (रिघ्नमिहोदये शुभे) ॥ ५१ ॥

सं[4]पूर्णमूर्तिर्भगवान् शशांको
मेषांशकस्थो गुरुणा च दृष्टः ।

---

१ शुभराशौ शुभनवांशे वा स्थितेषु, लग्नगतेषु, पापैरयुक्तेषु, स्फुटकिरणेषु, रविसान्निध्याल्लुप्तकिरणेषु शुभेषु त्रिषु ग्रहेष्वेको योगः ॥ ४९ ॥ २ द्वितीयपञ्चमाष्टमैकादशगतेषु शुभेषु, मिथुनकन्याधनुर्मीनगतेषु पापेष्वेको योगः ॥ ५० ॥ ३ मित्रगृहे मित्रदृष्टे लग्नेशे, चतुर्थे सप्तमे दशमे वा स्थिते, लग्ने शुभेन केनचिद्युक्ते एको योगः ॥ ५१ ॥ ४ पूर्णचन्द्रे मेषनवांशस्थे गुरुणा दृष्टे, अन्यैरदृष्टे

नीचे न कश्चिन्न च वीक्षितोऽन्यैः

प्राह क्षितीशं यवनाधिराजः ॥ ५२ ॥

[1]लग्नाच्छशी त्रिरिपुलाभनभस्थलेषु

सूतावखण्डितवपुः पृथिवीश्वरः स्यात् ।

दृष्टः सुरेन्द्रसुहृदा न च वीक्षितोऽन्यै

र्जन्माधिपाह(पो द)शतिमः(मगः) स्मरगोऽथ वा स्यात् ॥ ५३ ॥

[2]विश्वद्र(विष्वग्र)श्मिकराळपूर्णपरिधिर्नक्षत्रसंपालक

स्तुंगांशे समवस्थितैश्च सकलैः प्रोद्वीक्षितो व्यं(व्यो)[म]गैः ।

कुर्याद्भूमिपतिं स(च)यस्य चलिते हस्त्यश्वसैन्ये मह(हीं)

द्(द)ध्याच्छेषफणः कथं कथमपि क्ष्माभारखिन्नः श्व(श्व)सन् ॥ ५४ ॥

[3]सुधामृणालोपमबिंबशोभः

शशी नवांशे नलिनीप्रियस्य ।

यदि क्षितीशो बहुहस्तिपूर्णः

शुभाश्च केन्द्रेषु न पापयुक्ताः ॥ ५५ ॥

---

एको योगः । अस्मिन् योगे यदि कश्चिन्नीचगतः स्यात्तर्हि योगभङ्गः ॥ ५२ ॥ १ तृतीये, षष्ठे, दशमे, लाभे वा स्थिते पूर्णचन्द्रे गुरुणा दृष्टे, अन्यैरदृष्टे, चन्द्रराश्यधिपे दशमे सप्तमे वा स्थिते एको योगः ॥ ५३ ॥ २ स्वोच्चनवांशगतैः सर्वैर्ग्रहैर्दृष्टे पूर्णचन्द्रे एको योगः ॥ ५४ ॥ ३ पूर्णचन्द्रे सिंहनवांशगते, पापयोगरहितेषु तिषु शुभेषु केन्द्रगतेष्वेको योगः । अत्र एकः श्लोको मूलकोशे लुप्तः । स च कुण्डल्यां निवेशितः ॥ ५५ ॥

[1][शशिबुधरुधिराङ्कैः स्वांशकस्थैर्न नीचैः
व्ययगृहसहजस्थैर्नापि सूर्यप्रविष्टैः ।
तनयभवनसंस्थे वाक्पतौ चन्द्रयुक्ते
भवति मनुजनाथः कीर्तिशुक्लीकृताशः ॥ ५६ ॥

[2]नीचारिराशि(वर्ग)रहितैर्विहगैस्त्रिभिश्च
तुङ्गांशके(स्वांशोपगै)र्बलयुतैः शुभदृष्टिदृष्टैः ।
गोक्षीरशंखधवलो मृगलांछनश्च
स्याद्यस्य जन्मनि [स] भूमिपतिर्जितारिः ॥ ५७ ॥

[3]कुमुदगहनबन्धुः(धुं) श्रेष्ठमंशं प्रपन्नो(न्नं)
यदि बलसमवेतः पश्यति व्योमचारी ।
उदयभवनसंस्थः पापको नैव नीचे(संज्ञो नचैवं)
भवति मनुजनाथः सार्वभौमः सुदेहः ॥ ५८ ॥

[4]जलचरराशिनवांशक दं(इं)दौ
तनुभवने शुभदे प्व(स्व)कवर्गे ।
[अ]शुभखगैः खलु कंटकहीनै
भवति नृपो बहुवारणनाथः ॥ ५९ ॥

---

१ चन्द्रकुजबुधेषु व्यये चतुर्थे तृतीये च क्रमेण स्थितेषु स्वनवांशकस्थेषु, नीच-राशिमौढ्यरहितेषु, पञ्चमे गुरुयुक्ते चन्द्रे एको योगः ॥ ५६ ॥ २ त्रिषु ग्रहेषु नीचारिवर्गं विहाय स्थितेषु, स्वांशे तुंगांशे वा स्थितेषु, शुभदृष्टेषु बलयुतेषु, पूर्णे चन्द्रे एको योगः ॥ ५७ ॥ ३ लग्नस्थो बली नीचरहितश्च कश्चिच्छुभः स्वोच्चस्वांशगतं चन्द्रं यदि पश्यति तदैको योगः ॥ ५८ ॥ ४ पापेषु केन्द्ररहितेषु, लग्ने स्ववर्गे शुभः कश्चिद्यदि

[1]वर्गोत्तमे हिमकरः सकलः स्वकेंऽ(स्थितो)शे
कुर्यान्महीपतिमपूर्वयशोऽभिरामं ।
यस्याश्ववृन्दखुरपातरजोभिभूतो
भानुः प्रभातशशिनोऽनुकरोति रूपं ॥ ६० ॥

### सर्वग्रहकृतयोगफलम्

सर्वग्रहकृते योगे चक्रवर्तीश्वरो भवेत् ॥

### एकैकग्रहकृतयोगफलम्

एकैकेन तथा जाता मण्डलानामधीश्वराः ॥ ६१ ॥

[2]एकोऽपि विहगः कुर्यादुच्चभांशगतो नृपं ॥
समस्तबलसंपन्नश्चक्रवर्तित्व(न)मेव च ॥ ६२ ॥

[3]पश्यति [यदि] चन्द्र[म]सं विबुधगुरुर्वृषभसंस्थितं प्रसवे ॥
अवति पृथिवीमुदग्रां स्फु[र]न्मणिद्योतितदिगन्तां ॥ ६३ ॥

[4]कुर्यात्तुङ्गे त्रिकोणे वा स्वराशिस्थो विलोकयन् ॥
ग्रहस्तुषारकिरणं निषादमपि पार्थिवं ॥ ६४ ॥

---

स्यात्, चन्द्रे कर्काटकमकरमीननवांशगते एको योगः ॥ ५९ ॥ १० वर्गोत्तमगते पूर्णचन्द्रे एको योगः ॥ ६० ॥ २ स्वोच्चे स्वोच्चनवांशे वा स्थिते पूर्णबले एकस्मिन् ग्रहे एको योगः ॥ ६१ ॥ ३ वृषभस्थे चन्द्रे गुरुदृष्टे एको योगः ॥ ६२ ॥ ४ स्वोच्चे मूलत्रिकोणे, स्वराशौ वा स्थितो ग्रहश्चन्द्रं पश्यति यदि तदैको योगः ॥ ६२ ॥

[1]स्वगृहे तृतीयभागे शश(शी) स्थितः पार्थिवं कुरुते ॥
परिपूर्णबलाः शुभदा यदि प्रसूतौ महाराजं ॥ ६५ ॥

[2]स्वांशे दिवाकरो यस्य स्वक्षेत्रे च क्षपाकरः ॥
स राजा गजदानौघशीकरोक्षितभूतलः ॥ ६६ ॥

[3]लग्ने रविपुत्रसंयुते देवेज्येऽस्तगते न चोदिते ॥
दृष्टेऽसुरराजमन्त्रिणा ग्रामि(मी)णो नृपतिर्भवेदिह ॥ ६७ ॥

[4]उदयेऽसुरमन्त्रिवरो गुरुदृष्टिपथं च प्रगतः ॥
कुरुते नियतं स नृपं यदि वुं(तुं)गगतश्च बुधः ॥ ६८ ॥

[5]शुक्रभास्करेंदवो भागमेकमाश्रिताः ॥
जीवदृष्टमात्रकाः स्यात्तदा महीपतिः ॥ ६९ ॥

[6]लग्नगाः सितशशांकजभौमाः
सप्तमे शशिनि वाक्पतियुक्ते ।
तिग्मरश्मितनयेन च दृष्टे
जायते पृथुयशाः पृथिवीशः ॥ ७० ॥

---

१ आश्लेषाद्वितीयतृतीयचतुर्थपादगते चन्द्रे शुभेषु त्रिषु पूर्णबलेष्वेको योगः ॥ ६४ ॥ २ सिंहांशगते सूर्ये, कर्काटकगते चन्द्रे एको योगः ॥ ६५ ॥ ३ शनौ लग्नगते, मूढे गुरौ सप्तमगे शुक्रदृष्टे एको योगः । अत्र शुक्रस्य तृतीयदृष्ट्यैव योगनिर्वाहः । दृष्ट्यन्तरासंभवात् ॥ ६६ ॥ ४ बुधे स्वोच्चगते, गुरुदृष्टे शुक्रे लग्नगते एको योगः ॥ ६७ ॥ ५ सूर्यचन्द्रशुक्राः समानभागाश्रिता गुरुदृष्टाश्चेदेको योगः ॥ ६८ ॥ ६ बुधकुजशुक्रेषु लग्नगतेषु, शनिदृष्टे गुरुयुक्ते चन्द्रे सप्तमगते एको योगः ॥ ६९ ॥ ७० ॥

[1]विबुधगुरुर्यदि भौमनवांशे
रुधिरनिरीक्षितपूर्णबलश्च ।
जनयति कुत्सितजन्ममहीपं
क्रियपरिसंस्थितकर्मगतोऽर्कः ॥ ७१ ॥

[2]तृतीयगाः शुक्रशशिज्ञभास्कराः
कुजोऽस्तसंस्थो नवमे बृहस्पतिः ।
गणोत्तमो लग्नगृहांशकोद्गमो
यदा तदा हीनकुले(लो) महीपतिः ॥ ७२ ॥

[3]जीवो बुधो भृगुसुतोऽथ निशाकरो वा
धर्मे विशुद्धतनवः स्फुटरश्मिजालाः ।
मित्रैर्निरीक्षितयुता यदि सूतिकाले
कुर्वन्ति देवसदृशं नृपतिं महान्तं ॥ ७३ ॥

[4]तपोगृहं यस्य भवेत्तदुच्चकं
ग्रहेण तेनाथ युतं निरीक्षितं ।
ग्रहद्वयं स्वोच्चगतं यदा भवेत्
तदा कुटुंबी नियतं महीपतिः ॥ ७४ ॥

---

१ कुजदृष्टे पूर्णबले गुरौ कुजनवांशगते, मेषे रवौ, कुळीरे लग्ने एको योगः || ७० || २ रविचन्द्रबुधशुक्रेषु तृतीयगेषु, कुजे सप्तमगे, गुरौ नवमगे, लग्ने वर्गोत्तमगते एको योगः || ७१ || ३ शुद्धबिम्बानां स्फुटकिरणानां चन्द्रबुधगुरु-शुक्राणामन्यतमे नवमगते मित्रयुते मित्रदृष्टे चैको योगः || ७२ || ४ नवमे कस्यचिद्ग्रहस्योच्चे सति, तेन ग्रहेण युक्ते दृष्टे वा स्वोच्चगते ग्रहद्वये एको योगः || ७३ || ७४ ||

[1]शुभ(सुत)भवने शशिदेवनमस्यौ
भवनपतिप्रसमीक्षितदेहौ ।
भृगुतनयो प(य)दि मीनमुपेतो
भवति नृपः खलु कुत्सितवंशे(शः) ॥ ७५ ॥

[2]चन्द्रस्त्रिपुष्करस्थः स्वोच्चे वचसां [पतिः सलक्ष्मीकम्] ॥
[उत्पादयति] स्वामिनमुत्तममानं समग्रभुवः ॥ ७६ ॥

[3]केन्द्रे स्वोच्चमुपेतः सुरमन्त्री दशमगो यदा शुक्रः ॥
नूनं भवन्ति पुरुषाः समस्तपृथिवीश्वराः ख्याताः ॥ ७७ ॥

[4]स्वर्क्षे शशी विपुलरश्मि[शि]खाकलापाः
स्वांशे स्थिता बुधबृहस्पतिदानवेज्याः ।
पातालगा दिनकरेण निरीक्षिताश्च
[ते] सूचयंति नृपतिं द्विजवंशजातं ॥ ७८ ॥

[5]रविर्निभस्थ(स्थः) स्वत्रिकोणगोऽपि वा
स्वराशिसंस्थाः [सि]तजीवचन्द्रजाः ।

---

१ शुक्रे मीनगते, नवमस्थयोर्नवमाधिपतिदृष्टयोश्चन्द्रगुर्वोरेको योगः । सुतभवने इति पाठेऽप्येवमेव व्याख्येयम् ॥ ७५ ॥ २ गुरावुच्चगते, चन्द्रे तृतीये दशमे वा स्थिते एको योगः ॥ ७६ ॥ ३ गुरौ कर्काटकगे केन्द्रगते, दशमगे शुक्रे एको योगः ॥ ७७ ॥ ४ स्फुटकिरणेषु स्वांशस्थितेषु रविदृष्टेषु चतुर्थगेषु बुधगुरुशुक्रेषु, चन्द्रे कर्काटकगते एको योगः ! अत्र योगे पाददृष्टिरेवापेक्षिता । तदन्यासा-मसंभवात् ॥ ७८ ॥ ५ सूर्ये मेषे सिंहे वा स्थिते, बुधे तृतीयगे, गुरौ षष्ठगते, शुक्रे एकादशगते, चन्द्रे कर्काटकलग्नगे एको योगः ॥ ७९ ॥

त(तृ)तीयषष्ठायगताश्च चन्द्रता:(त:)
कुर्वन्ति गोपालमिह क्षितीश्वरं ॥ ७९ ॥

[1]सप्तमभवने सौम्या मित्रांशगताः सुहृद्भिरिह दृष्टाः ॥
उच्चे कुजो यदि नृपः समस्तनृ[प]पालकः श्रेष्ठः ॥ ८० ॥

[2]रविशशिबुध[व]क्रैर्व्योम्नि मित्रांशकस्थै
र्न च रिपुभवनस्थैर्नाप्यदृश्यैर्न नीचैः ।
सतपरि(सि) भृगुपुत्रे भूपतिः स्यात्प्रयाणे
गजमदजलसेकैर्नी(र्ली)यते यस्य रेणुः ॥ ८१ ॥

[3]स्वोच्चे भानुः प्रकटितबलो व्योममध्ये सजीवः
शुक्रो धर्मे यदि कुजयुतः स्वं नवांशं प्रपन्नः ।
लग्ने वर्गः(र्गे) शुभगगनगो राजपुत्रेण दृष्टो
पृथ्वीपालो धवलितजगत्स्पर्शि(स्यात् सि)तैः स्वैर्यशोभिः ॥ ८२ ॥

[4]वृषे शशी लग्नगतः सुपूर्णः
सितेन दृष्टो वणिजि स्थितेन ।

---

१ कुजे मकरगते, बुधगुरुशुक्रेषु मित्रदृष्टेषु मित्रांशगतेषु सप्तमस्थेष्वेको योगः ॥ ८० ॥ २ शत्रुनीचगृहरहितेषु मौढ्यरहितेषु रविचन्द्रकुजबुधेषु दशमगेषु, शुक्रे नवमगे एको योगः ॥ ८१ ॥ ३ मेषगते बलयुते गुरुयुते रवौ, कर्काटकलग्ने एको योगः । स्वनवांशगते शुक्रे कुजयुते नवमगते एको योगः । लग्ने वर्गोत्तमगते शुभग्रहे राजपुत्रेण बुधेन दृष्टे एको योगः । एवं त्रयो योगाः ॥ ८२ ॥ ४ पूर्णचन्द्रे वृषभलग्नगते, बुधे चतुर्थगते, शुक्रे तुलागते एको योगः । अत्र, वणिजि स्थितेन सितेन दृष्टो वृषे शशी इति कथनेन. "एतदप्याशोक्ता दृष्टयो यथासंभवं

बुधोऽपि पातालगतो यदि स्यात्
तदान्यजातो भवति क्षितीशः ॥ ८३ ॥

[1]क्षमासुतः स्वोच्चमुपाश्रितो बली
रवीन्दुवाचस्पतिभिर्निरीक्षितः ।
भवेन्नरेन्द्रो यदि कुत्सितस्तदा
भवेद्धि(समस्त)पृथ्वीपरिरक्षणक्षमः ॥ ८४ ॥

[2]जायतेऽभिजिति यः शुभ[कर्मा
भूपतिर्भवति सोऽतुलवीर्यः ।
नीचवेश्मकुलजोऽपि नरोऽस्मिन्
राजयोग इति सव्यपदेशः ॥ ८५ ॥]

[3][गण्डान्तविष्टिपरिघव्यतिपातजा]त
स्ताराधिपः स[मु]ह यदा प्र(दये यदि)कृत्तिकाद्याः(यां) ।

---

पादमिता वा पादद्वयमिता वा पादत्रयमिता वा पूर्णा वा प्रायाः । न पूर्णा एवेति नियम" इति सूचितम् । वृषभस्थचंद्रे तुलास्थशुक्रस्य पूर्णदृष्टेरयोगात् । अत एव मया तथैव क्वचित्कचिद्व्याख्यातम् ॥ ८३ ॥ १ तुलयुते कुजे मकरगते रविचन्द्रगुरुदृष्टे एको योगः ॥ ८४ ॥ २ अस्मिन् श्लोके ईषदूनः प्रथमः पादो वर्तते । अवशिष्टो भागो लुप्तः । अग्रिमश्लोके ईषदूनः प्रथमः पादो लुप्तः । लुप्तो भागः पूरितः कुण्डल्यां निवेशितश्च । उत्तराषाढानक्षत्रे चतुर्थः पादः, श्रवणे प्रथमाश्चतस्रो नाड्यश्च अभिजिन्नक्षत्रम् । तत्र चन्द्रे जातो राजा भवति ॥ ८५ ॥
३ आश्लेषाज्येष्ठारेवतीनामन्त्याः पादाः, मघामूलाश्विनीनामाद्याः पादाश्च गंडान्तम् । कर्कटकवृश्चिकमीनानामन्त्यपादाः सिंहधनुर्मेषाणामाद्यपादाश्च गंडांतं ।

कीड(डे)त्कृपाणफलकाहवचन्द्रयो(ण्डवे)ग
प्रोत्था(त्था)पिताहितशिरोभिरिहावनीशः ॥ ८६ ॥

[1]बुधोदय(ये) स[प्त]मगे बृहस्पतौ
चन्द्रे कुळीरे सुखराशिगेऽमले ।
वियद्गते भार्गवनन्दने ग्रहे
य(यः) शास्ति पृथ्वीं मनुजो निराकुलः ॥ ८७ ॥

चक्रयोगः

[2]एकान्तरौ विहगौ(रैर्विहङ्गैः) षड्भिशुके(श्चक्रं) क्षितीश्वरं कुर्यात् ॥
अत्रैव शुभे लग्ने सकलमहीपालको नृपतिः ॥ ८८ ॥

समुद्रयोगः

[3]अयमेव समुद्राख्यो द्वौ लग्ने यदि संस्थितौ ॥
करोति भूभुजां नाथं सौम्यैः केन्द्रेषु संस्थितैः ॥ ८९ ॥

---

पंचमीदशमीपञ्चदशीनामन्त्यास्तस्रो नाड्यः षष्ठीप्रथमैकादशीनामाद्याश्चतस्रो नाड्यश्च गण्डान्तं । विष्टिः भद्राकरणं । परिघव्यतिपातौ निन्द्ययोगौ । एतेषु जातो राजा भवति । कृत्तिकायां लग्नगते चन्द्रे च राजा भवति ॥ ८६ ॥ १ मेषलग्ने बुधे, सप्तमे गुरौ, चतुर्थे पूर्णचन्द्रे, दशमे शुक्रे एको योगः ॥ ८७ ॥ २ लग्नतृतीयपञ्चमसप्तमनवमैकादशगतेषु सर्वेषु ग्रहेष्वेको योगः । अत्र षट्सु स्थानेष्वेकस्मिन् स्थाने ग्रहद्वयं, शिष्टेषु पंचस्वेकैको ग्रहो यदि भवति तर्ह्ययं योगः । अस्मिन् योगे लग्ने शुभग्रहे सति सकलमहीपालकः स्यात् । लग्ने पापयुक्ते मध्यमो नृपः स्यात् । एवं द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशगतेषु सर्वेषु ग्रहेष्वपरो योगः ॥ ८८ ॥ ३ पूर्वोक्तचक्रयोगद्वयमध्ये प्रथमयोगे लग्ने ग्रहद्वयसत्वे समुद्रयोगः ।

पङ्क्तियोगः

[1]निरन्तरं यदि भवनेषु षड्ग्रहः(ट्सु)
ग्रहाः स्थिता उदयगृहात्समस्ताः ।
स पङ्क्तिरित्यवनी(नि)पतिं [प्र]कुर्यात्
चतुष्टयो(या)दव(पि) नृपमंत्रिणं च ॥ ९० ॥

[2]सुतमु(सु)खदुश्चिक्यगता यदि कु(क)र्म[णि] का(की)र्तयन्ति भ(य)
वनाया:(याः) ॥
बन्धुसुतार्थगता(जा)ढ्यो बहुभृत्यो जायते क्षितिपः ॥ ९१ ॥

नगरयोगः

[3]कर्मास्तत(ज)लहोरासु ग्रहाः सर्वे प्रतिष्ठिताः ॥
कुर्वन्ति तम(नग)रं ता(ना)[म] यत्र स्यात्पृथिवीपतिः ॥ ९२ ॥

[4]मदतनुमु(सु)खसंस्थिताः [शुभाः] समग्राः
कुज[रवि]रविजाश्च(स्त्रि)धर्मलाभसंस्थिताः(संस्थाः) ।

---

पूर्वोक्तचक्रयोगद्वयेऽपि केन्द्रगतेषु शुभग्रहेष्वपरौ द्वौ समुद्रयोगौ ॥ ८९ ॥

१ लग्नादारभ्य षट्सु राशिषु क्रमेण एकैकस्मिन् राशावेकैकग्रहरीत्या समस्तु ग्रहेषु सत्सु पङ्क्तियोगः। अत्र जातो राजा भवति। एवं चतुर्थात् सप्तमात् दशमाच्च त्रयः पङ्क्तियोगाः पूर्ववद्भवन्ति। तेषु जातो नृपमन्त्री भवति ॥ ९० ॥

२ तृतीयचतुर्थपञ्चमदशमेषु चतुर्ष्वपि स्थितेषु सर्वेषु ग्रहेष्वेको योगः ॥ ९१ ॥

३ लग्नचतुर्थसप्तमदशमेषु चतुर्ष्वपि स्थितेषु सर्वेषु ग्रहेष्वेको योगः ॥ ९२ ॥

४ लग्नचतुर्थसप्तमेषु त्रिष्वपि स्थानेषु सर्वेषु शुभग्रहेषु सत्सु, तथा कुजरविशनिषु तृतीयनवमैकादशेष्वेकैकस्थाने एकैकग्रहरीत्या स्थितेष्वेको योगः ॥ ९३ ॥

यदि भवति महीपतिः प्रशान्तमूर्ति

यवनपतिकृतो बु(ह्य)यं महीपयोगः ॥ ९३ ॥

कलशयोगः

[1]लाभधर्मस्थिताः सौम्याः [पापाः] कर्मणि संस्थिताः ॥

नृपती[ना]मयं योगो भवेत्कलशसंस्थिताः(ज्ञितः) ॥ ९४ ॥

पूर्णकुम्भयोगः

[2]त्रयो ग्रहा भ्रातृसुतार्थसंस्थिता

[त]पोद्भवौ(था शुभौ) द्वौ परिरि(पु)संम(ग)तौ च ।

कलत्रलग्नं च गताव(तौ च) शेषौ

नृपस्य योगः खलु पूर्णकुंभः ॥ ९५ ॥

सुविस्तरं नीचकुलोऽद्भवा स(म)या

विचित्ररूपाः कथिताः क्षितीश्वराः ।

॥ इति नीचकुलजानां राज्यप्रदा योगाः ॥

---

## ॥ अथ राजकुलजानां राज्यप्रदा योगाः ॥

अतः परं पार्थिववंशजाश्च(नां)

भवन्ति योगा मुनिभिः प्रकीर्तिताः ॥ ९६ ॥

---

१ नवमैकादशस्थानद्वयगतेषु सर्वेषु शुभग्रहेषु, दशमगतेषु सर्वेषु पापग्रहेषु कलशयोगः ॥ ९४ ॥ २ षष्ठे शुभग्रहद्वययुते लग्नद्वितीयतृतीयपञ्चमसप्तमेष्वेकैकग्रहसद्भावे पूर्णकुम्भयोगः ॥ ९५ ॥

[१]सिंहोदये दिनकरो मृगलांछनोऽजे
कुंभस्थितो रविसुतः स्वगृहे सुरेज्यः ।
स्वोच्चेऽपि भूमितनयः पृथिवीश्वरस्य
जन्मप्रदः सकललोकनमस्कृतस्या(स्य) ॥ ९७ ॥

[२]स्यु(शु)भे लग्नं याते बलवति तथा धर्मराशिं क्रमेण
शुभे(भैः) [ब्व] शेषैर्लग्नं धनमथ गृहं त्र्यायषट्कर्मगैर्वा ।
महीभर्ता श्रीमान्भवति नियतं यस्य मातंगसंघाः
प्रयाणे मेघानां शु(स्नु)तमद्जलैर्घा(र्घ्रा)तिमुत्पादयन्ति ॥ ९८ ॥

[३]दनुजप ति गुरुर्बंधुस्थाने स्ववेश्मगतो यदा
तुहिनकिरणः संपूर्णागस्तरा:(पः)समवस्थि[तः] ।
[त्रि]तनुभवनं(न)प्राप्ताः शेषा ग्रहा यदि भूपति
भवति धृतियुक् स्फीतश्रीकस्तदा बहुवाहनः ॥ ९९ ॥

[४]स्वो[च्चो]दये कृतपदा(दः) कुमुदस्य बन्धु
र्जीवोऽर्थगो वणिजि दानवपूजितश्च ।

---

१ सिंहलग्ने सूर्यः, मेषे चन्द्रः, कुंभे शनिः, धनुषि मीने वा गुरुः, मकरे कुजः यदि भवति तर्ह्येको योगः ॥ ९७ ॥ २ एकस्मिन् बलिनि शुभग्रहे लग्नगते, अवशिष्टेषु शुभग्रहेषु लग्ने वा, द्वितीये वा, तृतीये वा, षष्ठे वा, नवमे वा, दशमे वा, एकादशे वा स्थितेष्वेको योगः ॥ ९८ ॥ ३ शुक्रे चतुर्थे स्वराशिगते, पूर्णचन्द्रे नवमगते, शेषेषु ग्रहेषु लग्ने तृतीये वा स्थितेष्वेको योगः ॥ ९९ ॥ ४ वृषभलग्नगते चन्द्रे, मिथुनगते गुरौ, तुलागते शुक्रे, शेषेषु ग्रहेषु मीनगतेष्वेको योगः ॥ १०० ॥

शेषाश्च मत्स्ययुगले यदि दैवमार्गी
चन्द्रास्यु(न्द्रांशु)निर्मलयशा भवति क्षितीशः ॥ १०० ॥

[1]नक्षत्रनाथसहितः सविता नभस्थः
करोत्यवश्यं नृपनृपतिमस्ते
सौरि[विलग्नभवने हिबुके सुरेज्य: ।]
[देवारि]पूज्यबुधभूमिसुतैः सलाभैः
ख्यातो महीपतिरिह स्वगुणैर्नरः स्यात् ॥ १०१ ॥

[2]मृगराशिं परित्यज्य स्थितो लग्ने बृहस्पतिः ॥
करोत्यवश्यं नृपतिं मत्तेभपरिवारितं ॥ १०२ ॥

[3]लग्ने भौमो रविजसहितस्तीव्ररश्मिः खमध्ये
वाचां स्वामी दशमगृहगो भार्गवः सप्तमस्थः ।
आये हेम्नः शिशिरकिरणो बन्धुराशिं प्रपन्नो
यद्येवं स्याद्विमलयशसो जन्म भूपालकस्य ॥ १०३ ॥

---

१ अस्य श्लोकस्य द्वितीयतृतीयपादावपूर्णौ । तौ मया पूरितौ । स्थूलाक्षरनिर्दिष्टो भागोऽधिकः । स च त्याज्यः । लग्नगते शनौ, चतुर्थगते गुरौ, दशमगते चन्द्रयुक्ते रवौ, एकादशगतेषु कुजबुधशुक्रेष्वेको योगः ॥ १०१ ॥ २ मकरभिन्नराशौ लग्नगते गुरावेको योगः ॥ १०२ ॥ ३ लग्नगते शनियुते कुजे, चतुर्थगते चन्द्रे, शुक्रे सप्तमगे, दशमगे रवियुक्ते गुरौ, एकादशगते बुधे एको योगः ॥ १०३ ॥

[1]सूते(क्षीणोऽ)पि कुमुदबन्धुः स्वोऽच्चगतः पार्थिवं करोति तरां(नरं) ॥
किं पुनरखण्डमण्डलहिमकरधवलप्रकटितदीप्तिः ॥ १०४ ॥

[2]लग्नं विहाय केन्द्रे [स]कलकलापूरितो निशानाथः ॥
विदधाति महीपालं विक्रमध[न]वाहनोपेतं ॥ १०५ ॥

[3]यदि पश्यति दानवार्चितं वचसामधिपस्तदा भवेत् ॥
नृपतिर्बहुनागनायको भुजगेंद्र द्रच(इव) प्रतापवान् ॥ १०६ ॥

[4]दिवौकसां पतेर्मन्त्री कुर्यात्पश्यन्बुधं नरं ॥
यशोभिः शासनं यस्य धारयन्ति नृपाः सदा ॥ १०७ ॥

[5]लग्नाधिपतिः स्वोच्चे पश्यन् शशलाञ्छनं नरं कुरुते ॥
बहुगजतुरगबलौघैः क्षपितविपक्षं महाविभवं ॥ १०८ ॥

[6]इन्दुः स्वोच्चे पश्यन् करोति बुधभार्गवौ नरं नृपतिं ॥
प्रणतारिपक्षमुच्छ्रितयशसं सौभाग्यवंतं च ॥ १०९ ॥

[7]अधिमित्रांशगश्चन्द्रो दृष्टो दानवमन्त्रिणा ॥
निशासु कुरुते लक्ष्मीं ध्वजच्छत्रगजाकुलां ॥ ११० ॥

---

१ क्षीणचन्द्रेऽपि स्वोच्चगते राजा भवति। किमुत पूर्णचन्द्रे स्वोच्चगते इति भावः ॥ १०४ ॥ २ पूर्णचन्द्रे चतुर्थे वा, सप्तमे वा, दशमे वा स्थिते एको योगः ॥ १०५ ॥ ३ गुरुदृष्टे शुक्रे एको योगः ॥ १०६ ॥ ४ गुरुदृष्टे बुधे एको योगः ॥ १०७ ॥ ५ स्वोच्चगतेन लग्नाधिपतिना दृष्टे चन्द्रे एको योगः ॥ १०८ ॥ ६ बुधयुक्ते शुक्रे स्वोच्चगतेन चन्द्रेण दृष्टे एको योगः ॥ १०९ ॥ ७ तस्मात् द्वितीय-तृतीयचतुर्थपञ्चमैकादशद्वादशगतास्तत्कालमित्राणि। एको ग्रहो ग्रहान्तरस्य समावतो

[1]स्वांशेऽधिमित्रभागे च(वा) गुरुणा यदि दृश्यते ॥
शशी महीपतिं कुर्याद्दिवसे वा(ना)त्र संशयः ॥ १११ ॥

[2]जन्माधिपतिः केन्द्र(न्द्रे) बल[परि]पूर्णः करोति परिमृद्धो(रमर्धिम्) ॥
ब्राह्मणकुलेऽपि नृपतिं किं पुनरवनीशसंभूतं ॥ ११२ ॥

अंगदेशाधिपयोगः

[3][र]विरप्यधिमित्रस्थो यदि चन्द्रं समीक्षते ॥
अंशकाधि(गदेश)पतिं कुर्याद्धर्मार्थसहितं नृपं ॥ ११३ ॥

मगधदेशाधिपयोगः

[4]उच्चस्थः शशितनयः कुमुदाकरबन्धुना च समृद्धिं(मधि)गतः ॥
त(ज)नयति मगधाधिपतिं गजमदगंधेन वासितदिगंतं ॥ ११४ ॥

प्रधानबलसंयुक्तः संपूर्णः शशलांछनः ॥
एकोऽपि कुरुते जातं नराधिपमरिंदमं ॥ ११५ ॥

केन्द्रे विलग्ननाथः श्रेष्ठबलो मानवाधिपं कुरुते ॥
गोपालकुलेऽपि नरं किं पुनरवनीश्वराणां हि ॥ ११६ ॥

---

मित्रभूतः सन् तत्कालमित्रमपि यदि भवति तर्हि स ग्रहस्तस्य ग्रहस्याधिमित्र-मित्युच्यते । चन्द्रे अधिमित्रनवांशगते शुक्रदृष्टे, रात्रौ जन्मन्येको योगः ॥ ११० ॥
१ स्वनवांशके वा, अधिमित्रनवांशके वा स्थिते चन्द्रे गुरुदृष्टे, दिवा जन्मन्येको योगः ॥ १११ ॥ २ पूर्णबले चन्द्रराश्यधिपतौ केन्द्रगते एको योगः ॥ ११२ ॥
३ चन्द्रे अधिमित्रराशिगतेन रविणा निरीक्षिते एको योगः ॥ ११३ ॥ ४ उच्चगते बुधे चन्द्रयुक्ते एको योगः ॥ ११४ ॥

[1]कर्कटसंस्थे(स्थः) केन्द्रे [शशिनो] बृहस्पतिर्दशमधामगतः ॥
चतुरुदधिमेखलायाः स्वामी भूमेर्भवति ता(तजा)तः ॥ ११७ ॥

केरलकर्णाटान्ध्रद्रविडचोलदेशाधिपयोगः

[2]मेधे(षे) सहस्ररश्मिः सह शशिक(ना) संस्थितः करोति नृपम् ॥
केरलकर्णयं(र्णाटां)ध्र[द्र]मि(वि)डानां शोणकुलस्य(चोलकस्यापि) ॥ ११८ ॥

काश्मीरदेशाधिपयोगः

[3]उच्चस्थस्त्रिदशगुरुः कैरववनबन्धुसंगमं प्राप्तः ॥
काश्मीरमण्डलभुवः करोति पुरुषाधिपमवश्यं ॥ ११९ ॥

[4][तुं]गायस्वगृहोदयकं[ट]क[नव]मे(मे)षु यस्य शुक्रगुरू ॥
सोऽवश्यं भवति नरो राजाङ्गसमुद्भवो नृपतिः ॥ १२० ॥

[5]सं(दिक्)स्थानका[ला]दिबलैः समेताः
शुभग्रहाः केन्द्रमुपागताश्च ।
कुर्व[ति] पापैरविमिश्रवा(चा)राः
पृथ्वीपतिं त्रिप्रभृतिग्रहेन्द्राः ॥ १२१ ॥

---

१ गुरौ कर्काटकगते, कुळीरे तुलायां मकरे मेषे वा चन्द्रयुते, तुलाराशौ लग्नगते एको योगः ॥ ११७ ॥ २ चन्द्रयुक्ते रवौ मेषगते एको योगः ॥ ११८ ॥ ३ स्वोच्चस्थे गुरौ चन्द्रयुक्ते एको योगः ॥ ११९ ॥ ४ स्वोच्चस्वगृहान्यतरगतौ शुक्रगुरू केन्द्रे वा, नवमे वा, लाभे वा स्थितौ चेदेको योगः ॥ १२० ॥ ५ बलयुतेषु केन्द्रगतेषु पापदृग्योगहीनेषु बुधगुरुशुक्रेषु त्रिषु ग्रहेषु, पूर्णचन्द्रयुतेषु वा तेषु त्रिषु योगद्वयम् ॥ १२१ ॥

[1]रवेर्द्वितीये बुधजीवभार्गवा
नवा(चा)शुभैर्दृष्टयुता न सूर्यगाः ।
स्फुटत्करौघस्फुटपिंजरीकृता
नरं प्रकुर्युस्त्रिसमुद्रपालकं ॥ १२२ ॥

[2]कुन्दाब्जकाशधवलः परिपूर्णमूर्ति
र्जन्माधिपेन बलिना शुभदेन दृष्टः ।
स्त्रीमानभंगनिपुणं दधतं(यितं) क्षपायाः
प्रख्यातकीर्तिसुनयं कुरुते नरेन्द्रं ॥ १२३ ॥

देवमन्त्री कुटुम्बस्थो भार्गवेन समन्वितः ॥
जनयेद्वसुधापालं निर्जितारातिमण्डलं ॥ १२४ ॥

[3]कारकयोगे जाता भवन्ति पृथिवीभुजो नरा येषां ॥
गजतुरगपत्तिविदलितरजोवितानं भवेद्गगने(नम्) ॥ १२५ ॥

---

१ सूर्यात् द्वितीयगेषु पापदृष्टियोगरहितेषु स्फुटकिरणेष्वनस्तमितेषु बुधगुरुशुक्रेष्वेको योगः || १२२ || २ बलिना चन्द्रराश्यधिपेन शुभग्रहेण दृष्टे पूर्णचन्द्रे एको योगः || १२३ || ३ स्वोच्चे वा, स्वमूलत्रिकोणे वा, स्वक्षेत्रे वा, स्थिता ग्रहा यद्यन्योन्यं केन्द्रगतास्तर्हि परस्परं कारकाः स्युः । तथा स्वोच्चांशे वा, स्वनवांशे वा, मित्रनवांशे वा स्थिता ग्रहाः दशमस्थो रविश्च मिथः कारकाः स्युः । तथा लग्ने चतुर्थे दशमे वा स्थिता ग्रहा मिथः कारकाः स्युः । एकादशगताः पूर्वोक्तस्थानगताश्च मिथः कारकाः स्युरिति केचित् । नैतद्बहूनां मतम् । एवमुक्तदिशा कारकतामापन्नानां ग्रहाणां दशायां ये जायन्ते ते राजानो भवन्तीति भावः || १२५ ||

[1]कुजे विलग्ने तरणेश्च नन्दने
रसातले शुक्रबृहस्पतीन्दुजैः ।
मृगोदये मन्दनवांशकस्थिते
रसातलेसौ(शो) भवति क्षितीश्वरः ॥ १२६ ॥

[2]स्वोच्चे गुरुस्तनुगतः स्वगृहे शशांकः
शुक्रो रु(झ)षे परममुच्चमितोऽसितश्च ।
मेषे तथैव सविता भगवान् कुजश्च
स्वर्क्षा(र्गा)धिपो यदि भवेन्नृपतिः प्रजातः ॥ १२७ ॥

[3]शु(श)केज्याव(ढ्यः स)सितः शुचिस्तिमियुगे स्वोच्चे च पूर्णः शशी
दृष्टस्तीव्रविलोचनेन दिनकृन्मेषे यदासौ नृपः ।
सेनायाश्चलनेन रेणुपटलैर्यस्य प्रनष्टे रवा
वस्तभ्रांतिसमाकुला कमलिनी सङ्कोचमागच्छति ॥ १२८ ॥

[4]क्रूरेनी(रैर्नी)चै रिपुभवनगैः षष्ठदुश्चिक्यगैर्वा
सौम्यैः स्वोच्चं परमुपगतैर्निर्मलैः केन्द्रगैश्च ।

---

१ शनिनवांशयुते मकरलग्ने शनिकुजयुते, मेषगतेषु बुधगुरुशुक्रेष्वेको योगः ॥ १२६ ॥ २ कर्काटकलग्ने चन्द्रगुरुयुते, शनियुक्ते तुलायां विंशतितमे परमोच्चभागे, शुक्रे मीनगते, रविकुजयुक्ते मेषे, [illegible] योगः । [illegible] योगे जातो नृपतिः स्वर्गाधिपः (तितु) तत्तुल्यो भवतीति भावः ॥ १२७ ॥ ३ मीने गुरुशुक्रयुते, पूर्णचन्द्रे स्वोच्चगते, मेषगते रवौ कुजदृष्टे एको योगः ॥ १२८ ॥ ४ षष्ठे वा तृतीये वा स्थितैः अथ वा नीचशत्रुगृहान्यतरगतैः क्रूरग्रहैः, निर्मलकिरणैः

आज्ञां याते शिशिरकिरणे कर्कटे स्वे निशाया
मेकच्छत्रं त्रिभुवनमिदं यस्य स क्ष्मान(त)लेशः ॥ १२९ ॥

[1]होरालेखामुपेतः स्फुटकरनिकरैः पूरितांगः सुरेज्यः
चन्द्रः शुक्लार्द्धदेहः [भ]स्व(व)भवनगतः स्वेन पुत्रेण दृष्टः ।
चन्द्राद्भानुर्द्वितीये यदि भवति तदा नैव दृष्टः कुजेन
त्राता जायेत भूमेर्बहुगजतुरगक्षण(क्षुण्ण)भूपृष्ठपीठः ॥ १३० ॥

[2]रविशशिकुजैर्मेषे लग्ने सितार्किबुधैर्वृषे
धनुषि नवमे दे[वे]ज्ये च स्वभागमुपस्थिते ।
रविरपि यदि स्वोच्चे वर्गप्रधानलवोदये
भवति नृपतिः सिद्ध(द्धो) ज्ञातार्थो हतारि[रि]होद्भवः ॥ १३१ ॥

[3]शशि(सित)शशिसुतजीवैः पंचमस्थैर्न हीनै
रविरपि रिपुराशौ स्वोच्चगे भूमिपुत्रे ।
तपसि च रविपुत्रे जायते पर्थिवेन्द्रः
प्रथितविमलकीर्तिर्दानधर्मप्रतापैः ॥ १३२ ॥

---

केन्द्रगतैः परमोच्चभागगतैः शुभग्रहैः, चन्द्रे कर्कटस्थे, तुलालग्ने, रात्रौ जन्मन्येको योगः ॥ १२९ ॥ १ लग्नस्फुटभागसमभागगते स्फुटकिरणे गुरौ, एकादशगते अर्धचन्द्रे (पंचमीदशम्योरन्तराले) बुधदृष्टे एको योगः। पूर्ववत्स्थिते गुरौ, चन्द्रात् द्वितीयस्थे सूर्ये कुजदृष्टिरहिते, अपरो योगः। एवं द्वौ योगौ ॥ १३० ॥ २ मेषलग्ने रविचन्द्रकुजयुक्ते, वृषभे बुधशुक्रशनियुक्ते, धनुषि परमनवांशगते गुरावेको योगः। वर्गोत्तमगते मेषलग्ने अपरो योगः ॥ १३१ ॥ ३ बुधगुरुशुक्रयुते

[1]त्रिदशगुरु(रो) रविर्हिमकरः स्वसुतस्य यदा

भृगुतनयः कुजस्य खलु दृष्टिगतश्च यदा ।

भवति विलग्नो(ग्न)[गो] यदि चभो(रो)दयराशिरिह

प्रथितयशा भवेत्क्षितिपतिः क्षपितारिगणः ॥ १३३ ॥

[2]बुधः कन्यालग्ने सुरपतिगुरुश्चापि तिमिग

स्त्विनः(स्थितः) क्षोणीपुत्रः प्रथमभवने वीर्यसहितः ।

शनिः शत्रुस्थाने त्रिदशरिपुवन्द्यश्च हिबुके

यदैत(वं) स्यात्सूतौ स्वभुजविजयी भूपतिरिह ॥ १३४ ॥

[3]यमे विलग्ने मकरप्रतिष्ठिते

दिवाकरे द्यून(द्यून)गते सितेऽष्टमे ।

कुजेऽळिगे कर्कटगे निशाकरे

भवेत्प्रसिद्धो जगतीश्वरो नृपः ॥ १३५ ॥

[4]मृगोदये भूमिसुते सुनिर्मले

शनैश्चरे धर्मगृहे व्यवस्थिते ।

---

पंचमे, रवियुते षष्ठे, कुजे मकरगते, शनौ नवमगते एको योगः । पाठान्तरे चन्द्रगुरुबुधयुते पंचमे अयं योगो भवति ॥ १३२ ॥ १ चरराशौ ल[illegible]ते, गुरुदृष्टे रवौ, बुधदृष्टे चन्द्रे, कुजदृष्टे शुक्रे एको योगः ॥ १३३ ॥ २ वीर्या[illegible]यकुजयुक्तेमेषे, बुधयुक्ते च कन्यालग्ने, गुरुयुक्ते सप्तमे, शुक्रयुते चतु[illegible], शनियुते षष्ठे एको योगः ॥ १३४ ॥ ३ शनियुक्ते मकरलग्ने, चन्द्ररवियुक्ते सप्तमे, शुक्र[illegible]ते अष्टमे, कुजयुते एकादशे एको योगः ॥ १३५ ॥ ४ निर्मलकिरणे कुजे मकर[illegible]नगते, शनौ नवमगते, रविचन्द्रयुते सप्तमे एको योगः ॥ १३६ ॥

दिवाकरे सप्तमगे म(स)हेन्दुना
चलस्वभावो नृपतिः प्रजायते ॥ १३६ ॥

[1]शनैश्चरे लग्नगते सचन्द्रे
बृहस्पतौ सप्तमराशिगे च ।
शुक्रेण दृष्टे शशिजे स्वतुङ्गे
जायेत पृथ्वीपतिरध(प्र)धृष्यः ॥ १३७ ॥

[2]पापो भवे स्तु(सु)रगुरौ(पुरो)हितदृष्टिशुद्धे
लग्ने सुरारिदयितः शशिनि स्वराशौ ।
वापीतडागसुरवेश्मकरो नरोऽत्र
जायेत मानवपतिर्द्विजदेवभक्तः ॥ १३८ ॥

[3]एकः स्वोच्चे शुभगगनगः संस्थितो निर्मलांशुः
केन्द्रे भानुः प्रकटि[त]करः केवलः पूर्णवीर्यः ।
दृष्टः कुर्यादमरगुरुणा पंचमस्थेन जालं(तं)
भूमेर्नाथं बहुगजपतिं सर्ववन्द्यं कृतार्थं ॥ १३९ ॥

---

१ चन्द्रशनियुते लग्ने, गुरुयुते सप्तमे, स्वोच्चगते बुधे शुक्रदृष्टे [illegible] योगः ॥ १३७ ॥ २ गुरुदृष्टलग्ने शुक्रयुते, कर्कटकगते चन्द्रे, एकादशगते पापे एको योगः ॥ १३८ ॥ ३ निर्मलकिरणे एकस्मिन् शुभग्रहे स्वोच्चगते, पूर्णबले स्फुटकिरणे कर्मकेन्द्रगते पंचमगतगुरुदृष्टे रवावेको योगः ॥ १३९ ॥

[1]गमः सहजगेहगतोऽथवापि

[षष्ठे कुजार्किरवयः सहजेऽथ वापि]

सिंहे न्दु(शु)राशिनिरतोच्च(रिसचिवोऽथ) भवर्क्षसंस्थः ।

दृष्टः शुभैर्हि(र्दि)नक[रो] हुविहीनदृष्टिः(विधुदृष्टिहीनः)

कुर्यान्नृपं भुजविनिर्जितशत्रुपक्षं ॥ १४० ॥

[2]वहति मृदुशरीरे निर्मले व्योममध्ये

व(ब)लिनि निउ(रु)पसर्गाः खेचरा वृत्तवैराः ।

उदयति सुरवन्द्ये मण्डले मातृकाणां

यदि वृषभगृहस्थो भार्गवः स्यात्क्षितीशः ॥ १४१ ॥

पुष्कलयोगः

[3]अधिमित्रगृहे केन्द्रे जन्माधिपतिर्विलग्नपतियुक्तः ॥

पश्यति व(ब)ल या परिपूर्णो लग्नं स्यात्पुष्कली [यो]गः ॥ १४२ ॥

पुष्कलयोगफलम्

पुष्कलयोगे पुरुषा जायन्ते भूमिपालक(का) नित्यं ॥

सुचिरं भ्रमन्ति हतारिपुगजमदगन्धेन वासितदिगंताः ॥ १४३ ॥

---

१ अत्र श्लोके प्रथमः पादोऽशुद्धः। तत्र कुण्डलीगतः पाठोऽनुसंधेयः। षष्ठे वा, तृतीये वा यथासंभवं स्थितेषु रविकुजशनिषु, शुक्रे सिंहगते एको योगः। एकादशगते शुभदृष्टे चन्द्रादृष्टे रवावपरो योगः ॥ १४० ॥ २ निर्मलकिरणे बलिनि शनौ दशमगते, गुरौ लग्नगते, शुक्रे कृत्तिकानक्षत्रे वृषभगते, इतरेषु ग्रहेषु ग्रहयुद्धादिरहितेषु निर्मलेषु एको योगः ॥ १४१ ॥ ३ लग्नाधिपतियुते चन्द्रराश्यधिपे

[1]राश्याद्यौ लग्नपतिः करो(रो)ति लग्ने नरेन्द्रदण्डपतिं ॥
मध्ये मण्डलनाथं ग्रामपतिं चैव भवनांते ॥ १४४ ॥

[2]पौष्णे फाल्गुन्याश्विनि(न्यां वा) यूने(मूले) पुष्ये च भास्करः कुरुते ॥
लग्नगतो नरनाथं योजनशतमात्रके देशे ॥ १४५ ॥

कृत्तिकारेवतीस्वातीपुष्यस्थायी भृगोः सुतः ॥
करोति भूभुजां नाथमश्विन्यामपि संस्थितः ॥ १४६ ॥

[3]विदधाति सार्वभौमं लग्ने(ग्नां)शपतिः स्वतुङ्गगः केन्द्रे ॥
नृपतिं लग्नस्य पतिर्जन्मपतिर्धनसमृद्धं च ॥ १४७ ॥

[4]मीने निशाकरः पूर्णः सुहृद्ग्रहनिरीक्षितः ॥
सार्वभौमं नरः(रं) कुर्यात्सिद्धाज्ञार्थं न संशयः ॥ १४८ ॥

[5]याते भौमे कर्मस्थानं शिशिरकरबुधभृगुसुतैस्तपःसमवस्थितै
राये स्वोच्चा(च्चं) प्राप्तो भानुरग्रहशा(त्रिदश)पतिः(ति)सचिवसहितो
यदि प्रसवे भवेत् ॥

---

अधिमित्रगृहगते केन्द्रगते बलपूर्णे लग्नं पश्यति सवि पुष्कलो योगः ॥ १४२ ॥
१ लग्नगतो लग्नपतिः राश्यादौ सेनापतिं, राशिमध्ये देशाधिपतिं, राश्यन्ते ग्रामपतिं करोतीति भावः ॥ १४२ ॥ २ अश्विनीपूर्वोत्तरफल्गुनीपुष्यमूलरेवतीनक्षत्रेषु लग्नगते रवावेको योगः ॥ १४५ ॥ ३ केन्द्रे स्वोच्चगतो लग्ननवांशाधिपतिः चक्रवर्तिनं, तादृशो लग्नाधिपतिः राजानं, तादृशश्चन्द्रराशिपतिर्धनवन्तं करोतीति भावः ॥ १४७ ॥ ४ मीनगते पूर्णचन्द्रे मित्रग्रहदृष्टे एको योगः ॥ १४८ ॥
५ [illegible] चन्द्रबुधशुक्रेषु, दशमस्थे कुजे, स्वोच्चगते गुरुयुते रवौ लाभगते, मिथुनलग्ने एको योगः ॥ १४९ ॥

क्षोणीभर्ता याने यस्य प्रविचलिततुरगरजसा दिवः स(प)रितो गते
नाथैकत्वे भूपो(यो) भूत्वं(मे)ध(धे)रणितलपर(रि)[भ्र]मसुखं प्रयान्ति रवेर्हयाः ॥ १४९ ॥

[1]शशिसहिते केन्द्रस्थे शनैश्चरे भवति जारजातोऽत्र ॥
राजा भुवि गजतु(तु)रंगमप्रा(प्रा)[मध]नविवर्धितश्रीकः ॥ १५० ॥

[2]शुक्रवाक्पतिबुधैर्निधनस्थै(र्धनसंस्थै)
द्यूनगैः शशिरविक्षितिपुत्रैः ।
जायते क्षितिपतिः पृथुवक्षाः
सर्वज्ञः(तः) क्षपितशत्रुसमूहः ॥ १५१ ॥

[3]भानुः प्राणो शशिभवनगः शीतरश्मिश्च तस्मिन्
एकः स्वोच्चे यदि गगनगो निर्मलः पूर्णरश्मिः ।
लग्नं प्राप्तः सुरपतिगुरुः षष्ठगः स्यात्क्षितीशः
छन्नो यस्य प्रव(च)लितवगूकेगु(चमूरेणु)भिर्व्या(र्व्यो)ममार्गः ॥ १५२ ॥

[4]कुम्भस्याष्टमभागे त्रिकोणसंस्थेऽपि वा (च) निशानाथे ॥
जातो भवत्यवश्यं राजा शुभदः समस्तलोकस्य ॥ १५३ ॥

---

१ केन्द्रगते चन्द्रयुते शनावेको योगः ॥ १५० ॥ २ बुधगुरुशुक्रैरष्टमे वा पाठान्तररीत्या द्वितीये वा स्थितैः, रविचन्द्रकुजैः सप्तमगैरेको योगः ॥ १५१ ॥ ३ कर्कटके बलिना रविणा युते चन्द्रे, एकस्मिन् निर्मलकिरणे ग्रहे स्वोच्चे लग्नगते, गुरौ कुजे षष्ठगते एको योगः ॥ १५२ ॥ ४ कुंभराशावष्टमे भागे चन्द्रे पंचमे नवमे वा स्थिते एको योगः । अत्र भागः षष्ठिकलात्मको ग्राह्यः । न नवांशादिः । एवमग्रेऽपि ॥ १५३ ॥

[1]मेषस्य सप्तमांशे करोति पृथ्वीसुतः स्थितो नृपतिं ॥
एकाधिकविंशतिमे(मे) मिथुनस्यांशे भवेद्भूपः ॥ १५४ ॥

[2]कुंभस्य पंचदशके भागे चन्द्रः स्थितो महीपालं ॥
कर्कटकस्य दशमे करोति पुरुषं सदा प्रसवे ॥ १५५ ॥

[3]धनुषि त्र्यं(त्रिं)शे जीवः करोति नृपतिं स्थितो जनख्यातं ॥
सिंहस्य पंचमेंऽशे तथा च हेलिबु(बु)धो ज्ञेयः ॥ १५६ ॥

[4]एकस्मिन्पंचकृतौ पंचदशस्ववस्थितश्चन्द्रः ॥
भागेषु धीरनृपतिं करोति भुजव(ल)[ब्ध]पृथ्वीकं ॥ १५७ ॥

[5]मकरस्य पंचमांशे करोति रविजो नरेश्वरं सुनयं ॥
भागे भूतलतिलकं धर्मज्ञं शास्त्रनिरतं च ॥ १५८ ॥

[6]कर्कटके शशिजीवौ पंचसु भागेषु संस्थितौ कुरुतः ॥
भूमिपतिम[प्र]धृष्यं रविरिव सर्वग्रह[ग]णस्य ॥ १५९ ॥

---

१ मेषसप्तमे, मिथुनैकविंशे वा भागे स्थिते कुजे द्वौ योगौ ॥ १५४ ॥
२ कर्काटकदशमे, कुंभपञ्चदशे वा भागे स्थिते चन्द्रे द्वौ योगौ ॥ १५५ ॥
३ धनुषि त्रिंशे, सिंहे पञ्चमे वा भागे स्थिते गुरौ द्वौ योगौ। अत्र धनुषि च विंशे" इति पाठान्तरम्। तस्मिन् पाठे सुगमोऽर्थः। हेलिः सूर्यः। सूर्ये बुधे वा पूर्ववत्स्थिते चत्वारो योगाः ॥ १५६ ॥ ४ यत्र कुत्राप्येकस्मिन् राशौ पञ्चविंशे पञ्चदशे वा भागे स्थिते चन्द्रे चतुर्विंशतियोगाः ॥ १५७ ॥
५ मकरस्य पञ्चमभागगते शनावेको योगः ॥ १५८ ॥ ६ कर्काटके प्रथमेषु पञ्चसु भागेषु चन्द्रगुर्वोरुभयोः स्थितावेको योगः ॥ १५९ ॥

[1]चन्द्रः पुष्ये नृपतिं वर्गोत्तमकृत्तिकाश्विनीसंस्थं(स्थः) ॥
विदधाति सार्वभौमं त्रिपुष्करे वापि परिपूर्णः ॥ १६० ॥

[2]गश्व(अश्वि)न्यनुराधासु स्थितः श्रविष्ठासु पार्थिव(वं) भौमः ॥
कुरुते स्वोच्चमुपगतो वर्गोत्तमगश्च नान्यत्र ॥ १६१ ॥

[3][न्यो]नि(ज्ञि) शंखधवलो निशाकरो
भार्गवस्तपसि संस्थितः शुचिः ।
अस्त(आय)गाश्च यदि सर्व एव ते
स्यान्महीपतिरतुल्यपौरुषः ॥ १६२ ॥

[4]चन्द्रादुपचयसंस्था गगनसदः सर्व एव यदि सूतौ ॥
जायेत माननिलयः समस्तपृथ्वीपतिः पुरुषः ॥ १६३ ॥

[5]जीवनिशाकरसूर्याः पंचमनवमतृतीयगा वक्रात् ॥
यदि भवति तदा राजा कुबेरधनतुल्य एवासौ ॥ १६४ ॥

---

१ अश्विनीकृत्तिकापुष्यगते वर्गोत्तमगते वा चन्द्रे चत्वारो योगाः। एवं त्रिपुष्करगते चन्द्रे षट्त्रिंशद्योगाः। प्रतिराशि एकैकः पुष्करभागः द्वौ पुष्करनवांशौ चेति मिलित्वा त्रीणि पुष्कराणि वर्तते। तथा हि—मेषसिंहचापेषु एकविंशो भागः, सप्तमनवमौ नवमांशौ, वृषभकन्यामकरेषु चतुर्दशो भागः, तृतीयपञ्चमौ नवमांशौ, मिथुनतुलाकुम्भेषु चतुर्विंशो भागः, षष्ठाष्टमौ नवमांशौ, कर्काटकवृश्चिक-मीनेषु सप्तमो भागः, प्रथमतृतीयौ नवमांशौ, च पुष्करांशा इत्युच्यन्ते ॥ १६० ।
२ अश्विनीश्रवणानुराधागतो वा, स्वोच्चगतो वा, वर्गोत्तमगतो वा कुजः नृपं कुरुते इति भावः ॥ १६१ ॥ ३ पूर्णचन्द्रे दशमगे, स्फुटकिरणे शुक्रे नवमगे, इतरेषु ग्रहेषु सप्तमगेषु पाठान्तररीत्या लाभगेष्वेको योगः ॥ १६२ ॥ ४ सर्वेषु ग्रहेषु चन्द्रात् तृतीयषष्ठदशमैकादशगतेष्वेको योगः ॥ १६२ ॥ ५ कुजात् तृतीयगे सूर्ये, पञ्चमगे गुरौ, नवमगे चन्द्रे एको योगः ॥ १६४ ॥

[1]रविस्तृतीये भृगुनन्दने सुखे
बुधस्य चान्ये यदि पंचमस्थाः ।
न नीचराशौ न च शत्रुवेश्मगा
भवेन्नरेन्द्रखिलसमुद्रपालकः ॥ १६५ ॥

[2]बृहस्पतिभौ(तेर्भौ)मदिवाकरेंदवो
गता स्तु येषां बु(द्वितीयांबु) ध्व नभस्तल(लं) क्रमात् ।
विपक्षराशौ परिशेषखेचरा
यदा तदा भूमिपतिर्नृपात्मजः ॥ १६६ ॥

[3]भृगोरपत्याद्बुधभासु(स्क)रात्मजौ
चतुष्टयस्थौ परिशेषखेचराः ।
तृतीयलाभर्क्षगतास्तु ते यदा
महीपतिं कुर्युरसंशयं तदा ॥ १६७ ॥

[4]शुक्रबुध(धौ) रवितनयाः(यात्) केंद्रे वा वाचस्पतिर्भवेदुच्चे ॥
सिंहासनाधिशायी यदि राजा स्वोच्चगाश्च परिशेषः(षाः) ॥ १६८ ॥

---

१ बुधात् तृतीयगे सूर्ये, चतुर्थगे शुक्रे, अन्येषु ग्रहेषु पञ्चमगेष्वेको योगः । अत्र योगे कस्यापि ग्रहस्य नीचशत्रुगृहगतत्वे योगभङ्गः ॥ १६५ ॥ २ गुरोः सकाशात् द्वितीयगे कुजे, चतुर्थगे सूर्ये, दशमगे चन्द्रे, अन्येषु ग्रहेषु षष्ठगतेष्वेको योगः ॥ १६६ ॥ ३ शुक्रात् केन्द्रे बुधशनियुते, अन्येषु ग्रहेषु तृतीये वा लाभे वा स्थितेष्वेको योगः ॥ १६७ ॥ ४ शनेः सकाशात् केन्द्रे शुक्रबुधयुते, गुरावुच्चगते सिंहगते च सति, अन्येषु ग्रहेषु यत्र कुत्रापि स्वोच्चगतेषु एको योगः ॥ १६८ ॥

¹सवितुस्तृतीयपंचमलाभर्क्षसमाश्रिताः सदा यस्य ॥
सर्वे ग्रहाः स नृपतिर्मन्त्री सेनापतिर्वापि ॥ १६९ ॥

²लग्नपतिः(तेः) स्फुर(ट)रश्मिः(श्मेः) पापा लाभर्क्षगाः शुभाः केन्द्रे ॥
यदि भवति तदा नृपतिः स्वभुजार्जितभुग्भीमबलः ॥ १७० ॥

³लाभे तृतीयषष्ठे यदि पापा जन्मय(प)स्य शुभदृष्टाः ॥
भवति तदा धरणीशः समस्तजनवन्दितः साधुः ॥ १७१ ॥

⁴विचरति सुरपूज्ये मेषराशिं(शौ) तु सिंहं(हे)
तुहिनकिरणदृष्टे भूमिपुत्रे सुरश्मौ ।
न च गगनविचारी कश्चिदेकोऽपि नीचे
यदि नृपतिसमुत्थो जायते पार्थिवेन्द्रः ॥ १७२ ॥

⁵चन्द्राद्ग्रहैर्निगदिताः सुनफादयश्च
केन्द्रस्थितैर्यदि भवन्ति च तत्र योगाः ।

---

१ सूर्यात् तृतीये, पञ्चमे, लाभे वा स्थितेषु सर्वेषु ग्रहेष्वेको योगः ॥ १६९ ॥
२ स्फुटकिरणात् लग्नपतेः सकाशात् शुभग्रहेषु केन्द्रगतेषु, पापग्रहेषु लाभगतेष्वेको योगः ॥ १७० ॥ ३ चन्द्राश्रितराश्यधिपात् तृतीये, षष्ठे, लाभे वा शुभदृष्टेषु पापग्रहेषु सत्स्वेको योगः ॥ १७१ ॥ ४ गुरौ मेषसिंहान्यतरगते, पूर्णकिरणे कुजे चन्द्रदृष्टे, अन्येषु ग्रहेषु नीचं विहायान्यत्र स्थितेष्वेको योगः । अत्र "भूमिपुत्रे स्वराशौ"विति पाठान्तरं । तस्मिन् पाठे कुजस्य मेषवृश्चिकान्यतरराशिस्थितिरावश्यकी । पूर्वस्मिन् पाठे तु यत्र कुत्रापि स्थिते कुजे योगोऽयं भवति ॥ १७२ ॥ ५ चन्द्रयोगाध्याये षष्ठश्लोके चन्द्रकेन्द्रस्थितैर्ग्रहैः सुनफानफाधुरुधुरायोगाः श्रुतकीर्तिमतेन कथिताः । तद्योगे जाता राजवंशजा राजानो भवन्तीति भावः ॥ १७३ ॥

विश्वंभरापतिकुलेषु महत्सु जाता
योगेषु ते द्युमनुजेश्वरतां लभन्ते ॥ १७३ ॥

[1]केन्द्रगः सुरगुरुः सशशांको
यस्य जन्मनि च भार्गवदृष्टः ।
भूपतिर्भवति मे(सोऽ)तुलकीर्ति
र्नीचगो यदि न कश्चिदिह स्यात् ॥ १७४ ॥

[2]उदयशिखरिसंस्थो भार्गवो यत्र तत्र
बुधरविसुतदृष्टः स्वांशकस्थोऽतिवीर्यः ।
जनयति नरनाथं वाक्पतौ पंचमस्थे
भुजबलहतशत्रुं सार्वभौमं गजाद्यां(ढ्यम्) ॥ १७५ ॥

[3]सिंहे कमलिनीभर्ता कुळीरस्थो निशाकरः ॥
दृष्टौ द्वावपि जीवेज(न) पार्थिवं कुरुतस्तदा ॥ १७६ ॥

[4]बुधः कर्कटमारूढो वाक्पतिश्च धनुर्धरं ॥
सूर्यभूसुतदृष्टौ च यदि स्फीतो महीपतिः ॥ १७७ ॥

---

१ शुक्रदृष्टे चन्द्रयुते गुरौ केन्द्रगते एको योगः । अत्र योगे कस्याप्येकस्य ग्रहस्य नीचगतत्वे योगभङ्गः ॥ १७४ ॥ २ पूर्णबले स्वनवांशगते बुधशनिदृष्टे शुक्रे यत्र कुत्रापि लग्नगते, गुरौ पञ्चमगे एको योगः ॥ १७५ ॥ ३ सिंहगे सूर्ये, कुळीरस्थे चन्द्रे वा गुरुदृष्टे द्वौ योगौ ॥ १६६ ॥ ४ बुधे कर्काटकगते कुजदृष्टे, गुरौ चापगते सूर्यदृष्टे एको योगः ॥ १७७ ॥

[1]शफरीयुगले चन्द्रः कर्कटे च बृहस्पतिः ॥
शुक्रः कुंभे यदा सक्तस्तदा राजा भवेदिह ॥ १७८ ॥

[2]सितदृष्टशनिः कुंभे पद्मिनीदयितोऽह(द)ये ॥
चन्द्रो जलचरे राशौ यदि राजा तदा भवेत् ॥ १७९ ॥

[3]कुजोऽलिगोऽथ मेषे वा रविजीवनिरीक्षितः ॥
वृषे ज्ञः शुक्रे(ज्ञो जीव)सन्दृष्टस्तथापि पृथिवीपतिः ॥ १८० ॥

[4]अमलवपुरवक्रः कैरवाणां विकासी
स्वकगृहमथ वांशं स्वोच्चमंशं गतो वा ।
हितगाम(ग)ननिवासैः पंचभिर्दृश्यमानो
जनयति जगतीशं नीचभे दो(नो) यदि स्यात् ॥ ॥ १८१ ॥

[5]लाभे मन्दो गुरुभृगुसुताव(वु)द्गमे खे शशांको
बन्धावर्को बुधकुतनयौ(या)वक्र(र्थ)गौ चेत्स भूपः ।

---

१ चन्द्रे मीनगते, गुरौ कर्काटकगते, शुक्रे कुंभगते एको योगः ॥ १७८ ॥
२ सूर्येलग्न गते, शुक्रदृष्टे शनौ कुम्भगते, चन्द्रे जलचरराशिगते एको योगः ॥ १७९ ॥ ३ वृश्चिकमेषान्यतरगे कुजे रविगुरुदृष्टे एको योगः वृषभगते बुधे गुरुदृष्टे एको योगः । "ज्ञः शुक्रसंदृष्ट" इति पाठे पादपादोनदृष्टी यथासंभवं ग्राह्ये । पूर्णदृष्टेरयोगात् ॥ १८० ॥ ४ स्फुटकिरणे पूर्णचन्द्रे स्वोच्चे वा, स्वोच्चनवांशे वा, स्वगृहे वा, स्वनवांशे वा स्थिते चत्वारो योगाः । पंचभिर्ग्रहैर्दृष्टे चन्द्रे नीचं विहायान्यत्रस्थिते एको योगः ॥ १८१ ॥ ५ लग्नगते गुरुयुते शुक्रे, द्वितीयगते बुधयुते कुजे, चतुर्थगे सूर्ये, दशमगते चन्द्रे, लाभगते शनावेको योगः । "बुधकुतनयौ वक्रगौ" इति पाठः साधुः । यत्र

यत्सेनायाः कृतजलकटिः(ट)क्रोध(धि)मत्तेभशैलै
भूयः सेतौ(तोः) स्मरति समयः क्षोभितोता(तांतोऽ)बुराशिः ॥ १८२ ॥

इति राजकुलजानां राज्यप्रदा योगाः

॥ इति श्रीजातकसारदीपे राजयोगाध्याय एकोनषष्टितमः ॥

---

## ॥ अथ पञ्चमहापुरुषलक्षणाध्यायः षष्टितमः ॥

श्रीदेवकीर्तिराजः पंचमहापुरुषं(ष)संज्ञितान्नृ(न्नृ)पतीन् ॥
कथयति यांस्तानहमपि कथयामि निराकुलीकृत्या(त्य) ॥ १ ॥

रुचकभद्रहंसमालव्यशशयोगलक्षणम्

स्वक्षेत्रेऽथ चतुष्टये च बलिभिः स्वोच्चस्थितैर्वा ग्रहैः
शुक्रांगारकमन्दजीवशशिजैरेतैर्यथाहु:(नु)क्रमम् ।
मालव्यो रुचकः शशोऽथ कथितो हंसश्च भद्रस्तथा
सर्वेषामतिविस्तरान्मुनिमतात्संकथ्यते लक्षणं ॥ २ ॥

---

कुत्रापि बुधयुक्ते कुजे वक्रगते इति तदर्थः । पूर्वपाठे तु बुधे द्वितीयगे सूर्यस्य चतुर्थस्थितिः असंभाविता । कथंचित्संभवकल्पनेऽपि द्वितीयपाठ एव सहृदयमनोरञ्जनकरः ॥ १८२ ॥ १ स्वोच्चे वा, स्वगृहे वा स्थिते बलिनि कुजे लग्नकेन्द्रगते रुचकयोगः । तादृशे बुधे भद्रयोगः, गुरौ हंसयोगः, शुक्रे मालव्ययोगः, शनौ शशयोगः, कथ्यते इति भावः ॥ १ ॥

## ग्रहाणां सत्वगुरुत्वस्वरस्नेहवर्णकारकत्वम्

[1]मही(पृथ्वी)सुतात्सत्वमुदाहरन्ति गुरुत्वमिन्दोस्तनयात् गुरोश्च ॥
स्वरं सितात्स्नेहमितोनु(नोत्थ)वर्णौ बलाबलैः पूर्णलघूनि चैवं ॥ ३ ॥

## सात्विकलक्षणम्

[2]ऋजु(मृदु)र्दयालुर्बहुदास(र)भृत्यः
स्थिरस्वभावः प्रियसत्यवादी ।
सुरद्विजोपास्तिरतः सहिष्णु
र्भवेन्नरः सत्वगुणप्रधानः ॥ ४ ॥

## राजसलक्षणम्

शूरः कलाकाव्यनिविष्टबुद्धिः
स्त्रीसक्तचित्तः क्रतुषु प्रवीणः ।
आडंबरी हास्यरतः प्रगल्भो
वेदार्थ(गेयाक्ष)विद्राजसिकः प्रदिष्टः ॥ ५ ॥

## तामसलक्षणम्

मूर्खोऽलसो वंचयिता परेषां
क्रोधी विखंडः(षण्ढः) पिशुनः क्षुधार्तः ।

---

१ कुजः सत्वगुणस्य शौर्यापरपर्यायस्य, बुधः भूमारस्य, गुरुः स्वरस्य, शुक्रः स्नेहस्य, शनिः देहवर्णस्य कारकाः। कारकग्रहाणां बलवत्त्वे सत्वादयः पूर्णाः, मध्यबलत्वे मध्यमाः, अल्पबलत्वे लघवो भवेयुरिति भावः ॥ २ ॥

२ यद्यपीदं तनुचिन्ताध्याये कथितं तथाप्याधिक्यविधानार्थं प्रमाणसंमतिरूपतया च सारावल्युक्ताः श्लोका अनूद्यन्ते इति न कोऽपि दोषः। एवमग्रेऽपि ॥ ३ ॥

आचारहीनो न शुचिर्न दांतो(र्गदार्तो)
लुब्धः प्रमादी तमसाऽभिभूतः ॥ ६ ॥

भूभारनिर्वाहः

भारो भवति नृपाणां भूम्यर्हे(र्धे) भुंजतां प्रसूतानां ॥
येषां भारोदर्ध (राध्यर्धे) सकलमहीपालकाम्ये(स्ते) स्युः ॥ ७ ॥

स्वरलक्षणम्

समा(माः) स्वरैः सिंहमृगेन्द्रदन्तिनां
रथौघभेरीवृषतोयदायिनां ।
समस्तभूमण्डलरक्षणक्षमा
भवन्ति भूपा जितशत्रवो नराः ॥ ८ ॥

अवयवस्निग्धतादिलक्षणम्

स्निग्धैर्भव(वं)ति भूपा जिह्वात्वग्दन्तनेत्रनखकेशैः ॥
रूक्षैस्तैर्निःस्वाः सारस्वत(स्वरैश्च ते) जातकैः(के) कथिताः ॥ ९ ॥

वर्णलक्षणम्

स्निग्धस्के(स्ते)जोयुक्तः शुद्धो वर्णः स(प्र)कीर्तितो नृपतेः ॥
विपरीतः क्लेशभुजां सुतार्थसुखभोगिनां मध्यः ॥ १० ॥

## पञ्चभूतस्वभावछायात्रिदोषफलज्ञानप्रकारः

[1]व्योमांबुवाताग्निमहीस्वभावा
सुरासुरेज्यार्किमहीजसौम्यैः ।
छाया मरुत्पित्तबलात्तु(कफानु)रूपा
मिश्रैस्तु मिश्रा बलिभिर्नराः स्युः ॥ ११ ॥

### गगनस्वभावफलम्

शब्दार्थविच्छास्त्रपटुः प्रगल्भो
विज्ञात(न)युक्तो विधृतार्थभोगः ।
छिद्रा(चित्रा)ङ्गसन्धिः कृशपाणिपादो
मध्य(व्योम)प्रकृत्या पुरुषोऽतिदीर्घः ॥ १२ ॥

### जलस्वभावफलम्

जलस्वभावो बहुवारिपायी
प्रियाभिभाषी द्र(द्र)वभोजनश्च ।

---

१ तनुचिन्ताध्याये ८४ श्लोकादारभ्य ८८ श्लोकपर्यन्तं पञ्चभूतस्वभावफलमुक्तं। इदानीं कारकनिरूपणपुरःसरं तदेव विशदीक्रियते। तथा तत्रैव ८९ श्लोकादारभ्य ९४ श्लोकपर्यन्तं पञ्चभूतछायाफलं तत्कारकनिरूपणं च कृतम्। इदानीं तज्ज्ञानप्रकारो निरूप्यते। तथा तत्रैव ७७ श्लोकादारभ्य ८२ श्लोकपर्यन्तं त्रिदोषकारकनिरूपणं तत्फलं च कथितम्। इदानीं तज्ज्ञानप्रकारो निगद्यते। पञ्चभूतस्वभावानां मध्ये यस्य कारको बली तत्स्वभावो भवति। अनेकेषां बलवत्त्वे मिश्रस्वभावो भवति। एवमेव पञ्चभूतछायानां त्रिदोषाणां च कारकैरपि ज्ञेयम् ॥ ११ ॥

चलस्वभावो बहुमित्रपक्षः
क्षोणीपतिर्नार्तिश्चिरं प्रगल्भः ॥ १३ ॥

वायुस्वभावफलम्

सत्वेन वायोः पुरुषः [कृ]शांगः
क्षिप्रं च कोपस्य वशं प्रयाति ।
कृतै(त्यै)कबुद्धिर्भ्रमणे रव(त)श्च
दाता सितो भूपतिरप्रमृ(धृ)ष्यः ॥ १४ ॥

वह्निस्वभावफलम्

शूरः क्षुधार्तश्चपलोऽतितीक्ष्णः
ष(प्रा)ज्ञः कृशो गौरतनुर्विरोधी ।
विद्दा(द्वां)श्च मानी बहुव(भ)क्षणश्च
वह्निस्वभावः पुरुषोऽतिकायः ॥ १५ ॥

पृथिवीस्वभावफलम्

कर्पूरजात्युत्पलपुष्पगन्धो
भुनक्ति भोगान् स्थिरलब्धसौख्यः ।
सिंहावयो(अघोष): स्थिरचित्तवृत्ति
महीस्वभावो [भव]ति प्रजातः ॥ १६ ॥

गगनच्छायाफलम्

स्फु(स्फ)टिकोऽत्पलसंकाशा त्वच्छा गगनोऽस्थिता भवेत् छाया ॥
निधिरिव पुंसां धन्या त्रिवर्गफल र ग(सा)धनी शु(सु)भगा ॥ १७

## जलच्छायाफलम्

स्निग्धा सिता छ(च) हरिता कांते(ता) मातेव सर्वसुखजननी ॥
सौभाग्याभ्युदयशुभान्करोति त(ज)लसंभवा छाया ॥ १८ ॥

## वायुच्छायाफलम्

असित[ज]लदकान्तिः पापगन्धोऽतिमूढो
मलिनपरुषवर्णः शोकसंतापतप्तः ।
स भव(वह)ति वधदैत्य(न्य)व्याध्यनर्थार्थहीना(नाशा)न्
विचरति पवनोत्था यस्य कान्तिः शरीरे ॥ १९ ॥

## वह्निच्छायाफलम्

कमल(न)दहनकान्तिश्चन्द्र(ण्ड)दन्तोऽ(ण्डो)तिधृ(हृ)ष्टः
प्रणतसकलशत्रुर्विक्रमाक्रान्तभूमिः ।
भजति मणिसुवर्णं सर्वकार्यार्थसिद्धिः(द्धिं)
प्रशमितगदकोपो वह्निजायां प्रभायां ॥ २० ॥

## भूमिच्छायाफलम्

आज्यां(यां)बुसिक्तवसुधागुरुगन्धतुल्यः
सुस्निग्धदन्तनखरोमशरीरकेशः ।
धर्मा(धर्मा)र्थतुष्टिसुखभोज(भाग्ज)नसंप्रियश्च
छायां यदा भजति भूमिकृतां मनुष्यः ॥ २१ ॥

वातदोषफलम्

शीतांबुर्ब(तार्तो ब)हुभाषको धृ(द्रु)तगतिर्भा(र्ना)वस्थितः कुत्रचित्
लोके(शूरोः) मत्सरवान् प्रचाररुचिकः सौभा(रुजाकररुचिर्दौर्भा)
ग्ययुक्तोऽनरः(यः) ।
दान्तः स्या(दन्तान् खा)दति नातिसौहृदमतिर्गान्धर्ववेत्ता क्षमी(कृशो)
मित्राणां समुपार्जनेऽतिनिपुणः स्वप्ने च गे(खे) गच्छति ॥ २२ ॥

अप[गं]र(त)धृतिरूक्षश्मश्रुकेशः कृतघ्नः
स्फुटितचरणहस्तः क्रोधजो नष्टकान्तिः ।
विलपति न निबद्धश्चित्र(च)संहारकारी
भवति पुरुष एवं मारुतैकप्रधानः ॥ २३ ॥

पित्तदोषफलम्

दुर्गन्धिर्ल(न्धी ल)घुको(ता)पनो विपुलधीः क्षिप्रप्रसादः पुनः
पीतो(नो) रक्तनखाक्षिपाणिचरणो वृद्धाकृतिर्दाहवान् ।
मेधावी युधि निर्भयो हिमरुचिर्व्रं(ब्रू)ते [नि]गृह्यापरान्
नो भीनेः(तः) प्रणयं प्रयाति बहुभुक् कुर्यान्नतानां प्रियं ॥ २४ ॥

स्वप्नेऽपि(भि)पश्यति सुवर्णदिशः प्र(नेश)दीपान्
दावाद्रि(ग्नि)किंशुकजपामणिकर्णिकारान् ।
रक्ताब्जखण्डरुधिरौघतडित्समूहान्
पित्ताधिको निगदितः खलु लक्षणज्ञैः ॥ २५ ॥

कफदोषलक्षणम्

श्रीमान्संश्लिष्टसंधिर्धृतिबलसहितः स्निग्धकांतिः सुदेहो
ग्राही सत्वोऽप्यपन्नो हतमुरुजघनः(ना)पोषदा(वान्) स्यात्सहिष्णुः ।
गौरो रक्तान्तनेत्रो मधुररसरुचिर्बद्धवैरः कृतज्ञः
क्लेशः स्यादत्तवि(शे· चाक्लिष्टचि)त्तः सकलजनहितः(सुहृत्) पूजको
मो गुरूणां ॥ २६ ॥

[1]स्वप्ने तु पश्यति समुद्रनदीसरांसि

**मुक्तान्तनेत्रो मधुररस**

मुक्ताफलप्रवरहंससिताब्जशंखान् ।
[न]क्षत्रचक्र(कुन्द)कुमुदेऽदुरु(न्दुतु)षारपातान्
श्लेष्माधिको मुनिवरैः कथितः क्रमेण ॥ २७ ॥

[2]बलरहितेऽन्दुरविभ्यां युक्तैर्भौमादिभिर्ग्रहैर्मिश्राः ॥
न भवन्ति भूमिपाला दशासु तेषां सुखा(ता)र्थयुताः ॥ २८ ॥

मालव्ययोगजातपुरुषलक्षणम्

न स्थूलोऽष्ठो न विषमवपुर्नातिरक्तांगसन्धि
र्मध्ये क्षामः शशधररुचिर्हस्तिनामः(दः) सुगण्डः(न्धः)

---

१ अस्मिन् श्लोके स्थूलाक्षरनिर्दिष्टो भागोऽधिकः । स च त्याज्यः ।
२ एतावता प्रबन्धेन राजयोगजातानां स्वरूपलक्षणादिकं नोपयुक्तं भूतलमानादिफलम-भिधायेदानीं प्रोक्तराजयोगभङ्गमाह (बलरहितेति) पूर्वोक्तराजयोगकारकाणां कुजादीनां बलरहिताभ्यां सूर्यचन्द्राभ्यां योगे राजयोगे सत्यपि राजा न भवति । किं तु योगकारकग्रहाणां दशायां सुख(ता)र्थलाभो भवतीति भावः ॥ २८ ॥

संदीप्ताक्षः समसितरदो जानुदेशाप्तपाणि
मालव्योऽयं विलसति नृपः सप्ततिं वत्सराणां ॥ २९ ॥

[1]व(क्त्रं) त्रयोदशमितानि तथां(थां)गुलानि
दैर्घ्येण कर्णविवराद्दश विस्तरेण ।
मालव्यसंज्ञमनुजः स भुनक्ति नूनं
लाटान्सगा(मा)लवससिन्धुसपारियात्रान् ॥ ३० ॥

रुचकयोगजातपुरुषलक्षणम्

दीर्घाः(र्घा)[स्यः] स्वच्छकान्तिर्बहुरुधि(चि)रबलः साहसावाप्तकार्य
श्चारुभ्रूर्नीलकेशः श्रमक(शश्चरण)रणरतो मन्त्रविच्चोरनाथः ।
रक्तश्यामोऽतिगौ(शू)रो रिपुबलमथनः कंबुकण्ठः प्रधानः
क्रूरो रक्तो(भर्ता) नराणां द्विजगुरुनिरतः क्षामसज्जानुजंघः ॥ ३१ ॥

खट्वां(ट्वां)गपाशवृषकार्मुकवज्रवीणा-
शक्येक(चक्रासि)हस्तचरणश्च तथां(शतां)गुलिश्च ।
मन्त्राभिचारकुशलस्तुलया सहस्त(स्रं)
मध्यं च तस्य कथितं मुखदैर्घ्यतुल्यं ॥ ३२ ॥

विन्ध्याचलं सिद्ध(सह्य)गिरिं भुक्त्वा(क्तेऽ)वनीं च सप्ताति(प्तति) शरदां ॥
शस्त्रानलकृतमृत्युः प्रयाति देवालयं रुचकः ॥ ३३ ॥

---

१ वक्त्रस्योर्ध्वाधरप्रमाणं फालोर्ध्वभागात् चिबुकाधोभागपर्यन्तं त्रयोदशाङ्गुलानि । कर्णयोर्मध्यप्रदेशप्रमाणं दशाङ्गुलानि विस्तार इति भावः ॥ २० ॥

## शशयोगजातपुरुषलक्षणम्

तनुद्विजः शीघ्रगतिः शशोऽन्यः(यं)
शठोऽतिशूरो निभृतप्रचारः(तापः) ।
वनाद्रिव(दु)र्गेषु नदीषु सक्ता(क्तः)
क्षयोदयी नातिलघुः प्रदिष्टः ॥ ३४ ॥

सेनानाथोऽवि(खि)लनिधिरतो दंतुरश्चापि किंचित्
धातोर्वादे भवति निरतश्चंचलः कोल(श)नेत्रः ।
स्त्रीसंसक्ता(क्तः) परिच(रध)नगृहे(हो) मातृभक्तो भु(क्तः सु)जंगो(घो)
मध्ये क्षामो बहुविधमती रन्ध्रवेदी परेषां ॥ ३५ ॥

पर्यंकशंखशर(हरि)शस्त्रमृदंगमाला
धी(वी)णोपमा यदि करे चरणे च रेखाः ।
वर्षाणि सप्ततिमितानि करोति राज्यं
प्रात्यन्तिकः क्षितिपतिः कथितो मुनीन्द्रैः ॥ ३६ ॥

## हंसयोगजातपुरुषलक्षणम्

रक्तावु(स्योऽ)न्नतनासिकः सुचरणो हंसः प्रसन्नेऽन्द्रियो
गौरः पीनकपोलरक्तकरजो हंसस्वनः श्लेष्मलः ।
शंखाब्जांकुशचापमत्स्ययुगलैर्निस्त्रिशमालाघटैः(ब्दैः)
छिद्रैः(चिह्नैः) पादकरांकितो मधुनिभे नेत्रे च वृत्तं शिरः ॥ ३७ ॥

¹सलिलाशयेषु रमते स्त्रीषु न तीः[तृ](प्तिं) प्रयाति कमीतः (कामार्तः) ॥

षोडशशतानि तुलितोऽगुलानि दैर्घ्य(ध्र्येण) षन(ण्ण)वतिः ॥ ३८ ॥

[पातीह देशान् खलु शूरसेनान्

गान्धारगङ्गायमुनान्तरालान् ।

जीवेदनूनं शतवर्षसङ्ख्यां

पश्चाद्वनान्ते समुपैति नाश(वास)म् ॥ ३९ ॥]

भद्रकयोगजातपुरुषलक्षणम्

शार्दूलप्रतिमाननो हिम(नन्दो द्विप)गतिः पीनोऽरुवक्षस्स्थलो

लंबापीनसुवृत्तबाहुयुगलस्तत्तुल्यमानोऽच्छ्रयः ।

कामी कोमलसूक्ष्मरोमनिचयैः संरुद्धगण्डस्थलः

प्राज्ञः पङ्कजगर्भपाणिचरणः सत्वाधिको योगवित् ॥ ४० ॥

शङ्खासिकुंजरगदाकुमुदेषुकेतु

चक्राब्जलांगलविचिह्नितपाणिपादः ।

यात्रागुरुद्विपमदप्रथमांबुसिक्त

भूः कुङ्कुमप्रतिमगन्धतनुः सुघोषः(णः) ॥ ४१ ॥

शास्त्रार्थविद्धन(द्धृति)युतः समसंगतभ्रू

र्गाणाय(र्नागोप)मो भवति चापि निगूढगुह्यः ।

---

१ एतच्छ्लोकात्परमेकः श्लोको लुप्तः । स च कुण्डल्यां निवेशितः ।

सत्कुक्षिधर्मनिरतः सुललाटशंखो

धीर(रः) स्थिरस्त्वसितकुंचितकेशभाराः(रः) ॥ ४२ ॥

स्वतरुः(न्त्रः) सर्वकार्येषु स्वजनं प्रति न क्षमः ॥

भुज्यते विभवस्तस्य नित्यमर्थिजनैः पदै(रैः) ॥ ४३ ॥

भारस्तुलायां तुलितो यदि स्या

च्छ्लोक(का)न्यकुब्जाधिपतिस्तदासौ ।

यस्त्या(हस्त्या)दिमुख्यैः सहितः सभद्रः

सर्वत्र राजा शरदामशीतिं ॥ ४४ ॥

॥ इति श्रीजातकसारदीपे पंचमहापुरुषलक्षणाध्यायः षष्टितमः ॥

---

## ॥ अथ राजयोगभङ्गाध्याय एकषष्टितमः ॥

विस्तरतो निर्दिष्टाः क्षितिपतियोगा विचित्रसंस्थानाः ॥

भंगश्च भवति तेषां यथा तथा संप्रवक्ष्यामि ॥ १ ॥

[1]कुजार्कजीवार्किभिरत्र नीचै

र्द्वाभ्यां त्रिभिर्श्चै(र्वै)कतमे विलग्ने ।

---

१ कुजरविगुरुशनिषु चतुर्ष्वपि नीचगतेषु कुळीरतुलामकरमेषान्यतमगते लग्ने चत्वारो योगाः । कुजरविगुरुषु नीचगतेषु, कुळीरतुलामकरान्यतमगते लग्ने त्रयो योगाः । रविगुरुशनिषु नीचगतेषु तुलायां वा, मकरे वा, मेषे वा लग्ने त्रयो योगाः । मकरे गुरौ मेषे शनौ कुळीरे कुजे, मकरे वा मेषे वा कुळीरे वा लग्ने त्रयो योगाः । मेषे शनौ कुळीरे कुजे तुलायां रवौ, मेषे वा, कुळीरे वा, तुलायां वा लग्ने त्रयो योगाः । मेषे शनौ कुळीरे कुजे, मेषे वा कुळीरे वा लग्ने द्वौ योगौ ।

निशाकरे वृश्चिकराशिसंस्थे
विशीर्यते राज्यकरो हि योगः ॥ २ ॥

[1]मूर्त्य(अन्त्या)द्यमाद्दि(दि)भागेषु [चर]राश्यादिषु शशी क्षीणः ॥
एकेनापि न दृष्टो ग्रहेण भंगस्तदा नृपतेः ॥ ३ ॥

[2]सर्वे क्रूराः केन्द्रे नीचारिगता न सौम्ययुतदृष्टाः ॥
शुभदा व्ययरिपुरन्ध्रे तदापि भंगो भवेन्नृपतेः ॥ ४ ॥

[3]लग्नं गणोत्तमोऽनं न खेचरैर्दृश्यते तदा भंगः ॥
भवति हि नृपयोगानां दारिद्र्याय प्रजातः स्यात् ॥ ५ ॥

---

मेषे शनौ तुलायां रवौ, मेषे वा तुलायां वा लग्ने द्वौ योगौ। मेषे शनौ मकरे गुरौ, मेषे वा मकरे वा लग्ने द्वौ योगौ। कुळीरे कुजे तुलायां शनौ, कुळीरे वा तुलायां वा लग्ने द्वौ योगौ। कुळीरे कुजे मकरे गुरौ, कुळीरे वा मकरे वा लग्ने द्वौ योगौ। कुळीरे कुजे मकरे गुरौ, कुळीरे वा मकरे वा लग्ने द्वौ योगौ। तुलायां शनौ मकरे गुरौ, तुलायां वा, मकरे वा लग्ने द्वौ योगौ। चन्द्रे वृश्चिकगते एते योगा भवंति। एवमष्टाविंशतिर्योगाः श्लोकेऽस्मिन् कथिताः। राजयोगप्रभवा अप्येतद्योगजाता राजानो न भवन्तीति भावः ॥ २ ॥

१ मेषकुळीरतुलामकरेषु चरमनवांशगते, वृषभसिंहवृश्चिककुंभेष्वष्टमनवांशगते, मिथुनकन्याधनुर्मीनेषु प्रथमनवांशगते च क्षीणचन्द्रे एकेनापि ग्रहेणादृष्टे राजयोगभङ्गः ॥ ३ ॥

२ सर्वेषु क्रूरेषु नीचे वा शत्रुगृहे वा स्थितेषु, शुभग्रहयोगदृष्टिरहितेषु, तथा सर्वेषु शुभग्रहेषु व्यये वा षष्ठे वा अष्टमे वा स्थितेष्वेको योगः ॥ ४ ॥

३ यस्मिन् राशौ लग्नं भवति तद्राशिसंबन्धि वर्गोत्तमस्फुटं लग्नस्फुटात् शोध्यम्। अवशिष्टं राश्यादि वर्गोत्तमोनलग्नस्फुटं भवति। तद्यदि केनापि ग्रहेण न निरीक्षितं तर्हि राजयोगभङ्गः। वर्गोत्तमस्फुटानि मेषादारभ्य लिख्यन्ते।

[1]घटोदये नीचगतैस्त्रिभिर्ग्रहै

बृहस्पतौ सूर्यगतो त्रि(युते च) नीचगे ।

एकोऽपि नोच्चे ल(न) शुभेच(न) खं(सं)गते(तः)

प्रयान्ति नाशं शतशो नृपोद्भवाः ॥ ६ ॥

[2]केन्द्रेषु शून्येषु शुभैर्नवेशा(न्दा)

वस्तंगनैर्नीचमथ प्रयातैः ।

चतुर्ग्रहैर्वापि गृहे रिपूणां

प्रणश्यते(ति) क्ष्माधिपतेस्तु योगः ॥ ७ ॥

[3]स्वांशे रवौ शीतकरे प्रणष्टे

पापैश्च दृष्टे शुभदृष्टिहीने ।

कृत्वापि राज्यं उय(च) वते(ने) मनुष्यः

पश्चात्सुदुःखं लभते हताशः ॥ ८ ॥

[4]शिशिरकिरण[शत्रु]र्लग्नगश्चन्द्रदृष्टः

सहजरिपुभव(मद)स्था भानुभूपुत्रमन्दाः ।

---

मे, ०-१-४० । वृष, १-१५-० । मि, २-२८-२० । कर्क, ३-१-४० । सिं, ४-१५-० । क, ५-२८-२० । तु, ६-१-४० । वृ, ७-१५-० । ध, ८-२८-२० । म, ९-१-४० । कुं, १०-१५-० । मी, ११-२८-२० । १ त्रिषु ग्रहेषु नीचगतेषु सत्सु, कुंभलग्ने, गुरौ रवियुते नीचगते, एकस्यापि ग्रहस्य सोच्चगतस्वक्षुभयोग-योरभावे एको योगः ॥ ६ ॥ २ केन्द्रेषु शुभरहितेषु, चन्द्रे क्षीणे, सूर्यभानिष्यव-शादस्तं गतेषु वा नीचराशिस्थितेषु वा शत्रुराशिस्थितेषु वा चतुर्षु ग्रहेष्वेको योगः ॥ ७ ॥ ३ सूर्ये स्वनवांशगते, पापदृष्टे शुभदृष्टिहीने क्षीणचन्द्रे एको योगः ॥ ८ ॥ ४ चन्द्रदृष्टे बुधे लग्नगते, तृतीयगे रवौ, षष्ठगे कुजे, सप्तमगे शनौ,

शुभविरहितकेन्द्रैरस्तगैर्वापि सौम्यै

नृपतिजननयोगो याति नाशं क्षणेन ॥ ९ ॥

[1]पंचा(च)भिर्निम्नगैः खेटैरस्तं यातैरथापि वा ॥

प्रयान्ति विलयं योगा भूभुजां ये प्रकीर्तिताः ॥ १० ॥

[2]उत्कम्या(ल्कायाः)न्य(प) तने चैव निर्घातस्या(व्य)तिपातयोः ॥

केतोः प्रदर्शने चैव यान्ति नाशं नृपोद्भवाः ॥ ११ ॥

अन्यैः क्रूरोत्यानै(त्पातै)स्त्रिशंकुताग(रा) यदोदयं याति ॥

सर्वे प्रयान्ति विलयं नृपयोगा भानुजो यदि विलग्ने ॥ १२ ॥

[3]कर्तारो नृपतीनां गगनसदो युद्धकांक्षिणो मलिनः(नाः) ॥

रूक्षा विव्रण(वर्ण)देहा विघ्नं जनयन्ति [राज]योगस्य ॥ १३ ॥

[4]परं नीचं गते चन्द्रे क्षीणे योगो महीपतेः ॥

नाशमायाति राजेव दैवज्ञप्रतिलोमगः ॥ १४ ॥

[5]तुलायां पद्मिनीबन्धुस्त्रिशांशे दशमे स्थितः ॥

हन्ति राज्यं यथा लोभः समस्तगुणसंचयं ॥ १५ ॥

---

(पाठान्तरे एकादशगे शनौ) केन्द्रेषु शुभग्रहरहितेष्वेको योगः। पूर्वस्मिन्नेव योगे शुभग्रहाणां केन्द्रगतत्वेऽपि मौढो अपरो योगः ॥ ९ ॥ १ पञ्चसु ग्रहेषु नीचेषु वा, मूढेषु वा एको योगः ॥ १० ॥ २ यस्य जन्मकाले उल्कापातः निर्घातः व्यतिपाता-त्यर्कान्तिपातः केतुदर्शनं चेत्येवमादयः क्रूरा उत्पाताः बृहत्संहितायुक्ताः भवन्ति, त्रिशंकुनक्षत्रोदयश्च भवति स राजा न भवति। शनौ लग्नगते च राजयोगभङ्गः ॥ ११-१२ ॥ ३ राजयोगकारकग्रहाणां युद्धे पराजये एको योगः ॥ १३ ॥ ४ वृश्चिकतृतीयांशगते क्षीणचन्द्रे एको योगः ॥ १४ ॥ ५ तुलादशमभागे परमनीचांशे स्थिते रवावेको योगः ॥ १५ ॥

जूकस्य दशमे भागे स्थितः कमलबोधनः ॥
सहस्रं राजयोगानां मन्दमेव करोत्यसौ ॥ १६ ॥

[1]स्वत्रिकोणगृहं केचित्स्वोच्चं याताः स्वमन्दिरं ॥
अतिनीचे रविश्चैको न तेषां फलसंभवः ॥ १७ ॥

[2]गुर्मृगे विलग्नस्थो दुःखैः सन्तापयेन्नरं ॥
कामार्तमधनं वेश्या यद्वदिन्दुर्न वेच(चेत्स्व)मे ॥ १८ ॥

[3]एकेनापि शशांको ग्रहेण केमुद्रुमे यदि न दृष्टः ॥
विघ्नयति राजयोगं मलिनावा(चा)रः प्रसूतः स्यात् ॥ १९ ॥

[4]भिक्षामटति त्र्याद्यैर्नीचर्क्षस्थैः सुदुःखितो मलिनः ॥
सकमलेहि(लमही)भुक्पुत्रैः(त्रः) परिभूतो जायते नि(निः)स्वः ॥ २० ॥

[5]अध्यरिभवनं प्राप्तैः पंचादिभिरस्तं गतैश्च गगनचरैः ॥
ध्वंसं प्रयाति राजा यदि रविचंद्रौ तनुं(न तुं)गच्छौ(स्थौ) ॥ २१ ॥

[6]सचिवो दानवेन्द्रस्य नीचांशे परमो(मे) स्थितः ॥
संप्राप्तमतुलं राज्यं नरं ज्यावयति ध्रुवं ॥ २२ ॥

---

१ अन्येषु ग्रहेषु स्वोच्चे वा स्वमूलत्रिकोणे वा स्वगृहे वा स्थितेष्वपि रवौ परमनीचगते राजयोगभङ्गः ॥ १७ ॥ २ चन्द्रे कर्काटकं विहायान्यत्र स्थिते, मकरलग्नगते गुरावेको योगः ॥ १८ ॥ ३ केमुद्रुमे योगे सति, चन्द्रे केनापि ग्रहेणादृष्टे एको योगः ॥ १९ ॥ ४ त्रिभिर्वा तदधिकैर्वा नीचगैः सार्वभौमसुतोऽपि भिक्षाशी भवति ॥ २० ॥ ५ स्वाभाविकशत्रुस्तत्कालशत्रुतामापन्नोऽधिशत्रुर्भवति। पंचभिर्वा तदधिकैर्वा ग्रहैरधिशत्रुगृहस्थैरस्तं गतैर्वा एको योगः। अस्मिन् योगे चन्द्रसूर्ययोर्मध्ये अन्यतरस्य स्वोच्चगतत्वे योगभङ्गः ॥ २१ ॥ ६ कन्यासप्तविंशभागे परमनीचे स्थिते

१राजयोगाः समाख्यातास्तेषां भंगाश्च दारुणाः ॥
परीक्ष्य यत्नतः प्राज्ञः फलं ब्रूयाद्बलाबलात् ॥ २३ ॥

२कमलगहनबन्धुः कन्ययाऽलिङ्गिताङ्ग
स्तु(स्त्व)लिनि कुजगुरेज्यौ चन्द्रमा मेषसंस्थः ।
न च यदि परिशेषैर्दृश्यते स्यात्स भूपः
प्रचलितगजमेघ(घ)च्छादिताशातनौघः (नभोऽभ्रः) ॥ २४ ॥

॥ इति श्रीजातकसारदीपे राजयोगभङ्गाध्यायः एकषष्ठितमः ॥

---

अथ नाभसयोगाध्यायो द्विषष्ठितमः

## ॥ अथ नाभसयोगफलानि लिख्यन्ते ॥

**लघुजातके—**

रज्जुयोगमुसलयोगनलयोगलक्षणफलानि

३चरभवनादिषु सर्वैराश्रयजा रज्जुमुसलनलयोगाः ॥
ईषु(र्ष्यु)र्मानी धनवान् क्रमेण कुलविश्रुताः सर्वे ॥ १ ॥

---

शुके एको योगः ॥ २२ ॥ १ राजयोगतद्भङ्गयोगयोर्मध्ये राजयोगस्य बलवत्त्वे तत्फलं वाच्यम् । तद्भङ्गयोगस्य बलवत्त्वे तत्फलं वाच्यम् ॥ २३ ॥ २ सूर्ये कन्यागते, वृश्चिकगे गुरुयुक्ते कुजे, (पाठान्तरे तुलागते गुरुयुक्ते कुजे) मेषगते चन्द्रे ग्रहदृष्टिरहिते प्रबलराजयोगो भवति ॥ २४ ॥ ३ चरे राशावेकस्मिन् वा, राशिद्वये वा, राशित्रये वा, राशिचतुष्टये वा स्थितेषु सर्वेषु ग्रहेषु रज्जुयोगः । अत्र केचिदाचक्षते । "चरराशिचतुष्टये यदा सर्वे ग्रहा भवन्ति तदैवायं योगः,

न तु चरराशावेकस्मिन् वा, चरराशिद्वये वा, चरराशित्रये वा, सकलग्रहसद्भावे " इति। तदेतदयुक्तम्। तथा हि—गोलयोगेन शकटाण्डजयोगाभ्यां च साम्यं रज्जुयोगः कदाचिद्भजते। तदा गोलादियोगफलमेव वक्तव्यम्, न रज्जुयोगफलम् इति वराहो ब्रवीति। तथा च तद्वाक्यम्—

"योगा व्रजन्त्याश्रयजाः समत्वं
यवाब्जवज्राण्डजगोलकाद्यैः" इति।

अत्र गोलयोगः सर्वैर्ग्रहैरेकराशिगतैर्भवति। शकटाण्डजयोगौ च राशिद्वयगतैः सर्वैर्ग्रहैर्भवतः। सर्वेषां ग्रहाणामेकराशिगतत्वे, राशिद्वयगतत्वे वा रज्जुयोगो यदि न स्यात्तर्हि कथं तस्य गोलशकटाण्डजैः साम्यं भवेत्। तथा च वराहोक्तिरनुपपन्ना स्यात्। किं च "रज्ज्वादीनां आश्रययोगानां गोलादियोगान्तरमिश्रणे गोलादिफलमेव वक्तव्यम्, गोलाद्यमिश्रणे रज्ज्वादिफलं वक्तव्यम्" इति वराहो ब्रवीति। तथा च तद्वाक्यम्—

"आश्रयोक्तास्तु विफला भवन्त्यन्यैर्विमिश्रिताः॥
मिश्रा यैस्ते फलं दद्युरमिश्राः स्वफलप्रदाः" इति॥

अत्र केन्द्रे चरराशिचतुष्टये सर्वग्रहसत्वे वज्रयवकमलयोगमिश्रणम्, पणपरे आपोक्लिमे वा सर्वग्रहसत्वे वापीयोगमिश्रणं भवति। चरराशिचतुष्टये सर्वग्रहस्थितावेव रज्जुयोग इत्यंगीकारे योगांतरामिश्रणस्यैवासंभवेन "अमिश्राः स्वफलप्रदाः" इत्युक्तिरनुपपन्ना स्यात्। अस्मदीया व्याख्याने योगांतरामिश्रणं सुलभम्। तथा हि—केन्द्रे वा पणपरे वा आपोक्लिमे वा चरराशित्रये सकलग्रहसत्वे, पणपरे वा आपोक्लिमे वा चरराशिद्वये सकलग्रहसत्वे च योगान्तरमिश्रणं नास्त्येव। अतोऽस्मदीयं व्याख्यानमेव युक्तम्। अत एवोक्तंभगवता गार्गिणा—

¹केन्द्रत्रयगैः पापैरितैरर्दलाख्यावहिश्च माला च ॥
सर्पेऽतिदुःखितानां मालायां जन्म सुखिनां च ॥ २ ॥

गदायोगशकटयोगविहगयोगशृङ्गाटकयोगहलयोगलक्षणफलानि

²द्विरनंतरकेन्द्रस्थैर्गदा विलग्नास्तसंस्थितैः शकरं(टम्) ॥

---

" एको द्वौ वा त्रयः सर्वे चरा युक्ता ग्रहैर्यदा ॥

चरयोगस्तदा रज्जुः सेर्ष्यानां जन्मदो भवेत् " इति ।

एवं स्थिरे राशावेकस्मिन् राशिद्वये राशित्रये राशिचतुष्टये वा स्थितेषु सर्वेषु ग्रहेषु मुसलयोगः । द्विस्वभावे राशौ पूर्ववत्स्थितेषु सर्वेषु ग्रहेषु नलयोगः । अस्य योगत्रयस्य चरराश्यादिराश्रयो नियतः । वक्ष्यमाणाना आकृतियोगादिनां लग्नभेदेनाश्रयो न नि यतः । अत इदं योगत्रयं नियताश्रयत्वेनाश्रययोगनाम्ना सत्यजार्येण व्यपदिश्यते । ईर्ष्युरिति रज्जुयोगफलम् । मानी धनी ति मुसलयोगफलम् । धनी इति नलयोगफलम् । कुलविश्रुता इति योगत्रयफलम् ॥ १ ॥

१ केन्द्रत्रये पापयुक्ते सर्पयोगः । केन्द्रत्रये शुभयुक्ते मालायोगः । इमौ योगौ सत्याचार्येण दलयोगनाम्ना कथितौ । पराशरेण च सर्पयोगमालायोगनाम्ना कथितौ । अस्मिन् योगद्वयेऽपि चन्द्रः योगकारकेषु न गण्यते । केन्द्रत्रयेऽपि रविकुजशनियोगः, केन्द्रे शुभग्रहासंबन्धश्च सर्पयोगे अपेक्षितः । तथा मालायोगे केन्द्रे पापग्रहायोगः, केन्द्रत्रये बुधगुरुशुक्रसंबधश्चापेक्षितः । तदुक्तं बादरायणेन—

केन्द्रेष्वपापेषु सितज्ञजीवैः केन्द्रत्रिसंस्थैः कथयन्ति मालाम् ॥

सर्पस्त्वसौम्यैश्च यमारसूर्यैर्योगाविमौ द्वौ कथितौ दलाख्यौ " इति ॥

अत्र चन्द्रस्य योगकारकत्वाभावेन योगकारकत्वेन प्रसक्तानां षण्णां मध्ये अर्धसंख्याकानां त्रयाणां शुभानामशुभानां च प्रत्येकं योगकारकत्वेनास्य दलाख्यता युक्तियुक्तेत्युत्पश्यामः ॥ २ ॥ २ आकृतिभेदमाश्रित्य कृतसंज्ञानां अत एवाकृतियोगनाम्ना विंशतियोगानां लक्षणमाह (द्विरनन्तरेति) लग्नचतुर्थयोर्वा, चतुर्थसप्तमयोर्वा, सप्तमदशमयोर्वा, दशमलग्नयोर्वा सर्वग्रहयुतत्वे चत्वारो योगाः । यवनेश्वरेणात्र प्रथमो योगो गदानाम्ना,

खचतुर्थयोर्विहंगः शृङ्गाटकमुदयसुतनवगैः ॥ ३ ॥

शृङ्गाटकमन्यगतैर्हलमेतेषां क्रमात्फलोपनयः ॥
यज्वा शकटाजीवी दूतश्चिरसौख्यभाक् कृषिकरश्च ॥ ४ ॥

वज्रयोगयवयोगकमलयोगवापीयोगाः

[1]क्रूरैः सुखकर्मस्थैः सौम्यैरुदयास्तसंस्थितैर्वज्रं ॥
यव इति तद्विपरीतैर्मिश्रैः कमलं [बहिः] शु(स्थि)तैर्वापि(पी) ॥ ५ ॥

---

द्वितीयः शङ्खनाम्ना, तृतीयः बभ्रुनाम्ना, चतुर्थो ध्वजनाम्ना व्यपदिष्टः। आचार्येण तु इमे चत्वारोऽपि योगा गदानाम्नैव कथिताः। एवं लग्नसप्तमयोः सकलग्रहयुतत्वे शकटयोगः। एवं चतुर्थदशमयोः सकलग्रहयुतत्वे विहगयोगः। लग्नपञ्चमनवमगतेषु सर्वेषु ग्रहेषु शृङ्गाटकयोगः। अन्यगतैः लग्नभिन्नस्थानगतैः सर्वैर्ग्रहैर्यच्छृङ्गाटकं भवति तदेव हलमित्युच्यते इति योजना। इदमुक्तं भवति—द्वितीयषष्ठदशमगतेषु वा, तृतीयसप्तमैकादशगतेषु वा, चतुर्थाष्टमद्वादशगतेषु वा सर्वेषु ग्रहेषु त्रिविधो हलयोग इति। अत्र यज्वेति गदायोगफलम्। शकटाजीवी इति शकटयोगफलम्। दूत इति विहगयोगफलम्। चिरसौख्यवानिति शृङ्गाटकयोगफलम्। कृषिकर इति हलयोगफलम् ॥ ३—४ ॥[1] वज्रयोगविषये बहवो मतभेदा विद्यन्ते। तत्रादौ वराहमतरीत्या श्लोकोऽयं व्याख्यायते। चतुर्थदशमगतैः सर्वैः पापग्रहैः, लग्नसप्तमगतैः सर्वैः शुभग्रहैः एको वज्रयोगः। अस्मिन् योगे बुधशुक्रयोर्लग्ने वा सप्तमे वा स्थितिः, सूर्यस्य चतुर्थे दशमे वा स्थितिश्चावश्यिका। तदिदं गणितप्रत्यक्षादिविरुद्धम्। सूर्याच्चतुर्थगृहावस्थानस्य बुधशुक्रयोरसंभावितत्वात्। असंभावितस्यास्य योगस्य कथनं च पूर्वशास्त्रानुसारेण इति वराहो ब्रवीति। अस्य वराहमतस्यानौचित्यम् उच्चादिचिन्ताध्याये ६ श्लोकव्याख्यानावसरे मया निरूपितम्। षट्पञ्चाशिकाप्रकाशकारस्तु इमामनुपपत्तिं मनसि निधायास्मिन् वज्रयोगे सूर्यस्य योगकारकत्वं नाहतवान्। तथा हि—द्वादशे वा द्वितीये वा स्थिते सूर्ये, बुधशुक्रयोर्लग्नगतयोः, शेषेषु ग्रहेषु

पूर्ववत्स्थितेषु वज्रयोगः। एवं षष्ठे वा अष्टमे वा स्थिते सूर्ये, बुधशुक्रयोः सप्तमगतयोः, पूर्ववद्वज्रयोगः। अत्र रविं विहायावशिष्टानां ग्रहाणामेव योगकारकत्वे न काप्यनुपपत्तिः। अत्रायमाक्षेपः—नाभसयोगानां सर्वग्रहदशासु फलदत्वं वक्ष्यते। तच्च सर्वेषां ग्रहाणां नाभसयोगकारकत्वं विना अनुपपन्नम्। योगकारकत्वरहितग्रहदशायां योगफलस्यानानुभविकत्वात्। एवं च सप्तानामपि ग्रहाणां नाभसयोगकारकत्वे सिद्धे रविं विहाय वज्रयोगकल्पनमयुक्तमिति। अत्रेदं समाधानं—सर्पमालायोगयोः कारकाः क्रमेण पापात्रयः शुभात्रयश्चेति सर्वसंमतम्। तत्र त्रयाणामेव योगकारकत्वेन सर्वेषामपि ग्रहाणां मिलितानामेव नाभसयोगकारकत्वमिति नियमस्य भङ्ग एव। योगकारकत्वरहितग्रहदशायां योगफलमन्यत्रादृष्टमपि नाभसयोगानां योगसार्वभौमत्वेन मालादौ दृष्टम्। तद्वद्वज्रयोगेऽपि भविष्यतीति किमनुपपन्नम्। किं च वज्रयवयोगयोः सर्वकालफलदत्वं नास्त्येव। वज्रयोगजः आद्यन्तयोः सुखितः, यवयोगजो वयोमध्ये सुखयुत इति हि वक्ष्यति। तथा चासंभावितत्वेन प्रसक्तयोरनयोरुभयोरपि सर्वकालफलदत्वाभावेन सर्वकालफलदयोगस्य सर्वग्रहसंबन्धित्वनियमेऽपि न क्षतिः। तेनैव नियमेनानयोर्योगयोः सर्वग्रहसंबन्धाभावस्यापि संभवेन पूर्वोक्तव्याख्यानस्य निर्दोषतासंभवात् इति। एवं च वराहेण पूर्वाचार्यमतमज्ञात्वैव पूर्वाचार्यमतं दूषितमिति शंभुहोराप्रकाशकारो वदति। अत्र संप्रदायविदो वदन्ति—प्राचीनैराचार्यैः कैश्चित् सर्पमालायोगयोः वक्ष्यमाणनाभसयोगेष्वन्तर्भावमभिप्रेत्य पृथक् फलं न कथितमिति वराहो वदति। तथा च तद्वाक्यम्—

"केन्द्रोपगैः प्रोक्तफलौ दलाख्यावित्याहुरन्ये न पृथक्फलौ तौ" इति।

तथा चानयोर्योगयोर्यस्मिन् कस्मिन्नपि वक्ष्यमाणयोगेऽन्तर्भावः संपादनीयः। तत्र पूर्वोक्तव्याख्यानद्वयेऽपि योगान्तरान्तर्भावो दुःसंपादः। तथा हि—अनयोर्योगयोः केन्द्रमात्रसंबन्धिष्वेव योगेष्वन्तर्भावो वक्तव्यः। ते च गदा, शकटं, विहगः, वज्रं, यवः, कमलं, इति षडेव। तेऽपि सर्वग्रहसंबन्धिन इति सर्वग्रहसंबन्धरहितयोरनयोरन्तर्भावस्तत्रापि नैव भवति। अत एतेषु षट्सु योगेषु दलयोगसाम्यं कस्यापि योगस्य कथंचित् संपादनीयम्। तच्चेत्थम्—लग्नसप्तमयोः शुभग्रहयुतत्वे 'एको वज्रयोगः। चतुर्थ-

दशमयोः पापग्रहयुतत्वे अपरो वज्रयोगः। अत्र प्रथमो योगः मालायोगेन साम्यं, द्वितीयो योगः सर्पयोगेन साम्यं भजते। यद्यपि दलयोगे केन्द्रत्रये ग्रहयोगः अत्र तु केन्द्रद्वये ग्रहयोग इत्यस्ति वैषम्यम् | तथापि सर्वेषां शुभग्रहाणां पापसंबंधरहितानां, केन्द्रयोगस्य, तथा सर्वेषां पापग्रहाणां शुभग्रहसंबंधरहितानां केन्द्रयोगस्य च निरुक्त-वज्रयोगे दलयोगे च साम्यमेव। अत एव सर्वसाम्याभावाभिप्रायेण "केन्द्रोऽपगैः प्रोक्तफलौ' इत्येवोक्तम्। अन्यथा "योगा व्रजन्त्याश्रयजाः समत्वं" इति-वदत्रापि "केन्द्रोपगैः साम्ययुतौ दलाख्यावित्यवक्ष्यत्। इममल्पं व्यत्यासं मनसि निधाय दलयोगस्य पृथक्कीर्तनं कृतं बहुभिराचार्यैः। एवं च पूर्वाचार्यैरुक्तं वज्रयोगद्वयं एकयोगत्वेन प्रकल्प्य वराहेणोक्तम् प्राचीनमतखण्डनं, शंभुहोराप्रकाशकारादिभिः कृतं मण्डनं च न युक्तिसहम्। अनया रीत्या व्याख्याने च न काप्यनुपपत्तिः। एवं लग्नसप्तमयोः पापग्रहयुतत्वे, चतुर्थदशमयोः शुभग्रहयुतत्वे च वराहरीत्या एको यवयोगः। एवं नवमे वा एकादशे वा सूर्ययुते, बुधशुक्रयोर्दशमगतत्वे, शेषेषु ग्रहेषु पूर्ववत्स्थितेष्वेको यवयोगः। तृतीये वा पञ्चमे वा रवियुते, बुधशुक्रयोश्चतुर्थगतयोः, शेषेषु ग्रहेषु पूर्ववत्स्थितेषु द्वितीयो यवयोगः। इदं योगद्वयं शंभुहोराप्रकाशकारादि-मतरीत्या। एवं लग्नसप्तमयोः सकलपापग्रहयुतत्वे एको योगः। चतुर्थदशमयोः सकलशुभयुतत्वे अपरो योगः। एवं द्वौ यवयोगौ चरमव्याख्यानरीत्या। लग्नचतुर्थसप्तमदशमगतेषु सर्वेषु ग्रहेष्वेकः कमलयोगः। एवं द्वितीयपंचमाष्टमैकादश-गतेषु वा, तृतीयषष्ठनवमद्वादशगतेषु वा सर्वेषु ग्रहेषु द्वौ वापीयोगौ। एवं लग्नद्वितीय-तृतीयचतुर्थगतैः सर्वैर्ग्रहैर्यूपयोगः। एवं चतुर्थपञ्चमषष्ठसप्तमगैः सर्वैर्ग्रहैः इषुयोगः। एवं सप्तमाष्टमनवमदशमगतैः सर्वैर्ग्रहैः शक्तियोगः। एवं दशमैकादशद्वादशलग्नगतैः सर्वैर्ग्रहैर्दण्डयोगः। अत्र आद्यन्तयोः सुखयुत इति वज्रयोगफलम्। मध्ये सुखभागिति यवयोगफलम्। धनयुत इति कमलयोगफलम्। अल्पसुख इति वापीयोगफलम्। त्यागी इति यूपयोगफलम्। हिंस्र इति इषुयोगफलम्। धनवर्जित इति शक्तियोग-फलम्। प्रियवियुक्त इति दण्डयोगफलम् ॥ ५—७ ॥

### यूपयोगबाणयोगशक्तियोगदण्डयोगलक्षानि

लग्नादिकण्टकेभ्यश्चतुर्गृहानन्तरं(र)संस्थितैर्योगाः ॥
यूपेषुशक्तिदण्डा वज्रादीनां फलान्येषां ॥ ६ ॥

### वज्रादियोगाष्टकफलानि

आद्यंतयोः सुखयुतः सुखभाङ्मध्ये धनान्वितोऽल्पसुखः ॥
त्यागी हिंस्रो धनवर्जितः पुमान् प्रियनिभु(वियु)क्तश्च ॥ ७ ॥

### नौकायोगकूटयोगछत्रयोगचापयोगलक्षणानि

[1]तद्वत्सप्तर्ष(क्ष)स्थैर्नौकूटच्छत्रकार्मुकानि स्युः ॥

### अर्धचन्द्रयोगलक्षणम्

नावाद्यैरप्येवं कंटकादि(त् )बहिस्थितैः स्मृतोऽर्धशशी ॥ ८ ॥

---

१ लग्नादारभ्य सप्तराशिगतेषु सर्वेषु ग्रहेषु नौकायोगः। तत्फलं कीर्त्या युत इति। चतुर्थादारभ्य सप्तराशिगतेषु सर्वेषु ग्रहेषु कूटयोगः। तत्फलम् अधनवानिति। सप्तमादारभ्य सप्तराशिगतेषु सर्वेषु ग्रहेषु छत्रयोगः। तत्फलम् सज्जनहित इति। दशमादारभ्य सप्तराशिगतेषु सर्वेषु ग्रहेषु चापयोगः। तत्फलम् शूर इति। द्वितीयाद्वा तृतीयाद्वा पञ्चमाद्वा षष्ठाद्वा अष्टमाद्वा नवमाद्वा एकादशाद्वा द्वादशाद्वा आरभ्य सप्तराशिगतेषु सर्वेषु ग्रहेष्वष्टौ अर्धचन्द्रयोगाः। तत्फलम् सुभग इति। लग्नतृतीयपञ्चमसप्तमनवमैकादशेषु षट्सु राशिषु सर्वग्रहयुतेषु चक्रयोगः। तत्फलम् धनी इति। द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशेषु षट्सु राशिषु सर्वग्रहयुतेषु समुद्रयोगः। तत्फलम् भूप इति। एवं गदायोगमारभ्य समुद्रयोगपर्यन्तं कथिता विंशतियोगा आकृतियोगाः ॥ ८—१० ॥

चक्रयोगलक्षणम्

एकान्तरैर्विलग्नात्षड्(त्षड्भ)वनांत(नाव)स्थितैर्ग्रहैश्चक्रं ॥

समुद्रयोगलक्षणम्

अर्थाश्च(च) तद्वदुदधिर्नौप्रभृतीनां फलानि सर्वेषां ॥ ९ ॥

नौकादिसप्तयोगफलानि

कीर्त्या युक्तोऽधनवान् स्वजनहितः शूरः सुभगो धनी भूपः ॥
इत्याकृतिजा विंशतिरात्मगुणैस्तेषु नन्दन्ति ॥ १० ॥

सर्पयोगकिंकरयोगतूणीयोगश्रुतयोगवृद्धियोगश्रुति(कर्ण)योगकूर्मयोगमहा-

कूर्मयोगाः

[1]उग्रैः कोणगतैश्च केन्द्रगशुभैः सर्पो घनास्यो(न्त्यो)पगैः
सर्वैः किंकरकोऽष्टसप्तनिखिलैस्तूणी सुतांघो:(ताम्बु) श्रुतः ।
सर्वैः खायगतैर्विवृद्धिरनुजं(जां)बुस्थैः श्रुतिर्धर्मखे
कर्णो रिःफतनौ च कूर्म इति सोऽपि द्यूनषष्ठे महान् ॥ ११ ॥

---

१ क्रूरग्रहेषु पञ्चमे वा नवमे वा स्थितेषु, शुभग्रहेषु केन्द्रगतेषु सर्पयोगः । सर्वेषु ग्रहेषु द्वितीयद्वादशगतेषु किंकरयोगः । सप्तमाष्टमगतेषु सर्वेषु ग्रहेषु तूणीयोगः । अयमेव ऋणयोग इत्यपि व्यपदिश्यते । चतुर्थपञ्चमगतेषु सर्वेषु ग्रहेषु श्रुतयोगः । दशमैकादशगतेषु सर्वेषु ग्रहेषु वृद्धियोगः । तृतीयचतुर्थगतेषु वा नवमदशमगतेषु वा सर्वेषु ग्रहेषु द्विविधः कर्णयोगः । लग्नद्वादशगतेषु सर्वेषु ग्रहेषु कूर्मयोगः । षष्ठसप्तमगतेषु सर्वेषु ग्रहेषु महाकूर्मयोगः । इति अष्टौ योगाः ॥ ११ ॥

सर्पयोगफलम्

सर्थे(र्पे) हिंस्रस्व(स्तु)धूर्तः स्याद्दन्धनार्थोऽ(र्तोऽ)ध्वगः सदा ॥

किंकरयोगफलम्

किंकरे परसेवार्थ(र्थः) किंकरोऽद्विग्नको भवेत् ॥ १२ ॥

ऋण(तूणी)योगफलम्

ऋणे ऋणयुतो नित्यं ग्लानियुक् परसेवकः ॥

श्रुतयोगफलम्

श्रुते शास्त्रमतिर्दीक्षायुतोऽवश्यं च मित्रयुक् ॥ १३ ॥

विवृद्धियोगफलम्

विवृद्धौ धनवृद्धिश्च क्षीणार्थानां क्षणे क्षणे ॥

कर्ण(श्रुति)योगफलम्

कर्णे कीर्तियुतो भूपो बहुस्त्रीसुतबन्धुयुक् ॥ १४ ॥

कूर्मयोगफलम्

कूर्मे कार्येष्वधीरः स्याद्द्वयोर्मध्ये च मध्यमः ॥

महाकूर्मयोगफलम्

महाकूर्मे लब्धसिद्धिर्नानास्त्रीभोगवान् सुखी ॥ १५ ॥

### मुसलयोगः

[1]लग्नात्त्रयो(त्त्रिभेऽ)नंतरित(तृा) त्रिने(यदि) स्युः
सर्वे ग्रहास्तं मुसलं वदन्ति ।
अस्मिन्प्रहारोऽपहतं प्रसूते
प्राज्ञैर्विरुद्धं सहजैरधन्यं ॥ १६ ॥

### मुद्गरपाशांकुशयोगाः

तं मुदु(द्ग)रं विद्धि(द्धि) जलात्प्रवृत्तै
र्वाग्दुष्टशोकभ्रमपीडितानां ।
पाशाख्यमस्तात् हृदुपद्रुतानां
मेषूरणादंकुशमीश्वराणां ॥ १७ ॥

### शयनीयोगः

[2]अनन्तर पंचगृहोऽपगेषु
सर्वेषु योगः शयनी विलग्नात् ।

---

१ लग्नद्वितीयतृतीयगतेषु सर्वेषु ग्रहेषु मुसलयोगः । चतुर्थपञ्चमषष्ठगतेषु सर्वेषु ग्रहेषु मुद्गरयोगः । सप्तमाष्टमनवमगतेषु सर्वेषु ग्रहेषु पाशयोगः । दशमैकादशद्वादशगतेषु सर्वेषु ग्रहेषु अङ्कुशयोगः ॥ १६—१७ ॥

२ लग्नद्वितीयतृतीयचतुर्थपञ्चमगतेषु सर्वेषु ग्रहेषु शयनीयोगः । चतुर्थपञ्चमषष्ठसप्तमाष्टमगतेषु सर्वेषु ग्रहेषु लाङ्गलयोगः । सप्तमाष्टमनवमदशमैकादशगतेषु सर्वेषु ग्रहेषु निश्रयणीयोगः । दशमैकादशद्वादशलग्नद्वितीयगतेषु सर्वेषु ग्रहेषु कुन्तयोगः । इमे चत्वारो योगाः लग्नादिव सूर्याद्वा चन्द्राद्वा अन्यग्रहेभ्यं वा भवन्ति ।

स्ववंशकीर्तिप्रतिलब्धमानो
जातो भवेदत्र सुखी च नित्यं ॥ १८ ॥

लाङ्गलनिश्रयणीयोगौ

तद्वच्चतुर्थादपि जां(लां)गलाख्यो
जन्मप्रदः स्यात्य(त्प)[रि]किंकराणां ।
अस्ताश्रयान्निश्रयणीति धूर्त
दूतव्यपाध्वन्यश्च(ताध्वगक्लेशिज)नं प्रसूते ॥ १९ ॥

कुन्तयोगः

नभस्थलात्कुन्तमिति प्रचण्ड-
प्रसूतिकृत्सूर्यकृतेव(तश्च)पुंसां ।
चन्द्रात्प्रवृत्ता(त्त)स्तु द(र)णोत्कटानां
अन्यप्रवृत्तो न लभेत संज्ञां ॥ २० ॥

पङ्क्तियोगः

[1]अनन्तरं बाहु(षट्सु)गृहेष्वधिष्ठां(षु याताः)
सर्वे यदा तं प्रवदन्ति पङ्क्तिं ।

---

सूर्यादीन् लग्नत्वेन परिकल्प्य पूर्ववद्योगा ज्ञेया इति यावत् । तत्र लग्नकृतानां सूर्यकृतानां च फलं समानं । चन्द्रकृतेषु रणोत्कटा भवन्ति । अन्यप्रवृत्तेषु प्रभावहीनो भवतीति ज्ञेयम् ॥ १८—२० ॥ १ षट्सु गृहेषु सर्वेषु ग्रहेषु स्थितेषु पङ्क्तियोगः । लग्नादारभ्य प्रवृत्ते पङ्क्तियोगे राजा भवति । चतुर्थसप्तमदशमेभ्यः

लग्नात्प्रवृत्तोऽत्र नृपं प्रसूते
केन्द्रात्प्रसूतो नृपमन्त्रिमुख्यं ॥ २१ ॥

विहाय केन्द्रैरि(द्रादि)तरप्रवृत्तैः
स्यात्पक्षि(ङ्क्ति)योगैर्नृचतुष्पदाढ्यः ।
यथाभिलाषं फलमुक्तमस्मिन्
विद्यात्फलोपायमलक्ष्यरूपं ॥ २२ ॥

पर्वतयोगः

[1]लग्नास्तमेषूरणगाः प्रशस्ताः
सर्वे च खेटा इह चेदपापाः ।
तं पा(प)र्वतं विद्धि बलाधिकानां
महीपतीनां प्रसवाय योगं ॥ २३ ॥

कलशयोगः

[2]तत्रांबरस्थेषु विपर्ययेण
योगो यदा तं कलशं वदन्ति ।
प्रभूतधान्याकरसंचयानां
तमाहुरुद्भूतिकरं सतां च ॥ २४ ॥

---

प्रवृत्तेषु मन्त्रिवरो भवति । पणफरेभ्यः आपोक्लिमेभ्यो वा प्रवृत्तैः पङ्क्तियोगैः नृचतुष्पदाढ्यो भवति ॥ २१—२२ ॥ १ लग्नसप्तमदशमेषु पापग्रहयोगरहितेषु शुभग्रहत्रययुतेषु पर्वतयोगः ॥ २३ ॥ २ लग्नसप्तमगतेषु पापयोगरहितेषु शुभग्रहेषु, दशमगतेषु शुभयोगरहितेषु पापग्रहेषु कलशयोगः ॥ २४ ॥

### जलाश्रयपूर्णकुम्भयोगौ

[1]जलाश्रयः कूर्मवदस्तलग्ने
वाम्तांबरपार्श्वपोहौ ।
(कुम्भे शुभावम्बरपार्श्वगौ द्वौ)
तं पूर्णकुंभं कलशाद्दिनानां(कुलसंभवानां)
स्वकर्मविख्यातिकृतं प्रसूते ॥ २५ ॥

### कुम्भविपर्ययंयोगः

[2]योगे फलं कुंभविपर्ययेण
स्यावृण(सुवर्ण)सौख्यद्रविणं प्रसूते ।
लग्नास्तयोश्चेद्धिकुंभवत्स्या
त्तत्पृष्ठतो वा न शुभो ति(नि)रुक्तः ॥ २६ ॥

---

१ षष्ठसप्तमद्वादशलग्नगतेषु सर्वेषु ग्रहेषु जलाश्रययोगः । दशमगे एकस्मिन् पापे, नवमैकादशगतयोः द्वयोः शुभग्रहयोः, शेषेषु लग्नसप्तमगतेषु पूर्णकुंभयोगः ॥ २५ ॥

२ लग्नसप्तमगतेषु सर्वेषु पापेषु, दशमगतेषु शुभेषु सर्वेषु एकः कुंभविपर्ययंयोगः । स च शुभः । चतुर्थदशमगतेषु सर्वेषु पापेषु, सप्तमे वा लग्ने वा स्थितेषु सर्वेषु शुभेषु द्वौ कुंभविपर्ययंयोगौ । अस्मिन् योगद्वये पूर्णकुंभवत् फलम् । लग्नसप्तमगतेषु सर्वेषु पापेषु, चतुर्थगतेषु सर्वेषु शुभग्रहेषु एकः कुंभविपर्ययंयोगः । स चाऽशुभः ॥ २६ ॥

नगरयोगः

[1]सर्वे चतुर्लग्नगता यदि स्यु
रन्योन्यसंपर्कगता ग्रहेषु ।
योगं तमाहुर्नगरं नृपाणां
जन्मप्रदं दंभकलिप्रियाणां ॥ २७ ॥

दोलयोगः

[2]चतुर्थषट्पंचतृतीयसंस्थै
श्चतुर्भिरन्यैस्त्रिचतुष्टयस्थैः ।
योगः स दोलो न्विभष(नि)ष्ठिताना
मुत्पत्तिकृत्यट्क(त्पर्य)टनोऽत्सुकानां ॥ २८ ॥

वेदियोगः

[3]सव्यापसव्ये भवने व(वि)लग्ना
दस्ताव(च्च संस्था)चर्यामधिकृत्य(गम्य) सर्वे ।

---

१ अन्योन्यसप्तवर्गसंबन्धयुतेषु सर्वेषु ग्रहेषु केन्द्रचतुष्टयगतेषु नगरयोगः ॥ २७ ॥ २ तृतीयचतुर्थपञ्चमषष्ठसप्तमदशमलग्नगतैः सर्वैर्ग्रहैर्दोलयोगः ॥ २८ ॥ ३ लग्नादारभ्य सव्यक्रमेण द्वितीयादिक्रमेण त्रिषु राशिषु, अपसव्यक्रमेण द्वादशादिविलोमक्रमेण त्रिषु गृहेषु, एवं षट्सु राशिषु षड्भिर्ग्रहैः स्थितैः, एकस्मिन् ग्रहे लग्ने वा सप्तमे वा स्थिते वेदियोगः। एवं सप्तमादपि ज्ञेयम्। चतुर्थादारभ्य दशमपर्यन्तं वा, दशमादारभ्य चतुर्थपर्यन्तं वा स्थितेषु सर्वेषु ग्रहेषु वेदियोग इति प्राक्त् ॥ २९ ॥

कुर्वन्ति वेद्यां परकिङ्कराणां
जन्मनुरप्रोज्झितवनुणां
जन्मादरप्रोज्झितकैतवानाम् ॥ २९ ॥

श्रेष्ठाधियोगः

[1]जामित्रषष्ठाष्टमगा यदि स्युः
सौम्या विलग्नादितरेष्वनिष्टाः ।
श्रेष्ठाधियोगे भवतीह राजा
विमुक्तशस्त्रश्रमरोगदुःखः ॥ ३० ॥

[2]योगा इमे आकृति[जा नि]रुक्ता
लग्नेन्दुभाभ्यां यवनैः पुराणैः ।
तेषु प्रसूताः सुखिनः सभाग्यैः
समृद्धिभाजः पुरुषा भवन्ति ॥ ३१ ॥

गोलयोगः

[3]सर्वग्रहैश्चैकगृहस्थितैश्च
गोलोऽत्र दुःखी मलिनो दरिद्रः ।

---

१ सौम्येषु त्रिषु लग्नात् सप्तमे षष्ठे अष्टमे च स्थितेषु पापेषु शेषगृहगतेषु श्रेष्ठाधियोगः ॥ ३० ॥ २ वराहादिभिर्विंशतिराकृतियोगा उक्ताः । अनेनाचार्येण तु सप्तचत्वारिंशदुक्ताः । प्राचीनैर्यवनैरेतेषामेव विकल्पेन अष्टादशशतसङ्ख्या योगा निरुक्ताः । इमे योगाः लग्नाद्वा चन्द्राश्रितराशेर्वा वक्तव्याः ॥ ३१ ॥ ३ सर्वेषु ग्रहेषु एकस्मिन् राशौ स्थितेषु गोलयोगः ॥ ३२ ॥

नरोऽलसोऽमार्गरतोऽर्थविद्या
मानोऽज्झितः स्पीत(स्यात्) कुपरिग्रहश्च ॥ ३२ ॥

युगयोगः

[1]राशिद्द(द्व)यस्थैः खचरैर्युगाख्यो
योगोऽत्र पाषण्डयसुतोऽर्थहीनः ।
भवेत्प्रसूतः पुरुषो विधर्मा
मानोऽज्झितो लोकबहिष्कृतश्च ॥ ३३ ॥

शूलयोगः

[2]शूलो भवेद्भत्रितयस्थखेटै
रस्मिन्प्रसूतो विधनोऽतिहिंस्रः ।
तीक्ष्णोऽलसः स्यात्समरप्रचण्डो
बहुश्रु(हिष्कृ)तः शूलरुगार्दितश्च ॥ ३४ ॥

केदारयोगः

[3]केदारयोगो भ[च]तुष्कसंस्थैः
खेटैर्नरस्तत्र कृषीवलः स्यात् ।

---

१ सर्वेषु ग्रहेषु राशिद्वयगतेषु युगयोगः । अत्र राशिद्वयस्याव्यवधानमपेक्षितं । यथा लग्नद्वितीयगतैरेव सर्वैर्ग्रहैरयं योगः, न तु लग्नतृतीयगतैरिति केचिदाचार्या मन्यन्ते । परं त्वत्र मूलं मृग्यम् । एवमग्रेऽपि ॥ ३३ ॥ २ सर्वेषु ग्रहेषु राशित्रयगतेषु शूलयोगः ॥ ३४ ॥ ३ सर्वेषु ग्रहेषु राशिचतुष्टयगतेषु केदारयोगः ॥ ३५ ॥

बलस्वभावः सुबहूपयोग्यः(ग्यः)
सत्यः सुखी सत्सुहृदर्थयुक्तः ॥ ३५ ॥

[1]पाशः खगैः पंचगृहस्थितैश्च
जातो विशीलो बहुभाषणश्च ।
प्रपंचकः कार्यपटुः प्रभूत
भृत्यो भवेद्बन्धनभाग्म(ङ्म)नुष्यः ॥ ३६ ॥

दामनीयोगः

[2]स्याद्दामनी षड्गृहसंस्थखेटै
र्दाता च तत्रार्थचतुष्पदाढ्यः ।
धीरस्थ(रः सु)गूढो व्ययवृद्धिवित्तः(युक्तः)
परोपकारी पुरुषोऽतिविद्वान् ॥ ३७ ॥

वीणायोगः

[3]सप्तर्क्षसंस्थैः खचरैः समग्रैः(स्तैः)
वीणाऽत्र संगीतरुचिर्नरः स्यात् ।
मित्रार्चितः श(शा)स्त्रपरः सुखी च
प्रभूतभृत्यो निपुणो गुणाधः(ढ्यः) ॥ ३८ ॥

---

१ सर्वेषु ग्रहेषु राशिपञ्चकगतेषु पाशयोगः ॥ ३६ ॥ २ सर्वेषु ग्रहेषु राशिषट्कगतेषु दामनीयोगः ॥ ३७ ॥ ३ सर्वेषु ग्रहेषु सप्तराशिगतेषु वल्लकीयोगः ॥ ३८ ॥

[1]अभावे पूर्वयोगानामिमे स[प्त] प्रकीर्तिताः ॥
संख्यास्तेषु प्रजायन्ते परभाग्योऽपजीविनः ॥ ३९ ॥

[2]नाभसाख्या र(इ)[मे] योगाः फलैः सार्धमुदाहृताः ॥
प्रयच्छन्ति समस्तासु दशासु नियतं फलं ॥ ४० ॥

इति नृसिंहदैवज्ञविरचिते श्रीजातकसारदीपे नाभसयोगाध्यायो द्विषष्टितमः ॥

---

१ पूर्वोक्ता गोलादयः सप्त योगाः राशिसंख्यां निमित्तीकृत्य कृताः । अत एव संख्यायोगा इत्युच्यन्ते । पूर्वोक्तयोगानामेतेषां च नौकादौ साङ्कर्यं भवति । तदा नौकादिफलमेव वक्तव्यम् । पूर्वोक्तयोगसांकर्यमात्रे एतद्योगफलं वक्तव्यम् । एवं आकृतियोगदलयोगयोः आकृतियोगाश्रययोगयोर्वा साङ्कर्ये आकृतियोगफलमेव वक्तव्यम् ॥ ३९ ॥ २ इमे आकृतियोगाः सङ्ख्यायोगा आश्रययोगा दलयोगौ च नभस्स्थग्रहजनितत्वात् नाभसा इत्युच्यन्ते । सर्वेषामपि योगानां नभःस्थग्रहजनितत्वसाधारण्येऽप्येतेषामेव नाभसनामनिर्देशेनैतेषामितरयोगेभ्यो वैलक्षण्यं योगसार्वभौमत्वं च ज्ञाप्यते । अत एव एते योगाः सर्वदशासु नियमेन फलप्रदाः । येषु योगेषु वज्रादिषु "वज्रेऽन्त्यपूर्वसुखितः" इत्यादिना फलकालनिर्देशः कृतस्तेषु योगेषु निर्दिष्टकाले एव फलं भवति । तद्भिन्नेषु योगेषु समस्तदशासु फलं भवतीति भावः ॥ ४० ॥

## ॥ अथ प्रव्रज्यायोगाध्यायस्त्रिषष्टितमः ॥

**बृहज्जातके—**

चतुरादिग्रहकृतसन्यासयोगाः

१एकस्थैश्चतुरादिभिर्बलयुतैर्जाताः प्रथावी(पृथग्वी)र्यैर्गैः
शाक्याजीवकभिक्षुवृद्धचरका निर्गंश्र(ग्रन्थ)वत्या(न्या)शनाः ।
माहेयज्ञगुरुक्षपाकरसितप्राभाकरीनैः क्रमात्
प्रव्रज्या बलिभिः समा(माः) परजितैस्तत्स्वामिभिः प्रच्युतिः ॥ १ ॥

---

१ चतुर्भिर्वा, पञ्चभिर्वा, षड्भिर्वा, सप्तभिर्वा ग्रहैरेकराशिगतैः बलयुतैः प्रव्रज्यायोगो भवति । अर्थात् तेषु सर्वेषु दुर्बलेषु प्रव्रज्या न भवति । एकराशिगतेषु मध्ये यो बली तद्ग्रहदशायां भवति । द्वयोर्वा तदधिकेषु वा ग्रहेषु बलवत्सु बलवद्ग्रहसङ्ख्याकाः प्रव्रज्या भवन्ति । बह्वीषु प्रव्रज्यासु प्रसक्तासु प्रव्रज्याकारकेषु योऽधिकबली तत्संबन्धिनी प्रथमा, तदनन्तरबलस्य द्वितीयादिः, न्यूनबलस्य चरमेऽति मन्तव्यम् । एकस्मिन् राशौ समानभागकलतयाऽवस्थाने कुजादीनां पञ्चानां ताराग्रहाणां युद्धं भवति । तस्मिन् युद्धे उत्तरदिग्गतो विपुलकिरणो जयी । अन्यः पराजितः । शुक्रो दक्षिणदिग्गतोऽपि विपुलकिरणो जयी । एवं युद्धे पराजितो ग्रहः यदि प्रव्रज्याकारको भवति तर्हि तद्ग्रहदशारंभे गृहादिकं परित्यज्य तद्ग्रहोदितां प्रव्रज्यां स्वीकृत्य कंचित्कालं यावत्तथैवावस्थाय पुनरपि प्रव्रज्याभ्रष्टो गृहं प्रविशति । युद्धे पराजयाभावे तद्दशायां गृहं परित्यज्य प्रव्रज्यां स्वीकृतवानामरणं विरक्त एव स्यात् । पुनर्मोहपञ्जरे न पतति । तत्र रव्यादयो बलयुताः क्रमेण वक्ष्यमाणाः प्रव्रज्याः कुर्वन्ति । रविः कन्दमूलफलाशिनं वनवासिनं मुनिं, चन्द्रः

सन्न्यासयोगभङ्गः

[1]रविलुप्तकरैरद(दी)क्षिता च(ब)लिभिस्तद्गतमक्त्र(तभक्त)यो नराः ॥
अभियाचितमात्रदीक्षिता निहतैरन्यनिरीक्षितैरपि ॥ २ ॥

द्विग्रहकृतसन्न्यासयोगाः

[2]जन्मेशोऽन्यैर्यद्यदृष्टोऽर्कपुत्रं
पश्यत्यार्किर्म(र्ज)न्मपं चाव(वा ब)लोनं ।

---

शैवशाक्तकापालिकादीन्, कुजः रक्तांबरान् बौद्धभिक्षून्, बुधः मयूरपिच्छादिधारिणश्चार्वाकान्, गुरुः कुटीचकबहूदकहंसपरमहंसान्, शुक्रः पाशुपतादीन् योगाभ्यासकुशलान्, शनिः दिगम्बरजैनादिमतानुयायिनः करोतीति भावः ॥ १ ॥

१ प्रथमश्लोकोक्तदिशा प्रव्रज्याकारकत्वेन सिद्धेषु ग्रहेषु रविसांनिध्यवशादस्तंगतेषु प्रव्रज्या न भवति। अस्तमितेष्वपि स्वोच्चादिबलयुतेषु प्रव्रज्याऽभावेऽपि तत्प्रव्रज्यायुतेषु तन्मार्गे च भक्तियुता भवन्ति। युद्धे बलवता अन्येन पराजितेषु वा अन्यग्रहदृष्टेषु वा तेषु "सन्न्यासो मे भूयात्" इत्यभियाचनमात्रमेव, न प्रव्रज्यालाभः। ननु पूर्वस्मिन् श्लोके परजितैः प्रच्युतिरित्युक्तम् अत्र तु निहतैरभियाचितमात्रदीक्षिता इत्युच्यते। अतः योगकारके ग्रहे पराजिते प्रव्रज्याभ्रंश इत्येकत्र, प्रव्रज्याया अलाभ इत्यन्यत्र च कथनं कथं संगतं स्यात्? इति चेत् अत्र ब्रूमः। योगकारकत्वरहितेन दुर्बलेन पराजये प्रव्रज्याभ्रंशः, प्रबलेन प्रव्रज्याकारकेण पराजये प्रव्रज्याया अलाभ इत्येवं व्यवस्थायां न दोषः। अत एव तत्र परजितैरित्युक्तम्। परेण योगकारकतारहितेन अत एव दुर्बलेन जितैः इत्यर्थाश्रयणे प्रकृतार्थलाभः। अन्यथा जितैरित्येतावतैव प्रकृतार्थलाभे परेत्येतद्व्यर्थं स्यात्। तथा निहतैरित्यत्रापि नितरां हतैः, बलिभिः अत एव योगकारकतामापन्नैः हतैः इत्यर्थांगीकारे प्रकृतार्थलाभः। अन्यथा जितैरिति सामान्योक्तिवत् हतैरित्येव स्यात्। नीत्युपसर्गस्य प्रयोजनं न स्यात् ॥ २ ॥ २ अन्यैरदृष्टेन चन्द्राश्रयाधिपतिना दृष्टे शनावेको योगः। अस्मिन्

दीक्षां प्राप्नोत्यार्किहक्काणसंस्थै(स्थे)
भौमार्को(कर्य)शे सौरदृष्टे च चन्द्रे ॥ ३ ॥

शास्त्रकारयोगः

[1]सुरगुरुशशिहोरास्का(रास्वा)र्किदृष्टासु धर्मे
गुरुरव(थ) नृपतीनां योगजस्तीर्थकृत्स्यात् ।

राज्यप्राप्तिपूर्वकसन्यासयोगः

नवमभवनसंस्थे मन्दगेऽन्यैरदृष्टे
भवति **नरदृष्टे भवति** नर[प]योगे दीक्षितः पार्थिवद्रः(वेन्द्रः) ॥ ४ ॥

॥ इति श्रीजातकसारदीपे प्रव्रज्याध्यायश्चिषष्टितमः ॥

---

योगे जन्मेशशन्योर्मध्ये यो बली तद्दशायां तत्संबंधिनी प्रव्रज्या भवति । एवं अन्यैरदृष्टेन शनिना स्वस्मात् हीनबले चन्द्रराशिपे दृष्टे एको योगः । अस्मिन् योगे शनिदशायां तत्संबंधिनी प्रव्रज्या भवति । शनिद्रेक्काणगते चन्द्रे शनिदृष्टे एको योगः । शनिकुजनवांशगते चन्द्रे शनिदृष्टे एको योगः । एवं चत्वारो योगाः ॥ ३ ॥

१ लग्नचन्द्रगुरुषु शनिदृष्टेषु, नवमगते गुरौ, यः कोऽपि राजयोगो यदि भवति राजा तर्हि न भवति । किं तु शंकररामानुजमध्वाचार्यादिवत् प्रबलः शास्त्रकर्ता भवति । अथ वा कर्काटकधनुर्मीनानामन्यतमे लग्ने, नवमगते गुरौ, राजयोगे च सति पूर्ववत् फलम् । अर्थात् पूर्वोक्तप्रव्रज्यायोगेष्वपि राजयोगसद्भावे प्रबलः शास्त्रकर्ता भवति, राजयोगाभावे जातः केवलं प्रव्राजको भवतीति ज्ञायते । नवमगते शनावन्यै-रदृष्टे, राजयोगे च सति राजा भूत्वा प्रव्रज्यां प्राप्नोति । राजयोगाभावे केवलं प्रव्राजको भवति ॥ ४ ॥

## ॥ अथ स्त्रीजातकाध्यायश्चतुःषष्टितमः ॥

### स्त्रीपुरुषजातकयोः फलसाम्यवैषम्यचिन्ता

[1]स्त्रीपुरुषयोः समानं योग्यादिदशा(ग्यं प्रदिशेत्) च पूर्वोऽक्तं ॥
यद्यद्योग्यं स्त्रीणां तत्तत्सर्वं वदेत्स(च्च) नाथेषु ॥ १ ॥

### वैधव्यादिकारकाणि स्थानानि

वैधव्यं निधनुर्गृ(नगृ)हे पतिसौभाग्यं सुखं च या(जा)मित्रे ॥
सौन्दर्यं लग्नगृहे विचिन्तयेत्पुत्रसंपदं नवमे ॥ २ ॥

### अष्टमादिस्थानाश्रितग्रहफलम्

[2]एषु स्थानेषु युवत्याः सौम्याः शुभदा बलान्विता ज्ञेयाः ॥
क्रूरास्तु नेऽष्टफलदा भवनेशविवर्जिताः सदा चिंत्यं(त्याः) ॥ ३ ॥

### लग्नचन्द्राश्रितराशिफलम्

[3]पुरुषर्क्षे पुरुषांशे लग्नेन्द्वोः पाप[दृष्ट]युक्तयो[र्भि]न(व)तिं ॥
पुरुषाकृतिशीलयुता भर्तुरयोग्याऽ[स]मंजसा कन्या ॥ ४ ॥

---

१ स्त्रीपुरुषसाधारणानि पूर्वोक्तानि भावफलादीनि, वक्ष्यमाणान्यायुर्दाया-दीन्युभयोरपि वक्तव्यानि। स्त्रीणामयोग्यं राजयोगादिफलं भर्तरि वक्तव्यम्। पुरुषाणामयोग्यं च फलं पत्न्यां वक्तव्यम् इति भावः ॥ १ ॥ २ स्त्रीजातके बलयुतेषु शुभग्रहेषु निधनादिस्थानगतेषु शुभं भवति। पापग्रहेषु निधनादिगतेष्वशुभं भवति। पापग्रहेष्वपि निधनादिस्थानाधिपतिषु निधनादिस्थानगतेषु शुभमेव फलं भवति ॥ ३ ॥ ३ मेषमिथुनादिविषमराशौ. तन्नवांशे च लग्नचन्द्रयोः सतोः पुरुषाकृति-

[1]समसशौ समभागे लग्नेन्द्वोः स्त्रीगुणान्विता कन्या ॥
सौम्ययुते दृष्टे वा सुभगा साध्वी सुविख्याता ॥ ५ ॥

अथ लग्नचन्द्राश्रितत्रिंशांशफलम्

लग्नेऽन्द्वोर्यो बलवांस्तस्य त्रिंशांशकैः फलं वाच्यं ॥
त्रिंशांशो बलवांस्तत्प्रोक्तफलानि सम्यगायान्ति ॥ ६ ॥

भौमराशिगतत्रिंशांशफलम्

भौमर्क्षे भौमांशे [1]कन्या मृ(सु)तसुतिका गुणैर्हीना ॥
मन्दांशस्था प्रेष्या दुःशीला बहुविधा नारी ॥ ७ ॥

पुत्रवती जीवांशे बहुव्ययार्ता पतिव्रता कन्या ॥
सौम्यांशे बहुमाया मलिनाचाराऽल्पसूतिः स्यात् ॥ ८ ॥

कन्याजननी कन्या शुक्रांशे जारभोगसंतुष्टा ॥
[2]भानोरप्येवमेव त्रिंशांशफलं समादेश्यं ॥ ९ ॥

---

शीलयुता भवति। पूर्ववत् स्थितयोः पापदृष्टयोर्युतयोर्वा भर्तुरयोग्या असमंजसा भवति। अर्थात् पूर्ववत् स्थितयोः शुभदृष्टयुक्तयोः पुरुषाकृतिशीलयुता भर्तुर्योग्या समञ्जसा भवति ॥ ४ ॥ १ वृषभकुलीरादिसमराशौ तन्नवांशे वा स्थितयोर्लग्नचन्द्रयोः स्त्रीगुणान्विता भवति। पूर्ववत् स्थितयोस्तयोः सौम्ययुतदृष्टयोः सुभगा साध्वी भवति। अर्थात् पूर्ववत् स्थितयोस्तयोः पापयुतदृष्टयोः असुभगा असाध्वी स्त्रीगुणान्विता भवति ॥ ५ ॥ १ कन्यावस्थायामेव सुतजननकरीत्यर्थः। २ सूर्यसंयुक्तत्रिंशांशैरप्येवमेव फलं वक्तव्यमिति भावः। एतेन वक्ष्यमाणा वैधव्यादियोगा लग्नचन्द्राभ्यामिव सूर्यादपि चिन्तनीया इति सूच्यते ॥ ९ ॥

## शुक्रराशिगतत्रिंशांशफलम्

सितभवने भौमांशे दुष्टा खलप्रिया पतिद्वेष्या ॥
मन्दांशे च पुनर्भूर्मृतप्रजा रोगसंयुता नित्यं ॥ १० ॥

रूपान्विता गुणाढ्या जीवांशे भर्तृपुत्रसंपन्ना ॥
कुचरित्रा सौम्यांशे काव्यकलागेयसंतुष्टा ॥ ११ ॥

शुक्रांशे भोगवती विदग्धदयिता जगत्प्रिया ख्याता ॥
[1]पापयुते बलहीने त्रिंशांशे नैव पुष्टफलमेति ॥ १२ ॥

## बुधराशिगतत्रिंशांशफलम्

बुधभवने भौमांशे कन्या रजो[दू]षिताऽल्पपुत्रा स्यात् ॥
मंदांशे कुव(क्लीब)समा मृतप्रजा वाऽन्यभर्तृ[सं]युता साध्वी ॥ १३ ॥

[2]पतिप्रिया वा जीवांशे क्षेत्रगते तुंगगे [च] जीवे स्यात् ॥
सौम्यांशे कु(क)लाढ्या पशुभ[व]नभोगान्विता च शुक्रांशे ॥ १४ ॥

## चन्द्रराशिगतत्रिंशांशफलम्

शशिभवने भौमांशे स्वच्छन्दा कामिनी विनष्टसुता ॥
मन्दांशे पतिहीना कृच्छ्रेणोऽपजीवनं लभते ॥ १५ ॥

अल्पसुताऽक्षीणयुता(गुणा) जीवांशे शिल्पिनी बुधस्यांशे ॥
वन्ध्या मृतप्रजा वा शुक्रांशे स्त्रीषु दु(दु)ष्टतमा ॥ १६ ॥

---

१त्रिंशांशे बलरहिते पापयुते च पूर्वोक्तं वक्ष्यमाणं च त्रिंशांशफलं पुष्टं न भवति । शुभं ह्रसति, अशुभं वर्धते इति भावः ॥ १२ ॥ २ बुधराशिगत-गुरुत्रिंशांशगते वा, स्वक्षेत्रगते वा, स्वोच्चगते वा गुरौ पतिप्रिया भवतीति

सूर्यराशिगतत्रिंशांशफलम्

वांचाटा रविभवने कुजभागे जारिणी विदेशरता ॥
कुशला कृशा दरिद्रा(राज्ञी जैवे) मन्दांशे जारवल्लभा ज्ञेया ॥ १७ ॥

पुरुषाकृतिशीलयुता सौम्यांशे कार्यचोरिणी कुलटा ॥
कुपतिप्रियाऽल्पसुता(पुत्रा) शुक्रांशे नित्यरोगिणाभिचरति ॥ १८ ॥

गुरुराशिगतत्रिंशांशफलम्

जीवर्क्षे भौमांशे कन्या परिचारिणी सुविख्याता ॥
सौरांशे तु दरिद्रा कन्याजननी स्वतन्त्रनिरता स्यात् ॥ १९ ॥

जीवांशे तु धनाढ्या सौम्यांशे लोकपूजिता ललना ॥
[१]पुत्रवती शुक्रांशे सद्गुणयुक्ता पतिव्रता साध्वी ॥ २० ॥

शनिराशिगतत्रिंशांशफलम्

मन्दर्क्षे भौमांशे दासी कुलटा मृतप्रजा कन्या ॥
मन्दर्क्षे मन्दांशे नीचावाग(सक्ताऽ)तिदुर्भगा वनिता ॥ २१ ॥

भर्तृप्रिया च सुभगा जीवांशे नैकतामभि(सौख्यवि)ख्याता ॥
भग्नव्रता च कुलटा बहुमाया सोमजस्यांऽशे ॥ २२ ॥

शुक्रांशे प्रभुशीला वन्ध्या वा रिक्तलोचना(प्राज्ञवल्लभा)वनिता ॥
त्रिंशांशफलमेवं वक्तव्यं दैवविद्भिरबलायाः ॥ २३ ॥

इति लग्नचन्द्राश्रितत्रिंशांशफलम्

---

भावः ॥ २४ ॥ १ गुरुराशिगतशुक्रत्रिंशांशफलं बृहज्जातकसारावल्यादौ "असती" इत्युक्तं । अत्र तु तद्विपरीतं दृश्यते ॥ २० ॥

### त्रिंशांशफलस्यान्यत्रातिदेशः

[1]चन्द्रार्कस्फुटयोगात्त्रिंशांशफलं वि[नि]र्दिशेत्तस्य ॥
लग्नेन्द्वोर्योगवशात्त्रिंशांशफलं विनिर्दिशेदथ वा ॥ २४ ॥

### कुत्सितभर्तृयोगः

[2]शुद्धेऽग्ने(स्ते) दुर्बले यस्याः पापग्रहनिरीक्षिते ॥
सौम्यग्रहदृशा हीने भर्ता कापुरुषो भवेत् ॥ २५ ॥

### क्लीबतुल्यपतियोगः

[बुधमं]दसुतंस्त(युतेऽस्ते) वा पतिः क्लीबसमो भवेत् ॥
वन्ध्या वा दुर्भगा वापि सा च नित्यं प्रवासिनी ॥ २६ ॥

### प्रवासशीलभर्तृयोगः

[3]सप्तमे चरराशौ च तदीये(शे) च [चरां]शके ॥
भर्ता प्रवासशीलः स्यात् स्थिरभे स्वगृहे च सन् ॥ २७ ॥

---

१ स्पष्टराश्याद्यात्मकयोश्चन्द्रार्कयोर्योगो विधेयः । लब्धस्य राश्यादेः पूर्ववत् त्रिंशांशफलं वक्तव्यम् । यथा—स्पष्टरविः ४-१०-२० स्पष्टचन्द्रः ८-४-३० अनयोर्योगः ० १५ ० अत्र मेषे गुरुत्रिंशांशफलं वक्तव्यम् । एवं लग्नचन्द्रयोर्योगादपि त्रिंशांशफलं ज्ञेयम् ॥ २४ ॥ २ सप्तमे दुर्बले ग्रहरहिते, पापदृष्टे, शुभादृष्टे, निन्द्यपतियोगः ॥ २५ ॥ ३ सप्तमराशितदधिपयोश्चरराशिचरनवांशकान्यतरगतयोः पतिः प्रवासशीलः स्यात्, स्थिरराशिस्थिरनवांशगतयोः तयोः स्वगृहगतः स्यात्, द्विस्वभावराशितन्नवांशगतयोस्तयोः कदाचित् स्वगृहगतः कदाचित् परदेशगतश्च भवतीति भावः ॥ २७ ॥

[1]अस्तगेऽर्के(र्केऽ)रिभिर्दृष्टे तथा शत्रुनिरीक्षिते ॥
कन्ये(न्यै)व विधवान् भूत्वा राजानमधिगच्छति ॥ २८ ॥

पतिकृतपरित्यागयोगः बालविधवायोगश्च

[2][अस्तगेऽर्के समुत्सृष्टा नवोढा विधवा कुजे ॥

विवाहाभावयोगः

कन्यैवापरिणीता स्याद्वृद्धा पापेऽक्षिते शनौ ॥ २८ ॥]

वैधव्ययोगः

[आग्नेयैस्त्रिभिरस्तस्थैर्विधवा स्यान्न संशयः ॥]

पुनर्विवाहयोगः

द्यूने शुभाशुभैर्युक्ते पुनर्भूः सा भविष्यति ॥ २९ ॥

वैधव्ययोगान्तरम्

[3]अस्तगावारमन्दौ चेत्पाष(प)र्क्षे विधवा भवेत् ॥

वैधव्यादिप्राप्तिकालः

मासि वर्षेऽथ(थ)वा हौ(वा)[रि] भागौरिवगच्छति(गैरप्येवमादिशेत् )
॥ ३० ॥

---

१ अत्रैकः श्लोकोऽशुद्धः। उत्तरश्लोके पूर्वार्धं नास्ति। तत्र कुण्डलीगतो मदीयः पाठोऽनुसन्धेयः। २ सप्तमगे सूर्ये पत्या उपेक्षिता, सप्तमगे कुजे बालविधवा, पापदृष्टे शनौ सप्तमगे अविवाहिता, सप्तमगेषु त्रिषु क्रूरग्रहेषु निश्चयेन विधवा, सप्तमगेषु मिश्रग्रहेषु (शुभेषु अशुभेषु च) पुनर्विवाहवती भवतीति भावः ॥ २८—२९ ॥ ३ पापराशिगतयोः कुजशन्योः सप्तमगतयोर्विधवा भवेत्। पूर्वोक्तवैध-

### पतित्यागयोगः पतिवैरयोगश्च

[1]बलहीनेऽस्तगे पापे सौम्यग्रहनिरीक्षिते ॥
भर्त्रा वियुज्यते नारी नीचारिस्थे [च] वैरिणी ॥ २१ ॥

### जारसक्तायोगः

[2]ल।(अ)न्योन्यम(न्यांशे) सितारौ चेज्जारसक्ता भवेद्वधूः ॥

### पत्यनुज्ञया व्यभिचारयोगः

तथैव(युते) सप्तमे चन्द्रे दु(पुं)श्चरी(ली) पतिना सह(त्यनुज्ञया)
॥ २२ ॥

### मात्रा सह व्यभिचारयोगः

[3]मन्दारार्क(र्क्ष)विलग्नस्थौ शशिशुक्रौ यदा तदा ॥
वन्ध्या(मात्रा) भवति सा नारी(युक्ता) पंचमे(बन्धकी) पापदृग्युते(तौ)
॥ २३ ॥

---

व्यादिप्राप्तिकालमाह (मासीति) वैधव्यादिकारकेषु बलिनो वत्सरे वा मासे वा वारे वा वैधव्यादिलाभः। (भागैरिति) सप्तमभावगतो वा, वैधव्यादिकारकेषु बलवद्ग्रहाश्रितो वा नवांशो यावान् तावत्संख्याके वत्सरादौ वैधव्यादिलाभ इति भावः ॥ २०॥

१ बलरहिते पापे सप्तमगे शुभदृष्टे भर्त्रा त्यक्ता भवन्ति। सारावळीरीत्या "असौम्यग्रहनिरीक्षिते" इति च्छेदः। पापदृष्टे घूनगे निर्बले पापे तन्मतरीत्या अयं योगः। नीचगते वा शत्रुगृहगते वा पापे पूर्ववत् स्थिते भर्तरि वैरयुता भवति ॥ २१ ॥ २ शुक्रे कुजनवांशगे, कुजे शुक्रनवांशगे च जारसक्ता भवति। कुजशुक्रयुते चन्द्रे सप्तमगे पत्यनुज्ञया जारसक्ता भवति। "तथैव सप्तमे चन्द्रे" इति पाठे चन्द्रस्यैकस्यैव सप्तमस्थितावयं योगः ॥ २२ ॥ ३ पापदृष्टयोः शुक्रचन्द्रयोर्मेष-

व्याधियोनियोगः

[1]अर्क(स्त)राश्यंशगे भौमे सूर्यगे स्वां(जेऽस्तां)शकेऽपि वा ॥
[कौजेऽस्तांशे मंद]ग्रे दृष्टे व्याधियोनिश्च दुर्भगा ॥ ३४ ॥

[2]**अस्तर्क्षे मृदुः सः स्व—**

चारुयोनियोगः

[शुभग्रहयुते दृष्टे शुभग्रहनवांशके ॥
सप्तमे वल्लभा भर्तुश्चारुश्रोणी भवेद्वधूः ॥ ३५ ॥]

अथ सप्तमराशिनवांशगतसूर्यादिफलम्

[सूर्येऽस्ते स्वांशकक्षेत्रेऽतिमृदुर्बहुकर्मकृत् ॥
चन्द्रेऽस्ते स्वांशकक्षेत्रे मृदुः कामवशः पतिः ॥ ३६ ॥]

भौमेऽस्ते स्वांशकक्षेत्रे स्त्रीलोलो निर्ध(लः क्रोध)नः पतिः ॥
सौम्येऽस्ते स्वांशके क्षेत्रे भर्ता विद्वान्मतेस्सु(न्सुकौश)[लः] ॥ २७ ॥

जीवेऽस्ते स्वांशकक्षेत्रे गुणवान् विजितेन्द्रियः ॥
शुक्रेऽस्ते स्वांशके क्षेत्रे कान्ता(तः) सौभाग्यवान् सुखी ॥ २८ ॥

---

वृश्चिकमकरकुंभान्यतमगतयोर्जाता नारी तन्माता च व्यभिचारिण्यौ भवतः ॥ ३३ ॥

१ सप्तमनवांशगते कुजे वा, सप्तमभावनवांशगते शनौ वा, शनिदृष्टे सप्तमभावगते कुजनवांशे वा त्रयो योगाः। एषु जाता व्याधियोनिर्भवति ॥ ३४ ॥

२ अत्र स्थूलाक्षरनिर्दिष्टो भागोऽनन्वितो दृश्यते। ततः परं श्लोकद्वयं लुप्तमिति भाति। तच्च मया निर्मितं कुण्डल्यां निवेशितं।

[यमेऽस्ते] स्वांशके क्षेत्रे वृद्धो मूर्खो भवेत्पतिः ॥

इति सप्तमराशिनवांशगतसूर्यादिफलम्

लग्नगतसूर्यादिफलम्

[1]एवं सप्तमराशिस्थैर्ग्रहैर्नृ(हैः स्त्री)णां वदेत्फलं ॥ ३९ ॥

अस्तराशिफलं प्रोक्तं ल[ग्नरा]शिफलं तथा ॥
फलं भवति दंप(त्योर्बहुयोगे बलाद्वदेत् ॥ ४० ॥

लग्नगतशुक्रचन्द्रयोगफलम्

सौम्यक्षेत्रोऽदये चन्द्रे सार्धं शुक्रेण सा वधूः ॥
सुखी पी(खे र)ता पतिद्वेष्या नित्यमस्थिरचारिणी ॥ ४१ ॥

लग्नगतबुधचन्द्रयोगफलम्

चन्द्रजौ(ज्ञौ) यदि लग्नस्थौ कु(क)लाढ्या ब्रह्मवादिनी (गुणसौख्यभाक्) ॥

लग्नगतबुधशुक्रयोगफलम्

ज्ञशुक्रौ यदि लग्नस्थौ सौम्यस्थानेकु(रूपा क)लाद्यु(यु)ता ॥ ४२ ॥

---

१ सप्तमराशिगतेषु सूर्यादिषु यत्फलं भर्तुरुदितं तदेव फलं लग्नगतेषु नार्या वक्तव्यम् । एवं स्त्रीजातके । पुरुषजातके त्वेतद्वैपरीत्यमिति भावः । अनेकेषु परस्परविरुद्धयोगेषु सत्सु बलवत एव योगस्य फलदत्वम् इति भावः ॥ ४० ॥

लग्नगतचन्द्रबुधशुक्रयोगफलम्

चान्द्रिचन्द्रसिता लग्ने बहुसौख्यगुणैर्युता ॥

लग्नगतगुरुफलम्

जीवो लग्नेऽति(र्थ)संपन्ना पुत्रवित्तसुखप्रदा ॥ ४३ ॥

लग्नगतपापफलम्

[1]क्षेत्रोऽच्चसंस्थिता लग्ने अशुभास्ते शुभप्रदाः ॥

वैधव्ययोगान्तरं

क्रूरेऽष्टमे च विधवा पापक्षेत्रे विशेषतः ॥

वैधव्यप्राप्तिकालः

निधनेऽशांशकपतेर्दशायां निश्चितं भवेत् ॥ ४४ ॥

सौमङ्गल्ययोगः

सौम्येऽष्टमस्थे कन्याया भर्तुः प्रागेव संमृतिः ॥

---

१ लग्ने सोच्चे वा स्वक्षेत्रे वा स्थिताः पापाः शुभप्रदाः, अन्यथा अशुभदा भवन्तीति भावः। शुभराशावप्यष्टमगते पापग्रहे विधवा भवति। किमुत पापराशाविति भावः। अष्टमाधिपतिना युक्तो यो नवांशस्तदधिपस्य दशायां तत्र वैधव्यं भवतीति भावः ॥ ४४ ॥

पतिपत्न्योः समकालमरणयोगः

[1]पापसौम्ययुते तस्मिन्समकाले तयोर्मृतिः ॥ ४५ ॥
बलाबलं तयोर्ज्ञात्वा पुरुषेषु विजानता ॥ ४६ ॥

सप्तमाष्टमनवमगतशुभग्रहफलम्

भाग्यस्थाने स्थिते सौम्ये सप्तमे अष्टमेऽपि वा ॥
भर्ता पुत्रसुखैः सार्धं दीर्घकालं च जीवति ॥ ४७ ॥

[2]धनुःकर्कियगे लग्ने भर्तृपुत्रादिदुःखदा ॥

अल्पपुत्रयोगः

सिंहालिवृषकन्यासु चन्द्रे [वा स]ति पंचमे ॥
अल्पापत्यं विजानीयात्पुरुषेषु तथा वदेत् ॥ ४८ ॥

[3]लग्नात्स्वाष्टमभाग(व)स्थैः पापैर्दुःखफलान्विता ॥
सौम्यग्रहैरसंमिश्रैः सर्वथा क्लेशमाप्नुयात् ॥ ४९ ॥

बहुपुत्रयोगः

क्रूरग्रहे सुख(त)गते बहुप्रसवमादिशेत् ॥ ५० ॥

---

१ अष्टमगतयोः शुभाशुभयोः समबलत्वे भर्तृमरणसमकाले मरणं, शुभस्य दुर्बलत्वे वैधव्यं, पापस्य दुर्बलत्वे सौमङ्गल्यं च भवतीति भावः ॥ ४५ ॥
२ धनुषि कर्कटके वा लग्नगते शनौ भर्त्रादिदुःखदा । वृषभसिंहकन्यावृश्चिकाणामन्यतमे चन्द्रयुते वा, पञ्चमे शुभयुते वा स्त्रीपुरुषयोर्जन्मनि अल्पापत्ययोगः ॥ ४८ ॥ ३ द्वितीये अष्टमे वा स्थितेषु, शुभसंयुतेष्वपि पापेषु दुःखफलान्विता । शुभासंयुतेषु च तेषु अतीव दुःखान्विता ॥ ४९ ॥

कन्याप्रसवयोगः

[1]कन्याप्र[सूतिः स्त्रीराशौ स्त्रीग्रहाभ्यां युते सुते ॥

पुत्रप्रसवयोगः

पुंप्रसूतिः सुते युक्ते पुंराशौ पुरुषैर्ग्रहैः ॥ ५१ ॥

पूर्वोक्तफलस्य विवाहकालादावतिदेशः

[विवाहप्रश्नका]लेषु प्रोक्ता(क्त)मार्गं विचिन्तयेत् ॥ ५२ ॥]

**सारावल्यां—**

[2]शुक्रासितौ यदि परस्परभागसंस्थौ

**शौकेऽथदृष्टियप्यपयंशः ।**

(शौक्रे च दृष्टिपथगावुदये घटांशे)

स्त्रीणामतीव मदनाग्निमद(दः) प्रवृद्धः

स्त्रीभिः स(श)मं च पुरुषाकृतिभिर्लभंते(भेत) ॥ ५३ ॥]

पुरुषिणीयोगः

[3]रिपैर्भृगुजे(बुधे)न्दुभृगु[जै] ज(र)विजे च मध्ये

शेषैर्बलेन सहितैर्विषमर्क्षलग्ने ।

---

१ अस्मिन् श्लोके उत्तरश्लोके च कुण्डलीस्थो भागो मूले नास्ति । स च मया पूरितः ॥ ५१ ॥ २ शनिनवांशगते शुक्रे, शुक्रनवांशगते शनौ, तथा तयोः शुक्रशन्यो-रन्योन्यासप्तमस्थयोरेको योगः । वृषभे तुलायां वा कुंभनवांशयुते लग्ने एको योगः । एवं द्वौ योगौ । अनयोर्जाता प्रवृद्धकामा भवति ॥ ५३ ॥ ३ चन्द्रबुधशुक्रेषु दुर्बलेषु, शनौ-

जाता भवेत्पुरुषिणी युवतिः सदैव
पुंश्चेष्टिताऽत्र चरविप(ति प्र)थित्य(ता) च लोके ॥ ५४ ॥

वैधव्ययोगभञ्जकप्रव्रज्यायोगः

[1]क्रूरे जामित्रगते नवमे यदि खेचरो भवति नूनं ॥
प्रजज्य(व्रज्या)माप्नोति तदा नवमे(म)[स्थ]ग्रहसंभवोमे(वामे)व ॥ ५५ ॥

ब्रह्मवादिनीयोगः

[2]वलिभे(बलिभि)र्बुध[गुरु]शुक्रैः शशांकसहितैर्विलग्नो(ग्न)[गैः] समभे ॥
स्त्री ब्रह्मवादिनी स्यादनेकशास्त्रे(स्त्रा)[र्थकुशला च] ॥ ५६ ॥

**वराहसंहितायां—**

लग्नगतसूर्यादिफलम्

मूर्तौ करोति दिनकृद्विधवां कुजश्च
राहुर्विनष्टतनयां रविजो द्द(द)रिद्रां(द्राम्) ।
शु[क्रः] शशाङ्कत[न]यश्च गुरुश्च साध्वी
मायुष्मतीं(युःक्षयं) च कुरुते नयनाभिरामां(ऽथ विभावरीशः) ॥ ५७ ॥

---

मध्यबले, शेषेषु बलयुतेषु, विषमराशौ लग्नगते एको योगः ॥ ५४ ॥

१ क्रूरे सप्तमगते जातो वैधव्ययोगः नवमे ग्रहाभावे वक्तव्यः । नवमे ग्रहसत्वे तु तद्ग्रहोक्ता प्रव्रज्यैव भवति, न वैधव्ययोग इति भावः ॥ ५५ ॥

२ समराशौ लग्नगतेषु चन्द्रबुधगुरुशुक्रेषु बलयुतेषु ब्रह्मवादिनीयोगः । बृहज्जातके त्वस्मिन् योगे चन्द्रः परित्यक्तः । तत्स्थाने कुजः संक्षिप्तः । तत्रीका "शशांकसहिते "रित्यत्र "धराजसहितैः" इति पाठोऽनुसंधेयः ॥ ५६ ॥

### द्वितीयगतसूर्यादिफलम्

कुर्वन्ति भास्करशनैश्चरराहुभौमा
[दारिद्र्यदुः]खमलि[नं] नाथ(निय)तं द्वितीये ।
वित्तेश्वरा(री)मविधवां गुरुशुक्रसौम्या
नारीं प्रती(मृ)ततनयां कुरुते शशांकः ॥ ५८ ॥

### तृतीयगतसूर्यादिफलम्

सूर्येऽन्दुभौमगुरुशुक्रबुधास्तृतीये
कुर्युः सतीं बहुसुतां धनभागिनीं च ।
कन्यां करोति रविजो बहुवित्तयुक्तां
दुष्टं(मृत्युं) ददाति नियतं खलु सैंहिकेयः ॥ ५९ ॥

### चतुर्थगतसूर्यादिफलम्

स्वल्पं पयः स्रवति सूर्यसुते चतुर्थे
दौर्भाग्यमुष्णकिरणः कुरुते शशांकः ।
राहुः सपत्नि(त्न)सहितां क्षितिजोऽल्पवित्तां
दद्यात्कविः सुरगुरुश्च बुधश्च सौख्यं ॥ ६० ॥

### पञ्चमगतसूर्यादिफलम्

नष्टात्मजां रविकुजौ खलु पंचमस्थौ
चन्द्रात्मजो बहुसुतां गुरुभार्गवौ च ।
राहुर्ददाति मरणं शनिरुग्ररोगं
कन्यां प्रतीततनयां(सूतिमचिरात्) कुरुते शशांकः ॥ ६१ ॥

## षष्ठगतसूर्यादिफलम्

षष्ठस्थिताः शनिदिवाकरराहुभौमा(मा)
आयुर्धनं(कुर्युर्गुरुश्च) सुभगां कुरुते सु(श्वशुरेषु) भक्तां ।
चन्द्रः करोति विधवांसु(वामु)शना दरिद्रां(द्रा)
वेश्यां(मृद्धां) शशांकजगुरू(तनयः) कलहप्रियां च ॥ ६२ ॥

## सप्तमगतसूर्यादिफलम्

सौरारजीवबुधराहुरवीन्दुशुक्राः
कुर्युः प्रसह्य मरणं खलु सप्तमस्थाः ।
वैधव्यबन्धनभय(वध)क्षयचि(वि)त्तनाशं
व्याधिं प्रवासमरणं हि यथाक्रमेण ॥ ६३ ॥

## अष्टमगतसूर्यादिफलम्

स्थानेऽष्टमे गुरुबुधौ नियतं वियोगं
मृत्युं शशी भृगुसुतश्च तथैव राहुः ।
सूर्यः करोति(त्य)विधवां सुभगां(सरुजं) महीजः
सूर्यात्मजो धनवतीं पतिवल्लभां च ॥ ६४ ॥

## नवमगतसूर्यादिफलम्

[1]धर्मस्थितौ कुजरवी सुखवित्तहीनां
जीवः सुकर्मनिरतां शशिजो भृगुश्च ।

१ अत्र पाठभेदो दृश्यते । स च कुण्डल्यां निवेशितः ।

[(धर्मे स्थितां भृगुदिवाकरभूमिपुत्रा
जीवश्च धर्मनिरतां शशिजस्त्वरोगाम् ।)]
राहुश्च सूर्यतनयश्च करोति वन्ध्यां
कन्याप्रसू[ति]मथ वा(टनं) कुरुते शशांकः ॥ ६५ ॥

दशमगतसूर्यादिफलम्

राहुर्नभस्थ(स्त)लगतो विधवां करोति
पापे रतिं(तां) दिनकरश्च शनैश्चरश्च ।
भौमस्तु चाल्पतनयां(वित्तरहितां) कुलटां च चन्द्रः
शेषास्त्वाय(शेषा ग्र)हा बहुसुतां(धनां) सुभगां च कुर्युः ॥ ६६ ॥

एकादशगतसूर्यादिफलम्

आये रविर्बहुसुतां धनिनीं शशांकः
पुत्रान्वितामविधवां(वनिजो) रविजो धनाढ्यां ।
राहुः करोति(त्य)विधवां भृगुजोऽर्थयुक्तां(क्ता)
आ(मा)युष्मतीं कुज(सुर)गुरू(रुः) शशिजो धनाढ्यां ॥ ६७ ॥

द्वादशगतसूर्यादिफलम्

अंते भृगु(गुरु)र्धनवतीं दिनकृद्दरिद्रां
चन्द्रो धनव्ययकरीं कुलटां च राहुः ।
साध्वीं गुरुः(भृगुः) शशिसुतो बहुपुत्रपौत्रां
अन्य(पान)प्रसक्तहृदयां रविजः कुजश्च ॥ ६८ ॥

सूर्यनक्षत्रात् चन्द्राश्रितनक्षत्रफलम्

**कुण्डलिका—**

[1]सूर्यज्ञा(र्क्षा)त्त्रिषु मूर्ध्नि तापसहिता वक्त्रे तु सप्तर्क्षके
मिष्टान्ना स्तनगांत(गत्रि)भे पतिरता हृद्धा(दा)मभे सौख्यभाक् ।
नाभौ च त्रिषु भेषु भर्तृसुखभाग्युगमे रसर्क्षे सदा
कामार्ता हि भवेद्वधूश्च सततं [स्त्री]जन्म(जात)कोक्तं फलं ॥ ६९ ॥

अथ विषकन्यायोगाः

**यवनजातके—**

[2]भद्रा तिथिर्यदाऽश्लेषा शतभिक्कृ(वारुणं कृ)त्तिका तथा ॥
मन्दाररविवारेषु विषकन्या प्रजायते ॥ ७० ॥

---

१ सूर्याश्रितनक्षत्रादारभ्य चन्द्राश्रितनक्षत्रं यावन्मनुष्याकारचक्रे वक्ष्यमाण-प्रकारेण विन्यस्य फलं वेदितव्यम् । शिरोगतेषु त्रिषु तापसहिता, वक्त्रगतेषु सप्तसु मिष्टान्ना, स्तनगेषु त्रिषु पतिरता, हृदयगतेषु त्रिषु नाभिगतेषु च त्रिषु सौख्यभाक्, ऊरुगतयोर्द्वयोः भर्तृसुखभाक्, पादगतेषु षट्सु कामार्ता भवति ॥ ६९ ॥

२ द्वितीयाषष्ठीद्वादशीनां मध्ये आश्लेषाकृत्तिकाशतभिषक्षु अन्यतमं नक्षत्रं, रविकुजशनीनां अन्यतमं दिनं च यदि भवति तर्हि तिथिनक्षत्रवारयोगोऽयं विषकन्या-योगो भवति । अस्मिन् जाता विषप्रयोगतुल्येन स्वसंसर्गेण पतिं हन्ति । केचिदत्र अन्यथा व्याचक्षते । तथा हि—द्वितीयाऽश्लेषाशनिवाराणां, षष्ठीशतभिषक्कुज-वाराणां, द्वादशीकृत्तिकारविवाराणां च योगैस्त्रिभिरत्रयो विषकन्यायोगा इति । अस्मिंश्च व्याख्याने उत्तरश्लोकगतं "मन्दाश्लेषाद्वितीया च" इत्येतत् पुनरुक्तं स्यात् । अतः प्रथमव्याख्यानमेव ज्यायः ॥ ७० ॥

[1]द्वादशी वारुणं सूर्ये विशाखा सप्तमी कुजे ॥
मन्दाश्लेषाद्वितीया च विषकन्या प्रजायते ॥ ७१ ॥

**त्रैलोक्यप्रकाशे—**

[2]रिपुक्षेत्रस्थितौ द्वित्र(भर्तृ)लग्ने यत्र शुभग्रहौ ॥
क्रूरश्चैकस्तदा जाता भवेत्स्त्री विषकन्यका ॥ ७२ ॥

**योगजातके—**

लग्ने सौरी रविः पुत्रे धर्मस्थो धरणीसुतः ॥
अस्मिन्योगे तु जाता स्त्री सा भवेद्विषकन्यका ॥ ७३ ॥

इति विषकन्यायोगाः

विषकन्यायोगापवादः

[3]लग्नाद्विधोर्वा यदि जन्मकाले
शुभग्रहो वा मदनाधिपश्च ।
द्यू(द्यू)नस्थितो हन्त्यनपत्यदोषं
वैधव्यदोषं च विषांगनाख्यं ॥ ७४ ॥

---

१ पूर्वश्लोकप्रथमव्याख्यानदिशा सामान्येनोक्तयोगेषु मध्ये द्वादशीशतभिषभविवारयोगस्य, द्वितीयाऽश्लेषाशनिवारयोगस्य चातिक्रूरताज्ञापनायास्मिन् श्लोके विशिष्य निर्देशः । सप्तमीविशाखाकुजवारयोगोऽपि विषकन्यायोगो भवति ॥ ७१ ॥
२ भर्तृजन्मलग्ने शत्रुनीचगृहगते शुभग्रहद्वये, एकस्मिन् पापग्रहे च सति या जायते सा विषकन्या भवति ॥ ७२ ॥ ३ लग्नाद्वा चन्द्राद्वा सप्तमे शुभयुते वा सप्तमपतियुते वा विषकन्यायोगनिमित्तं वैधव्यं न भवतीति भावः ॥ ७४ ॥

वन्ध्यायोगः काकवन्ध्यायोगश्च

[1]रन्ध्रगौ चन्द्रसूर्यौ चेद्विलग्नान्निजराशिगौ ॥
वन्ध्याऽथ चन्द्रमा(भूमिजे) सौम्यौ(म्यं) काकवंध्या तदा भवेत्
॥ ७५ ॥

मृतपुत्रायोगः गर्भस्रवायोगश्च

मृतापत्या च शुक्रेऽज्यौ सा(सौ)रौ गर्भस्रवा भवेत् ॥ ७६ ॥

अथ मेषादिराशिगतचन्द्रफलम्

**अथ बृहज्जातके—**

[2]चन्द्रे अजस्थे वनिता प्रगल्भ(ल्भा)
जाता च वै कृत्यपरा प्रधाना ।
पुत्रान्विता सत्यपरा कुलेष्टा
स(सु)रूपगात्रा पतिवल्लभा च ॥ ७७ ॥

वृषस्थिते रोहिणीवल्लभे च
विनीतवेषा बहुशास्त्रदक्षा ।
पतिव्रता वित्तविवेकयुक्ता
नारी भवेत्कामकलाविदग्धा ॥ ७८ ॥

---

१ अष्टमे स्वराशिगतेषु सूर्यादिषु वक्ष्यमाणं फलं भवति । सूर्यचन्द्रयोर्वन्ध्या, कुजबुधयोः काकवन्ध्या, (तात्कालिकवन्ध्यात्ववती कालान्तरे पुत्रजननी) शुक्रगुर्वोर्मृतापत्या, शनौ गर्भस्रवा भवतीति भावः ॥ ७५—७६ ॥ २ इमे श्लोका बृहज्जातके नैव सन्ति । अतो बृहद्विवाहपटलगताः स्युरित्यूह्यते ।

युग्मस्थिते शीतकरे विनीता
भवेत्सुरूपा प्रियदर्शना च ।
नानार्थमानैः सहिता विदग्धा
परोऽपकारातिरता सुनम्रा ॥ ७९ ॥

कर्कस्थिते शीतकरे(रें)बुजाती(क्षी)
नारी भवेद्विद्य(त्पूज्य)तमा चके(जने)षु ।
संमानिनी बान्धवलोकमान्या
हतारिपक्षा द्विजदेवभक्ता ॥ ८० ॥

सिंहस्थिते चन्द्रमसि प्रधाना
नारी भवेच्छौर्यसमन्विता च ।
प्रियामिषा कृत्यपरा सुवस्त्रा
उदारवेषा सुभगा च पुंसां ॥ ८१ ॥

कन्याश्रिते शीतकरे च जाता
नारी भवेद्द्विपचतुष्पदाढ्या ।
[1]जात्या द्विजा स्त्रीहितबन्धुवर्गा
पतिव्रता पुत्रवती मनोज्ञा ॥ ८२ ॥

तुलाधरस्थे धृतधर्मयोगा
जाता भवेत्स्त्रीहितबन्धुवर्गे(र्गा) ।

---

१ जात्या-स्वभावेन ।

पतिव्रता पुत्रवती मनोज्ञा
विवर्जिता क्रोधमनोभवाभ्यां ॥ ८३ ॥

चन्द्रे अलिस्थे बहुगुप्तवेषा
चलस्वभावा सुविलुप्तचेष्टा ।
हिता गुरूणां नियमैः समेता
प्रभूतकेशा विजितारिपक्षा ॥ ८४ ॥

धनुर्धरस्थे शशिनि कृपाढ्या
नारी भवेद्वित्ततरा सभागा(ग्या) ।
मीज(जन)प्रिया प्राण(णि)हिताऽनुकूला
प्रियानना स्त्रीजननी विनीता ॥ ८५ ॥

चन्द्रे मृगस्थे विकरालदंष्ट्रा
नारी भवेच्छौर्यपरा मनोज्ञा ।
विद्यापि(र्जि)का सत्यपराऽनु(नु)रक्ता
प्रभूतकेशा विगताभिमाना ॥ ८६ ॥

घटास्थिते शीतकरे स(चं) जाता
नारी भवेच्चन्द्रमसे(समा)नवक्त्रा ।
सदा सुशीला सुतवित्तयुक्ता
शुभानुरक्ता प्र(द)यितानुकारी ॥ ८७ ॥

मीनाश्रिते शीतकरे नु(तु) जाता
नारी भवेद्धर्मपरा सुशीला ।

यतेऽन्द्रिया सर्वकलासु दक्षा
नवाभिरामा परमा धनाढ्या ॥ ८८ ॥

॥ इति मेषादिराशिगतचन्द्रफलम् ॥

---

## ॥ अथ मेषादिलग्नफलम्(बृहज्जातके) ॥

[1]मेषोदयेऽशुद्ध(द्धि)परा नृशंसा
नारी भवेत्क्रोधपरा सदैव ।
श्लेष्माधिका निष्ठुरवाक्ययुक्ता
सदा विरक्ता निजबन्धुवर्गा(र्गे) ॥ ८९ ॥

वृषोदये सत्यरता मनोज्ञा
विनीतचेष्टा पतिवल्लभा च ।
[2]नारी भवेत्सर्वकलासु दक्षा
स्ववर्गरक्ता हितदेवभक्ता ॥ ९० ॥

[1]तृतीयलग्नेऽतिकठोरवाक्या
स्त्री कामसक्ता गुणवर्जिता च ॥ ९१ ॥

लग्ने कुळीरे च भवेत्प्रसूता
नारी प्रभूता विनयैः समेता ।
बन्धुप्रिया साधुसुशीलयुक्ता
प्रजान्विता सर्वसुखैः समेता ॥ ९२ ॥

---

१ इमे च श्लोका बृहज्जातके न सन्ति। अतो बृहद्विवाहपटलगताः स्युरित्यूह्यते। २ अत्रोत्तरार्धं त्रुटितम्।

सिंहस्य(स्थ)लग्ने जनिताऽतितीक्ष्णा

भवेत्कफाढ्य(ढ्या) कलहप्रिया च ।

नानामयैः पुष्टशरीरगात्रा

परोपकारे निरता सुवेषा ॥ ९३ ॥

कन्योदये स्त्री विनयाभिनीता

सौभाग्यसौख्यैः सहिता च साध्वी ।

भवेत्स्ववर्गे बहुधर्मभक्ता

जितेन्द्रिया सर्वकलासु दक्षा ॥ ९४ ॥

तुलाख्यलग्ने चिरकालवेषा

भवेत्सुवन्ध्या प्रणयेन हीना ।

संगर्विता कान्तिविवर्जिता च

कृष्णाधिका त्यागविवर्जिता च ॥ ९५ ॥

नारी भवेद्वृश्चिकलग्नजाता

सुरूपगात्रा नयनाभिरामा ।

स्व(सु)गण्यशीला च पतिव्रता च

गुणाधिका सत्यपरा सदैव ॥ ९६ ॥

चापोदये या वनिता सु(प्र)जाता

सा युद्धशौण्डा पुरुषानुकारा ।

शा(श)स्त्रेषुसाध्या विधवा कठोरा

निःस्नेहचित्ता प्रणयेन हीना ॥ ९७ ॥

मृगोदये स्त्री सुभगा च सत्या
तीर्थानुरक्ता हतशत्रुपक्षा ।
प्रधानकृत्या प्रथिता सुकेशा
गुणान्विता पुत्रवती सुशीला ॥ ९८ ॥

कुंभस्य(स्थ)लग्ने प्रमदाऽभिजाता
पतिप्रिया बान्धवलोकमान्या ।
स्त्रीजन्मदक्षा क्षतमा(जा)र्दिता च
नित्यं गु(ग)णानां स)सु)विरुद्धचेष्टा ॥ ९९ ॥

मीनोदये या प्रमदाऽभिजाता
पतिप्रिया बान्धवलोकमान्या ।
सुनेत्रकेशा सुरविप्रभक्ता
विद्यार्थिता(नी) प्रीतिकरी गुरूणां ॥ १०० ॥

इति बृहज्जातके स्त्रीलग्नफलं

॥ इति श्रीजातकसारदीपे स्त्रीजातकाध्यायश्चतुःषष्टितमः ॥

---

## ॥ अथ नक्षत्रारिष्टयोगाध्यायः पञ्चषष्टितमः ॥

### त्रिकप्रसवारिष्टयोगः

[1] यद्येकनारी द्युभवास्तु कन्याः ॥
पुत्राश्च ते स्युः पितुरन्तक(का)राः ॥ १ ॥

---

१ अयं श्लोको न पूर्णो दुर्गमार्थश्च । अतस्तत्स्थाने कुण्डलीगतो मदीयः श्लोकः पठनीयः । पुत्रत्रयजननानन्तरं कन्याजनने, कन्यात्रयजननानन्तरं पुत्रजनने च ज्येष्ठसहोदरादिनाश इति भावः ॥ १ ॥

[सुतत्रयानन्तरजा सुता वा
सुतात्रयानन्तरजः सुतो वा ।
ज्येष्ठं कुलं मातरमात्मतातं
वित्तं निहन्त्युन्नतदुःखकृत् स्यात् ॥ १ ॥]

## पितृमातृजन्मनक्षत्रादिजननारिष्टम्

[1]पितृजन्मनि ये जातास्ते हन्यु(न्यु) श्च तथापिहृशं(पितरं तथा) ॥
मातृजन्मनि ये जाता माह(तृ)णां घातकाः स्त्रियः(सुताः) ॥ २ ॥

## पितृकार्यकर्तृपुत्रयोगः

[2]पितृजन्माष्टमे जातस्तदीशो लग्नगोऽपि वा ॥
तेनैव पितृकार्याणि पितृश्रेष्ठो भवेत्सुतः ॥ ३ ॥

## ग्रहमुक्ताकांक्षितनक्षत्रजननफलम्

[3]ग्रहः(हा)कांक्षितनक्षत्रे दत्तपुत्रो भवेच्छिशुः ॥
ग्रहमुक्ते च नक्षत्रे जननाद्रोगपीडितः ॥ ४ ॥

---

१ पितृजन्मनक्षत्रे, पितृजन्मराशौ, पितृजन्मलग्ने वा जाताः पुत्राः पितृनाशकराः । तद्वत् मातृजन्मनक्षत्रे, मातृजन्मराशौ, मातृजन्मलग्ने वा जाता मातृनाशकराः ॥ २ ॥ २ पितृजन्मराशिजन्मलग्नाभ्यां अष्टमे राशौ स्थिते चन्द्रे वा लग्ने वा जातः पित्रपेक्षया श्रेष्ठः पितुरौर्ध्वदैहिककर्ता च भवति ॥ ३ ॥ ३ ग्रहाश्रितनक्षत्रादुत्तरं नक्षत्रं ग्रहेणाकांक्षितं । जन्मनक्षत्रात्पूर्वस्मिन् नक्षत्रे यदि कश्चिद्ग्रहो भवति तर्हि ग्रहाकांक्षिते नक्षत्रे जन्म भवति । तथा जातो

## ॥ अथ ज्येष्ठानक्षत्रजननफलं ॥

[1]ज्येष्ठादौ जातः जीमोता(जननी मातुः) द्वितीये जननीपिता ॥
तृतीये जननीजा(भ्रा)ता स्वयं माता चतुर्थके ॥ ५ ॥

आत्मानं पंचमे हन्ति षष्ठे गोत्रक्षयो भवेत् ॥
सप्तमे चोभयकुलं ज्येष्ठभ्रातरमष्टमे ॥
नवमे श्वशुरं हन्ति सर्वं हन्ति दशांशके ॥ ६ ॥

## ॥ अथ मूलनक्षत्रजननफलं ॥

अथ अभुक्तमूलविषये मतानि

[2]ज्येष्ठान्ते घटिकैका च मूलादौ घटिकात्रयं ॥
अभुक्तमूलमित्याहुस्तत्र जातं शिशुं त्यजेत् ॥ ७ ॥

**बृहस्पतिः—**

ज्येष्ठान्ते घटिकार्धं तु मूलादौ घटिकार्धकं ॥
तयोरन्तर्गता नाडी अभुक्तं मूलमुच्यते ॥ ८ ॥

---

दत्तको भूत्वा परं पितरमाश्रयति । एवं जन्मनक्षत्रादुत्तरं नक्षत्रं यदि केनचिद्ग्रहेण युतं तर्हि ग्रहमुक्तनक्षत्रे जन्म । तथा जातः रोगपीडितो भवति । इदं ग्रहाणां ऋजुत्वे ज्ञेयम् । वक्रत्वे तु पूर्वोक्तवैपरीत्यम् ॥ ४ ॥ १ ज्येष्ठानक्षत्रस्याद्यन्तघटिकाप्रमाणं दशधा विभज्य प्रथमादिभागेषूत्पन्नस्य फलमत्राभिधीयते ॥ ५—६ ॥ २ ज्येष्ठान्ते एका घटिका, मूलादौ घटिकात्रयमित्येकं मतम् । ज्येष्ठान्ते अर्धघटिका, मूलादौ अर्धघटिकेति बृहस्पतिमतम् । ज्येष्ठादौ एका घटिका, मूलादौ एका घटिकेति

**लल्लः—**

ऐन्द्रान्त्यघटिकैका तु मूलादौ घटिका तथा ॥
तयोरन्तरनाडी(ड्यौ) द्वे अभुक्तं मूलमुच्यते ॥ ९ ॥

**बृहन्नारदः—**

अभुक्तमूलगण्डान्तं नाडिकानां चतुष्टयं ॥
मूलादौ हि तथैन्द्रान्त्ये घटिकाद्वन्द्वमेव च ॥ १० ॥

इति अभुक्तमूलविषये मतानि

मूलपादचतुष्टयजननफलम्

तदाद्यपादके पिता विपद्यते जनन्यथ ॥
धनक्षयस्तृतीयके चतुर्थकः शुभावहः ॥ ११ ॥

गृह(हं) क्षेत्रं धनं धान्यं गृहोपकरणादिकं ॥
पशुशस्त्रादिकं चेति धनमित्युच्यते बुधैः ॥ १२ ॥

मूलपादचतुष्टयोक्तफलस्याश्लेषानक्षत्रे अतिदेशः

[1]प्रतीपमन्त्यपादतः फलं तदेव सार्पभे ॥
तदुत्थदोषशान्तये विधेयमत्र शान्तिकं ॥ १३ ॥

---

लल्लमतम् । ज्येष्ठान्ते घटिकाद्वयं, मूलादौ घटिकाद्वयमिति बृहन्नारदमतम् । एवं चत्वारि मतान्यभुक्तमूलविषये उक्तानि ॥ ७—१० ॥ १ आश्लेषायां प्रथमपादे शुभं, द्वितीयपादे धननाशः, तृतीयपादे मातृनाशः, चतुर्थपादे पितृनाशः भवतीति भावः ॥ १३ ॥

**जनाशनः—**

मूलवृक्षफलम्

[1]जननीनाशः स्कन्धे दले कलावान्नृपप्रियः पुष्ये(ष्पे) ॥
सचिवः फले शिखातियां मृत्युमवाप्नो(प्नो)(फा) भूपो वा ॥ १४ ॥

[2] .........**द्वासर्द्धितापि च षष्ट्यंस्या नाडिकामानं ॥**

**भूपालवल्लभे—**

मूलचक्रफलम्

[3]मूलस्य घटिकान्यासो मूर्ध्नि पंच नृपो भवेत् ॥
मुखे सप्त मृतिः पित्रोः स्कन्धे वेदा च(ब)लाधिकः ॥ १५ ॥

बाहोरष्ट व(ब)ली पाण्योस्तिस्रो ह्रासान्वितो भवेत् ॥
हृदि खेटा भूपमन्त्री नाभौ द्वे ब्रह्मविद्भवेत् ॥ १६ ॥

---

१ मूलाद्यन्तघटिकासु प्रतिभागं द्वादशनाडीक्रमेण पञ्चधा विभक्तासु शिफा, स्कन्धः, दलं, पुष्पं, फलमिति क्रमेण पञ्च भागा भवन्ति । तत्फलमत्रोच्यते (जननीनाश इति) ॥ १४ ॥ २ अत्र स्थूलाक्षरनिर्दिष्टो भागो दुर्गमार्थोऽशुद्धश्च दृश्यते । स च त्याज्यः । ३ मूलनक्षत्रघटिका नराकारे चक्रे विन्यस्य फलं कथयेत् । आद्याः पञ्च घटिका मूर्धगता राज्यप्रदाः । तदनन्तराः सप्त मुखगा मृतिं, स्कन्धगाश्चतस्रो बलाधिक्यं, बाहुगता अष्ट बलं, पाणिगतास्तिस्रो ह्रासं, हृद्गताः सप्त मन्त्रित्वं, नाभिगते द्वे ब्रह्मज्ञानं, गुह्यगता द्वादशातिकामित्वं, जानुगताः षट् महामतिं, पादगताः षट् मृतिं कुर्युरिति भावः ॥ १५—१७ ॥

गुह्यदेशेऽति(ह्ये द्वादश) कामी स्याज्जानुनोः षण्महामतिः ॥
पादयोः षण्मृतिस्तस्येत्युक्तवान्कमलासनः ॥ १७ ॥

प्रकारान्तरेण मूलचक्रफलम्

**सहदेवः—**

[1]मूर्धा वक्त्रं तथा बाहू हृन्नाभी च कटि(र)द्वयं ॥
गुह्यं पादौ दशस्थानं कटयां(घटी)षट्कं क्रमात्फलं ॥ १८ ॥

मूर्ध्नि घातो मुखे मन्त्री भ्रातृमानुभयौ करौ(न् भुजयोर्द्वयोः ॥
हृदये शुभसौख्यं च नाभ्यां स्वामिविषादकः ॥ १९ ॥

करद्वये मातृहन्ता गुह्ये तस्कर एव हि ॥
पादयोर्च(र्ध)नहानिः स्यान्मूलचक्रफलं विदुः ॥ २० ॥

॥ इति मूलनक्षत्रजननफलम् ॥

---

१ मूलनक्षत्राद्यन्तघटिकासु दशधा विभक्तासु प्रतिभागं षण्नाडीक्रमेण दश स्थानानि भवन्ति। तेषां फलं क्रमेणोच्यते। अत्र पादगतानि ऊरुजानुचरण-संज्ञानि त्रीणि स्थानानि। तेषु जनने धनहानिः फलम्। अतोऽत्र अष्टानामेव स्थानानां कथनमयुक्तमिति शङ्कानवकाशः ॥ १८—२० ॥

## अथ आश्लेषानक्षत्रजननफलम्

### आश्लेषाचक्रफलम्

[1]मूर्ध्नि पंचसु राज्याप्तिर्मुखे सप्त मृतिः(पितृ)क्षयः ॥
नेत्रे हे(द्वे) जननीनाशो ग्रीवायां स्त्री(त्रि)षु लंपटः ॥ २१ ॥

स्कन्धे वेदा गुरोर्लोभोह(र्भक्तिर्ह)स्तेऽष्टौ च बली भवेत् ॥
हृद्येकादशभिश्चात्म(भिः प्राणि)घाती मं(सं)जायते नरः ॥ २२ ॥

स्त्रीवाग्मा(स्त्यागी ना)भौ भ्रमी(भवेत्) वन्दि(षड्भि)र्गुदे नव तपोधनः
(सु भोगवान्) ॥

पादे पंच धनं हन्ति सार्पदेनत्फलं क्रमात् ॥ २३ ॥

### आश्लेषावल्लीफलम्

**रुद्रयामले—**

[2]फलं पुष्पं दलं शाखा त्वग्लता स्कन्ध एव च ॥
सार्पवल्ल्यां दशाक्षांश(क्षार्काः) स्व(ख) रविश्चार्कसागरा(राः) ॥ २४ ॥

---

१ आश्लेषानक्षत्राद्यन्तघटिकासु दशधा विभक्तासु मूर्ध्नि पञ्च घटिकाः राज्यं, मुखगाः सप्त पितृक्षयं, नेत्रगे द्वे मातृनाशं, कण्ठगास्तिस्रः कामभोगं, स्कन्धगाश्चतस्रः गुरुभक्तिं, हस्तगा अष्टौ बलं, हृदयगा एकादश हिंसकत्वं, नाभिगाः षट् त्यागं, गुदगा नव भोगं, पादगाः पञ्च धननाशं च कुर्युरिति भावः ॥ २१—२३ ॥

२ आश्लेषाद्यन्तनाडिकासु सप्तधा विभक्तासु फलगा दश नाडिकाः श्रियं, पुष्पगाः पञ्च श्रियं, दलगा द्वादश राजभयं, शाखागताः पञ्च हानिं, त्वग्गता द्वादश मातृनाशं, लतागता द्वादश पितृनाशं, स्कन्धगताश्चतस्र आत्मनाशं कुर्युरिति भावः ॥ २४—२५ ॥

नाडिकास्तद्भवं बालं [सार्पं] कुर्याद्यथाक्रमं ॥
श्रीः श्री राजभयं हानिर्मा(निर्मा)तृपित्रात्मसंक्षयं(यः) ॥ २५ ॥

इति आश्लेषानक्षत्रजननफलम्

**मंगः—**

मूलज्येष्ठादोषापवादः

[१]रवियुक्ताऽश्विनी सौम्यादित्य(त्ये) हस्तादिकत्रयं ॥
मैत्रं च रेवती ज्येष्ठा तदा मूलं न दोषभाक् ॥ २६ ॥

तिथिवारयोगेन मूलस्य दोषाधिक्यम्

[२]तृतीया दशमी षष्ठी शनिसौम(सो)समन्विता ॥
भु(यु)क्ता चतुर्दशी मूले जातः स हरते कुलं ॥ २७ ॥

## ॥ अथ गण्डान्तलक्षणम् तज्जननफलं च ॥

तिथिगण्डान्तराशिगण्डान्तलक्षणम्

[३]मध्ये पू ष णनि(र्णान्)न्दयोर्न्य(र्ना)डिके द्वें(द्वे)
स्याद्गण्डान्तं कीटहर्योस्तथैका ।

---

१ अश्विन्यादीनां रविवारसंबन्धे दोषो नास्तीति भावः सौम्यं मृगशिरा । आदित्यं पुनर्वसुः । मैत्रम् अनुराधा ॥ २७ ॥ २ सोमशनिवारान्यतरयुताभिः तृतीयाषष्ठीदशमीचतुर्दशीभिः युक्ते मूले जातः कुलनाशक इति भावः ॥ २७ ॥ ३ पञ्चमीदशमीपञ्चदश्यः पूर्णास्तिथयः । प्रतिपदेकादशीषष्ठ्यो नन्दास्तिथयः । पूर्णातिथ्यन्ते एका घटिका, नन्दातिथ्यादावेका घटिका चेति घटिकाद्वयम् तिथि-

कोदंडादौ वृश्चिकान्ते झक(झ)षान्ते
मेषस्यादौ राशिगण्डान्तमेवं ॥ २८ ॥

नक्षत्रगण्डान्तलक्षणम्

[1]चतुर्घटी मूलमाघा(मघा)श्विनाद्यै(द्यौ) ॥
गण्डान्तमन्ते च फणीन्द्रपौष्णे ॥ २९ ॥

नक्षत्रगण्डान्तनाडीचतुष्टयप्रत्येकफलम्

आद्यनाड्यां तु जातस्य पिता मरणमाप्नुयात् ॥
द्वितीयायां तथा माता तृतीयायामथान्वयः ॥
चतुर्थ्यां जायमानस्तु हन्ति भ्रातृन्न संशयः ॥ ३० ॥

गण्डान्तत्रयफलम्

तिथ्यृक्षगण्डे पितृमातृनाशो
लग्नस्य सन्धौ तनयस्य नाशः ।
सर्वेषु नो जीवति हन्ति वंशं
जीवन्पुनः स्याद्बहुवारणाश्वः ॥ ३१ ॥

इति गण्डान्तलक्षणं तज्जमनफलं च

---

गण्डान्तम् । पञ्चमीषष्ठयोः दशम्येकादश्योः पञ्चदशीप्रथमयोश्चान्तरालगतं घटिकाद्वयं तिथिगण्डान्तमिति यावत् । एवं कर्काटकान्ते घटिकार्धं, सिंहादौ घटिकार्धमित्येका घटिका राशिगण्डान्तम् । एवमेव वृश्चिकचापयोः मीनमेषयोश्चान्तरालगता एकैका घटिका राशिगण्डान्तम् ॥ २८ ॥ १ आश्लेषान्ते घटिकाद्वयं, मघादौ घटिकाद्वयं चेति घटिकाचतुष्टयं. नक्षत्रगण्डान्तम् । एवं ज्येष्ठामूलयोः रेवत्यश्विन्योरन्तरालगतं घटिकाचतुष्टयं नक्षत्रगण्डान्तं ॥ २९ ॥

## सिनीवालीदर्शगुलिकयमघण्टरिक्ताजननफलम्

[1]विद्यांदा(द्याद्दा)रिद्र्यमावष्टे(दर्शे) कुलिंके(लिकेऽ)गस्य वैकृतं ॥
यमघंटे [महा]रुक्स्याद्रिक्तायां ख(ष)ण्डतामियात् ॥ ३२ ॥

---

१ अमायास्त्रयो भागाः। सिनीवाली दर्शः कुहूरिति। तत्र अमाया सूर्योदयद्वयव्यापित्वेन दिनत्रयस्पर्शे प्रथमदिने चतुर्दश्यनतन्तरं विद्यमानोऽमाभागः सिनीवाली, द्वितीयं दिनं पूर्णं दर्शः, तृतीयदिने प्रतिपदारंभात्पूर्वं विद्यमानो भागः कुहूः। एवं अमायाः सूर्योदयसंपर्काभावेन क्षये पूर्णाप्यमा दर्शः, न तत्र सिनीवाली कुहूर्वा। एवं अमाया एकस्मिन् दिने सूर्योदयसंबन्धेन दिनद्वयस्पर्शे सूर्योदयात् पूर्वोऽमाभागः सिनीवाली, शिष्टो भागः कुहूः, न तत्र दर्शः। इदं मतं मयूखादि-संमतं। अपरे तु अमायाः सार्धसप्तघटिकात्मसु अष्टसु यामेषु प्रथमो यामः सिनीवाली, सप्तमाष्टमौ यामौ कुहूः, शिष्टो भागो दर्श इति वदन्ति। अथ श्लोको व्याख्यायते। आदर्शे दर्शपर्यंतं, सिनीवालीदर्शयोरिति यावत्। जातस्य दारिद्र्य विद्यात्। नष्टेन्दौ कुह्वां जातः अन्धतां व्रजेत्। एवं गुलिके नातो विकृताङ्गो भवति। पादोनचतुर्घटिकात्मकेषु दिनस्य अष्टसु भागेषु प्रथमो भागो वारपतेः, द्वितीयस्तदनन्तरस्य, एवं क्रमेण गणने कृते प्राप्तः शनेर्भागो गुलिकः। रात्रौ वाराधिपतेः पञ्चमाद्ग्रहादारम्य रात्रिगतेष्वष्टसु भागेषु गणनां विधाय कुळिको ज्ञेयः। यथा-रविवारे दिवा सप्तमो भागः, रात्रौ तृतीयो भागश्च गुळिक इति ज्ञेयम्। एवं पूर्वोक्तरीत्या दिवा रात्रौ च गणने गुरोरंशो यो लभ्यते स यमघण्टः (यमकण्टक) इति व्यपदिश्यते। अथ वा रविवारे अश्विनीभरणीकृत्तिकामृगशीर्षमघाविशाखानु-राधाज्येष्ठाधनिष्ठानां, चन्द्रवारे पुष्यमघोत्तराचित्राविशाखानुराधापूर्वाषाढोत्तराषाढोत्त-राभाद्रपदानां, कुजवारे आर्द्राश्लेषाविशाखाज्येष्ठापूर्वाषाढोत्तराषाढाश्रवणधनिष्ठाशत-

### व्यतीपातपरिघवैधृतिकुहूजननफलम्

व्यतीपातो(तेऽ)[ङ्ग]हानिः स्यात् परिघे मृतिमादिशेत् ॥
वैधृतौ पितृहानिः स्यात् नष्टेन्दौ(न्दा)वध्य(न्ध)तां व्रजेत् ॥ ३३ ॥

### शूलवैधृतिजननफलम्

शू(मू)के समूलनाशः स्यात् कुलनाशश्च वैधृतौ ॥ ३४ ॥

### प्रसववैकृतनाळवेष्टितजननफलम्

[1]विपरीता(ताः) प्रसूतौ तु नाभिनालेन वेष्टितं(ताः) ॥
राष्ट्रस्य नृपतेश्चैव स्वसापि च(स्वेषामपि) विनाशकाः ॥ ३५ ॥

---

तारापूर्वाभाद्रारेवतीनां, बुधवारे अश्विनीभरणीविशाखामूलधनिष्ठापूर्वाभाद्रपदारेवतीनां, गुरुवारे कृत्तिकारोहिणीमृगशीर्षार्द्रापूर्वफल्गुनीचित्राशतताराणां, शुक्रवारे भरणीरोहिणी-मृगशीर्षपुष्याश्लेषामघाचित्रास्वातीविशाखाधनिष्ठानां, शनिवारे पुनर्वसुपुष्यपूर्वफल्गुनी-हस्तचित्रापूर्वाषाढोत्तराषाढाश्रवणरेवतीनां योगो यमघण्ट इत्युच्यते। तत्र जातो महारोगी भवति। चतुर्थीनवमीचतुर्दश्यो रिक्तास्तिथयः। व्यतीपातो वैधृतिश्च क्रान्तिसाम्याख्यमहापातौ, विष्कंमादियोगमध्यगतनित्ययोगौ च। तत्र कुलनाश इति महापाताख्यवैधृतिफलम्। पितृहानिरिति नित्ययोगवैधृतिफलम्। परिघशूलौ नित्ययोगौ ॥ ३२—३४ ॥ १ मनुष्यगर्भे मृगादीनां संभवः, मृगादिगर्भे मनुष्यादीनां संभवः, एकभुजत्रिभुजचतुर्भुजादीनां संभवश्चेत्येवमादयः स्वभावविरुद्धाः संभवाः विपरीताः प्रसूतयः। एवं प्रसूतौ विपरीताः विपरीतप्रसूतिमन्तः, नाभिनाळेन वेष्टिताः प्रसूताश्च राष्ट्रादीनां विनाशकाः इति योजना ॥ ३५ ॥

### अधिकाङ्गहीनाङ्गजननफलं पर्वकालसन्ध्याकालजननफलं च

[1]अधिकांगे च(गश्च) हीने च(नश्च) सन्ध्ययोरुभयोरपि ॥
पर्वण्यपि प्रसूतौ च(तश्च) सर्वारिष्टभयप्रदः ॥

### सदन्तजननपादजननफलम्

तद्वत्सदन्तजातश्च पादजातस्तथैव च ॥ ३६ ॥

तस्माच्छान्तिं प्रकुर्वीत ग्रहाणां क्रूरचेतसां ॥
दैवज्ञं पूजयेत्तत्र शान्त्या शान्तिर्भविष्यति ॥ ३७ ॥

### विषघटीजातफलम्

[2]विषांशकगते चन्द्रे जातो यमपुरं व्रजेत् ॥

### विषघटीगतस्य चन्द्रस्य सूर्यादिनवांशस्थितिकाले जन्मफलम्

आदित्यांशे पितुर्मृत्युश्चन्द्रांशे मातुरेव च ॥ ३८ ॥

भौमांशे मातुलस्यैव सौरांशे भ्रातुरेव च ॥
अन्यांशे विषसंस्पृष्टे जातो यमपुरं व्रजेत् ॥ ३९ ॥

---

१ अधिकाङ्गः षडंगुल्यादिः, हीनः हीनाङ्गः एकहस्तादिः, सन्ध्याकालयोरुभयोर्जातः, ग्रहणसङ्क्रान्त्यादिपर्वकालजातः, दन्तसाहित्येन जातः, पादपुरःसरं जातश्च सर्वारिष्टभयप्रदः ॥ ३६ ॥ २ विषनाड्यः तिथिवारनक्षत्रगतत्वेन त्रिविधाः। तासु तिथिवारगतविषनाडीनामल्पदोषत्वेन जन्मकाले तद्विचारो न क्रियते। अतो नक्षत्रगतविषकाले जातस्य फलमाह (विषांशकेति)स्पष्टमन्यत् ॥ ३८—४० ॥

### गण्डान्तदोषापवादः

स्ववर्गे मित्रभे स्वोच्चे शुभयुक्ते शुभेऽक्षिते ॥
गण्डातदोषमुद्भूतं सद्य एव व्यपोहति ॥ ४० ॥

**गर्गः—**

### कृष्णपक्षचतुर्दशीजननफलम्

[1]कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलं ॥
चतुर्दशीं च षड्भागां कुर्यादादौ शुभं स्मृतं ॥ ४१ ॥

द्वितीये पितरं हन्ति तृतीये मातरं तथा ॥
चतुर्थे मातुलं हन्ति पंचमे वंशनाशनं ॥
षष्ठे तु सर्वनाशः स्यात् चतुर्दश्या फलं क्रमात् ॥ ४२ ॥

### भरणीपुष्यमखोत्तराहस्तचित्रापूर्वाषाढाजननफलम्

[2]पित्रोर्मृतिर्हस्तयमत्रिपादे
पितुस्तु पूर्वे जलपुष्ययोस्तु ।
त्वाष्ट्राद्ययोः स्यात्पितृनाशनं च
चन्द्रोदये भ्रातृवधोऽर्यमाद्ये ॥ ४३ ॥

[चित्राद्येऽर्धे पुष्पमध्ये द्विपादे
पूर्वाषाढाधिष्ण्यपादे तृतीये ।

---

१ कृष्णपक्षचतुर्दश्याः षड्भागान् विधाय प्रतिदशघटिकं क्रमेण फलमभिधीयते || ४१—४२ || २ भरणीहस्तयोस्तृतीयपादे जनने मातुः पितुश्च नाशः, पूर्वाषाढापुष्यमखानां प्रथमपादे चित्राप्रथमद्वितीयपादयोश्च जनने पितृनाशः, उत्तराप्रथमपादे जनने भ्रातृनाशः इति भावः। अन्ये तु पुष्यद्वितीयतृतीय-

जातः पुत्रश्चोत्तराद्ये विधत्ते
पित्रोर्भ्रातुः स्वस्य चापि प्रणाशम् ॥ ४२ ॥]

॥ इति श्रीजातकसारदीपे नक्षत्रारिष्टयोगाध्यायः पञ्चषष्टितमः ॥

---

## ॥ अथ लग्नारिष्टयोगाध्यायः षट्षष्टितमः ॥

### पित्रादिकारकाः तन्नाशयोगश्च

[1]ताताऽम्बिकामातुलसोदराश्च
मातामहा मातृसमा च सूनुः ।
सूर्यादिखेटाः क्रमशः प्रदिष्टा
त्रिकोणगास्तेऽपि च तान्निहन्युः ॥ १ ॥

सौरोऽह्नि रात्रौ तपनः पितृव्यः ॥
तत्पापयोगाच्च पितृव्यनाशः ॥ २ ॥

दिवसे मातापितरौ शुक्ररवी शशिशनी निशायां च ॥
मातृभगिनीपितृव्यौ विपर्ययात्कीर्तितौ यवनैः ॥ ३ ॥

---

पादयोर्जनने पूर्वाषाढातृतीयपादे च जनने पितृभ्रात्रादिनाश इति वदन्ति । तदीयं वाक्यं कुण्डल्यां निवेशितं ॥ ४२ ॥ १ रविः पितुः, चन्द्रः मातुः, कुजो मातुलस्य, बुधः सोदरस्य, गुरुः मातामहस्य, शुक्रः मातृभगिन्यादीनां मातृसमानां, शनिः सुतस्य च कारकाः इत्येकं मतं । दिवा रविः पितुः, शनिः पितृव्यस्य, शुक्रो मातुः, चन्द्रो मातृष्वसुः, कारकाः । रात्रौ रविः पितृव्यस्य, शनिः पितुः, शुक्रो मातृष्वसुः, चन्द्रो मातुः कारकाः । अवशिष्टं पूर्ववत् । इत्यपरं मतम् । एतेषां ग्रहाणां पञ्चमनवमसंबंधे पित्रादिनाश इत्येकं मतम् । पापग्रहयोगे तन्नाश इति बहूनां मतम् । रविचन्द्रकुजशनिषु मिलितेषु द्वादशगतेषु भ्रातृमातृपुत्रनाशः॥ १—४ ॥

पाप[१]ग्रहयुक्तश्चेत्वां(तान्) नाशयति नियमेन ॥
सोमार्कभूसुतशनिः व्ययस्था मातृभ्रातृसुतान्निहन्युः ॥ ४ ॥

(सोमार्कार्किजकुसुता व्ययस्थिता भ्रातृमातृपुत्रनाशकराः ॥ ४ ॥)

[१]द्वादशे चन्द्रसूर्यौ च क्षीणचन्द्रश्च सप्तमे ॥
पितुर्मरणदः सद्यः शुभदृष्टे त्रिवर्षके ॥ ५ ॥

उदयाद्दशमे मन्दो नाशयेदचिरात्सुतं ॥
पितरं भास्करो हन्यान्मातरं हिमदीधितिः ॥ ६ ॥

मात्रा सह शिशुमरणयोगः

[२]लग्नात्सप्ताष्टमगैः पापैरधि(भि)वीक्षितश्चन्द्रः सह जनन्या ॥
म्रियते शुभसंदृष्टे(ष्टैः) स[त्य]स्य मा(म)ताद्बदेद्व्याधिं ॥ ७ ॥

[लग्नात् सप्ताष्टमगैः पापैः क्रूरेक्षितैः सह जनन्या ।]

गर्भिणीमरणयोगः

[३]व्ययस्थितेऽर्के तु(रु)धिरे चतुर्थे
चन्द्रे कृशे नश्यति सा सगर्भा ।

---

१ चन्द्रसूर्ययोर्मिलितयोर्द्वादशगतयोरेको योगः । क्षीणचन्द्रे सप्तमगे अपरो योगः । अनयोर्योगयोर्जातः शिशुः जन्मसमनन्तरमेव पितरं हन्ति । योगकारकग्रहस्य शुभदृष्टत्वे वर्षत्रये हन्ति ॥ ५ ॥ २ लग्नात् सप्तमे वा अष्टमे वा स्थितैः पापैरीक्षिते, यत्र तत्र गते चन्द्रे माता सह शिशोर्मरणम् । अस्मिन् योगे चन्द्रे शुभैरपि दृष्टे मातृपुत्रयोर्व्याधिरेव,न मरणमिति सत्याचार्यमतम् । सारावल्यादौ तु अष्टमे वा सप्तमे वा स्थितैः पापैः, पापेनैव केनचित् दृष्टैः माता सह शिशुमरणं । शुभदृष्टैः मातृपुत्रयोर्व्याधिरित्युक्तम् । तद्रीत्या पाठान्तरं मया कल्पितम् ॥ ५० ॥ ३ सूर्ये व्ययगते, कुजे चतुर्थगते, क्षीणचन्द्रे यत्र कुत्रापि स्थिते सगर्भ-

### शस्त्रकृतगर्भिणीशिशुमरणयोगः

लग्ने कुजेऽर्के स्मरणे(गे) निषेके
शस्त्रेण मात्रा सह गर्भमृत्युः ॥ ८ ॥

[1]धनव्ययस्थैरशुभैश्च हन्यात्
क्रूरेऽक्षितैः सौम्यदृशा विहीनैः ।
अस्तौ रवीन्दू तनुगौ सपापौ
कुजोऽष्टमे मातृसुतासपाप(तप्रणाशः) ॥ ९ ॥

### मातृजीवनयुतशिशुमरणयोगः

जीवेत्सवित्री म्रियते च सूनुः
क्रूरेषु षड्द्वादशगेषु सूनौ(तौ) ।

### पितृमरणयोगः

राहुर्बलिष्ठो नवपंचमस्थः
क्रूरेण दृष्टः पितृहेति केचित् ॥ १० ॥

---

स्त्रीमरणयोगः । लग्नगते कुजे रवौ सप्तमगे शस्त्रचिकित्सादिकृतः शिशुगर्भिण्योर्मरण-योगः । इदं च निषेकलग्नं प्रश्नलग्नं वा विलोक्य वक्तव्यम् ॥ ८ ॥

१ लग्नचन्द्रयोरुभयोरप्येकराशिगतयोर्वा भिन्नराशिगतयोर्वा पापद्वयमध्यगतत्वे, क्रूरदृष्टौ, शुभदृष्ट्यभावे च पूर्ववत् फलम् । एवं कुजे अष्टमगते, अस्ते पापयुते लग्नगते रवौ एको योगः । ईदृशे चन्द्रे अपरो योगः । अस्मिन् योगद्वये रविकृतयोगे शस्त्रजो मातृसुतयोर्नाशः ॥ ९ ॥

[1]राहुश्चतुर्थकः(गः) पुत्रं नवमः पितरं तथा ॥
हन्यात्केतुश्च तद्वत्स्यात् पापदृष्टो दिनत्रये ॥ ११ ॥

कुलनाशकयोगः

[2]चन्द्रे नभ(भः)स्थे हिबुके च पापे
शुक्रे स्मरे स्यात्स्वकुलस्य हन्ता ॥ १२ ॥

अथ सद्यः शिशुमरणयोगाः

[3]सप्ताष्टलग्नव्ययगे शशांके
क्रूरेण युक्ते शुभदृष्टियुक्ते(हीने) ।
सौम्यैर्विहीनेषु च कंटकेषु
कृतान्तदंष्ट्रयन्तरगः प्रसूतः ॥ १३ ॥

[4]पूर्वापरार्धे यदि पापसौम्या
श्चक्रस्य चेन्नश्यति कीटलग्ने ।

---

१ राहौ वा केतौ वा चतुर्थगे पापदृष्टे दिनत्रये शिशुनाशः । पापदृष्टयभावे कालान्तरे शिशुनाशः । एवं नवमगे राहौ वा केतौ वा पापदृष्टे दिनत्रये पितृनाशः । पापदृष्टयभावे कालान्तरे पितृनाश इति ज्ञेयम् ॥ ११ ॥ २ दशमगे चन्द्रे, चतुर्थगे पापे, सप्तमगे शुक्रे एको योगः ॥ १२ ॥ ३ क्रूरग्रहेणैकेन युते शुभैरदृष्टे चन्द्रे लग्ने वा सप्तमे वा अष्टमे वा व्यये वा स्थिते, शुभेषु केन्द्रं विहायान्यत्र स्थितेषु चत्वारो योगाः । अत्र क्रूरग्रहः कुज एव ग्राह्यो नान्ये इति केचिद्व्याचक्षते । तन्निर्मूलम् ॥ १३ ॥ ४ दशमे भोग्यभागाः एकादशद्वादशलग्नद्वितीयतृतीयभावाः चतुर्थे भुक्तभागाश्च चक्रपूर्वार्धे । शिष्टं चक्रपश्चार्धे । चक्रपूर्वार्धगतेषु सर्वेषु पापेषु, चक्रपरार्धगतेषु सर्वेषु शुभेषु, कर्काटके वा वृश्चिके वा लग्नगते द्वौ योगौ । इमौ योगौ वज्रमुष्टियोग-

ससान्ध्यवेला यदि चन्द्रहोरा
पापाश्च राश्यंतगता विपायै ॥ १४ ॥

[1]केन्द्रेषु सर्वेषु च चन्द्रपापै
र्युक्तेपु(षु) जातो यमलोकमेति ।

घूनाष्टलग्नांभसि पापमध्ये
चन्द्रे मृतिर्दुर्बलसौम्यदृष्टे ॥ १५ ॥

[2]क्षीणेन्दुलग्ने मृतिकण्टकस्थे(स्थैः)
पापैर्विनाशाय शुभैरदृष्टे ।

पापौ विलग्नस्मरयोः पृथक्स्था
वेकस्य(कः स)चन्द्रे(न्द्रो) मृतिरुग्रदृष्टया ॥ १६ ॥

---

नाम्ना व्यपदिश्येते इत्युक्तं सारावल्यां । एवं नक्षत्रतेजोमन्दीभावारंभानन्तरं सूर्यबिंबार्धो-दयपर्यन्तं प्रातः सन्ध्या । एवं सूर्यबिंबार्धास्तानन्तरं नक्षत्राभिव्यक्तिपर्यन्तं सायं सन्ध्या । ओजराशिषु द्वितीयं, युग्मराशिषु प्रथमं च राश्यर्धं चन्द्रहोरा । संध्याकाले चन्द्रहोरायुते लग्ने, सर्वेष्वपि पापेषु स्वाश्रितराशिनवमनवांशगतेष्वेको योगः । अन्ये तु अत्र चन्द्रहोरापदं चन्द्रयुक्तलग्नपरं, तथा च सन्ध्याकाले, चन्द्रयुते लग्ने, पापेषु पूर्ववत्स्थितेषु एको योग इति वदन्ति । इदं व्याख्यानद्वयमपि सारावल्यभिमतम् ॥ १४ ॥ १ चतुर्ष्वपि केन्द्रेषु चन्द्ररविकुजशनीनां मध्ये एकैकेन युतेष्वेको योगः । पापग्रहयोरुभयोर्मध्यगते चन्द्रे, लग्ने वा चतुर्थे वा सप्तमे वा अष्टमे वा स्थिते, दुर्बलैः शुभैर्दृष्टे चत्वारो योगाः ॥ १५ ॥ २ क्षीणचन्द्रयुते शुभादृष्टे लग्ने, केन्द्रे अष्टमे च पापयुते एको योगः । लग्ने एकः पापः, सप्तमगोऽपरः, चन्द्रयुतस्तृतीयः अस्यां ग्रहस्थितौ चन्द्रे शुभादृष्टे पापदृष्टे एको योगः ॥ १६ ॥

[1]रिःफे कृशेऽन्दौ मृतिलग्नसंस्थाः
पापा विनाशाय शुभैरकेन्द्रैः ।
लग्नाष्टधर्मान्त्ययुताः शशाङ्क
भौमार्कमन्दा गुरुणा न दृष्टाः ॥ १७ ॥

[2]पापास्त्रिकोणाष्टमगा असौम्या
श्चन्द्रे तनौ भास्वति वा क्षयाय ।
पापेऽष्टमे केन्द्रगतो न जीवो
नाशाय लग्ने तपने शनौ वा ॥ १८ ॥

---

१ क्षीणचन्द्रे द्वादशगे, लग्नाष्टमयोः स्थितेषु पापेषु, शुभेषु केन्द्रं विहायान्यत्र स्थितेष्वेको योगः'। अस्मिन् योगे सारावळीरीत्या एकः पापो ग्रहः सप्तमगतोऽप्यधिकोऽपेक्षितः। व्ययगते शनौ, लग्नगते चन्द्रे, अष्टमगते कुजे, नवमगते सूर्ये चैको योगः। अस्मिन्योगे योगकारकाणां चतुर्णामपि गुरुदृष्टयभाव आवश्यकः। गुरुदृष्टौ च योगभङ्गः। तत्रापि दुर्बलगुरुदृष्टौ, न योगभङ्गः। गुरौ पञ्चमगते अष्टमद्वादशयोः पादोनदृष्टिः, लग्ननवमयोः पूर्णदृष्टिर्भवति। एवं गुरौ षष्ठगते द्वादशे पूर्णदृष्टिः, नवमलग्नयोः पादोनदृष्टिः, अष्टमे पाददृष्टिश्च भवति। पञ्चमषष्ठौ विहायान्यत्र स्थिते गुरौ पूर्वोक्तस्थानचतुष्टये समकालं दृष्टिर्न भवति। अतः पञ्चमे षष्ठे वा बलवद्गुरुयुते योगभङ्ग इत्यवधार्यम्। सारावळीरीत्या अस्मिन् योगे रविर्व्यये, शनिर्नवमे अपेक्षितः। अन्यत्सर्वं पूर्ववत्। तद्रीत्या "शशांकभौमार्किसूर्या" इति पठनीयम् ॥ १७ ॥ २ पापानामसौम्यत्वं च बलवत्वेन, बलयुतशुभग्रहयुतिदृष्टिराहित्येन च भवति। अतः पूर्वोक्तरीत्या असौम्यभावमापन्नेषु पापेषु पञ्चमनवमाष्टमान्यतमगतेषु, सूर्ये वा चन्द्रे वा लग्नगते द्वौ योगौ। एकस्मिन् पापे अष्टमगते, गुरौ केन्द्रं विहायान्यत्र स्थिते, रवौ शनौ वा लग्नगते द्वौ योगौ ॥ १८ ॥

[1]केन्द्रत्रिकोणेष्वशुभैः शुभैश्च
षष्ठाष्टरिःफे मृतिरर्कि(र्क)लग्ने ।
द्रेकाणजामित्रगतोऽतिपापो
लग्ने शशांकश्च निहन्ति सद्यः ॥ १९ ॥

इति सद्यःशिशुमरणयोगाः

अथ निर्दिष्टकालमरणयोगाः

[2]ग्रहाः समेयुर्बहवोऽष्टमे चे
न्मासं तु जीवेद्दिनसप्तकं वा ।
भौमो विलग्ने भृगुजश्च केन्द्रे
म्रियेत होरां पुनरागतेऽति(तारे) ॥ २० ॥

[3]लग्नात्त्रिकोणे गुरुरस्य केन्द्रे
तिष्ठन् विलग्नेशकुजः क्षयाय ।

---

१ सूर्ये लग्नगते, केंद्रत्रिकोणान्यतरगतेषु अशुभेषु, शुभेषु च षष्ठाष्टमव्ययगतेष्वेको योगः । लग्नद्रेकाणे वा सप्तमे वा क्रूरग्रहयुते, लग्नगते चन्द्रे एको योगः ॥ १९ ॥
२ अष्टमगतेषु त्र्यादिषु ग्रहेषु मासं वा दिनसप्तकं वा जीवेत् । कुजे लग्नगते, शुक्रे चतुर्थे वा सप्तमे वा दशमे वा स्थिते एको योगः । अस्मिन् योगे जातः कुजो द्वादशराशिपरिभ्रमणं विधाय पुनः लग्नगतो यदा भवति तदा म्रियते ॥ २० ॥ ३ पञ्चमे वा नवमे वा गुरुयुते, गुरुकेन्द्रगते कुजे, मेषे वा वृश्चिके वा लग्ने एको योगः । सारावल्यां तु—पञ्चमे वा नवमे वा गुरुयुते, लग्नेशे लग्नगते, कुजे गुरुलग्नान्यतरकेन्द्रगते अयं योग उक्तः । तद्रीत्या पाठान्तरं कुण्डल्यां प्रदर्शितम् । पापेषु लग्नपञ्चमसप्तमाष्टमनवमद्वादशान्यतमगतेषु क्षीणचन्द्रयुतेष्वपरो योगः ॥ २१ ॥

[गुरौ त्रिकोणे तनुपे तनुस्थे
 तदेककेन्द्रे कुसुते क्षयाय ॥]

त्रिकोणलग्नाष्टमदव्ययस्थाः
 क्षीणेन्दुयुक्ता मरणाय पापाः ॥ २१ ॥

मासांतर्मरणयोगाः

[1]पापेऽक्षितो हन्ति तु षोडशाहात्
 लग्ने शनिः पापयुतस्तु मासात्

प[ापैरनु(यु)क्तो न निरीक्षितश्च
 वर्षाच्छनिर्हन्ति तनुं गतो वा ॥ २२ ॥]

[2]सुतमदननवांत्यलग्नरन्ध्रे
 ष्वशुभयुतो मरणाय शीतरश्मिः ।

भृगुसुतशशिपुत्रदेवपूज्यै
 र्यदि बलिभिर्न युतो विलोकितो वा ॥ २३

१ अत्रोत्तरार्धं लुप्तम् । तच्च कुण्डल्यां निवेशितम् । लग्नगते शनौ पापदृष्टे षोडशदिनाभ्यंतरे, पापयुते मासाभ्यन्तरे पापयुतिदृष्टिरहिते वर्षाभ्यन्तरे मरणमिति भावः ॥ २२ ॥ २ पापयुते चन्द्रे, लग्ने वा पञ्चमे वा सप्तमे वा अष्टमे वा नवमे वा द्वादशे वा स्थिते जातो म्रियते । अस्मिन् योगे बुधगुरुशुक्राणां योगो वा दृष्टिर्वा यदि चन्द्रे स्यात्तर्हि योगभङ्गः । अयमेव योगभङ्गोपायः सर्वेष्वप्यरिष्टयोगेषु ग्राह्यः । अत एव मध्यमणिन्यायेनास्य मध्ये निर्देशः ॥ २३ ॥

विलग्नदृक्काणनवांशनाथा
निघ्नन्त्यरिस्था स्थिति(त)राशिसंख्यैः ।
लग्नाधिपोऽब्दैश्च दृकाणनाथो
मासैर्नवांशाधिपतिर्दिनैश्च ॥ २४ ॥

[2]केतूदयोल्काशनिपातवाते
नश्येन्मुहूर्ता(र्ते) फणिरुद्रसंज्ञे ।
मीनर्क्षजः सेन्दुरविस्तृतीये
व्याध्युद्गमो जीवति स त्रिरात्रं ॥ २५ ॥

[3]सव्ये त्रिकोणस्त(णे त)पनः शशांको
वामे तदा द्वादशरात्रजीवी ।
चन्द्रे त्रिकोणे चतुरस्रगोऽर्को (गेऽर्के)
दुर्व्याधिना जीवति स त्रिरात्रं ॥ २६ ॥

---

१ मेषादारभ्य लग्नाश्रितराशिः यावान् भवति तावद्भिर्वर्षैः शत्रुक्षेत्रगतो लग्नाधिपः, तावद्भिर्दिनैर्लग्ननवांशाधिपः, तावद्भिर्मासैर्द्रेष्काणाधिपः नाशयतीति भावः ॥ २४ ॥ २ यस्य जन्मकाले केतूदयः, उल्कापातः, अशनिपातः इत्येवमादय उत्पाता भवन्ति स म्रियते । दिनगतेषु द्विघटिकात्मकेषु पञ्चदशसु मुहूर्तेषु प्रथमो रौद्रः, द्वितीयः सार्पो मुहूर्तः एवं रात्रिगतेषु प्रथमो रौद्रो मुहूर्तः । द्वितीयः सार्पः अनयोः सार्परौद्रमुहूर्तयोर्जातो म्रियते इति भावः । मीने लग्ने, तृतीये रवियुते चन्द्रे जातः व्याधिपीडितः त्रिरात्रं जीवतीति भावः ॥ २५ ॥ ३ पञ्चमगते रवौ, नवमगते चन्द्रे द्वादशदिनजीवी भवति । चन्द्रे पञ्चमनवमान्यतरगते, सूर्ये चतुर्थाष्टमान्यतरगते एको योगः । अत्र जातो दुर्व्याधिपीडितः त्रिरात्रं जीवतीति भावः ॥ २६ ॥

[1]चन्द्रे चतुर्थे तपने च षष्ठे
सव्याधिरष्टादशवत्स(वास)रान्ता(त) ।

होराष्टमस्थे कुजमन्ददृष्टे
सूर्यो(र्ये) सरोगस्तु विपद्यते च ॥ २७ ॥

[2]क्रूरास्त्रयः क्रूरगृहेऽष्टमस्था
निघ्नन्ति मासात् ध्रुवमेव जातां(तं) ।

यस्मिन्गृहे त्वभ्युदितस्तु केतु
स्तस्मिन् प्रसूतौ म्रियते द्विमासात् ॥ २८ ॥

[3]भानुर्नभस्थः कुजमन्दराशौ
निहन्ति सद्यो हित(बहु)पापदृष्टः ।

क्रूरेऽक्षितः क्षीणशशी तनुस्थो
हन्त्येव मुक्त्वा क्रियगोकुलीरान् ॥ २९ ॥

---

१ चन्द्रे चतुर्थगे, सूर्ये षष्ठगते अष्टादशदिनपर्यन्तं व्याधिपीडितो जीवति । अष्टमगे सूर्ये कुजशनिदृष्टे एको योगः । अत्र ईदृशे योगे यः सरोगः सः विपद्यते इत्यपि योजना । तेन जन्मकालवत् रोगारंभकालेऽपि इमे योगाश्चिन्तनीया इति सूचितम् ॥ २७ ॥ २ मेषवृश्चिकान्यतरराशावष्टमस्थे, रविकुजशनिभिस्त्रिभिरपि युते जाते मासादर्वाङ्म्रियते । केतूदयनक्षत्रे जातो मासद्वयादर्वाङ्म्रियते ॥ २८ ॥ ३ मेषवृश्चिकमकरकुंभान्यतमगते, बहुभिः पापैर्दृष्टे, दशमगते च सूर्ये एको योगः । एवं मेषवृषमकर्कटकभिन्नराशिगते, लग्नगते, पापदृष्टे, क्षीणचन्द्रे एको योगः । एतद्योगद्वयजातः सद्यो म्रियते ॥ २९ ॥

[1]षष्ठाष्टगा वक्रितपापदृष्टा
हन्युः शुभा मासि शुभैरदृष्टाः ।
होरापतिः पापजितः स्मरस्थो
मासेन तं मारयति प्रसूतं ॥ ३० ॥

वत्सरान्तर्मरणयोगः

[2]वर्षान्मारयति शशी षष्ठाष्टमसंस्थितो विलग्नर्क्षात् ॥

**सद्यः क्रूरैर्लग्नक्षात्—**

सद्यः क्रूरैर्दृष्टैः(र्दृष्टः) सौम्यैरष्टाब्दकैरष्टमासैर्वा ॥ ३१ ॥

---

१ वक्रिभिः पापैर्दृष्टेषु, षष्ठे वा अष्टमे वा स्थितेषु, शुभग्रहेष्वेको योगः । अस्मिन् योगे षष्ठाष्टमयोः सकलशुभग्रहावस्थानं नापेक्षितं । तथात्वे शुभदृष्टया योगभङ्गकथनायोगात् । अतः एको वा द्वौ वा त्रयो वा शुभाः षष्ठाष्टमगाः शुभादृष्टाः पूर्ववत् स्थिताश्चेदयं योग इति ज्ञेयम् । एवं लग्नेशः युद्धे पापेन पराजितः सप्तमगो यदि तर्ह्यपरो योगः । एतद्योगद्वयजातो मासजीवी भवति ॥ ३० ॥

२ अत्र श्लोके स्थूलाक्षरनिर्दिष्टो भागोऽधिकः । स च त्याज्यः । षष्ठाष्टमान्यतरगते चन्द्रे पापदृष्टे सद्यः, सर्वग्रहादृष्टे वर्षान्तः, मिश्रग्रहदृष्टे अष्टभिर्मासैः, शुभग्रहदृष्टे अष्टभिर्वत्सरैर्मृतिर्भवति । अत्र वराहरीत्या मिश्रदृष्टे वर्षचतुष्टयमायुर्भवति । अत्र तु अष्टमासात्मकमायुरुक्तं । तेनैतज्ज्ञायते । चन्द्रावेक्षकग्रहसंख्यां तद्बलं चाश्रित्य त्रैराशिकेनैतदायुर्निर्णयः कर्तव्यः । समबलेषु समसंख्येषु च शुभाशुभेषु चन्द्रं पश्यत्सु वर्षचतुष्टयमायुः । अधिकसंख्याकेष्वधिकबलेषु पापेषु, न्यूनसंख्याकेषु हीनबलेषु शुभेषु च चन्द्रं पश्यत्सु अष्टमासात्मकमायुः । मध्ये त्रैराशिकेन व्यवस्था कार्येति भावः ॥ ३१ ॥

### वत्सरद्वयान्तर्मरणयोगः

[1]वक्री कुजर्क्षे शनिरारदृष्टः
षष्ठाष्टकेन्द्रे मृतिकृ[द्] द्विवर्षात् ।
[वक्री कुजर्क्षे शनिरारदृष्टः
षष्ठाष्टकेन्द्रस्थविधुर्द्विवर्षात् ॥]

### वत्सरत्रयान्तर्मरणयोगौ

गुरुः कुजर्क्षेऽष्टमगस्त्रिवर्षा
दशुक्रदृष्टः शशिपापदृष्टः ॥ ३२ ॥
[2]लग्नेश्वरादृ(द)ष्टमगः कृशेन्दु
र्दृष्टस्त्रिवर्षादशुभैर्विसौम्यैः ।

### वत्सरचतुष्टयान्तर्मरणयोगौ

भौमार्किदृष्टः सहितोऽपि केन्द्रे
नष्टः शशी हन्ति चतुर्भिरब्दैः ॥ ३३ ॥

---

१ कुजदृष्टे, मेषवृश्चिकान्यतरगते, षष्ठे वा अष्टमे वा केन्द्रे वा स्थिते वक्रिणि शनावेको योगः । सारावल्यां तु षष्ठे वा अष्टमे वा केन्द्रे वा स्थिते चन्द्रे कुजदृष्टे मेषवृश्चिकान्यतरगते वक्रिणि शनावयं योगः कथितः । तद्रीत्या पाठान्तरं कुण्डल्यां निवेशितम् । अत्र जातो वत्सरद्वयं जीवति । एवं मेषवृश्चिकान्यतरगते, अष्टमगे, शुक्रादृष्टे, चन्द्रयुतैः पापैर्दृष्टे गुरौ एको योगः । अत्र जातो वत्सरत्रयं जीवति ॥ ३२ ॥ २ लग्नेश्वरात् अष्टमगे, शुभैनैकेनाप्यदृष्टे, सकलपापग्रहदृष्टे, क्षीणचन्द्रे जातो वर्षत्रयं जीवति । कुजशनिदृष्टे, केन्द्रगते, क्षीणचन्द्रे जातो वत्सरचतुष्टयं जीवति ॥ ३३ ॥

[1]सौम्ये कुलीरेऽष्टरिपुव्ययस्थै(स्थे)
वं(व)र्षैश्चतुर्भिर्मृतिरिन्दुदृष्टे ।

पञ्चवर्षान्तर्मरणयोगः

अदृश्यदृश्यांचा(ग)गसौम्यपापै
र्लग्ने च राहुर्यदि पंचवर्षैः ॥ ३४ ॥

षड्वत्सरान्तर्मरणयोगः

[2]अर्केन्दुराशौ भृगुजः षडब्दा
द्दृष्टः षडंत्याष्टगतश्च सौम्यैः ॥ ३५ ॥

सप्तवत्सरान्तर्मरणयोगाः

[3]लग्ने दृकाणा निगडाहिपक्षि-
पाशान्विताः स्वामिभिरप्यदृष्टाः ।

---

१ कुळीरगते शुभग्रहे चन्द्रदृष्टे, सिंहे वा चापे वा कुंभे वा लग्ने जातो वत्सरचतुष्टयं जीवति । सारावळ्यां तु अस्मिन् योगे सिंहस्य लग्नत्वं नादृतम् । शिष्टं समानं । अदृश्यदृश्यांगे तनुचिन्ताध्याये १४ श्लोकव्याख्यानावसरे व्याख्याते । सौम्येषु अदृश्यभागगेषु, पापेषु दृश्यभागगेषु, राहौ लग्नगते पञ्चवत्सरान् जीवति । सारावळ्यां तु सौम्येषु दृश्यभागगेषु, पापेषु अदृश्यभागगेषु अयं योगः कथितः । तद्रीत्या "अदृश्यदृश्याङ्गगपापसौम्यैः" इति पाठान्तरं कल्पनीयम् ॥ ३४ ॥
२ कर्काटकसिंहान्यतरगते शुक्रे, षष्ठे वा अष्टमे वा द्वादशे वा स्थिते, शुभैर्दृष्टे षड्वर्षपर्यन्तं जीवति । सारावळ्यां तु षष्ठाष्टमद्वादशगतैः शुभैर्दृष्टे, कुळीर-सिंहान्यतरगते शुक्रे अयं योगः कथितः । अतः तद्रीत्या "षडष्टान्त्यगतैश्च सौम्यैः" इति पाठान्तरं कल्पनीयम् ॥ ३५ ॥ ३ निगडादयो द्रेकाणाः १४-२५९ पृष्ठयो-

क्रूराश्रिता मृत्युकराः प्रसूतौ
संवत्सरैः सप्तभिरेव सत्यं ॥ ३६ ॥

[1]वि(त्रि)पापलग्ने विवल(कले) स्मरस्थे
चन्द्रे मृतिः सप्तसु गुर्वदृष्टे ।
दृशं(वृषं) विहाय स्थिरलग्नसंस्थे
राहु(हौ) स्मराब्दैर्मृति[रु]ग्रदृष्टे ॥ ३७ ॥

अष्टवत्सरान्तर्मरणयोगाः

उग्रैःसुखस्थैरथवा मृतिस्थै(स्थैः)
क्षीणेन्दुलग्ने मृतिरष्टवर्षैः ।
[2]भौमे विलग्ने यदि वा शशांके
[पापे] स्मरस्थे मृतिरष्टवर्षैः ॥ ३८ ॥

[3]द्यूने रवावंशपतिः सराहु
श्चन्द्रेऽष्टवर्षादशुभेऽक्षिते च ।
लग्नाधिपोऽर्कः सशनिर्मृतिस्थः
शुक्रेऽक्षितो राशिमिताब्दमृत्युः ॥ ३९ ॥

---

व्याख्याने कथिताः। लग्नगतेषु, क्रूरयुतेषु, स्वामिभिरयुतदृष्टेषु निगडादिद्रेक्काणेषु जातः सप्तवर्षजीवी भवति ॥ ३६ ॥ १ पापत्रययुते लग्ने, गुर्वदृष्टे सप्तमगे क्षीणचन्द्रे एको योगः। पापदृष्टे राहौ सिंहवृश्चिककुंभान्यतमलग्नगते अपरो योगः। अनयोर्जातः सप्तवर्षजीवी भवति ॥ ३७ ॥ २ कुजे वा चन्द्रे वा लग्नगते, पापे सप्तमगते अष्टवर्षजीवी भवति। ॥ ३८ ॥ ३ सप्तमगते सूर्ये, लग्नवांशाधिपे राहुयुते, चन्द्रे पापदृष्टे अष्टवर्षजीवी भवति। रवौ शनियुक्ते शुक्रदृष्टे मीनगते, सिंहलग्ने जातो द्वादशवर्षजीवी भवति ॥ ३९ ॥

नववर्षान्तर्मरणयोगः

[1]चन्द्रांशके लग्नपतिस्तु पाप
श्चन्द्राद्व्यये क्रूरदृशा नवाब्दात् ।

दशवर्षान्तर्मरणयोगः

पापेऽक्षिते केन्द्रगते भुजंगे
मृतिर्दशाब्दादुत षोडशाब्दात् ॥ ४० ॥

द्वादशवर्षान्तर्मरणयोगः

[2]राहुः स्मरस्थो रविचन्द्रदृष्टः
शुभैरदृष्टोऽर्कदृष्ट(र्क)वर्षात् ।

गुरुकृतायुर्दायः

तथाऽर्क(अब्दान् क)मादात्मसहोत्थबन्धु
पुत्रस्व(त्रास्त)धर्मायग(र्गाबरलाभ)देवमन्त्री

मूर्छाः खवेदाः प्रकृतिः शतं च
खाब्धि(ब्धि)श्च षष्टिः खगुणा इतीत्थं ॥ ४१ ॥

---

१ पापे लग्नपतौ कुळीरनवांशगते क्रूरदृष्टे चन्द्रात् द्वादशगते जातो नवाब्दजीवी भवति । केन्द्रगते पापदृष्टे राहौ दशाब्दजीवी वा षोडशाब्दजीवी वा भवति ॥ ४० ॥

२ रविचन्द्रदृष्टे, शुभादृष्टे, सप्तमगे, राहौ द्वादशवर्षजीवी भवति । गुरौ तृतीयगे २१, चतुर्थगे ४०, पञ्चमगे २१, सप्तमगे ३०, नवमगे ४०, दशमगे ६०, एकादशगे ३०, वत्सरान् जीवति । इदं सारावळीमतम् । एतद्ग्रन्थरीत्या तु सप्तमगे गुरौ १००, वत्सरान् जीवतीत्ययं विशेषः ॥ ४१ ॥

### मातृकृतशिशुत्यागयोगः

[1]एकांशकस्थौ यममूमिजौ चेत्
मात्रा परित्यज्यत एव जातः
सोमः स्मरे वक्रयमौ(म)त्रिकोणे

### मातृत्यक्तस्य जीवनयोगः

त्यक्तोऽवया जीवति जीवदृष्टे ॥ ४२ ॥

### मातृत्यक्तस्य मरणयोगौ

[2]म्रियते पापैर्दृष्टे शशिनि विलग्ने कुजेऽस्तगे त्यक्तः ॥
लग्नात्स्व(स्त)लाभगतयोर्वपु(सु)[धा]सु[त]मन्दयोरेवं ॥ ४३ ॥

### जारजातयोगौः

[3]जीवार्कचन्द्रा ति्चयेयदि(यदि नीचगाः) स्यु
सुतो(ते)विलग्नात्स म(प)रेण जातः ।

---

१ कुजशन्योः समानराश्यंशकगतयोरेको योगः । कुजशन्योरुभयोः सकाशात् पञ्चमनवमगते, लग्नात् सप्तमगते च चन्द्रे अपरो योगः । एतद्योगद्वयजातो मात्रा त्यज्यते । अयं द्वितीयो योगः सारावळीरीत्या । बृहज्जातकादौ तु कुजशन्यो-रुभयोरपि त्रिकोणगते सूर्ये वा चन्द्रे वा द्वौ योगावभिमतौ । एषु योगेषु चन्द्रेऽर्के वा गुरुदृष्टे त्यक्तोऽपि न म्रियते ॥ ४२ ॥ २ लग्नगते चन्द्रे पापैर्दृष्टे, कुजे सप्तमगे एको योगः । दशमैकादशगतयोः पापदृष्टयोः कुजशन्योरपरो योगः । अयं द्वितीयो योगः सारावळ्यां सप्तमैकादशगताभ्यां शनिकुजाभ्यामुक्तः ॥ ४३ ॥ ३ गुरुचन्द्ररविषु त्रिष्वपि

लग्ने शनौ लग्नशशांकशुक्राः
        शुभैरदृष्टाश्च तदाऽन्यजातः ॥ ४४ ॥

## नेत्रघातयोगाः

[1]वक्रः शनिर्वा व्ययगोऽहि(क्षि)हन्ता
        वामं कुजो दक्षिणमक्षि सौरिः ।
व्यये रवीन्दू युगपत्पृथा(थक्) वा
        नेत्रे हरेतामप[सव्य]सव्ये ॥ ४५ ॥

[2]षट्त्रिंश(रन्ध्र)गाश्चाक्षि हरन्ति पापाः
        सव्यं रिपौ दक्षिणमष्टमे च ।
वक्रे धने चेन्निधनेऽर्क इन्दुः
        षष्ठे व्यये (शुभे) मन्दगतिस्तदाऽन्धः ॥ ४६ ॥

[3]षष्ठाष्टमे दृष्टिहरः सपाप
        श्चन्द्रोऽपि तद्वत्कफवातपित्तैः(पित्तदोषैः) ।

---

नीचगेषु एको योगः । लग्नगते शनौ, लग्नचन्द्रशुक्रेषु शुभदृष्टिरहितेष्वपरो योगः । अत्र जातो जारजो भवति ॥ ४४ ॥ १ द्वादशगः शनिः दक्षिणनेत्रं, कुजः वामनेत्रं, रविः दक्षिणनेत्रं, चन्द्रः वामनेत्रं हरति । द्वादशे मिलितौ शनिकुजौ रविचन्द्रौ वा नेत्रद्वयं हरतः ॥ ४५ ॥ २ षष्ठगतास्त्रयः पापा वामनेत्रं, अष्टमगता दक्षिणनेत्रं, षष्ठाष्टमोभयगता नेत्रद्वयं हरन्ति । कुजे द्वितीयगते, अष्टमगते सूर्ये, षष्ठगते चन्द्रे. द्वादशगते शनौ जातान्धो भवति । सारावळीरीत्या नवमगते शनावयं योगो भवति । अन्यत्सर्वं पूर्ववदेव । ॥ ४६ ॥ ३ पापयुते चन्द्रे षष्ठे अष्टमे वा स्थिते कफपित्ताभ्यां दृष्टिहानिः । शनियुते चन्द्रे, पापदृष्टे, अष्टमे द्वादशे वा स्थिते श्लेष्मवाताभ्यां नेत्रहानिः ॥ ४७ ॥

लग्ना(व्ययेऽ)ष्टमे सौरियुतोऽपि चन्द्रो
दृष्टिं हरेत्(दृष्टोऽशुभैः) श्लेष्मविकाररोगैः(मरुद्विकारैः) ॥ ४७ ॥

व्रणचिह्नादियोगः

[१]युक्ता ग्रहा दक्षिणवामभागे
चिह्नं निदध्युर्व्रणमत्र पापाः ।

श्रवणघातयोगः

त्रिलाभलग्नेषु शशी सपापः
कर्णापहः पापदृशा स सद्यः ॥ ४८ ॥

[२]क्रूरेऽक्षितौ पंचमधर्मसंस्थौ
पापौ विधत्तः श्रव[णो]पघातं ।
सव्यं सुतर्क्षे नवमेऽपसव्यं
शुभं शुभर्क्षे शुभदर्शने वा ॥ ४९ ॥

---

१ तनुचिन्ताध्याये १४ तमश्लोकोक्तदिशा दक्षिणभागे वा वामभागे वा स्थिताः शुभाः स्वाश्रितांगभागे चिह्नं कुर्युः । तादृशाः पापाश्च व्रणं कुर्युरिति भावः । पापयुते चन्द्रे तृतीयलाभलग्नान्यतमगते पापदृष्टे जन्मकाले श्रवणोपघातः, पापदृष्टिरहिते कालान्तरे श्रवणोपघातः । ॥ ४८ ॥ २ एकस्मिन् पापे पञ्चमगे पापान्तरदृष्टे वामश्रवणघातः, नवमगे पूर्ववत्स्थिते दक्षिणश्रवणघातः भवति । पञ्चमगे एकस्मिन् पापे, नवमगे अपरस्मिन् पापे, उभाभ्यां अन्येन पापेन दृष्टाभ्यां श्रवणद्वयोपघातः । यथा पञ्चमे रविः नवमे शनिः द्वितीये कुजः । अस्मिन् योगे कुजदृष्टिरुभयत्रापि त्रिकोणयोर्वर्तते । अस्मिन् योगे शुभदृष्टौ शुभराशिस्थितौ वा योगभङ्गः ॥ ४९ ॥

म्लेच्छजननयोगाः

[1]मूर्तौ(र्ति)सप्तमगाः क्रूराः सचन्द्रा वा यदा स्थिताः ॥
रक्षोभे जायते म्लेच्छो धर्मौ(र्मे) वाय(प)त्रयान्विते ॥ ५० ॥

[2]शनिराहुकुजा धर्मे यद्वा लग्ने स्मरे यदे ॥
सचन्द्रायस्थो वा पृथक् प्रोक्ता(क्त)भावेषु म्लेच्छतां व्रजेत् ॥ ५१ ॥

इति लग्नयोगास्त्रिसप्ततिः

॥ इति श्रीजातकसारदीपे लग्नरिष्टयोगाध्यायः षट्षष्टितमः ॥

---

## ॥ अथ चन्द्रारिष्टयोगाध्यायः सप्तषष्टितमः ॥

अथ त्रयोविंशतिश्चन्द्रारिष्टयोगाः

गर्भिणीमरणयोगद्वयम्

[3]क्रूरान्तरेऽर्कः शुभदैरदृष्टो
हन्याच्छशी वा जननीं सगर्भाम् ।

---

१ क्रूरेषु सर्वेषु लग्नसप्तमोभयगतेषु वा, चन्द्रयुतेषु वा, नवमगतेषु वा, मूलनक्षत्रे जातो म्लेच्छतां व्रजेत् ॥ ५० ॥ एवं त्रयो योगाः । २ शनिराहुकुजा मिलिताः लग्ने वा सप्तमे वा नवमे वा दशमे वा स्थिताश्चेत् एको योगः । एवं शनिराहुकुजेष्वेकतमेन युते चन्द्रे, लग्ने वा दशमे वा सप्तमे वा नवमे वा स्थिते अपरो योगः ॥ ५१ ॥ ३ अत्रोत्तरार्धलोपोऽनुमीयते । अतस्तत्र मदीयं श्लोकार्धं पठनीयं । क्रूरग्रहद्वय-मध्यगते सूर्ये वा चन्द्रे वा द्वौ योगौ । अत्र प्रथमः सूर्यारिष्टयोगः । क्षीणे चन्द्रे कुजदृष्टे अपरो योगः । एवं चन्द्रारिष्टयोगयोर्द्वयोर्जननी सगर्भा म्रियते ॥ १ ॥

[चन्द्रे महीजेन विलोकिते वा
क्षीणे जनित्री म्रियते सगर्भा ॥ १ ॥]

मातृमरणयोगः

[1]यत्र स्थितस्तत्र यमारदृष्ट(सूर्य)
श्चन्द्रः(दृष्टः) स्त्रियं हन्ति शुभैरदृष्टः ।

मातृशिशुमरणयोगः

नवाष्टसप्तान्यतमे शशांकात्
सर्वेऽवि(पि) पापाः सुतमातृमृत्युः ॥ २ ॥

मातृक्लेशयोगः

[2][पापाः सुदुःखं प्रदिशन्ति मातु
श्चन्द्रेण युक्तास्त्वथ भौमदृष्टाः]

पुनर्मातृमरणयोगास्त्रयः

चन्द्रात्स्मरे मातृवधाय पापाः
सोमाद्रविर्वा दशमे सपापः ॥ ३ ॥

---

१ शुभादृष्टे चन्द्रे शनिकुजदृष्टे, सारावळीरीत्या शनिकुजरविदृष्टे वा, एको योगः । अत्र जनने माता म्रियते । नवमे वा चन्द्रात् अष्टमे वा सप्तमे वा सर्वेषु ग्रहेषु स्थितेषु एको योगः । अत्र जनने सुतमातृमृत्युर्भवति । उत्तरश्लोके पूर्वार्ध-लोपोऽनुमीयते । स च कुण्डल्यां निवेशितः ॥ २ ॥ २ चन्द्रयुतेषु त्रिषु पापेषु मातृक्लेशः । कुजदृष्टेषु चन्द्रात् सप्तमगेषु त्रिषु पापेष्वेको योगः । चन्द्रात् दशमगे पापयुते सूर्ये एको योगः ॥ ३ ॥

[1]इन्दोस्त्रिकोणे रविजो निशायां
शुक्रात्कुजो वाऽहनि पापदृष्टः ।
मातुर्विघाताय कुजार्किमध्ये
लग्ने शशी मातृहरोऽष्टमे कं(वा) ॥ ४ ॥

पुनरपि मातृशिशुमरणयोगः

[2]जन्माष्टषट्द्वादशसप्तमस्थैः
क्रूरैस्तु माता म्रियते सपुत्रा ।

मातृमरणपुत्रजीवनयोगः

जन्माष्टम[द्यू]नगतेषु तेषु
जीवेत्सुतस्तज्जननी विनश्येत् ॥ ५ ॥

मातुलमरणयोगः

[3]रिपुस्मराष्टव्ययजन्मभस्थाः
पापाः पुनर्मातुलमृत्युदाः स्युः ।

---

१ चन्द्रात् पञ्चमनवमान्यतरगते पापदृष्टे शनौ रात्रौ जनने एकः चन्द्रारिष्टयोगः । एवं शुक्रात् पञ्चमे नवमे वा स्थिते कुजे पापदृष्टे दिवा जनने एकः शुक्रारिष्टयोगः । लग्नाष्टमान्यतरगते चन्द्रे पापद्वयमध्यगते एको लग्नारिष्टयोगः । एवं त्रिषु चन्द्रारिष्टयोगेषु द्वयोर्लग्नशुक्रारिष्टयोगयोश्च जन्मनि मातृनाशः ॥ ४ ॥ २ चन्द्रात् षष्ठे वा सप्तमे वा अष्टमे वा द्वादशे वा स्थितेषु सर्वेषु पापग्रहेष्वेको योगः । अत्र जनने मातुः शिशोश्च मरणम् । चन्द्रात् सप्तमे वा अष्टमे वा स्थितेषु सर्वेषु पापेषु माता म्रियते, पुत्रो जीवति ॥ ५ ॥ ३ चन्द्रात् षष्ठसप्तमाष्टमद्वादशेषु, चन्द्रे च सकलपापयुतेषु एको मातुलमरणयोगः । रविकुजमध्यगते चन्द्रे शनियुते बालमरणयोगः ॥ ६ ॥

### मासांतर्बालमरणयोगाः पञ्च

यत्र स्थितस्तत्र पुनः समेत
श्चन्द्रो पि(वि)पत्न्यै(त्त्यै) रविभौममध्ये ॥ ६ ॥
[१]नरर्क्षलग्नेऽर्ककुजार्किदृष्ट
श्चन्द्रः पुनः क्षेत्रगतो निहन्ति ।
क्रूरैर्युतो(तं) राहुरवेक्षते चेत्
क्षीणेन्दुमस्यै दिवसैस्तु नश्येत् ॥ ७ ॥
[२]जामित्रगौ भौमरवी शशांकात्
रोगोदयः र(स)सज(दि)नं च जीवेत् ।
[३]रवौ स्थिते चन्द्रमसस्त्रिकोणे
व्याधिं गतो विंशतिवासरान्तात् ॥ ८ ॥

### मासद्वयान्तर्बालमरणयोगः

केतूदयर्क्षोपगते शशाङ्के
मासद्वयं जीवति संप्रसूतः ।

### पञ्चवत्सरान्तर्मरणयोगास्त्रयः

एकर्क्षगैश्चन्द्रकुजार्कि(र्क)जीवै
स्तथैव जीवक्षितिजेऽन्दुमन्दैः ॥ २ ॥

---

१ मेषादिविषमराशौ लग्नगते, कर्काटकगते चन्द्रे पापत्रयदृष्टे एकः लग्नचन्द्रारिष्टयोगः । एवं क्रूरग्रहयुतेन राहुणा दृष्टे क्षीणचन्द्रे एको योगः । सारावळीरीत्या पापयुते क्षीणचन्द्रे राहुदृष्टे अयं योगः । अत्र जातः क्षिप्रं म्रियते ॥ ७ ॥ २ चन्द्रात् सप्तमे रविकुजोभययुते एको योगः । अस्मिन् योगे जनने वा रोगारंभे वा सप्तदिनानि जीवति । चन्द्रात् पञ्चमे वा नवमे वा स्थिते सूर्ये अपरो योगः । शिष्टं पूर्ववद्व्याख्येयम् ॥ ८ ॥ ३ अत्रोत्तरश्लोकपूर्वार्धे तदनन्तरश्लोकपूर्वार्धं च लुप्तमित्यनुमीयते । तत्र कुण्डलीस्थे मदीये पद्यार्धे पठनीये ॥ ९ ॥

[शनीन्दुभूपुत्रदिनेश्वरैर्वा
म्रियेत बालः शरवत्सरान्ते]

द्वादशराशिगताश्चन्द्रमृत्युभागाः

[1]मेषादिमेष(राशि)क्रमशोऽष्ट नंदा
द्वाविंशतिश्चाकृतिभूतचन्द्राः ॥ १० ॥

वेद(दा)स्त्रयोवे(विं)शघृतिर्नखाश्च
मूर्छा दिशो मृत्युकराः स्वभागाः ।
तद्भागसंस्थाः(स्थः) प्रतिराशि चन्द्र
स्तत्संख्यवर्षै[र्म]रणाय सूनोः ॥ ११ ॥

नववर्षान्तर्बालमरणयोगः

[2]कुजार्कदृष्टः(युक्तः) स्वसुतर्क्षसंस्थः
सौम्यैरदृष्टश्च शशी नवाब्दात् ।

---

१ मेषादिद्वादशराशिषु मृत्युभागाः कथ्यन्ते । मेषे ८, वृषभे ९, मिथुने २२, कर्काटके २२, सिंहे ५, कन्यायां १, तुलायां ४, वृश्चिके २३, धनुषि १८, मकरे २०, कुंभे २१, मीने १०, एषु मृत्युभागेषु स्थिते चन्द्रे तद्भागसंख्याकैर्वर्षैर्बालो म्रियते ॥ १०—११ ॥ २ शुभदृष्टिरहिते कुजरविदृष्टे (सारावळीरीत्या कुजरवियुते) बुधक्षेत्रगते चन्द्रे एको योगः । अत्र जातो नववर्षान्तर्म्रियते । चन्द्रे सिंहगते, शनियुक्ते सूर्ये मीनगते एको योगः । अत्र जातो द्वादशे वत्सरे म्रियते ॥ १२ ॥

द्वादशवर्षान्तर्बालमरणयोगः

चन्द्रान्मृतिस्थे विधुराशिपेऽर्के
साकौं मृती राशिमितैस्तु वर्षैः ॥ १२ ॥

अनुक्तकालानामरिष्टयोगानां फलप्राप्तिकालः

[1]ब(ब)लिग्रहस्थानगते शशांके
जन्मागते वा तनुमागते वा ।
समग्रवीर्यो(र्ये) बहुपापदृष्टे
वर्षात्परं(न्तरे) मृत्युरनुक्तकाले ॥ १३ ॥

॥ इति चन्द्रारिष्टयोगास्त्रयोविंशतिः ॥

इति श्रीजातकसारदीपे चन्द्रारिष्टयोगाध्यायः सप्तषष्टितमः

---

१ उक्तेषु वक्ष्यमाणेषु च अरिष्टयोगेषु यत्र फलकाल उक्तस्तत्र तस्मिन् काले फलं भवति। येषु कालो नोक्तस्तत्र फलकालमाह. (बलीति) अनुक्तकालेष्वरिष्टयोगेषु जातानां प्रथमवर्षे एव मरणं भवति। तत्रापि अरिष्टयोगकारकाणां ग्रहाणां मध्ये यो बली तदाश्रितगृहं यदा गोचाररीत्या चन्द्रः प्रविशति तदा चन्द्रः पूर्णबलः बहुभिः पापैर्दृष्टश्च यदि भवति तर्हि मरणं भवति। एवं बहुपापदृष्टः बली च चन्द्रः चन्द्राश्रितराशिं वा जन्मलग्नं वा यदा प्रविशति तदापि मरणसंभवः ॥ १३ ॥

# अथ लग्नचन्द्रारिष्टयोगाध्यायोऽष्टषष्टितमः

## अथ लग्नचन्द्रयोगा एकादश

### सहजनाशयोगः

[1]लग्नाच्छशांकाद्बहवस्तृतीये
पापा [य]दि स्युः सहजप्रणाशः ।

### गर्भनाशयोगः

[लग्नाच्छशाङ्काच्च चतुर्थसंस्थै
र्गर्भो विनश्येन्नियमेन पापैः ॥ १ ॥]

### बालमरणयोगास्त्रयः

[2]लग्नचन्द्रौ निरीक्षन्तः क्रूराः शुभविवर्जिताः ॥

लग्नादष्टमगं चन्द्रं लग्नं चंद्रादथाष्टमं ॥
क्रूरग्रहा निरीक्षन्ते जातस्य मृतिसूचकं(काः) ॥ २ ॥

---

१ अस्मिन्नध्याये कथ्यमानाः सर्वेऽपि योगा लग्नचन्द्राभ्यामुभाभ्यां एकराशिस्थाभ्यां वा भिन्नराशिस्थाभ्यां वा द्वादशस्थानगतैर्ग्रहैर्वक्तव्याः । तत्र उभाभ्यां तृतीयगतैः सर्वैः पापैरेको योगः । अत्र सहजनाशो भवति । अत्र श्लोके उत्तरार्धं लुप्तमिति भाति । तत्र कुण्डलीगतो मदीयः पाठोऽनुसन्धेयः । लग्नचन्द्राभ्यां चतुर्थगतैः सर्वैः पापैर्गर्भनाशयोगः ॥ १ ॥ २ लग्नचन्द्रयोरुभयोरपि शुभसंबन्धरहितैः, सकलपापैर्दृष्टावेको योगः । लग्नात् अष्टमगे चन्द्रे वा, चन्द्रात् अष्टमगे लग्ने वा सकलपापग्रहदृष्टे द्वौ योगौ । एषु त्रिषु योगेषु जातः शीघ्रं म्रियते ॥ २ ॥

### द्वादशवत्सरान्तर्मरणयोगः

[1]जन्मोदयेषु(शौ) मृतिषट्व्ययस्थौ
मूढो(ढौ) वधो राशिसमैस्तु वर्षैः ॥ ३ ॥

### जारजातयोगाख्यः

[2]चन्द्रं विलग्नं च गुरुर्न पश्ये
च्चद्वाऽर्कयुक्तं शशिनं च जीवः ।
परेण जातं प्रवदन्ति सन्त
श्चन्द्रे सपापे दिननाथयुक्ते ॥ ४ ॥

### अल्पवत्सरमृत्युयोगद्वयम्

[3]होरेशजन्मेशनवांशनाथाः
सूर्योऽपगाः कैश्चन मृत्युरब्दैः ।
लग्नाद्विधोर्वा नवबुद्धिराशि

---

१ लग्नेशचन्द्रराशीशौ, सूर्यसान्निध्येनास्तमितौ, षष्ठे वा अष्टमे वा द्वादशे वा स्थितौ चेदेको योगः। अत्र द्वादशवर्षान्तर्मरणम्। तत्रापि जन्मेशलग्नेशयोर्मध्ये यो बली तदाश्रितराशिः मेषतो यावान् तत्संख्याके वर्षे मरणम् ॥ ३ ॥ २ चन्द्रलग्नयो-रुभयोरेकतरस्यापि गुरुदृष्ट्यभावे एको योगः। सूर्येण सहैकराशिगतस्य चन्द्रस्य गुरुदृष्ट्यभावे वा पापयोगे वा द्वौ योगौ। एषु त्रिषु योगेषु जातो जारजन्मा भवति ॥ ४ ॥ ३ लग्नेशः, चन्द्रराशीशः, लग्ननवांशेशः इत्येते त्रयोऽपि यदि सूर्यसान्निध्ये-नास्तमितास्तदैको योगः। एवं लग्नचन्द्रयोरुभयोरपि पञ्चमे वा नवमे वा स्थिते, कुजयुते, चान्यपरयोगः। अत्र योगद्वये जातः स्वल्पैरब्दैर्म्रियते ॥ ५ ॥

याते यमे क्रूरयुतेऽपि तद्वत् ॥ ५ ॥

इति लग्नचन्द्रारिष्टयोगा एकादश

॥ इति श्रीजातकसारदीपे लग्नचन्द्रारिष्टयोगाध्यायोऽष्टषष्टितमः ॥

---

## ॥ अथादित्याद्यरिष्टयोगाध्याय एकोनसप्ततितमः ॥

अथ आदित्यारिष्टयोगा एकादश

गर्भिणीमरणयोगः

[1]क्रूरान्तरेऽर्कः शुभदैरदृष्टो
हन्यात् शशी वा जननीं सगर्भां ।

पितृनाशयोगाश्चत्वारः

सूर्याष्टमे भौमयमौ तु युक्तौ
सौम्यैरदृष्टौ पितुरत्ययाय ॥ १ ॥

[2]भौमार्किदृष्टोऽहनि मध्यगो वा
ताभ्यां युतो वा सविता पितृघ्नः ।

---

१ पूर्वार्धे एको योगः । सूर्यात् अष्टमे, शुभादृष्टे, कुजशनियुते अपरो योगः ॥ १ ॥ २ शनिकुजाभ्यामशुभाभ्यां दृष्टे सूर्ये अह्नि जनने एको योगः । शनिकुजमध्यगते वा शनिकुजयुते वा सूर्ये द्वौ योगौ । एषु त्रिषु योगेषु पितृनाशः । क्रूरेणैकेन युते सूर्ये मेषकुळीरतुलामकरान्यतमगेते विषादिकृतं पितृमरणं भवति ॥ २ ॥

विषादिकृतपितृनाशयोगः

क्रूरेण युक्तश्चरराशिनिष्ठ
स्तातं रविर्हन्ति विषांबुशस्त्रैः ॥ २ ॥

जननात् पूर्वमेव पितृमरणयोगः

[1]यत्र स्थितस्तत्र यमारदृष्टे(युक्तः)
प्राग्जन्मनस्तातविनाशकोऽर्कः ।

पितृपितामहादिनाशयोगः

युक्तः शुभैर्भौमयमान्वितोऽर्कः
स्याच्चेत् पिता तस्य पिता च नष्टः ॥ ३ ॥

पितृबन्धनयोगौ

[2]पापर्क्षगौ सूर्यविधू(धु) त्रिकोणे
पापौ पितुर्बन्धनरोगदौ तौ ।

---

१ पूर्वश्लोकोक्तः प्रथमो योग एवात्र "शिशुजननात् पूर्वमेव पितृनाशकोऽयं योग" इति ज्ञापनायानूद्यते। तथा "दिनजन्मन्येव स योगः, अत्र तु न तथा" इत्यस्तीयद्वैषम्यम्। सारावळीरीत्या पूर्वश्लोकोक्ततृतीययोगोऽयं। एवं कुजशनियुते सूर्ये शुभयोगरहिते एको योगः। अत्र पितृपितामहादिनाशः ॥ ३ ॥

२ अत्रोत्तरभागः उत्तरश्लोकश्च लुप्ताविति भाति। अतस्तत्र कुण्डलीगतो मदीयः पाठोऽनुसर्तव्यः। सूर्यचन्द्राभ्यामशुभाभ्यां पञ्चमे वा नवमे वा पापराशिगतयोर्द्वयोः पापयोरेको योगः। सूर्यात् पञ्चमे सप्तमे नवमे वा स्थिते एकस्मिन् पापे अन्येन पापेन दृष्टे अपरो योगः। अत्र योगद्वये पिता कारागृहवासी भवति। पञ्चमादिगते

[अर्कात् त्रिकोणास्तगतैश्च पापैः
        पापेक्षितैर्बन्धनभाक् पिता स्यात् ।]

[चरेऽन्यदेशे स्थिरभे स्वदेशे
        द्वंद्वे च मार्गे न हि संशयोऽत्र ॥ ४ ॥

[1]कुजेक्षितेऽर्के चरगेऽह्नि सूतौ
        विदेशगः स्याज्जनको विशङ्कम्]

॥ इति एकादश सूर्यारिष्टयोगाः ॥

बुधारिष्टयोग एकः

सौम्ये रविचन्द्रयुक्ते(म्यैः प्रदृष्टो रविणा च युक्तो) ॥
विं(बु)धो हिनस्त्यैव हि रुद्रवर्षैः ॥ ५ ॥

## ॥ अथ शुक्रारिष्टयोगाः पञ्च ॥

गर्भिणीमरणयोगः

अत्रैव चन्द्रं प्रविहाय शुक्रे
        पापान्तरस्थे म्रियते सगर्भा ।

---

पापे चरराशिगते परदेशे, स्थिरराशिगते स्वदेशे, द्वन्द्वराशिगते मार्गे बन्धनमिति ज्ञेयम् ॥ ४ ॥ १ कुजदृष्टे सूर्ये चरराशिगते दिवा जनने पिता जन्मकाले देशान्तरगतः स्यात् । शुभैस्त्रिभिर्दृष्टे, रवियुते, बुधे एको योगः । अत्र जातः एकादशवत्सरान्ते म्रियते ॥ ५ ॥

मातृमरणयोगास्त्रयः

[1]शुक्राद्रविः पंचमगः समन्दो
　　मन्देऽक्षितो वा मरणाय मातुः ॥ ६ ॥

चन्द्रा(न्द्रात्) त्रिकोणराशौ रविजो मातुर्वधं दिशति रात्रौ ॥
शुक्रात्तथैव दिवसे भौमः पापेन सन्दृष्टः ॥ ७ ॥

शिशुमरणयोगः

[सुरेज्यदृष्टो रविमन्दयुक्तः
　　शुक्रो नवाब्देषु शिशुं निहंति ॥]

॥ इति शुक्रारिष्टयोगाः पञ्च ॥

---

## ॥ अथ शनैश्चरारिष्टयोगाश्चत्वारः ॥

परदेशे पितृमरणयोगास्त्रयः

भूसूनुदृष्टे(ष्टो) निशि चेच्चरस्थो
　　मन्दो विदेशे गत एव तातः ॥ ८ ॥

---

१ शुक्रात् पञ्चमे सूर्ये, शनिदृष्टे वा शनियुते वा द्वौ योगौ। शुक्रात् पञ्चमे वा नवमे वा स्थिते कुजे पापेनैकेन दृष्टे दिवा जनने अपरो योगः। एषु योगेषु जातस्य माता म्रियते। अत्राष्टमश्लोके पूर्वार्धं नवमश्लोके उत्तरार्धं च लुप्तमिति भाति। तत्र मदीये श्लोकार्धे पठनीये। रविशनियुते शुक्रे गुरुदृष्टे एको योगः। तत्र जातो नवाब्दान्तर्म्रियते। चरराशिगते शनौ, कुजेन दृष्टे वा कुजेन युते वा सूर्येण दृष्टे वा निशि जनने त्रयो योगाः। एषु जातस्य पिता परदेशे म्रियते। सूर्यचन्द्राभ्यां युते

शनिश्चरस्थो निशि भौमयुक्तो
वक्ति व्यतीत(तं) पितरं विदेशे ।
[सूर्येण दृष्टो निशि चेच्चरस्थो
मन्दो विदेशे गत एव तातः ।
सूर्येन्दुयुक्तो रविसंभवो वा
यत्र स्थितस्तत्र शिशुं निहन्ति ॥ ९ ॥]

इति शनैश्चरारिष्टयोगाश्चत्वारः

अनुक्तकालानामरिष्टयोगानां फलप्राप्तिकाले मतान्तरम्

[1]सूर्यादिकानामयनं मुहूर्तं
दिनान्यृतुर्मासतदर्धवर्षात्(न्) ।
लग्नात् ग्रहाधिष्ठितराशिसंख्या
निघ्नैः स्वकालैरपि चादिनेशात् ॥ १० ॥

[2]यावत्तमोऽरिष्टकरो विलग्नात्
तावत्समा[मा]सदिनैर्मृतिर्वा ॥ ११ ॥

॥ इति श्रीजातकसारदीपे सूर्याद्यरिष्टयोगाध्याय एकोनसप्ततितमः ॥

---

शनावेको योगः । अत्र शिशोर्नाशः ॥ ६—९ ॥ १ सूर्यस्य मासषट्कं, चन्द्रस्य नाडिकाद्वयात्मको मुहूर्तः, कुजस्य एकं दिनं, बुधस्य मासद्वयं, गुरोर्मासः, शुक्रस्य पक्षः, शनेः एको वत्सरः फलकालः । लग्नादारभ्य अरिष्टकारको यावति स्थाने वर्तते तावत्संख्यया तदीयो वत्सरादिर्गुणनीयः । लब्धैर्वत्सरादिभिर्मरणम् ॥ १० ॥ २ लग्नात्

## ॥ अथ लग्नारिष्टभङ्गाध्यायः सप्ततितमः ॥

[1]लग्ने स्फुटांशुः प्रबलः समस्तं
निहन्त्यरिष्टं सुरराजमन्त्री ।
लग्ने(ग्नं) शुभर्क्षे प्रबलैश्च सौम्यै
र्दृष्टं समृद्धैर्विबलैश्च पापैः ॥ १ ॥

[2]निघ्नंत्यरिष्टं शुभवर्गसंस्थाः
पापाश्च तत्स्थैश्च शुभैस्तु दृष्टाः ।
सौम्येऽक्षितः षट्त्रिपलेषु राहुः
कर्कीवृषस्था(च्छा)गविलग्नगो वा ॥ २ ॥

[3]अगस्ति(स्त्य)सप्तर्षिप(व)रोदयो वा
योगास्त्रयोऽरिष्टहराः प्रदिष्टाः ।
स्वस्थानगाः सर्वनभश्चरेन्द्रा
निघ्नन्त्यरिष्टं सकलं क्षणेन ॥ ३ ॥

---

अरिष्टकारको ग्रहो यावति स्थाने वर्तते, तावत्संख्याके वर्षे वा मासे वा दिने वा मरणम् । उदाहरणम्:—लग्नात् सप्तमगे चन्द्रे अरिष्टकारके सति १० श्लोकरीत्या सप्तमे मुहूर्ते मरणं, ११ श्लोकरीत्या, सप्तमवर्षे वा सप्तममासे वा सप्तमदिने वा मरणमिति भावः ॥ ११ ॥ १ लग्नगते स्फुटकिरणे पूर्णबले गुरौ एको योगः । पापेषु दुर्बलेषु, शुभेषु पूर्णबलेषु, शुभराशिगते लग्ने शुभदृष्टे अपरो योगः । २ पापेषु शुभसप्तवर्गगतेषु शुभसप्तवर्गगतैः शुभैर्दृष्टेषु एको योगः । षष्ठे वा तृतीये वा लाभे वा शुभदृष्टे राहावेको योगः, कर्काटकवृषभमेषान्यतमलग्नगते राहावेको योगः । एवं त्रयो योगाः ॥ २ ॥ ३ अगस्त्योदये वा कश्यपादिसप्तर्षीणामुदये वा जन्मन्येको योगः । सप्तसु ग्रहेषु स्वस्थानगतेष्वपरो योगः ॥ ३ ॥

[1]न कोऽपि मृत्यावुदये न पापाः
केन्द्रे गुरुश्चाष्टशतायुरत्र ।
केन्द्रत्रिकोणाय(धि)गता न पापाः
शुक्रे गुरौ केन्द्रगते शतायुः ॥ ४ ॥

[2]लग्ने भृगुः केन्द्रगतश्च जीवः
छिद्रे न पापाः परमायुरत्र ।
शुद्धेऽष्टमे कर्कटलग्नसंस्थौ
शशांकजीवौ गुरुभार्गवौ वा ।

[3]पापा न केन्द्रे न पुनस्त्रिकोणे
जातो नरः स्यादमरोपमायुः ॥ ५ ॥

---

१ अष्टमे सकलग्रहशून्यत्वे, लग्ने पापग्रहरहिते, केन्द्रे गुरुयुते अष्टोत्तरशतवर्षमितायुः भवति । अयमेको योगः । सारावळीरीत्या तु अष्टमे सकलग्रहशून्ये एको योगः, लग्ने पापग्रहशून्ये द्वितीयो योगः, केन्द्रे गुरुयुते तृतीयो योगः, एवं त्रयो योगाः । शुक्रगुर्वोः केन्द्रगतयोः लग्नचतुर्थपञ्चमसप्तमनवमदशमलाभेषु पापरहितेष्वेको योगः । सारावळीरीत्या शुक्रगुर्वोः केन्द्रगतयोः लग्नचतुर्थपञ्चमसप्तमाष्टमनवमदशमेषु पापरहितेष्वेको योगः । तद्रीत्या "केन्द्रत्रिकोणाधिगताः" इति पाठः । आधिः—अष्टमम् ॥ ४ ॥ २ लग्नगते शुक्रे, केन्द्रगते गुरौ, अष्टमे पापशून्ये एको योगः । अष्टमे सकलग्रहरहिते, गुरुचन्द्रयुते वा गुरुशुक्रयुते वा कर्काटकलग्ने द्वौ योगौ । लग्नचतुर्थपञ्चमसप्तमनवमदशमेषु पापरहितेष्वेको योगः ॥ ५ ॥
३ पूर्णचन्द्रगुरुभ्यां युक्ते कर्काटके लग्ने, चतुर्थनवमदशमान्यतमे शुक्रबुधयुते, रविकुज-

कुळीरगौ पूर्णशशांकजीवौ
लग्ने चतुर्थे दशमे भवेतां ।

अङ्गास्थितौ शुक्रबुधौ [च] शेषा
लाभत्रिषष्ठेष्वमितं तदाऽयुः ॥ ६ ॥

[1]मेषे वृषे कुळीरे वा राहुर्लग्नमुपाश्रितः ॥
यदा सौम्यैर्भवेद्‌दृष्टोऽरिष्टभङ्गः सदा स्फुटः ॥ ७ ॥

[2]सोपप्लवेप(वश्च) शीतांशुः कुळीराजवृषस्थितः ॥
लग्नात्केन्द्रेऽप्य(थ) वा सौम्यैर्दृष्टो रिष्टहरो भवेत् ॥ ८ ॥

[3]आये षष्ठे तृतीये वा तुलाझषघटाश्रितः ॥
यदि केतुर्भवेल्लग्नात्तदा रिष्टं न जायते ॥ ९ ॥

---

शनिषु तृतीयषष्ठैकादशान्यतमगतेष्वेको योगः । बृहज्जातके तु शुक्रबुधयोः केन्द्रगतत्वे, शेषग्रहाणां पूर्ववत् स्थितत्वे च अयं योग उक्तः । सारावल्यां तु तुलागतयोः शुक्रबुधयोः, कर्काटकगतयोः पूर्णचन्द्रगुर्वोः, कर्काटकतुलामकरमेषान्यतमे लग्ने अयं योगः उक्तः । अस्मिन् योगे जातः अमितायुर्भवति । अतोऽत्र आयुर्दायगणना न कर्तव्या ॥ ६ ॥

१ अरिष्टाध्याये २ श्लोके ४ पादे उक्त एवायं योगः पुनरनूद्यते । तत्र केवलेन राहुणा अरिष्टभङ्गः कथितः । अत्र शुभैर्दृष्टेन कथ्यते । तेन "केवलेन राहुणा काश्चिदरिष्टानि नश्यन्ति, न सर्वाणि; शुभदृष्टेन तु सर्वाणि नश्यन्ति" इति ज्ञायते ॥ ७ ॥ २ मेषवृषकर्काटकान्यतमगते, राहुयुते, लग्नकेन्द्रगते, शुभैर्दृष्टे चन्द्रे एको योगः । अस्मिन् योगे ग्रहणकालजननप्रयुक्तो दोषो नश्यति ॥ ८ ॥

३ षष्ठतृतीयलाभान्यतमगते, तुलायां वा कुम्भे वा मीने वा स्थिते, केतावेको योगः ॥ ९ ॥

[1]राहुस्त्रिषष्ठलाभे लग्नात्सौम्यैर्निरीक्षितः सद्यः ॥
नाशयति सर्वदुरितं आचंद्रग्रहजं विनश्येत् ॥ १० ॥

॥ इति लग्नारिष्टभङ्गाः सप्तदश ॥

इति श्रीजातकसारदीपे लग्नारिष्टभङ्गाध्यायः सप्ततितमः

---

## ॥ अथ चन्द्रारिष्टभङ्गाध्याय एकसप्ततितमः ॥

अथ चन्द्रारिष्टभङ्गा द्वाविंशतिः

[2]केन्द्रे शतायुर्भृगुजे गुरौ वा
रिष्टं च चन्द्रग्रहजं विनश्येत् ।
एको बली जन्मपतिर्निहन्ति
दृष्टः शुभैश्चन्द(न्द्र)कृतं व(च) रिष्टं ॥ १ ॥

[3]सर्वैर्ग्रहैर्दृष्टतनुर्हिमांशु
राघू(पू)र्यमाणो विनिहन्त्यरिष्टं ।

---

१ लग्नात् तृतीयषष्ठलाभान्यतमगते, शुभैर्दृष्टे राहावेको योगः । अत्र जन्मनि सकलग्रहजनितानां चन्द्रग्रहणजातानां च दोषाणां च भङ्गः ॥ १० ॥

२ चन्द्रकृतं, सूर्यादिग्रहकृतं, चन्द्रग्रहणकृतं चारिष्टं केन्द्रगते गुरौ वा शुक्रे वा नश्यति । सारावल्यां त्वस्मिन् योगे गुरुशुक्रयोरुभयोरपि केन्द्रगतत्वमपेक्षितम् । अयमेको योगः । बलिनि चन्द्रराश्यधिपे शुभैस्त्रिभिर्दृष्टे एको योगः ॥ १ ॥

३ सर्वग्रहदृष्टे पूर्णचन्द्रे एको योगः । मित्रनवांशगे वा सौम्यनवांशगे वा चन्द्रे शुक्रदृष्टे द्वौ योगौ ॥ २ ॥

स्वात्युच्चभागे सुहृदंशके वा
रिष्टं शशी हन्ति च शुक्रदृष्टः ॥ २ ॥

[1]षट्सप्तरन्ध्रे शशिनस्तु सौम्यं(म्याः)
पापैरमित्र(श्चा)श्च निह(हर)न्त्यरिष्टं ।

युक्तस्तु सौम्यैर्विनिहन्त्यरिष्टं
चन्द्रस्त्वपि(द्रः शुभ)त्र्यंशगतस्तथैव ॥ ३ ॥

[2]चन्द्रः शुभद्वादशभागगो वा
होरेशदृष्टः शुभराशिगो वा ।

क्रूरर्क्षगो वा नवमेषु(भवनेश)दृष्टो
नान्येऽक्षितो हन्ति समस्तरिष्टं ॥ ४ ॥

[3]जन्माधिपो मित्रशुभेऽक्षितो वा
सर्वेऽक्षितो जन्मपतिस्तनौ वा ।

होरेश्वरस्योऽपचये शशी वा
रिष्टं पृथक् चन्द्रकृतं निहन्ति ॥ ५ ॥

---

१ पापसंबन्धरहितेषु शुभत्रययुतेषु चन्द्रात् षष्ठसप्तमाष्टमेष्वेको योगः। शुभग्रहद्रेकाणगते, शुभैर्युक्ते च चन्द्रे द्वितीयो योगः ॥ ३ ॥ २ पूर्णचन्द्रे शुभद्वादशांशगते एको योगः। शुभराशिगते चन्द्रे लग्नाधिपदृष्टे अन्यैरदृष्टे द्वितीयो योगः। क्रूरराशिगते चन्द्रे स्वाश्रितराशीशदृष्टे अन्यैरदृष्टे तृतीयो योगः ॥ ४ ॥ ३ चन्द्रराश्यधिपे मित्रैः शुभैश्च ग्रहैर्दृष्टे एको योगः। चन्द्रराश्यधिपे लग्नगते सर्वग्रहदृष्टे द्वितीयो योगः। लग्नाधिपात् तृतीयषष्ठदशमैकादशान्यतमगते वा सारावळीरीत्या तृतीयचतुर्थषष्ठदशमैकादशान्यतमगते वा चन्द्रे तृतीयो योगः ॥ ५ ॥

[1]चन्द्राद्व्यये शुक्रबुधौ च लाभे
पापा गुरुर्व्योम्नि च रिष्टनाशः ।

कृष्णे दिवा चेन्निशि शुक्लपक्षे
रक्षेश(च्छ)शी तं रिपुरन्ध्रगोऽपि ॥ ६ ॥

[2]स्वोच्चे स्ववर्गे सुहृदां च वर्गे
सौम्यैऽक्षितोऽरन्दि(सद्भि)रयुक्तदृष्टः ।
दृश्योऽप्य(न चारि)दृश्यः सुहृदापि पुंसां(स्वगृहस्थितो वा)
पूर्णः शशी हन्ति च सर्वरिष्टं ॥ ७ ॥

[3]संपूर्ण इन्दुर्गुरुशुक्रयुक्तो
क्रूरैर(बुधेन)दृष्टः स्वगृहे स्वतुङ्गे ।
स्वपंचमस्थोऽपि सुखाय मातुः
पितुश्च तद्वत्खलु भास्करोऽपि ॥ ८ ॥

---

१ चन्द्रात् दशमगे गुरौ, एकादशगतेषु त्रिषु पापेषु, द्वादशगतयोः बुधशुक्रयोरेको योगः। कृष्णपक्षे दिवा जनने, शुक्लपक्षे रात्रौ जनने द्वौ योगौ। अत्र जनने चन्द्रस्य षष्ठाष्टमस्थितिनिमित्तमशुभदृष्टिनिमित्तं चारिष्टं नास्ति ॥ ६ ॥

२ स्वोच्चे वा स्ववर्गे वा स्वराशौ वा मित्रवर्गे वा स्थिते, शुभैर्दृष्टे, पापैरयुते, पापैरदृष्टे, शत्रुभिरदृष्टे, पूर्णचन्द्रे एको योगः। अयं सर्वारिष्टभङ्गयोगः ॥ ७ ॥

३ गुरुशुक्रयुते, क्रूरैरदृष्टे, कुळीरवृषभान्यतरगते, चन्द्रे एको योगः। सारावळीरीत्या बुधेन दृष्टे चन्द्रे पूर्ववत् स्थिते अयं योगः। द्वितीयपञ्चमान्यतरगतेऽपि चन्द्रे, पूर्ववत् स्थिते अपरो योगः। अत्र जनने मातृसुखं भवति। एवं गुरुशुक्रयुते क्रूरैरदृष्टे, मेषसिंहान्यतरगते, सूर्ये एको योगः। लग्नात् द्वितीय पंचमगते सूर्ये पूर्ववत् स्थिते

[1]दिवा सितार्कौ निशि चन्द्रमन्दौ
युग्मौजसंस्थौ जननी(नीं) च ताता(तं) ।
संरक्षतो व्यत्ययतस्तदन्यौ(था तौ)
पितृव्यमातृष्वसु(स्तृ)रक्षकौ तौ ॥ ९ ॥

[2]क्रूरेऽक्षितो वा परिविष्टखेद:(ट:)
शीर्षोदयस्थाः सकला ग्रहा वा ।
जयी शुभः सौम्यनिरीक्षितो वा
योगश्च(स्त)[था] हन्त्यखिलं च रिष्टं ॥ १० ॥

॥ इति चन्द्रारिष्टभङ्गा द्वाविंशतिः ॥

इति श्रीजातकसारदीपे चन्द्रारिष्टभङ्गाध्याय एकसप्ततितमः

---

अपरो योगः । अत्र जनने पितृसुखं भवति ॥ ८ ॥ १ मेषाद्योजराशिगतः सूर्यः दिवा पितरं, रात्रौ पितृव्यं रक्षति । मेषाद्योजराशिगत: शनिः दिवा पितृव्यं, रात्रौ पितरं रक्षति । वृषभादियुग्मराशिगतः शुक्रः दिवा मातरं, रात्रौ मातृष्वसारं रक्षति । वृषभादियुग्मराशिगत: चन्द्रः दिवा मातृष्वसारं, रात्रौ मातरं रक्षति ॥ ९ ॥ २ परिवेषेण मण्डलाकारपरिधिना युते ग्रहे क्रूरदृष्टे एको योगः मिथुनसिंह-कन्यातुलावृश्चिककुंभाः शीर्षोदयराशयः । तेषु सकलग्रहयुतेषु द्वितीयो योगः । युद्धे जयिनि, शुभैर्दृष्टे, शुभे तृतीयो योगः । एषु त्रिषु योगेषु सर्वारिष्टभङ्गः ॥ १० ॥

## ॥ अथ यवनोक्तारिष्टयोगाध्यायो द्वासप्ततितमः ॥

### कलसवत्सरायुर्योगाः

शनिक्षेत्रगतो भानुः मातुः(भानु)क्षेत्रे शनैश्चरः ॥
विंशे वर्षे भवेन्मृत्यू रक्षिता यदि शंकरः ॥ १ ॥

भौमक्षेत्रे यदा जीवो जीवक्षेत्रे क्षितेः सुतः ॥
द्वादशे वत्सरे मृत्युः(त्यू) रक्षिता यदि शंकरः ॥ २ ॥

[1]षष्ठाष्टमे च मूर्तौ च जन्मकाले यदा बुधः ॥
चतुर्थेषु भवेन्मृत्यू रक्षिता यदि शंकरः ॥ ३ ॥

शुक्रक्षेत्रे यदा जीवो जीवक्षेत्रे च भार्गवः ॥
अष्टादशे भवेन्मृत्यू रक्षिता यदि शङ्करः ॥ ४ ॥

[2]भूमिपुत्रे यदा जीवे षष्ठेऽष्टमतृतीयके ॥
अष्टमे दशमे मृत्यू रक्षिता यदि शंकरः ॥ ५ ॥

[3]लग्ने मुहूर्ते (ग्नभागे) यदा भानुः केन्द्रे भवति चन्द्रमाः ॥
सद्यो बालस्य वै मृत्युः सद्योजातो न संशयः ॥ ६ ॥

---

१ लग्ने वा षष्ठे वा अष्टमे वा बुधयुते चतुर्थवत्सरे मृतिः ॥ ३ ॥

२ कुजगुर्वोः तृतीयषष्ठाष्टमान्यतमगतयोः अष्टमे वा दशमे वा वत्सरे मृतिः ॥ ५ ॥

३ स्फुटलग्नांशसमानभागे स्फुटसूर्ये, केन्द्रगते चन्द्रे बालस्य सद्योजातः आकस्मिकः, सद्यः जननसमनन्तरकालीनः, मृत्युः भवति इति योजना। एवमग्रेऽपि ॥ ६ ॥

[1]चतुर्थे च यदा राहुः केन्द्रे षष्ठेऽष्टमे शशी ॥
दशमेऽब्दे भवेन्मृत्युः सद्योजातो न संशयः ॥ ७ ॥

सप्तमे च यदा राहुर्मूर्तौ भवति चन्द्रमाः ॥
वर्षे चतुर्थे मरणं जातस्य हि न संशयः ॥ ८ ॥

दशमस्थो यदा राहुर्जन्मकाले यदा भवेत् ॥
षोडशेऽब्दे भवे द्बालः सद्यो न्मृत्युर्जातकस्य न संशयः ॥ ९ ॥

### अपस्मारयोगः

[2]जन्मकाले यदा राहुः षष्ठेऽष्टमे च चन्द्रमाः (मगतो विधुः) ॥
अपस्मारी भवेद्बालः सद्योजातो न संशयः ॥ १० ॥

### विकलाङ्गयोगः

[3]षष्ठाष्टमे यदा काले भवे भवति चन्द्रमाः ॥
विकलांगं त्रिजाती(नी)यान्(त्) क्षीश(ण)नाशो(सो) भवेन्नरः ॥ ११ ॥

### त्रिदोषोत्थमरणगृहनाशयोगौ

[4]षष्ठाष्टमे भवेत्तत्र द्वितीये बुधचन्द्रमाः(सबुधो विधुः) ॥
त्रिदोषोत्थो भवेत्मृत्युरथवा सद्म दारयेत् ॥ १२ ॥

---

१ राहौ चतुर्थगे, केन्द्रे वा षष्ठे वा अष्टमे वा चन्द्रे दशमे वत्सरे मरणम् ॥ ७ ॥ २ राहौ षष्ठगते, अष्टमगते चन्द्रे अपस्मारयोगः ॥ १० ॥ ३ षष्ठे वा अष्टमे वा एकादशे वा चन्द्रयुते विकलाङ्गयोगः ॥ ११ ॥ ४ बुधयुक्ते चन्द्रे द्वितीये वा षष्ठे वा अष्टमे वा स्थिते त्रिदोषोत्थमरणं वा गृहनाशो वा भवति ॥ १२ ॥

स्थानभ्रंशसंतानरक्षणयोगौ

जन्मकाले मुहूर्ते वा रुहेतो रविर्य(मूर्तिरन्ध्रगतः सूर्यो य)दा भवेत् ॥
स्थानहीनं भवेद्बालं सौख्यसन्तानरक्षकं ॥ १३ ॥

[1]द्वादशाष्टो यदा(ष्टमगो) जीवो लग्ने भवति चन्द्रमाः ॥
अष्टमो मङ्गलश्चैवं स याति यममन्दिरं ॥ १४ ॥

पितृमात्रात्मकृतमरणयोगः

[2]सप्तमस्थे भूमिपुत्रे तनुस्थाने तु चन्द्रमाः ॥
आत्मा हन्ति पिता हन्ति माता हन्ति न संशयः ॥ १५ ॥

पूर्णायुर्योगः

[3]रविराहू भौमसौरी लग्ने वा पंचमेऽपि वा ॥
पाप(पा)श्चैव न पश्यन्ति जीवेद्वर्षशतं नरः ॥ १६ ॥

अकर्मण्ययोगः

क्रूरक्षेत्रे यदा लग्ने अक्षं(स्तं) याते विलग्नपे ॥
अकर्मणक्ष(ण्यस्त)दा जातो ह्यष्टवर्षे न जीवति ॥ १७ ॥

---

१ गुरौ द्वादशे वा अष्टमे वा स्थिते, चन्द्रे लग्नगते, कुजे अष्टमगते एको योगः ॥ १४ ॥ २ सप्तगते कुजे, लग्नगते चन्द्रे जातः आत्मप्रयत्नेन वा पित्रा वा मात्रा वा हन्यते इति भावः ॥ १५ ॥ ३ पापदृष्टिरहितौ रविराहू लग्ने वा पञ्चमे वा स्थितौ चेदेको योगः। कुजशन्योस्तद्वत् स्थितयोरपरो योगः। अत्र जातः पूर्णायुर्भवति ॥ १६ ॥

सर्व्वारिष्टभङ्गयोगः

[1]एको वा यदि वा(द्वौ वा त्रयः) केन्द्रं(न्द्रे) शुक्रवाक्पतिसोमजः (जाः) ॥
सर्वारिष्टानि नश्यन्ति तमः सूर्योऽदये यथा ॥ १८ ॥

व्यर्थजीवनयोगः

[2]लग्ने शुक्रो बुधो नाग्नि(स्ति) नाक्षि(स्ति) केन्द्रे बृहस्पतिः ॥
दशमेंऽगारको नास्ति स जातः किं करिष्यति ॥ १९ ॥

कुलदीपकयोगः

लग्ने शुक्रो बुधो यस्य केन्द्रे यस्य बृहस्पतिः ॥
दशमेंऽगारको यस्य स जातः कुलदीपकः ॥ २० ॥

## होरामकरन्दे—

वंशोच्छेदकरयोगः

[3]वंशोन्मा(च्छे)दकरः शशांकभृगुजक्रूरैः खसप्तांबुगैः

शिल्पजीवनयोगः

शिल्पि(ल्पी) केन्द्रगतार्किणा बुधयुतस्त्र्यंशेन नो(शो यदा) वीक्ष्यते ॥

---

१ बुधगुरुशुक्राणां मध्ये एकस्य वा द्वयोर्वा त्रयाणां वा केन्द्रगतत्वे सर्वारिष्टभङ्गयोगः ॥ १८ ॥ २ शुक्रबुधयोर्लग्नगतयोः, केन्द्रगते गुरौ, दशमगते कुजे कुलशोभाकरो भवति । कुजबुधगुरुशुक्रेष्वेकोऽपि प्रोक्तस्थाने यदि न भवति तर्हि जन्म निरर्थकमिति भावः ॥ १९—२० ॥ ३ दशमे चन्द्रे, सप्तमगे शुक्रे, चतुर्थगतयोः -

दासीपुत्रयोगः

अन्त्ये देव(दैत्य)गुरौ दिनेश्वरसुतस्यांशे व(च) दासीसुतो

नीचकर्मयोगः

नीचः कामगयोः खरांशुशशिनोः सौरेण संदृष्टयोः ॥ २१ ॥

जातकतिलके—

गुह्यरोगयोगः

[1]चन्द्रेऽलिकर्कटांशस्थे सपापे गुह्यरुग्भवेत् ॥

हीनाङ्गयोगः

हीनांगो वेसिते(गे) मन्दे कर्मगेऽब्जे कुजेऽस्त(स्य)गे ॥ २२ ॥

---

कुजशन्योरेको योगः। अत्र जातो वंशनाशको भवति। बुधयुते द्रेष्काणे केन्द्रगतेन शनिना दृष्टे एको योगः। अत्र द्रेष्काणग्रहणं "पूर्णदृष्टावेवायं योगः, न पादादिदृष्टा' विति ज्ञापनाय। तेन मेषप्रथमद्रेष्काणगते बुधे कुंभकर्काटकतुलाप्रथमद्रेष्काणस्थेनैव शनिना भाव्यम्। अन्यथा पूर्णदृष्टयसंभवेन नायं योगः संभवतीति सूचितम्। अत्र जातः नष्टसर्वस्वः शिल्पमात्रेण, जीवति। शनिनवांशगते गुरौ द्वादशगते दासीपुत्रो भवति। बृहज्जातके तु शुक्रे द्वादशगते शनिनवांशगते अयं योग उक्तः। शनिदृष्टे, सप्तमगे, रवियुते, चन्द्रे नीचकर्मा भवति ॥ २१ ॥

१ यत्र कुत्रापि स्थिते चन्द्रे पापैर्युते वृश्चिककर्काटकान्यतरनवांशगते गुह्यरोगवान् भवति। चन्द्रे लग्नात् दशमगे, कुजे लग्नात् सप्तमगते, शनौ सूर्यात् द्वितीयगे विकलांगो भवति ॥ २२ ॥

### कुष्ठयोगाः

[1]मन्दारयुतदृष्टेऽब्जे वा(चा)पध्यय(मध्य)नवांशगे ॥
मृगमीनां(ना)जकर्क्य(र्क्य)शे स्थिते वा कुष्ठवान् भवेत् ॥ २३ ॥

[2]क्रूरयुक्तेऽक्षितो लग्नात्पंचमे नवमेऽथ वा ॥
गोकर्क्यलिमृगाक्षच्छिद्रा(स्याख्यरा)शिः स्यात् कुष्ठवान् भवेत् ॥ २४ ॥

### वातरोगयोगः

पातकी स्याद्वि(वातरोगी वि)लग्नस्थे गुरौ द्यूनागते शनौ ॥

### उन्मादयोगः

सोन्मादो लग्नरो(गे) जीवे द्युनस्थे भूसुते भवेत् ॥ २५ ॥

### विकृतदन्तयोगः

[3]पापैर्दृष्टे गोजचापे(प)लग्ने विकृतदन्तवान् ॥

---

१ चापराशिगतसिंहनवांशगते वा सकलराशिगतमेषकर्काटकमकरमीनान्यतमनवांशगते वा चन्द्रे कुजेन युते वा दृष्टे वा एको योगः। एवं तादृशे चन्द्रे शनिना युते वा दृष्टे वा अपरो योगः। अत्र जातः कुष्ठी भवति ॥ २३ ॥
२ पापानामन्यतमेन युते वा दृष्टे वा वृश्चिके, कर्काटके लग्ने एको योगः। कर्काटके वा वृश्चिके वा पापयुतदृष्टे, मीनलग्ने द्वितीयो योगः। कर्काटके पापयुतदृष्टे, वृश्चिके लग्ने तृतीयो योगः। वृषभे पापयुतदृष्टे, मकरलग्ने चतुर्थो योगः। मकरे वा वृषभे वा पापयुतदृष्टे, कन्यालग्ने पञ्चमो योगः। मकरे पापयुतदृष्टे, वृषभलग्ने षष्ठो योगः। एवं बहुयोगाः कुष्ठकराः ॥ २४ ॥ ३ मेषवृषभचापान्यतमे लग्ने पापदृष्टे विकृतदन्तः खल्वाटश्च भवति। सिंहवृश्चिकमकरकुम्भान्यतमे लग्नगते खल्वाटो

### खल्वाटयोगः

चापे गव्यशुभर्क्षे वा चत्वारः(खल्वाटः) पापवीक्षिते ॥ २६ ॥

### बन्धनयोगाः

[1]व्ययपुत्रार्थधर्मस्थैः पापैर्बन्धनभाग्भवेत् ॥

### रज्जुबन्धनयोगः

भनुर्वृषाज चापे लग्ने तु बन्धनं तच्च रज्जुजं ॥ २७ ॥

### निगडबन्धनयोगः

[2]युग्मकन्यातुलाकुंभे(भ)लग्नस्थे(ग्नेषु) निगडोद्भवं ॥

### दुर्गनिरोधयोगभूगृहनिरोधयोगौ

कर्किसिंहे झषे दुर्गे रोधः स्याद्भूगृहेऽलिनि ॥ २८ ॥

---

भवति ॥ २६ ॥ १ द्वितीयपञ्चमनव मद्वादशेषु पापग्रहयुतेषु बन्धनयोगः | अस्मिन् योगे मेषे वा वृषभे वा चापे वा लग्ने रज्जुबन्धनं, मिथुने वा कन्यायां वा तुलायां वा कुंभे वा लग्ने निगडबन्धनं, कर्काटके वा सिंहे वा मीने वा लग्ने शरीरबन्धनं विना दुर्गे निरोधः, वृश्चिके लग्ने भूगृहे निरोधः, मकरे लग्ने दूरे क्षिप्तस्य रज्जुबंधनं भवति । तत्रापि द्वितीयगे पापे दुर्बले सति दूषितेन राज्ञा बन्धनं, पञ्चमगे पापे दुर्बले पुत्रेण बन्धनं, नवमगे पापे दुर्बले गुरुभिर्बन्धनं, द्वादशगे पापे दुर्बले ऋणेन वेश्यया वा निमित्तेन बन्धनं भवति ॥ २७—२८ ॥ २ अत्रामिमं श्लोकं लुप्तमिति भाति । तत्र मदीयं पद्यं कुण्डलीस्थं पठनीयम् |

बन्धनयोगान्तरं

[बलवत्पापसंदृष्टौ तृतीयौ कर्किमीनयोः ॥
वृश्चिकाद्यद्वितीयौ वा द्रेकाणौ लग्नगौ तथा ॥ २९ ॥]

सेवकयोगः

[1]मदाका(न्दार्का)रैः शुभादृष्टैः कर्क(र्म)स्थैर्भृतको भवेत् ॥
ग्रहेणैकेन स श्रे(श्रे)ष्ठो द्वाभ्यां मध्योऽधमस्त्रिभिः ॥ ३० ॥

विकलाङ्गपत्नीयोगः

[2]पंचमे नवमे द्यूने समेतौ सितभास्करौ ॥
रा(य)स्य स्व(स्या)तां भवेद्भार्या तस्यैकांगविवर्जिता ॥ ३१ ॥

पिशाचबाधायोगः

[3]उदयन्मृदु(त्युडु)पेऽसुरास्यगे सपिशाचोऽशुभयोस्त्रिकोणयोः ॥

नेत्राभावयोगः

सोपानमद(सोपप्लवमण्ड)के रवावुदयस्थे नयनापवर्जितः ॥ ३२ ॥

---

१ शनिकुजरविभिः शुभदृष्टिरहितैः दशमगतैः सेवको भवति । तत्र एकेन अन्यादिष्वन्यतमेन दशमगतेन श्रेष्ठः, द्वाभ्यां मध्यमः, त्रिभिरधमः सेवको भवति । बृहज्जातके तु सूर्येण दशमगतेन श्रेष्ठः, कुजेन मध्यः, शनिना अधमः सेवको भवति इत्युक्तम् ॥ ३० ॥ २ पञ्चमे वा सप्तमे वा नवमे वा रविशुक्रयुते त्रयो योगाः ॥ ३१ ॥
३ राहुकेतुभ्यां ग्रस्ते चन्द्रे लग्नगते, पञ्चमे वा नवमे वा कुजशनिभ्यामन्यतरेण युते पिशाचबाधायोगः । ग्रस्ते सूर्ये लग्नगते नेत्राभावयोगः ॥ ३२ ॥

क्षयरोगयोगः

[1]अन्योन्यक्षेत्रगौ स्यातामथ वा तत्र(त्त्र)वांशगौ ॥
चन्द्रार्कौ चेत्तदा जातः क्षयरोगी भवेन्नरः ॥ ३३ ॥

श्वासगुल्मक्षयविद्रधिक्षयरोगयोगाः

[2]पापयो[र्म]व्य(ध्य)गे चन्द्रे रवौ स(म)करराशिगे ॥
श्वासगुल्मक्षयप्लीहविह(द्र)धिव्याधिपीडितः ॥ ३४ ॥

॥ इति श्रीजातकसारदीपे यवनोक्तारिगयोगाध्यायो द्वासप्ततितमः ॥

---

## ॥ अथ होरासारोक्तपित्ररिष्टयोगाध्यायस्त्रिसप्ततितमः ॥

[3]पित्रोर्दोषकृता शिशुर्महि(ग्रह)कृता रिष्टाख्ययोगै(गैः) [कृता]
त्रेधा कालपिपाशिरोरविसमाम्नावन्नवायुश्श्रमहः ।

---

१ सिंहे वा तन्नवांशके वा स्थिते चन्द्रे, कर्काटके वा तन्नवांशके वा स्थिते सूर्ये एको योगः । बृहज्जातके रविचन्द्रयुते सिंहे वा कर्काटके वा द्वौ योगावधिकावुक्तौ । अत्र जातः क्षयी वा कृशो वा भवति ॥ ३३ ॥ २ पापद्वयमध्यगते चन्द्रे, सूर्ये मकरस्थे एको योगः । "मदनराशिगे" इति वराहसंमतः पाठः । सप्तमगे सूर्ये, चन्द्रे पापमध्यगते एको योग इति तदर्थः । अस्मिन् योगे चन्द्रे शुक्रक्षेत्रगते गुल्मं (उदरशूलः), शनिक्षेत्रगते क्षयः, बुधक्षेत्रगते प्लीहकरोगः (वक्षिराक्षयरोगः), कुजक्षेत्रगते विद्रधिः पिटकविशेषः भवतीति ज्ञेयम् ॥ ३४ ॥
३ अत्र द्वितीयः पादो दुर्बोधः अशुद्धश्च वर्तते । अतस्तत्स्थाने कुण्डलीगतो मदीयः पाठोऽनुसन्धेयः । जन्मादिचतुर्वर्षपर्यन्तं मातृकृतपापकर्मणा, ततः परं अष्टवर्ष-

[त्रेधा बालमृतिस्ततो रविसमान्तं नायुषो निर्णयः ॥]

होरासारसुसंमताद(न)नुभवाक्षि(त्सि)द्धांश्च वक्ष्ये ततो
योगान् रिष्टजदायदा म नतिफलान् होराविदां तुष्टये ॥ १ ॥

## पित्ररिष्टम्

१ पापांतस्त्वथ पापदृष्टिरा(ष्टयु)गिनो वा पित्ररिष्टं लयाऽ
रिस्थोग्रैः शुभवर्जितैश्च रवितो वाऽष्टांबुगैर्वा भवेत् ।
मन्दर्क्षे दिनपे मृगां(कुजां)शकगते वाग्यात्पुरूपत्तितो(सौरीक्षिते प्राक् पितुः)
भौमार्क्यंश इने (भौमे सूर्यलवे) त्रिकोण इह नो शुक्रेज्यदृष्टे मृतिः
॥ २ ॥

## मात्ररिष्टम्

२ क्षीणेन्दोरशुभैस्त्रिकोणभगतैर्नो(र्नो) सौम्यदृष्टैर्लयो
मातुश्चैकलवस्थितौ कुजशनी वा केन्द्रं(द्र) [इं]दोश्च तौ ॥ ३ ॥

---

पर्यन्तं पितृकृतपापकर्मणा, ततः परं द्वादशवर्षपर्यन्तं बालसद्योमरणारिष्टयोगैः, जन्मादि-द्वादशवत्सरपर्यन्तं बालग्रहैश्च बालमृतिः संभवति । अतो जन्मादिद्वादशवर्षपर्यन्तं आयुर्निर्णयो न कार्य इति भावः ॥ १ ॥ १ पापमध्यगते वा, पापदृष्टे वा, पापयुते वा सूर्ये त्रयो योगाः । सूर्यात् षष्ठाष्टमयोः शुभरहितयोः पापयुतयोश्चतुर्थो योगः । सूर्यात् चतुर्थाष्टमयोः पापयुतयोः शुभरहितयोः पञ्चमो योगः । शनिदृष्टे सूर्ये शनिराशिगते वा, मकरनवांशगते वा पाठान्तररीत्या कुजनवांशगते वा त्रयो योगाः । शुक्रगुरुदृष्टिरहिते सूर्ये नवमपञ्चमान्यतरगते, कुजनवांशगते वा शनिनवांशगते वा द्वौ योगौ । पाठान्तररीत्या सूर्यनवांशगते कुजे गुरुशुक्रदृष्टिरहिते त्रिकोणगते एको योगः । अत्र पूर्वार्धोक्तेषु योगेषु पित्ररिष्टम् साधारणम् । उत्तरार्धोक्तेषु योगेषु क्रूरतमम् । अत्र शिशुजननात्पूर्वमेव पितृनाश इति भावः ॥ २ ॥ २ क्षीणचन्द्रात्

श्लोकार्धं गतं ८–१२ शनौ स्यात्तथा ॥

॥ इति श्रीजातकसारदीपे होरासारोक्तपित्ररिष्टयोगाध्यायस्त्रिसप्ततितमः ॥

---

## ॥ अथ ताजिकोक्तारिष्टयोगाध्यायश्चतुःसप्ततितमः ॥

चन्द्रसूर्ययोर्लग्नगतप्राणदृष्टिघटिकाः

[1]कर्केऽङ्कौ(र्जेऽ)कलवे वृषे च नवमे चापादिके घाट(थाष्ट)केऽ
थो लग्नस्थविधोवृ(धुर्वृ)षांत्यलवयोश्चैकोनविंश(श)[द्व]ये ।
कर्काटेऽक(र्क)विधू तनौ हरिदिगंशात्सप्तभागस्थितौ
कन्यालग्नगतौ युगातिधृतिर्विंशस्वर्गभा **र्गभार्गेऽग्न** गस्थितौ ॥ १ ॥

---

पञ्चमे वा नवमे वा स्थितेषु, शुभदृष्टिरहितेषु, पापग्रहेष्वेको योगः। एकांशकगतयोः कुजशन्योरेको योगः। चन्द्रकेन्द्रगतयोः कुजशन्योरेको योगः। पूर्वश्लोकोक्तरीत्या पापमध्यगतत्वादिकं चन्द्रस्य विलोक्य मात्ररिष्टं वक्तव्यं। अस्य श्लोकस्योत्तरार्धं लुप्तम् स्थूलाक्षरनिर्दिष्टो भागश्च त्याज्यः ॥ ३ ॥ १ वक्ष्यमाणेषु लग्नगतेषु षष्ठिकलात्मकभागेषु स्थितौ चन्द्रार्कौ शुभकरौ। तथा हि—चन्द्रस्य कर्काटके ९, वृषमे ९, २९, ३०, मेषे ९, धनुषि १, २, ३, ४, ५, ६, ७, ८, । चन्द्रार्कयोः—कर्काटके १९, २०, सिंहे—१०, ११, १२, १३, १४, १५, १६, कन्यायां—४, १९, २०, २१, कुंभे ९, मीने २१, मिथुने २२, तुलायां २५, वृश्चिके २६, मकरे २७, । एतेषु भागेषु लग्नगतेषु स्थितौ प्राणदृष्टियुतौ इत्युच्येते। गुर्वदृष्टे, क्षीणचन्द्रे शनिदृष्टे एको योगः। धनगते रवौ, पापद्वययुते दशमे द्वितीयो योगः। चन्द्रात् सप्तमे पापद्वययुते तृतीयो योगः। सूर्ये पापदृष्टे चतुर्थो योगः। अत्र जातो नैकमान्यवान् भवति।

कं(कुं)भाद्येषु शशांकगेषु च तथाऽतिपाणदृष्टि(ष्टिः) स्मृता ॥

गोस्वर्गांकृतिभागगौ तनुगतौ नो पञ्चविंशात् त्रये

नेत्रनाशकरा योगाः

क्षीणेन्दुं च गुरुर्न पश्यति शनिः पश्येद्धनेऽर्के खलौ

स्व(खे) खस्था(तस्मा)त् पु(द्यु)नगौ च तौ खग[प]इ(तौ) दुर्वीक्षतेऽल्पा

क्षिणी(क्षकः) ॥ २ ॥

[1]मितभाषी मृगे मन्दे गोचापेऽगेऽ(जेऽ)ल्पकामता ॥

षष्ठमे(मे)न्दावदृश्येऽर्हे(र्धे) चाक्ष्णोर्विघ्नं तदा दिशेत् ॥ ३ ॥

[2]क्रूरे तनौ तनुपतावशुभस्थिते च

क्रूरद्वयान्तरगतौ यदि चन्द्रसूर्यौ ।

जातस्तदान्ध इत(न)रात्रिपयोर्धुनेऽसृक्

चन्द्रात्तु षष्ठ उदितस्तु भवेत्तदान्धः ॥ ४ ॥

मेषादिगता अन्धलवाः

[3]षड्भागाद्दशभाग उक्ष्ण(क्षिण) नवमा(मे) तिथ्यंशके कर्कटे

सिंहे धृत्युडुपिण्डकेऽथ कुनगाष्टांशे धृतौ भात् द्वये ।

---

१ मकरगे शनौ मितभाषी, मेषे वा वृषभे वा चापे वा मन्दे अल्पकामः, कन्यागते चन्द्रे लग्नभोग्यभागद्वितीयतृतीयचतुर्थपञ्चमषष्ठसप्तमभुक्तभागगते नेत्रहानिर्भवति ॥ ३ ॥ २ क्रूरग्रहयुते लग्ने, अशुभराशिगते लग्नेशे, चन्द्रसूर्ययोः पापग्रहमध्यगतयोरेको योगः । चन्द्रसूर्ययोरेकराशिस्थयोः सप्तमगे कुजे द्वितीयो योगः । चन्द्रात् षष्ठे लग्नगते कुजे तृतीयो योगः ॥ ४ ॥ मेषे ६, वृषभे ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, कर्काटके ९, १५, सिंहे १८, २७, वृश्चिके १, ७, ८,

गोब्जांशेः(शेऽ)ष्टमभे त्वथोत्कृतिलवाद्वेदांशकेष्वेणभे
कुंभे द्व्कुधृतिभूतविंशलवके चांधा(धोऽ)रणेंऽगांशकाः ॥ ५ ॥

एतेषां चैव भागानां मध्ये चन्द्रदिवाकरौ ॥
लग्नस्थौ यदि जायेतां नेत्रनाशस्तदा स्मृतः ॥ ६ ॥

काणयोगः नेत्रचिह्नयोगः अश्रुपातयोगश्च

[1]लग्ने षष्ठपभूनविंशलवके चांधा(धोऽ)रणेंऽगांश[के]
[षष्ठाष्टस्थितमिन्दु]जं गुरुसितौ नो पश्यतः काणद(ता)
विच्छायोऽ(यंऽ)थ रवेरधो द्विवकुजौ(मकरे) ज्ञेऽह्नोपि(ह्नाय) चिह्नं दृशि ।
लग्ने षष्ठपभार्गवे यदि खलैर्दृष्टेऽश्रुपातोऽप्यथो
प्येकांशे कुजसी(शीत)[गू यदि त]दाऽक्ष्णोश्चिह्नमुक्तं दृशि(ध्रुवम्) ॥ ७ ॥

॥ इति नेत्रहानिकरा योगाः ॥

---

१८, १९, २७, २८, मकरे २६, २७, २८, २९, कुंभे २, ५, १८, २०, एते भागा अन्धभागाः । अत्र स्थितयोः सूर्यचन्द्रयोर्लग्नगतत्वे अन्धो भवति ॥ ५—६ ॥

१ अत्रैकः पादो लुप्तः । षष्ठेशस्फुटात् लग्नस्फुटे १९ भागाधिके अन्धो भवति । षष्ठे वा अष्टमे वा स्थिते बुधे गुरुशुक्राभ्यामदृष्टे मेषे ६ भागगते काणः (एकनेत्रः) भवति । किरणशून्ये, सूर्यात्पृष्ठतः स्थिते चन्द्रे, बुधदिने जनने नेत्रचिह्नम् भवति । षष्ठाधिपे शुक्रे लग्नगते पापैर्दृष्टे स्रवमेत्रमलो भवति । कुजचन्द्रावेकांशगतौ चे न्नेत्रचिह्नं भवति ॥ ७ ॥

## ॥ अथ कुष्ठशोफव्रणयोगाः ॥

[1]चन्द्रो मेषवृषस्थः शनिभौमाभ्यां युतस्तदसिहि(त)कुष्ठी ॥
मीनालिकर्किसंस्थाः शनिशुक्रशु(कु)जेन्दवो रुधिरकुष्ठी ॥ ८ ॥

क्रूराः कुळीरझषवृश्चिकराशिसंस्था
लूतादिकं हि परिवर्तनजातकुष्ठं ।
[2]षष्ठाधिपो यदि गुरू रिपुपः सितो वा
क्रूरेक्षितस्तनुगलो(तो) वदनस्थशोफी ॥ ९ ॥

द्वादशस्थो यदा जीवो गुह्यरोगी तदा भवेत् ॥
शनिभौमौ रिःफसंस्थौ षष्ठस्थौ [वा] तदा [व्र]जी(णी) ॥ १० ॥

सक्रूरौ चन्द्रयुक्तौ च कर्कवृश्चिकमीनगौ ॥
श्वेतकुष्ठी खलार्ये(ढर्ये)दौ कुष्ठी सुखविवर्जितः ॥ ११ ॥

॥ इति कुष्ठशोफव्रणयोगाः ॥

---

१ मेषे वा वृषभे वा स्थिते चन्द्रे शनिकुजदृष्टे एको योगः। मीनवृश्चिककर्काटकगतेषु चन्द्रकुजशुक्रशनिष्वपरो योगः ॥ ८ ॥ २ षष्ठाधिपे गुरौ पापदृष्टे लग्नगते एको योगः। शुक्रे एवं स्थिते द्वितीयो योगः ॥ ९ ॥ द्वादशगते गुरौ गुह्यरोगयोगः। द्वादशे वा षष्ठे वा शनिकुजयोर्मिलितयोः स्थितौ द्वौ व्रणयोगौ। रविचन्द्रकुजशनिषु मिलितेषु कर्काटकवृश्चिकमीनान्यतमगतेषु श्वेतकुष्ठयोगः। पापराशिगते पापयुते च चन्द्रे सामान्यकुष्ठयोगः ॥ १०—११ ॥

## ॥ अथ खञ्जयोगौ ॥

[1]मेषालिकर्कमृगमीनगतौ शनीन्दू
क्रूराचि(वि)तौ भवति तच्च(त्र) नरत्क(स्तु) खंजः ।

**कर्कालिमीनमृगगो नवमेषु दृष्टो**
**नान्येऽक्षितो हते समस्तरिष्टं ।**
**जन्माधिपो मित्रशुभेक्षितो वा**
**सर्वेक्षितो जन्म**

होरेश्वर(रो) **स्यो** पच[य]मेषे(मेषु) विलग्नसंस्थ
गुर्वारव्य(र)सम्नि(नि) तदा भवतीह खंजः ॥ १२ ॥

॥ इति खंजयोगौ ॥

---

## ॥ अथ मतिहीनयोगाः ॥

[2]लग्नगौ शनिबुधौ युत(द्युन)दृष्ट्याऽ
सृक् प्रपश्यति तदा मतिहीनः ।

---

१ क्रूरेणैकेन युतयोः शनिचन्द्रयोः मेषकर्काटकवृश्चिकमकरमीनगतयोरेको योगः। अत्र स्थूलाक्षरनिर्दिष्टो भागः एतदध्यायासंगतोऽनन्वितोऽशुद्धश्च । अतः स त्याज्यः। लग्नाधिपस्य सकाशात् तृतीये वा षष्ठे वा दशमे वा एकादशे वा मेषवृश्चिकचापमीनान्यतमे लग्नगते एकः खंजयोगः ॥ १२ ॥ २ शनियुते बुधे लग्नगते, सप्तमदृष्ट्या कुजेन दृष्टे एको योगः। अत्र सप्तमदृष्ट्येति कथनेन बुधशन्योः लग्ने समानभागगतत्वं, कुजस्य सप्तमे शनिबुधभागसमानभागगतत्वं च ज्ञाप्यते। अन्यथा सप्तमदृष्टेरयोगात्। किं च, ताजके सप्तमदृष्टेः वैरदृष्टिरूपत्वेन सैव मतिहीनयोगे

चन्द्रभानुविवरे यदि भौमो
मीलतीह रव(स च) बुद्धिविहीनः ॥ १३ ॥

[1]लग्नसंस्थहिमगौ दशमस्थे
सा(वाऽ)षिकाररविजे बुधदृष्ट्या ।
ज्ञेऽक्षिते मतिवियुगु(ग्बु)धपूर्णेऽ
क्षणे(क्षेऽ)क्षितो (तौ)विमत(ति)रंगकुजेन्दू ॥ १४ ॥

[2]लग्नेश्वरे शशिनि भौमनिपीडिते च
बुद्ध्या विहीन उदये सबुधेऽपि तद्वत् ।
एकर्क्षगैब(क)लवगौ रिपुगौ शनीनौ
दृष्टौ खल(खलै)र्गतमतिः शुभदृष्टिहीनो(नौ) ॥ १५ ॥

॥ इति मतिहीनयोगाः ॥

---

उपयोगवती । चतुरस्रदृष्टेस्तन्मतरीत्या शुभदृष्टित्वेन, सा नारिष्टयोगोपयोगिनी । अतः सप्तमदृष्टेरित्युक्तम् । एवमग्रेऽपि । चन्द्रसूर्यमध्यगते सप्तमगे च कुजे द्वितीयो योगः । अत्र जातो बुद्धिशून्यो भवति ॥ १३ ॥ १ लग्नगते वा दशमगते वा चन्द्रे, सप्तमदृष्ट्या बुधदृष्टे द्वौ योगौ । दशमगते शनौ सप्तमदृष्ट्या बुधदृष्टे एको योगः । लग्नगतयोः चन्द्रकुजयोः बुधेन सप्तमदृष्ट्या वा एकराशिदृष्ट्या वा दृष्टयोरेको योगः ॥ १४ ॥ २ लग्नेशे वा चन्द्रे वा कुजदृष्टियोगादिना पीडिते द्वौ योगौ । बुधयुते लग्ने कुजपीडिते एको योगः । समानराशिसमानभागगतयोः रविशन्योः षष्ठगतयोः पापैर्दृष्टयोः शुभदृष्टिरहितयोरेको योगः ॥ १५ ॥

## ॥ अथ हृद्रोगयोगाः ॥

[१]चन्द्रोऽ(न्द्रो)ग्रिदृष्ट्या रविजं प्रशस्येत्(पश्येत्)
सूर्येण दग्धो रविजः ककोस्थः(फोत्थः) ।
नेज्येऽक्षकोटी(क्षितोऽरी)श इष्टोऽग्रदग्धः
षष्ठे खला वातजपक्षघातः ॥ १६ ॥

**स्यात् क्रूरपित्तिहृदये स कंपकः ॥ १७ ॥**

मेदिनीसूनुमन्देज्याश्चतुर्थे यदि संस्थिताः ॥
हृद्रोगस्य विकारेण व्रणो भवति देहिनां ॥ १८ ॥

॥ इति हृद्रोगयोगाः ॥

### कातरयोगौ

[२]लग्नं न पश्यति निजर्क्षकुज(जे)[न] दृश्ये
स्यात्कातरोऽथ (खनौहि तरणौ) निशि तद्वत् [इन्दौ] ।

---

१ ग्रहेण भुक्तं नक्षत्रं वा राशिर्वा तेन दग्धत्वेन व्यपदिश्यते । तृतीयदशम-दृष्टिः पाददृष्टिः । तथा चन्द्रदृष्टे शनौ सूर्येण दग्धनक्षत्रे वा राशौ वा स्थितेक फजातो हृद्रोगः । गुरुदृष्टिरहिते षष्ठाधिपे क्रूरग्रहदग्धनक्षत्रराशिगते पापेषु षष्ठगतेषु वातजो हृद्रोगः । उत्तरश्लोके पित्तजहृद्रोगयोगो निरूपित इत्यनुमीयते । तत्र पादत्रयं लुप्तम् । चतुर्थः पादः परं वर्तते । सोऽप्यशुद्धः । स च स्थूलाक्षरेण निर्दिष्टः ॥ १६ ॥

२ दिवा स्वराशिगतकुजदृष्टेन सूर्येणादृष्टे लग्ने एको योगः । रात्रौ स्वराशि-गतजकुदृष्टेन चन्द्रेणादृष्टे लग्ने द्वितीयो योगः । अत्र योगद्वये जातः कातरो भवति । लग्नगते कुजे अतिकलहयोगः । सप्तमे वा दशमे वा स्थिते कुजे तीक्ष्णयुद्धयोगः ॥ १९ ॥

अतिकलहयोगः तीक्ष्णयुद्धयोगः

लग्ने कुजो(जेऽ)तिकलही द्युनको(गेऽ)धिकार
चनं(संस्थे) कुजो(जेऽ)तिमहृदायुधि(ध)तीक्ष्णयुद्धः ॥ १९ ॥

उच्चारयोगौ

[1]द्युनस्य(स्थ)दृष्टया च कुजो बुधं च
कुजं विधुर्धूनदृशा च पश्येत् ।

शीतयोगः

उच्चारयोगे(गो) दशमेऽर्कमन्दा
मृ(सृ)जः [प्र]पश्यति(न्ति) विधुं च शीतयुक् ॥ २० ॥

मुखरयोगौ

[2]क्षीयमाणविधुरत्र भौमयुक्
चाशुभे तु मुखरः प्रजायते ।
लग्न आस्फुजिति सप्तमदृष्टया
ज्ञः(ज्ञं) प्रपश्यति तदा मुखरः स्यात् ॥ २१ ॥

---

१ सप्तमदृष्टया कुजदृष्टे बुधे, एको योगः। सप्तमदृष्टया चन्द्रदृष्टे कुजे द्वितीयो योगः। इमावुच्चारयोगौ। अत्र जातः स्पष्टोच्चारणवान् भवति। रविकुजशनिभिर्दशमस्थैर्दृष्टे चन्द्रे शीतयोगः। अत्र जातः अस्पष्टवाक् भवति ॥ २० ॥

२ कुजयुते कृष्णपक्षगते क्षीणचन्द्रे पापराशिगते एको योगः। लग्नगतेन शुक्रेण सप्तमदृष्टया दृष्टे बुधे द्वितीयो मुखरयोगः। अत्र जातो वाचालो भवति ॥ २१ ॥

## हास्ययोगः निर्वीर्यवाग्योगश्च

[1]ज(स)ज्ञे हास्यपरः कुजेऽथ सबलेनेर्के(ऽनार्को)क्षितौ वित्कुजौ
ज्ञातीना खलु हासये(द:) परजना(ने) तद्वच्छनेर्भे ऽपि तौ ।
षष्ठाष्टान्त्यविधुश्च पश्यति सित चेल्लोकविस्मापना
वाक्स्फूर्तिर्मिथ आरसौम्यशशिनश्चावीर्यवाग्घ्युताः ॥ २२ ॥

## चोरयोगाः

[2]ज्ञार्कासृजो घु(द्यु)नगता विधुना चतुर्थ
पूर्णेऽक्षिताः प्रजनयन्ति सदोऽच्चचोरं ।
केन्द्रे कुजज्ञशशिनश्च शुभेन दृष्टा
श्चोरः कुजज्ञविधुवीक्षित ऐनिरस्ते ॥ २३ ॥

## पुंश्चलयोगाः

[3]शुक्रज्ञौ घु(द्यु)नगौ तथा दशमगौ स्यात्पुंश्चली(लोऽ)सृक्पि(क्सि)तौ
स्वे(खेऽ)स्ते वा परदारगः कुजसितौ तुर्ये च स्वे(खे) पुंश्चलः ।

---

१ बुधयुते कुजे हास्ययोगः । बलयुताभ्यां रविशनिभ्यां दृष्टे बुधयुते कुजे ज्ञातिविस्मापनहास्ययोगः । बलयुताभ्यां सूर्यशनिभ्यां दृष्टे शनिराशिगते बुधयुक्ते कुजे परजनविस्मापनहास्ययोगः । षष्ठे वा अष्टमे वा द्वादशे वा स्थितेन चन्द्रेण दृष्टे शुक्रे लोकविस्मापनवाक्स्फूर्तियोगः । बुधकुजचन्द्रेषु अन्योन्यदृष्टियुतेषु निर्वीर्यवाग्भवति ॥ २२ ॥
२ सप्तमगतेषु चन्द्रेण पाददृष्ट्या वा पूर्णदृष्ट्या वा दृष्टेषु रविकुजबुधेष्वेको योगः । केन्द्रगतेषु शुभदृष्टेषु चन्द्रकुजबुधेषु द्वितीयो योगः । सप्तमगते चन्द्रकुजबुधदृष्टे शनौ तृतीयो योगः । ॥ २३ ॥ ३ शुक्रबुधयोर्मिलितयोः सप्तमे वा दशमे वा स्थितौ द्वौ योगौ । कुजशुक्रयो-

मन्देनेऽन्दुत आस्फुजित्सुखगतः स्वस्तो(स्थोऽपि) वा पुंश्चलः
खे चाद्ये ज्ञसितार्कजा अथ दिने स्वर्क्षे सितः पुंश्चलः ॥ २४ ॥

## रोगयोगा रोगभङ्गयोगाश्च

[1]क्रूरः केन्द्रगतः शुभेक्षणविपुर(युक्) रोगी घटेऽसृ(सृ)क्सिते
दृपेक्षा नो(ऽज्यादृष्टो) गदयुक्तु केन्द्रगस्व(ख)लेंऽर्केऽन्द्रीक्षिने रक्षति
षष्ठे द्वौ खलुयुक्सतां न च गदी लग्नेऽनृजा[व]ष्टपेऽ
स्मिन् तुंगस्थशुभेऽक्षितेऽरुगथ रुक्क्रूरैर्हतोऽञ्जस्तनौ ॥ २५ ॥

## वृषणच्छेदयोगौ

[2]शुक्राच्चन्द्रात्परे मन्दश्चट(र)ति क्षितिजं यदा ॥
पश्यतश्चन्द्रशुक्रौ तु वृषणछिन्तु(त्तु) लोहतः ॥ २६ ॥

---

मध्ये एकस्मिन् सप्तमचतुर्थान्यतरगते अपरस्मिन् दशमगते द्वौ योगौ। शनियुते शुक्रे चन्द्रात् चतुर्थे वा दशमे वा स्थिते द्वौ योगौ। बुधशुक्रशनिषु लग्नदशमान्यतरगतेषु एको योगः। शुक्रे स्वराशिगते दिवा जन्मनि एको योगः। एवमष्टौ योगाः। एषु जातः पुंश्चलः (व्यभिचारी) भवति ॥ २४ ॥ १ शुभादृष्टे केन्द्रगते क्रूरग्रहे रोगयोगः। तुलागते कुजे गुरुशुक्राभ्यामदृष्टे रोगयोगः। पूर्वोक्तप्रथमयोगे केन्द्रगते पापे सूर्यचन्द्राभ्यां दृष्टे योगभङ्गः। प्रथमद्वितीययोगयोः भङ्गश्च पापग्रहस्य शुभयुतत्वे, तस्मात् षष्ठे ग्रहद्वययुतत्वे च भवति। लग्नगते अष्टमेशे वक्रगते वा, स्वोच्चगतेन शुभेन दृष्टे वा द्वौ रोगभङ्गयोगौ। लग्नगते चन्द्रे क्रूरदृष्टियोगादिना पीडिते एको रोगयोगः ॥ २५ ॥ २ शुक्राद्वा चन्द्राद्वा द्वितीयगते शनौ, कुजे चन्द्रशुक्राभ्यां दृष्टे शस्त्रचिकित्सादिना. लोहकृतो वृषणच्छेदः ॥ २६ ॥

[1]शनौ सार्के भूमि(ज)केन्द्रे सूर्यस्य ग्रहणं यदि ॥
पश्यतो बुधशुक्रौ तु वृषणच्छेद ईरितः ॥ २७ ॥

भगद्वयलिंगद्वययोगौ

[2]दिनजन्मनि सिंहसंस्थिते
दिनपे वा न(त)नुपे सिते यदा ।
इह वांपि(वाऽसि)चक(का)स्तु चैव(क)काः
शनिसूर्यारसितेन्दुजा यदा ॥ २८ ॥

दग्धः सूर्योऽस्तभागे चेद्भय(द्द्वयं) द्वयमु[दा]हृतं ॥
भगं लिङ्गं च विज्ञेयं जन्तोर्जातस्य निश्चितं ॥ २९ ॥

वन्ध्यायोगाः

[3]नो सूते तनुगेऽर्कजे शु(शु)र्नासितेऽथो मंदसूर्योयु(यौ यु)ने
कर्मेंदुन(न्दुने) गुरुः प्रपश्यति यदा नो गर्भिणी जायते ।

---

१ सूर्ययुते शनौ कुजकेन्द्रगते एको योगः । ग्रस्ते सूर्ये बुधशुक्रदृष्टे द्वितीयो योगः । ताजकरीत्या एकराशिगतानां ग्रहाणां प्रत्यक्षवैरा पूर्णा दृष्टिर्वर्तते । अतः सूर्यस्य बुधशुक्रदृष्टिरसंभाविनीति शङ्कानवकाशः ॥ २७ ॥ २ सूर्ये वा लग्नेशे वा शुक्रे वा सिंहगते, सूर्यकुजबुधशुक्रशनिष्वन्यतमे लाभगते, दिवा जन्मन्येको योगः । सप्तमराशावुदितो यो नवांशः तत्र स्थिते सूर्ये पापमुक्तनक्षत्रे वा राशौ वा स्थिते द्वितीयो योगः । अत्र जातस्य भगद्वयं वा लिंगद्वयं वा भगलिंगद्वयं वा भवति ॥ २८—२९ ॥ ३ लग्नगते शनौ, सप्तमगे शुक्रे एको योगः । सूर्ययुते शनौ सप्तमगे, दशमगे चन्द्रे द्वितीयो योगः । अत्र योगद्वये गुरुदृष्टौ योगभङ्गः । सप्तमराशिर्भाग्याशाष्ट-

इष्येऽद्वे(र्घे) सितसूर्यजौ द्विषि विधुघू(र्धू)नेऽपि वोऽप्रेक्षिते
नो सूतेप्यरिपैः शनिक्षितिसुतौ तोयर्क्षगौ नोद्भवः ॥ ३० ॥

## अल्पमैथुनयोगाः

[1]वक्रग्रहर्क्षराशि(गसि)ते पुरुषो(षौ)ऽगनानां
नौ(नो) मैथुनस्य समये खलु तोषदाता ।
फ(धू)ने सितं तनुगलग्नप ईक्षते चेत्
स्त्रीणां तथा यन(न य)मनेऽस्य नरस्य तोषः ॥ ३१ ॥

चन्द्रमाश्च शनिना सह वक्रात्
खे चतुर्थ (इ)लज्ञो(नजो) न च तोषः ।
भार्गवो(वी) यदि शनैश्चरहृद्दा
मैथुनान्न युवतिप्रिय एषः ॥ ३२ ॥

---

मनवमदशमैकादशद्वादशलग्नभुक्तभागेषु शुक्रशनियुतेषु, षष्ठे वा सप्तमे वा स्थिते चन्द्रे पापदृष्टे तृतीयो योगः। कर्काटकवृश्चिकमकरोत्तरार्धमीनगतयोः शनिकुजयोः, मिथुन-सिंहकन्यावृश्चिकान्यतमे लग्ने चतुर्थो योगः। अत्र जाता वन्ध्या भवति ॥ ३० ॥

१ जन्मकाले वक्री यो ग्रहस्तद्राशिगते शुक्रे एको योगः। सप्तमगे शुक्रे लग्नगेन लग्नेशेन दृष्टे द्वितीयो योगः शनियुते चन्द्रे कुजात् दशमगते तृतीयो योगः। चतुर्थगते शनौ चतुर्थो योगः। शुक्रे शनिहृद्दागते वा शनौ शुक्रहृद्दागते वा द्वौ योगौ। ताजिके त्रिंशांशवर्गः हृद्दानाम्ना व्यपदिश्यते। एवं षट् योगाः। एषु जातो मैथुनेन स्त्रियं न प्रीणयितुं समर्थः ॥ ३१—३२ ॥

बहुकालमैथुनयोगः

[1]द्वंद्वे वृषांशगसिते बहुकाल उक्तः

विरूपमैथुनयोगः

सिंहादिमार्द्धगसिते च विरूपकारी ।

स्त्रीलंपटयोगः

भौमेन संयुतसितो यदि षष्ठपोऽयं
कामाधिकं युवतिलंपटमाहुरार्याः ॥ ३३ ॥

शिश्नव्रणयोगाः

[2]जीवास्यु(स्फु)जिद्भ्यामलिगो न दृ[ष्टः]
कुजस्तनुस्थो हि(ह्नि) निशे(जे) षि(सि)तश्च ॥
[मन्दारदृष्टश्च विलग्नसंस्थः]
शिश्ने(श्ने) व्रणं चाथ कुजे सकेतौ ॥ ३४ ॥

---

१ मिथुनकन्याचापेषु वृषमनवांशगते शुक्रे दीर्घमैथुनयोगः । सिंहपूर्वार्धगते शुक्रे पश्वादिवत् विकृतमैथुनकर्ता जायते । कुजे शुक्रयुते, वृषभे वा चापे वा लग्ने जातः स्त्रीलंपटो भवति ॥ ३३ ॥ २ अस्मिन् पद्ये तृतीयः पादो लुप्तः । स भागो मया पूरितः । वृश्चिकलग्नगते कुजे शुक्रगुरुभ्यामदृष्टे दिवा जन्मनि एको योगः । वृषभे वा तुलायां वा स्थिते शुक्रे लग्नगते शनिकुजदृष्टे द्वितीयो योगः । केतुयुते कुजे तृतीयो योगः । अत्र योगत्रये जातस्य शिश्ने व्रणो भवति ॥ ३४ ॥

## वृषणगतविस्फोटकयोगाः

[1]मन्दः कुजो रिपुगतो व्ययगोऽथ रक्तात्

विस्फोटका वृषणगाः प्रभवन्ति घ(घ)र्मात् ।

केत्वन्वितो रविसुतो धु(द्यु)नसंस्थितश्चेत्

वातादिनांऽगविकृतिर्वृषणप्रदेशे ॥ ३५ ॥

## दण्डु(कण्डू)योगः

[2]वित्ते चन्द्रः स्निग्धराशौ शनिमेलापकृद्भवेत् ॥

भूमिभागे यदि शनिस्तदा दंडुः(कण्डूः) प्रजायते ॥ ३६ ॥

---

१ शनौ वा कुजे वा षष्ठद्वादशान्यतरगते द्वौ योगौ । अत्र योगद्वये जातस्य वृषणे रक्तदोषाद्वा पित्तदोषाद्वा पिटका जायन्ते । केतुयुते शनौ सप्तमगते वातादिनिमित्तेन वृषणपिटकसंभवः ॥ ३५ ॥ २ ताजिके नवपञ्चमदृष्टिः मेलापकेत्युच्यते । द्वादशसु राशिषु प्रतिषड्भागं पृथिव्यादिपञ्चभूतानामुदयो भवति । तत्र मेषसिंहवृश्चिकेषु प्रथमाः षड्भागाः अग्निभागाः । ततः परं षट् षट् भागाः क्रमेण वायुगगनपृथिवीजलानां भवन्ति । एवं वृषभकर्कटकतुलासु प्रथमाः षट् भागाः जलभागाः । ततः परं क्रमेण षट् षट् भागाः तेजोवाय्वाकाशपृथिवीनां भवन्ति । एवं प्रतिषड्भागं क्रमेण मिथुनकन्ययोः पृथिवीजलतेजोवाय्वाकाशानां चापमीनयोः आकाशपृथिवीजलतेजोवायूनां, मकरकुंभयोः वायुगगनपृथिवीजलतेजसां च उदयो भवति । यत्र कुत्रापि राशौ भूमिभागगते शनौ, चन्द्रे द्वितीयगते शनिना मेलापिते (नवपंचमदृष्ट्या दृष्टे) मित्रराशिगते दण्डु(कण्डू)योगः ॥ ३६ ॥

## प्लीहयोगा.

[1]दृष्टे क्रूरखगैः शुभैर्न च विधौ षष्ठेश्वरे रूपी(प्ली)हकृत्
दृष्टे सप्तमलग्नपे खलखगैः स्यात्प्लीहरोगी पुमान् ।
[यु]चेज्ज(क्ते ज)न्मनिवि न ष्टदग्ध क्ष शनि|ना] सूर्ये महाप्लीहरुक्
लग्नस्वामिनि वोऽग्रपीडितशनौ प्लीहोऽर्ष(र्श)मांगे स्थिते ॥ ३७ ॥

## उदररोगयोगाः

[2]जीवो भौमनिपीडितोऽपि च कुजात् वू(द्यू)ने स दृक्युक्तदा
क्रोडे रुग्रिपुपः खलैश्च सहितः सौम्यैर्गदः क्रोडजः ।
रुष्टोरु(षष्ठेऽस्त्र)ग्दिनजन्म चेदुदररुका(क् चा)थो रविर्वृश्चिके
चेज्जन्माद्यु(न्मन्यु)दरार्तिसन्धिगमि(म्प्रजनि)तं शूलं भवेत्प्राणिनां
॥ ३८ ॥

[3]रात्रिजन्म[नि] विधावदशुगे(शुभाढ्ये)
सूर्यपुत्रगृहगे खलु रोगी ।

---

१ शुभैरदृष्टे पापैर्दृष्टे चन्द्रे यत्र कुत्रापि स्थिते, कुंभे लग्ने एको योगः । सप्तमेशलग्नेशयोरुभयोरपि क्रूरैर्ग्रहैर्दृष्टयोर्द्वितीयो योगः । लग्नगतेन पापग्रहदग्धन-क्षत्रराशिगतेन शनिना युक्ते सूर्ये तृतीयो योगः । मकरकुंभान्यतरलग्नगते शनौ क्रूरग्रहैः पीडिते चतुर्थो योगः । अत्र चतुर्थे योगे मूलव्याधिनिमित्तो रुधिराश्रयरोगः (प्लीहरोगः) ॥ ३७ ॥ २ कुजपीडिते गुरावेको योगः । कुजेन सप्तमदृष्ट्या दृष्टे गुरौ द्वितीयो योगः । षष्ठेशे पापैर्युते शुभैर्दृष्टे तृतीयो योगः । षष्ठगते कुजे दिवा जन्मनि चतुर्थो योगः । सूर्ये वृश्चिकलग्नगते पञ्चमो योगः । एते उदररोगयोगाः ॥ ३८ ।
३ पापयुते चन्द्रे शनिगृहगते रात्रिजनने एको योगः । वक्रगते लग्नेशे

उदरशीतगुणयु[क्] ज्वरकासैः
संयुतो भवति दुर्बलदेही ॥ ३९ ॥

वक्रगोनृजु(रिपु)गृहे तनुनाथो
लग्नगो रिपु(पु)पषि(ति)स्तनुराशिं ।
उच्चकर्म(मर्क)तनयो यदि पश्येत्
तौ खगावुदररुग्विवत्त्विह साध्यः ॥ ४० ॥

[1]षष्ठराशौ यदा क्रूरः षष्ठपः क्रूरसंयुतः ॥
स[प्त]मे चोदरव्याधिं वदेत्तद्वानुसारतः ॥ ४१ ॥

अङ्गविकारयोगाः

[2]भौमः शनिः षष्ठदशस्थितः स्या
दंगे विकारस्त्वथ रात्रिजन्मा ।

---

षष्ठगते द्वितीयो योगः । षष्ठेशे लग्नगते तृतीयो योगः । तुलालग्ने वा लग्नेशे वा षष्ठेशे वा शनिदृष्टे चतुर्थो योगः । अत्र प्रथमयोगे जात उदर रोगी भवति । द्वितीयादिषु योगेषु जनने प्रतिक्रियापरिहार्योदररोगवान् भवति ॥ ३९—४० ॥

१ षष्ठराशिगते क्रूरे एको योगः । क्रूरयुते षष्ठेशे सप्तमगे द्वितीयो योगः अत्र जनने षष्ठेशतदाश्रितराशीशसंबन्धिना पित्तादिना उदररोग इति भावः ॥ ४१ ॥

२ कुजशन्योर्मध्ये एकस्मिन् षष्ठगते अपरस्मिन् दशमगते एको योगः । लग्नभोग्यभागद्वितीयतृतीयचतुर्थपञ्चमषष्ठसप्तमभुक्तभागगतेषु सर्वेषु क्रूरग्रहेषु, सूर्ये पापयुते द्वितीयो योगः । पञ्चमे वा नवमे वा स्थिते चन्द्रे पापमध्यगते तृतीयो योगः । इमे त्रयः अङ्गविकारयोगाः ॥ ४२ ॥

व्ययहयगोऽग्रैर्यदि पापयुग्रविः
स्यादन्तरक्तं(स्थे) हृदये(यां)कले(गेऽ)न्दौ ॥ ४२ ॥

अङ्गभङ्गयोगः

[1]क्रूरग्रहाणां यदि केन्द्रसंस्थौ
दिनेशचन्द्रौ तु विलिंगभ(म)ङ्गे ।

कटिभङ्गयोगः

लग्ने सिते सूर्यसुतः प्रपश्येत्
कटिप्रदेशे वि[क]ल(रा)लमङ्ग(ङ्गे) ॥ ४३ ॥

हस्तपादभङ्गयोगः

[2]शनिर्भौमो बुधश्चैव गुरुणा सहजातये(गताः) ॥
शुक्रो यदि चतुर्थस्थो हस्ते पादे त्विहापदः ॥ ४४ ॥

जंघाभङ्गयोगाः

[3]जीविं(वे)न स्यव(सह) पुण्याख्यसद्मनश्च पतिर्यदा ॥
पापाश्चतुर्षु चेत्संस्थौ(स्थो) जङ्घावैलिंग्यमूचिरे ॥ ४५ ॥

---

१ सूर्यचन्द्रयोर्द्वयोरपि क्रूरग्रहकेन्द्रगतत्वे अङ्गभङ्गयोगः। लग्नगते शुक्रे शनिदृष्टे कटिभङ्गः ॥ ४३ ॥ २ कुजबुधगुरुशनिषु तृतीयगतेषु शुक्रे चतुर्थगते हस्तपाद-भङ्गयोगः ॥ ४४ ॥ ३ गुरुयुते नवमेशे पापकेन्द्रगते एको योगः। कुजराहुचन्द्रयुते शनौ, षष्ठगते सूर्ये द्वितीयो योगः। षष्ठद्वादशान्यतरगते शनौ पापदृष्टे तृतीयो योगः। एते जङ्घाभङ्गयोगाः। सूर्यचन्द्रशनिषु षष्ठाष्टमगतेषु करचरणभङ्गयोगः ॥ ४५—४६ ॥

मन्दः कुजक्ष्व(जेन्द्र)गुयुग्मं(तो) रिपुभावगोऽर्को
जङ्घाविलिंगमथ षष्ठशनौ व्यये च ।
उभेऽक्षिते ममित(लिन)जङ्घ इहार्कचन्द्र
मन्दाः षडष्टसु करे चरणे त्विहापत् ॥ ४६ ॥

[1]पूर्णिमाचन्द्रभं षष्ठ चन्द्रो(न्द्रे) मेघे(घे)न मील(लि)ते ॥
जङ्घार्तिः षष्ठगे भौमे स्वग(स्वह)द्वा(स्थैस्थे) त्रिजन्मनि ॥ ४७ ॥

**षष्ठे चर्मरुजत्वक्षापदः ॥ ४९ ॥**

[2]सिताढ्यमन्दे [द]शमे नपुंसकं(कः)
षष्ठे व्यये वा(वाऽ)र्कसुतेऽबुराशौ ।

---

१ अस्मात्पद्यात्परं द्वौ श्लोकौ लुप्तौ । स्थूलाक्षरनिर्दिष्टो भागः तदन्तर्गतः । षष्ठगते चन्द्रे मेघाच्छादिते पूर्णिमायां जनने एको योगः । जन्मनक्षत्रे वा तस्माद् दशमैकोनविंशनक्षत्रयोर्वा स्थिते, षष्ठगते, स्वत्रिंशांशगते कुजे द्वितीयो योगः ॥ ४७ ॥

२ शुक्रयुते शनौ दशमगे एको योगः । कर्काटके वृश्चिके मकरपश्चार्धे मीने वा स्थिते, शुक्रात् षष्ठव्ययान्यतरगते शनौ द्वितीयो योगः । सूर्यचन्द्रयोरन्योन्यदर्शने तृतीयो योगः । शनिबुधयोरन्योन्यदर्शने चतुर्थो योगः । वृषभकर्काटकादिसमगृहगते सूर्ये कुजदृष्टे पञ्चमो योगः । बादरायणमतरीत्या—तृतीययोगे सूर्यस्य विषमराशिगतत्वं चन्द्रस्य समराशिगतत्वं चावश्यकम् । तथा चतुर्थयोगे बुधस्य विषमराशिगतत्वं शनेः समराशिगतत्वं चावश्यकम् । पञ्चमयोगे कुजस्य विषमराशिगतत्वमावश्यकम् । अन्यत्सर्वं पूर्ववत् । लग्नचन्द्रयोरुभयोरपि कुजदृष्टयोर्विषमराशिगतयोः षष्ठो योगः । समराशिगतं चन्द्रं विषमराशिगतं बुधं च यदि कुजः पश्यति तर्हि सप्तमो योगः । बादरायणरीत्या अस्मिन् योगे चन्द्रबुधयोरुभयोरपि विषमराशिगतत्वमावश्यकम् ।

नपुंसकं(को) वै खलु शुक्रतः स्यात्
प्रकीर्तितं ज्ञाति(तस्ताजि)करोमकाद्यैः ॥ ५० ॥

## होरामकरन्दे—

यद्यन्यो ते त्यं(न्यं) तरणिशशिनौ पश्यतस्तत्सुतौ वा
भौमो वार्के समगृहगतं लग्नचन्द्रावनोजे ।
युग्मौजर्क्षे हिमगु(गु)शशिजौ भूसुतेनेक्षितौ वा
पुंभागे ना(वा) तनुशशिसिताः षंडयोगाः षडेते ॥ ५१ ॥

### अण्डवृद्धियोगाः

[1]सौरे सितेऽष्टमगतेऽनिलभूतमण्डं
कोर्थे(जे) कुजान्वितसिते क्षितिभागमण्डं ।
भौमर्क्षगौ विधि(धु)सितौ शनिजीवदृष्ट्या
हीनौ तदा रुधिरकोपजमण्डमुक्तं ॥ ५२ ॥

### कुब्जजननयोगः

[2]यदि पृष्ठोदयराशिगं विधुं
रविजो वेश्मा(श्म)[ग]तःप्रप[श्य]ति ।

---

लग्नचन्द्रशुक्रेषु त्रिष्वपि विषमनवांशकतगतेषु अष्टमो योगः। सारावल्यां तु—लग्नचन्द्र-बुधेषु विषमराशिनवांशकोभयगतेषु शुक्रशनिदृष्टेष्वयं योग उक्तः ॥ ५०—५१ ॥

१ शनिक्षेत्रगते वा शनियुते वा शुक्रे अष्टमगते वातजोऽण्डवृद्धियोगः। कुजक्षेत्रगते कुजयुते शुक्रे अष्टमगे भूमिभागजोऽण्डवृद्धियोगः। कुजक्षेत्रगतयोः चन्द्रशुक्रयोः शनिगुरुदृष्टिरहितयो रक्तकोपजोऽण्डवृद्धियोगः ॥ ५२ ॥

२ मेषवृषमकर्कटकमकरधनूंषि पृष्ठोदयराशयः। तद्गते चन्द्रे चतुर्थगेन

कचुकायोदयपेऽल्पभाजने(भागगे)
प्रवदन्त्यत्र जनुर्लघोयसः ॥ ५३ ॥

चक्रीकाणयोगौ

[1]अर्कोदयगतश्चन्द्रो(न्द्रः) कीटे भौमं प्रपश्यति ॥
सप्तमैकादशस्थानाच्च(ने च)क्री(क)काणाह्वयः स च ॥ ५४ ॥

मेषे सिंहे मृगे कर्के वृश्चिके च धनुर्धरे ॥
धर्मसद्मपतिर्यत्र चक्री भवति निश्चितं ॥ ५५ ॥

मुखदुर्गन्धि(न्ध)योगाः

[2]दुर्गन्धि(न्धः) शनिभे क(कि)ये भृगुसुतेऽथो षष्ठपे(पो) त्रिन् मृगे
वाते(तो)ऽथो भृगुजे चतुष्टयगते दुर्गन्धि(न्ध)युक्पा(स्या)दथ ।
द्वायां हि शनेः सितो भवति दुर्गन्धि(न्ध)स्त्वथो लग्नगे
चन्द्रे लग्नगते सदा भवति दुर्गन्धिर्मु(न्धो मु)खे निश्चितं ॥ ५६ ॥

---

शनिना दृष्टे एको योगः। मेषवृषमकुंभमीना लघुराशयः। लघुराशौ लग्ने, लग्नेशे लघुराशिनवांशगते द्वितीयो योगः। अत्र जातो वामनो भवति ॥ ५३ ॥

१ वृश्चिकलग्नगतेन सूर्ययुतेन चन्द्रेण दृष्टे, सप्तमैकादशान्यतरगते कुजे एको योगः। ताजके एकादशस्थाने षडंशदृष्टिसद्भावादिदं युज्यते। मेषकर्काटकसिंहवृश्चिकचापमकरगते नवमेशे द्वितीयो योगः। अत्र जातः चक्रीकाणो भवति ॥ ५४—५५ ॥

२ मेषमकरकुम्भेषु शुक्रयुतेष्वेको योगः। मेषे मकरे वा लग्ने, बुधे मकरगे द्वितीयो योगः। शुक्रे केन्द्रगते तृतीयो योगः। शनित्रिंशांशगते शुक्रे लग्नगते चतुर्थो योगः। चन्द्रे लग्नगते पञ्चमो योगः। एते मुखदुर्गन्धयोगाः ॥ ५६ ॥

### वलीयुक्तयोगौ

[1]दग्धश्चन्द्रो ज्योतिषोऽनः खलेच(न)
मेलापी निर्वीर्ययुक्तो वलीयुक् ।
निष्प्राणोऽर्कोऽथोष्टरिष्टो(:फे) ज(च)लग्ने
सेन्दौ केन्द्रेऽसृग्वलीसंयुतः स्यात् ॥ ५७ ॥

### निर्बलयोगः

[2]चन्द्रं विरूपया दृष्ट्या यदि पश्येच्छनैश्चरः ॥
निष्प्राणश्च तदा जंतुः सदा जीवन्भवेद्द(द)यं ॥ ५८ ॥

### अङ्गच्छेदयोगः

[3]चन्द्रभौमौ यदा लग्ने [त्वं]गच्छेदः प्रकीर्तितः ॥
लग्नगेऽदौ कलत्रस्थे भौमेऽङ्गच्छेद ईरितः ॥ ५९ ॥

---

१ दुर्बले, किरणहीने, पापदग्धनक्षत्रराशिगते, पापग्रहेणैकेन मेलापिते (नवपञ्च-मदृष्टया दृष्टे), चन्द्रे एको योगः । दुर्बले सूर्ये द्वादशाष्टमान्यतरगते, लग्नगते चन्द्रे, केन्द्रगते कुजे द्वितोयो योगः । इमौ वलीयुक्तयोगौ ॥ ५७ ॥ २ ग्रहात् चतुर्थे वा दशमे वा पादमिता दृष्टिः । सा गुप्तवैरदृष्टिः । ग्रहात् सप्तमे वा ग्रहाश्रितराशौ वा दृष्टिः पूर्णा । सा प्रत्यक्षवैरदृष्टिः । इदं दृष्टिद्वयं क्षुतदृष्टिनाम्ना विरूपदृष्टिनाम्ना च व्यपदिश्यते ताजके । चन्द्रे विरूपदृष्ट्या शनिदृष्टे एको योगः । अत्र जातः सदा दुर्बलो भवति ॥ ५८ ॥ ३ चन्द्रकुजयोर्लग्नगतयोरेको योगः । लग्नगते चन्द्रे सप्तमगे कुजे द्वितीयो योगः । इमौ अङ्गच्छेदयोगौ ॥ ५९ ॥

स्वल्पकेशयोगः

१प्रण्य(प्राण)सद्मनि च मेषकर्कपौ(टौ)
वृश्चिकोऽथ शफरो मृगस्तथा ।
स्वल्पकेशयुतक(कु)र्चक(कं) नरं
कीर्तयन्ति खलु ताजिका ध्रुवं ॥ ६० ॥

॥ इति श्रीजातकसारदीपे ताजिकोक्तारिष्टयोगाध्यायश्चतुःसप्ततितमः ॥

---

## ॥ अथ होरासारोक्तसद्योमरणयोगाध्यायः पञ्चसप्ततितमः ॥

वर्षत्रयान्तर्मरणयोगः

२क्रूरर्क्षेऽर्कविधू त्रिगौ खलयुतौ व्याधिस्त्रिवर्षाद्विपौ

जातमात्रमरणयोगः

केन्द्रसंस्थौ(स्थेऽ)ष्टमपान्वियं(ते) निधनगः कश्चिद्विनश्येच्छिशुः ॥

---

१ मेषे वा कर्काटके वा वृश्चिके वा मकरे वा मीने वा पञ्चमगे स्वल्पकेशयोगः ॥ ६० ॥ २ क्रूरराशिगतयोः, पापयुतयोः तृतीयगयोः सूर्यचन्द्रयोरेको योगः । अत्र जातो वर्षत्रयान्तर्म्रियते । अष्टमेशयुते केन्द्रगते चन्द्रे, केनचित् ग्रहेण युते अष्टमे एको योगः । अत्र जातः जातमात्रो विनश्यति । चन्द्रात् सप्तमे रविकुजयुते, राहौ लग्नगते एको योगः । अत्र चतुर्थः पादोऽशुद्धः । तत्र मदीयः कुण्डलीगतः पाठोऽनुसर्तव्यः । चतुर्थाष्टमगतेषु सर्वेषु पापेषु द्वितीयो योगः । द्वितीयद्वादशयोर्वा, तृतीयैकादशयोर्वा, चतुर्थदशमयोर्वा, पञ्चमनवमयोर्वा, षष्ठाष्टमयोर्वा स्थितेषु सर्वेषु पापेषु तृतीयो योगः । एषु त्रिषु योगेषु जातो दशाहान्तर्म्रियते ॥ १ ॥

## दशाहान्तर्मरणयोगास्त्रयः

चन्द्रो(न्द्रा)स्तेऽर्ककुजे(जौ) तनौ तमसि चेन्मृत्युर्लयांबूपगाः
**भावामकपिजतथा जीवे[द्]शाहं शिशुः ॥ १ ॥**

[पापा वा यदि वामदक्षिणगता जीवेद्दशाहं शिशुः ॥ १ ॥]

## षण्मासान्तर्मरणयोगौ

द्रेकाणांगगताद्यु(णात्तनुगात् द्यु)ने खलैरवो(खगे) क्षीणेन्दुलग्ने मृति
भाग्योल्पो(ग्यात्मो)पगता(ताः) खि(ख)लाः [क्षयिविधोः
सौम्यग्रहैर्वर्जिताः ॥]

[आपोक्लीबगता ग्रहा] विबलिनः षण्मासतः स्यान्मृति
[लग्नेशेऽह्नि तनौ विधौ रिपुगते मृत्युस्थिते वा मृतिः ॥ २ ॥]

## अल्पायुर्योगाः

[२] [कृष्णेन्दौ शुभपापदृष्टिसहिते वा स्वल्पजीवी भवेत्]

---

१ सप्तमे पापयुते, लग्ने क्षीणचन्द्रयुते एकः सद्योमरणयोगः। तच्च मरणं लग्नगतद्रेक्काणाधिपतिस्वभावैः पित्रादिभिर्भवति। होरासारे तु-पापग्रहद्रेक्काणराशिर्लग्न-द्रेक्काणराशेः सप्तमो यदि भवति तदा क्षीणेन्दौ लग्नस्थिते अयं योग उक्तः। क्षीणचन्द्रात् पञ्चमनवमगतेषु शुभरहितेषु सर्वेषु पापेष्वेको योगः। दुर्बलेषु सर्वेषु ग्रहेषु तृतीयषष्ठ-नवमद्वादशगतेषु द्वितीयो योगः। अत्र योगद्वये जातः षण्मासजीवी भवति ॥ २ ॥

२ क्षीणचन्द्रे मिश्रग्रहदृष्टे एको योगः। लग्नेशलग्ननवांशेशचन्द्राश्रितराशीशतदाश्रित-नवांशेशेषु, सूर्यसांनिध्यवशात् अस्तं गतेषु, सप्तमगतेषु द्वितीयो योगः। अस्तमिते षष्ठाष्टमव्ययगते गुरौ तृतीयो योगः। सूर्यसांनिध्यवशात् अस्तमितयोः लग्नेशचन्द्राश्रित-राशीशयोः षष्ठाष्टमव्ययगतयोश्चतुर्थो योगः। एतद्योगचतुष्टयजातोऽल्पायुर्भवति। लग्नेशात्

[होराजन्मनवांशपा मदनगाश्चास्तं गताश्चे]न्मृतिः ॥

जीवोऽर्कोऽपगतो प्य(व्य)याष्टरिपुगते चे(त्तद्व)[त्तनूजन्मपौ]

सद्योमरणयोगाः

लग्नेशात्(शे) द्युन(मृति)गे विधौ क्षदिति(यिणि) राह्वाढ्ये च दृष्टे
मृतिः ॥ ३ ॥

क्षीणेन्दुं सख[लं] हि पश्यति तमोऽस्ते लग्न(जन्म)पः स्यान्मृति
लग्नेशे द्युनगे न(च) राहुविजि(सहि)ते मृत्युर्दिनैः सप्ततिः(भिः) ।

एकर्क्षोऽपगपापचन्द्ररवयः केन्द्रे मृतिः केन्द्रगे
लग्नेशे [स]खल(ले) व(च) सद्द(दृद्द)गपु(यु)जि छिद्रे खले
स्याद्विपत् ॥ ४ ॥

सजो(ज्ञोऽ)र्को न(र्कश्च) शुभेऽक्षितो मृतिकरोभावो(र्केन्दू)पग(रा)गे
तथा(परी)
वर्ष(र्षे) लग्नखलौ(ले) बलोनतनुपे मासत्रये तस्व(नश्य)ति ।

---

सप्तमगे, राहुयुते वा दृष्ट वा क्षीणचन्द्रे एको योगः। पाठान्तररीत्या राहुणा युते वा दृष्टे वा क्षीणचन्द्रे कुंभगते, कुळीरे लग्ने एको योगः। अत्र जातः सप्तमे वर्षे म्रियते ॥ ३ ॥

१ क्रूरयुतेन राहुणा दृष्टे क्षीणचन्द्रे, लग्नेशे (पाठान्तररीत्या चन्द्राश्रितराशीशे) सप्तमगे एको योगः। अत्र जातः षष्ठे वा अष्टमे वा वर्षे म्रियते। राहुयुते लग्नेशे सप्तमगे सप्तभिर्दिनैर्वा एकविंशतिदिनैर्वा मासे वा मरणम्। एकराशिगतयोः, पापेनैकेन युतयोः, सूर्यचन्द्रयोः केन्द्रगतयोरेको योगः। अत्र जातः सप्तमे वर्षे म्रियते। पापयुते शुभदृष्टियोगरहिते [illegible]गते लग्नेशे, अष्टमगे एकस्मिन् पापे विषजलकृतमरणयोगः ॥ ४ ॥ २ बुधयुते

मेषाद्यर्क्षलवे विधौ मृतिरिहाष्टां ८ काऽ ९ कृतौ २२ वाऽकृतौ २१
पंचे ५ न्दु १ [ब्धि] ४ जिते(ने) २४ धृतौ १८ नख २० मिते स्वर्गे
२१ च दिक् १० संमिते ॥ ५ ॥

[1]केन्द्राष्टेन्दुरसौम्यवुग्र(युङ्न) शुभयुग्मा(ङ्मा)त्रा प्रनश्येच्छिशु
श्चन्द्रः सन्धिवदु(चतु)ष्टमेन(येऽथ) खलयुग्दृष्टो ज्ञ(न) सौम्ये-
मृ(र्म्यैर्मृ)तिः ।

[सौम्यादृष्ट्युतो निहन्ति नियतं चन्द्रः सपापो व्यये
लग्ने वा निधनेऽथ वाऽथ मदने धर्मेऽथ वा पुत्रभे ॥ ६ ॥

## अरिष्टभङ्गयोगाश्चत्वारः

[2]केन्द्रे धर्मसुते(तेऽ)गये(पे) च सबले रिष्टं विनश्येद्(द्द)ली
केन्द्रस्थः शु(सु)शुभोऽष्टमेशरहितो रिष्टस्य भङ्गस्तदा ।

---

सूर्ये शुभदृष्टे एको योगः। अत्र जातः एकादशे वर्षे म्रियते। सूर्यचन्द्रग्रहणपरिवेषकाले, पापयुते लग्ने, लग्नेशे दुर्बले जातः मासत्रयं जीवति ॥ ५ ॥

१ अत्रोत्तरार्धं लुप्तमिति भाति। तत्र मदीयं पद्यार्धं पठनीयम्। शुभयोगरहिते, पापयुते, केन्द्रे वा अष्टमे वा स्थिते, चन्द्रे मातृपुत्रयोर्नाशः। मीनमेषयोः मिथुनकर्काटकयोः कन्यातुलयोः धनुर्मकरयोश्च संधिकाले जनने, शुभदृष्टियोगरहिते पापदृष्टे पापयुते चन्द्रे शिशुनाशः। शुभदृष्टियोगरहिते पापयुते चन्द्रे लग्ने वा पञ्चमे वा सप्तमे वा अष्टमे वा नवमे वा द्वादशे वा स्थिते शिशुनाशः ॥ ६ ॥ २ बलयुते लग्नेशे केन्द्रे वा त्रिकोणे वा स्थिते एको योगः। अष्टमेशभिन्ने शुभे केन्द्रगते द्वितीयो योगः। शूलिनि अनस्तमिते स्वक्षेत्रगते ग्रहे लग्नचतुर्थदशमान्यतमगते तृतीयो योगः। चन्द्रे वा लग्ने वा सर्वग्रहदृष्टे चतुर्थो योगः। एते रिष्टभङ्गकराः ॥ ७ ॥

स्वक्षस्थः खंसुखोदये बल(लि)खगो नास्तं गतो रिष्टहृत्

चन्द्रे सर्वखगेऽक्षितेऽपि च तनौ रिष्टस्य भङ्गं वदेत् ॥ ७ ॥

॥ इति श्रीजातकसारदीपे होरासारोक्तसद्योमरणयोगाध्यायः पञ्चसप्ततितमः ॥

---

## ॥ अथ योगायुर्दाययोगाध्यायः षट्सप्ततितमः ॥

### विंशतिवर्षायुर्योगाः

[1]जन्मेशार्कयुते तनौ च सदसद्दृष्टे खलैः केन्द्रगे

जातोऽल्पायुरवीर्यकेन्द्रगयमार्कौ वि(विं)शदारे तनौ ।

सूर्यारौ तनुगे(गौ) चखे(रे) खगगुरौ धर्मात्मजेद्रौ(न्द्रौ) विप

### पञ्चविंशतिवर्षायुर्योगौ

द्विंशे नीचलवे क्षर्योदुरमृ(स्त)गार्किप्रेक्षितस्तत्त्वकं ॥ १ ॥

---

१ चन्द्रराश्यधिपेन सूर्येण च युते लग्ने मिश्रग्रहदृष्टे, पापेषु केन्द्रगतेष्वेको योगः । होरासारे तु चन्द्रराशीशे वा लग्नेशे वा अस्तमिते शुभदृष्टिरहिते, केन्द्रगतेषु पापेष्वयं योग उक्तः । बलहीनयोः केन्द्रगयोः शनिसूर्ययोः, कुजे लग्नगते द्वितीयो योगः । चरराशौ लग्नगतयोः सूर्यकुजयोः, दशमगे गुरौ, पञ्चमनवमगते चन्द्रे तृतीयो योगः । एतद्योगत्रयजातः विंशे वर्षे म्रियते । वृश्चिकनवांशगते, कुजशनिदृष्टे क्षीणचन्द्रे एको योगः । होरासारे तु—अस्मिन् योगे चन्द्रस्याष्टमगतत्वं चापेक्षितम् । तृतीयषष्ठनवमद्वादशगतेषु शुभेषु, षष्ठाष्टमगते चन्द्रे, चन्द्रात् अष्टमगतेषु पापेषु द्वितीयो योगः । एतद्योगद्वयजातः पञ्चविंशे वर्षे म्रियते । सप्तमाष्टमगे चन्द्रे, द्वितीय-द्वादशयोरेकैकपापयुतयोः, गुरुराहुयुतयोश्च जातस्त्रिंशे वर्षे म्रियते । एतद्धोरासारमतम् । एतदन्यमते तु पूर्वोक्तयोगद्वयेऽपि त्रिंशे वत्सरे मृतिः । गुरुयुते शुक्रे लग्नगते, कुजचन्द्रयोः पञ्चमगतयोः, चन्द्रे दुर्बले अल्पायुर्योगः ॥ १—२ ॥

आपोक्कि(क्लि)स्थशुभौ(भैः) [शशि]न्यरिलये चन्द्राष्टमोऽथैर्भव(वे)

त्रिंशद्वर्षायुर्योगाल्पायुर्योगौ

द्वि(त् त्रिं)शच्चाष्टमदे विदु(धु)र्व्ययधनाब्ज(नक्ष)स्थौ खले(लौ)चेयदि ।
राह्वी(ह्वि)न्द्रेज्यसु(यु)तौ च विंशतिमितं सेज्यः सितो लग्नगः
पुत्रस्थारशनी वपुश्च(विधुर्न) बलवानल्पायु[षा] रस्तदा(संयुतः) ॥ २ ॥

[1]लग्नेऽर्केऽब्ज(न्द्व)गवो व्यये वगजयु(सुरगुरु,विंश्चा(विंशा)युरिन्दोस्तनोः
छिद्रेशौ [तु च]तुष्टयेऽत्र च न स(सं)युक्तो(क्तो) ग्रहोऽन्यो यदि ।
कश्चित् छिद्रगतः खवह्निशरदः क्षीणे स्वमेन्दौ रध(ख)लेऽ
ष्टस्थे केन्द्रगमृत्युपे व(च) विव(ब)लेऽङ्गेऽश(शेऽ)ब्दविंशन्मितं ॥ ३ ॥

[2]लग्नेशाष्टमपौ लये ख[ल]युतो(तौ) स्तः सप्तविंशात्त(शे त)नौ
चैन्द्रे(मन्द)[प्रे]क्षितें(त)सेज्यराहुखलकौ छिद्रे ग्रहे द्विकं(द्वीक्षणे) ।
छिद्रेशे तनुपुत्रभाग्यभवने छिद्रोऽपगे लग्नपे
पापर्क्षे चतुराद्य(ढ्य)विंशतिमितं चायुः परं कीर्तितं ॥ ४ ॥

---

१ रविचन्द्रराहुषु लग्नगतेषु, गुरौ द्वादशगते होरासाररीत्या अष्टाविंशे एतद्ग्रन्थरीत्या विंशे वर्षे म्रियते । लग्नात् चन्द्राच्च अष्टमेशयोः भिन्नकेन्द्रगतयोः, अष्टमगते एकस्मिन् ग्रहे त्रिंशे वर्षे म्रियते । होरासारे तु अस्मिन् योगे लग्नचन्द्रयो-र्दौर्बल्यमप्यपेक्षितम् । क्षीणचन्द्रे कर्काटकगते, एकस्मिन् पापे अष्टमगे, अष्टमेशे केन्द्रगते, लग्ने दुर्बले विंशे होरासाररीत्या त्रिंशे वर्षे म्रियते ॥ ३ ॥

२ पापयुतौ लग्नेशाष्टमेशौ मिलितावष्टमगतौ चेत्सप्तविंशे वत्सरे मरणम् । होरासारे तु लग्नेशस्फुटाष्टमेशस्फुटयोर्योगे केन्द्रे वा अष्टमे वा स्थिते, तत्रैव कस्मिंश्चित्

[1]सद्दृष्टे न च सोऽग्रलग्नपयुते[षष्ठेऽ]ष्टमे विंशकें(के)

[वर्षे] केन्द्रगमृत्युपे बलविपुल(युग्ल)ग्नेश्वरे त्रिंशकं(के) ।

षट्त्रिंशद्वर्षायुर्योगाः

आपोक्ति(क्लि)स्थविधौ तथा च तनुपे पापेऽक्षिते निर्बले

द्वात्रिंशद्रिदुतो(पुगो)दये च खलमध्यस्थे रवौ ऽयब्दकं(र्कके) ॥ ५ ॥

[2]सन्ध्यायां सखलेंऽगयेत्क्रि(पे क्रि)यगते केन्द्रे सितेज्यौ त्र्यं(मृति)

ऽयब्दं(ऽऽयर्के) लग्नकुजाऽजकौ(गतेन्द्विनौ) कु(गु)लिकके केन्द्राष्टवर्ज्ये शुभैः ।

---

पापे स्थिते अयं योगः कथितः । रविकुजगुरुराहुयुते शनिदृष्टे लग्ने, अष्टमे ग्रहेणैकेन युते द्वात्रिंशे वर्षे मरणम् । होरासारे तु गुरुराहुयुते शनिदृष्टे मेषसिंहवृश्चिकधनुर्मकरकुम्भान्यतमे लग्ने, ग्रहेणैकेन युते अष्टमे अयं योगः कथितः । अष्टमेशे लग्नपञ्चमनवमान्यतमगते, लग्नेशे पापराशावष्टमगते चतुर्विंशे वर्षे मरणम् । होरासारे तु—अस्मिन् योगे लग्नेशस्य पापग्रहदृष्टियोगश्चावश्यको इति कथितम् ॥ ४ ॥

१ शुभादृष्टे क्रूरग्रहयुतेन लग्नेशेन युते षष्ठे अष्टमे वा विंशे वर्षे मरणम् । अष्टमेशे केन्द्रगते, लग्नेशे बलहीने त्रिंशे वर्षे मरणम् । तृतीयषष्ठनवमद्वादशान्यतमगते चन्द्रे, पापदृष्टे दुर्बले लग्नेशे तृतीयषष्ठनवमद्वादशान्यतमगते द्वात्रिंशे वर्षे मरणम् पापमध्यगते शत्रुक्षेत्रगते लग्नगते सूर्ये षट्त्रिंशे वर्षे मरणम् ॥ ५ ॥

२ पापयुते लग्नेशे मेषगते (होरासाररीत्या तृतीयषष्ठनवमद्वादशान्यतमगते), गुरुशुक्रयोः केन्द्रगतयोः, सन्ध्याकाले जनने एको योगः । कुजचन्द्रयोः (होरासाररीत्या रविचन्द्रयोः) लग्नगतयोः, गुलिककाले, शुभेषु केन्द्राष्टमभिन्नस्थानगतेषु द्वितीयो योगः । अत्र योगद्वये जातः षट्त्रिंशे वत्सरे म्रियते । अष्टमे शुभयुक्ते, अष्टमेशयुते वृषभसिंहवृश्चिककुम्भान्यतमे लग्ने चत्वारिंशे वर्षे मरणम् । अष्टमभावनवांशगते लग्नेशे, लग्नगते (होरासाररीत्या लग्ननवांशगते) पापयुते अष्टमेशे पञ्चाशे वर्षे मरणम् ॥ ६ ॥

### मध्यमायुर्योगाः

सौम्यो(म्येऽ)ते निधने तनौ निध[न]पे राशौ स्थिते(रे) वा(खा)[ब्ज]यः
छिद्रांशे तनुपेऽङ्गपे(गे) च मृतिपे सोग्रे च पंचाब्दकं(शके) ॥ ६ ॥

[1]सारेऽगे(ङ्गेऽ)र्कशनी त्रिषष्ठभगतौ केन्द्रेऽष्टमेशे युगा
[ब्ध्या]युग्मा(म)ध्यमसद्धर(ब)र्क्षगशुभैः सोग्रे विसत्केन्द्रके ।
सौम्यैर्वीर्ययुतैर्गणोत्तमगते चन्द्रे खलैर्लग्नपे(गे)
दृष्टेऽष्टाद्वि(ब्धि)शरत्समा(त्सुखा)ष्टमखलैर्मध्यं न सद्दृग्युतैः ॥ ७ ॥

[2]चन्द्रादह्नि(ह्वापि) तथैव मध्यमथ च द्वा(द्यं)गोदयस्थे शनौ
रिःफेऽब्जेऽष्टखले द्विपंचशरदस्तद्ज्ञस्तदायुः स्मृतं ।

---

१ कुजे लग्नगते, तृतीयषष्ठान्यतरगतयोः शनिसूर्ययोः, अष्टमेशे केन्द्रगते चतुश्चत्वारिंशे वर्षे मरणम् । केन्द्रभिन्नस्थानगतेषु पापराशिगतेषु पापनवांशगतेषु शुभेषु, केन्द्रगतेषु पापेषु मध्यमायुर्योगः । शुभेषु बलयुतेषु (होरासाररीत्या बलरहितेषु), चन्द्रे वर्गोत्तमगते, लग्नेशे पापैर्दृष्टे (होरासाररीत्या लग्नगते वर्गोत्तमांशगते चन्द्रे पापैर्दृष्टे), अष्टचत्वारिंशे मरणम् । शुभदृष्टिरहितेषु चतुर्थाष्टमान्यतरगतेषु सर्वेषु पापेषु मध्यमायुर्योगः ॥ ७ ॥

२ चन्द्रात् चतुर्थाष्टमगतेषु शुभादृष्टेषु सर्वेषु पापेषु दिवा जनने मध्यमायुर्योगः । अत्र होरासाररीत्या दिवा जननं नापेक्षितम् । मिथुनकन्याधनुर्मीनान्यतमलग्नगते शनौ, द्वादशगे चन्द्रे, अष्टमगते एकस्मिन् पापे द्विपञ्चाशे वर्षे मरणम् । होरासारे तु चन्द्रे अष्टमे वा द्वादशे वा स्थिते, शनौ पूर्ववत् स्थिते अयं योग उक्तः । कर्काटकवृश्चिकान्यतरलग्नगते पापयुते रवौ, द्वितीयगे चन्द्रे, केन्द्रभिन्नस्थानगते गुरौ, पञ्चपञ्चाशे (होरासाररीत्या पञ्चाशे) वर्षे मरणम् । शुभेषु चतुर्थदशमान्यतरगतेषु, द्वादशगते चन्द्रे, अष्टमगते पापे, गुरुशुक्रयोरेकराशिगतत्वे पञ्चाशे वर्षे मरणम् । होरासारे त्वस्मिन् योगे, चतुर्थदशमगतत्वं पापानामेव न, शुभानामित्युक्तं । लग्नेशे शनिनवांशगते,

कर्क्यां(र्क्ये)स्युद्गमके(गे) रवौ च सबले खे(ह्वे)न्दौ विकेन्द्रौ(न्द्रे) गुरू(रौ)
पंचाशच्छरयुक्(दोऽ)शुभे खसुखगे चन्द्रे व्ययेऽष्टोऽप्रके ॥ ८ ॥

एकर्क्षे गुरुभार्गवौ तु खशराः शन्यंशगे लग्नपे
छिद्रेशाद्य(ढ्य)विधौ व्ययाष्टरिपुगेऽस्मिन्चा(स्मिंश्चा)ष्टपंचाब्दकं ।
लग्नेशाद्व्ययनैधनारिगखलाः छिद्रोप(द्रान्य)गाः सद्ग्रहाः
षष्टिर्लग्नपजन्मपौ रविंयुतौ वा मृत्युगौ वाक्पतिः ॥ ९ ॥

पूर्णायुर्योगाः

केन्द्रादन्यगतोऽरूः(ब्द)षष्टिरिपु(षु)युक्सूर्यः कुजार्क्यन्वितो
लग्ने हीनबले गुरौ व्ययसुते चन्द्रे भवेत्सप्ततिः ।
लद्विभा(ग्नद्वि)त्रिसुखे चतुर्मुख खगैर्युक्ते चिरायुः सुता
द्येष्व(ष्वे)तैः खरसा नवादि(ग)खगैः सर्वैरिहाल्पं स्मृतं ॥ १० ॥

---

अष्टमेशयुते षष्ठाष्टमव्ययान्यतमगते चन्द्रे अष्टपञ्चाशे वर्षे मरणम् । लग्नेशात् षष्ठाष्टमव्ययान्यतमगतेषु सर्वेषु पापेषु, अष्टमगतेषु सर्वेषु शुभेषु षष्टितमे वर्षे मरणम् । होरासारे त्वस्मिन् योगे शुभानां अष्टमभिन्नराशिस्थितिरावश्यकेत्युक्तम् । लग्नेशचन्द्राश्रितराशीशयोः सूर्यसान्निध्यवशादस्तंगतयोः अष्टमराशिगतयोः, केन्द्रभिन्नस्थानगते गुरौ पञ्चषष्टितमे वर्षे मरणम् । कुजशनियुते सूर्ये लग्नगते, गुरौ बलहीने, पञ्चमद्वादशान्यतरगते चन्द्रे सप्ततितमे वर्षे मरणम् । लग्ने वा द्वितीये वा तृतीये वा चतुर्थे वा चतुर्ग्रहयोगपञ्चग्रहयोगषड्ग्रहयोगसप्तग्रहयोगानामन्यतमस्य संभवे पूर्णायुर्योगः । अथ वा एषु चतुर्ष्वपि स्थानेषु ग्रहयुक्तेषु पूर्णायुर्योगः । एवमेव पञ्चमषष्ठसप्तमाष्टमगतेषु पूर्ववत् स्थितेषु षष्टिवर्षायुर्योगः । एवमेव नवमदशमैकादशद्वादशगतेषु पूर्ववत् स्थितेषु अल्पायुर्योगः । नवमादिस्थानचतुष्टये सर्वेषां ग्रहाणां स्थितिरावश्यका, पूर्वत्र न तथा ॥ ८—१० ॥

## अथ होरासारोक्तारिष्टयोगभङ्गाध्यायः सप्तसप्ततितमः

### पूर्णायुर्योगाः

क्रूरांश(रर्क्ष)स्थखगै(लै)श्चतुष्टयगतै(शुभै)श्चाशीतिवर्षं खलौ(लैः)
क्रूरर्क्षे शुभभे शुभैर्बलयुते लग्नेश्वरे स्यात्परं ।
जीवांशोपगताः कुजार्किरवयः केन्द्रस्थिता लग्नगे
जीवे व्यष्टगशेषकैः शरयुताशीत्या भवेज्जीवितं ॥ १ ॥

सौम्यांशस्थखलैश्च वृद्धिषु गतैर्वा सद्ग्रहैः केन्द्रगैः
खार्के सार्ककुजोऽष्टमेपि च तनौ केन्द्रस्थजीवे शतं ।
वागीशोदयपौ चतुष्टयगतौ केन्द्रत्रिकोणाष्टगै (मैः)
पापैः स्याच्छ(पोनैः श)तमाराजाश(मोजभाग)गशुभा धर्माम्बुसंस्थाः
खलाः ॥ २ ॥

युग्मार्क्षांशगताः [विलग्नभवगा] पूर्णः शशी लग्नगः
स्यादायुः शतमीरितं गदवियुग्लक्ष्मीयुतस्यापि च ॥ ३ ॥

---

१ क्रूरग्रहनवांशगतैः सर्वग्रहैः केन्द्रगतैः अशीतितमे वर्षे मरणम् । होरासाररीत्या क्रूरराशिगतैः पापग्रहैः, केन्द्रगतैं शुभग्रहैः अशीतितमे वर्षे मरणम् । पापेषु क्रूरराशिगतेषु, शुभेषु शुभराशिगतेषु, लग्नेश्वरे बलयुते परमायुर्योगः । रविकुजशनिषु गुरुनवांशगतेषु केन्द्रगतेषु अष्टमभिन्नस्थानगतेषु पञ्चाशीतितमे वर्षे मरणम् ॥ १ ॥

२ सर्वेषु पापग्रहेषु शुभग्रहनवांशगतेषु तृतीयषष्ठदशमैकादशतेषु, एको योगः । शुभेषु सर्वेषु केन्द्रगतेषु द्वितीयो योगः । अत्र योगद्वये जातः विंशत्यधिकशततमे वर्षे म्रियते । सूर्ययुते कुजे लग्ने वा अष्टमे वा स्थिते, गुरौ केन्द्रगते शतवर्षजीवी भवति । लग्नेशगुर्वोरुभयोरपि केन्द्रगतयोः, केन्द्रत्रिकोणाष्टमेषु पापयुतेषु, (होरासाररीत्या पापरहितेषु) शतवर्षजीवी भवति । सर्वेषु शुभेषु ओजराशिनवांशगतेषु नवमचतुर्थान्यतरगतेषु लग्नैकादशगतेषु, पूर्णचन्द्रे लग्नगते शतवर्षजीवी भवति ॥ २—३ ॥

[1]लग्नाधिपोऽतिबलवानशुभैरदृष्टः
केन्द्रस्थितैः शुभखगैरवलोक्यमानः ।
मृत्युं विधूय विधूय विदधाति सुदीर्घमायुः
साद्धे(र्धं) गुणैर्बहुभिरूर्जितयाव(राज)लक्ष्म्या ॥ ४ ॥

[2]लग्नेश्वरादतिबली निधनेश्वरोऽसौ
केन्द्रस्थितो विधनरिष्य(ःफ)गतैश्च पापैः ।
अस्यायुरल्पमथ वा यदि मध्यमायु
रुत्सार्य(ह)संकटवशात्परमायुरेति ॥ ५ ॥

॥इति श्रीनृसिंहदैवज्ञविरचिते जातकसारदीपे होराभिमतनानाविधायुररिष्टयोगमहाध्यायः ॥

---

## ॥ अथ यवनोक्तयोगायुर्दायाध्यायः अष्टसप्ततितमः ॥

### अल्पायुर्योगमध्यमायुर्योगौ

[3]छिद्रे खेटविवर्जिते बलयुतः केन्द्रे शुभः स्यात्तदा
त्रिंशत्सौम्ययुतेऽक्षिते द्विगधिका स्वत्र्यंशगश्चेत्खगे ।

---

१ पापग्रहादृष्टे, केन्द्रगतैः सर्वशुभग्रहैर्दृष्टे, पूर्णबले, लग्नेशे एको दीर्घायुर्योगः ॥ ४ ॥ २ लग्नेशापेक्षया अधिकबलयुते अष्टमेशे केन्द्रगते, पापग्रहेषु द्वितीयद्वादश-भिन्नस्थानगतेषु अल्पायुर्योगः । अस्मिन् योगे पूर्णायुर्योगस्यान्यस्य सद्भावे मध्यमायु-र्योगः । पूर्णायुर्योगानामनेकेषां संभवे कायकल्पादिसंपादनोत्साहवशात् अल्पायुर्यो-कमृत्युः[illegible]निमित्तसंकटाच्च पूर्णायुर्योगः ॥ ५ ॥ ३ ग्रहरहिते अष्टमे, बलयुते शुभे एकस्मिन् ग्रहे केन्द्रगते त्रिंशद्वर्षमितमायुः । पूर्वोक्तयोगे केन्द्रगते शुभग्रहे

जीवः सप्तकविंशतिस्त(स्त्व)थ तनो(नौ) स्वर्क्षेद(न्दु)स्ते शुभः

पूर्णायुर्योगाः

षष्टिः कर्कतनौ गुरौ शुभखगाः कोणेऽथ(त्व)शीति(ति)र्भवेत् ॥ १ ॥

[1]केन्द्रस्थे च शुभे गुरौ तनुगते छिद्र(द्रे) ग्रहोने खले

लग्नेन्दू न विलोकितौ खतुरगाः केन्द्रे सितेज्यौ शतं ।

जीवे कर्कतनौ चतुष्टयगते शुक्रे शतायुस्तथा

.................................................... ॥ २ ॥

मन्दे लग्नतमः(पः)स्थितेऽन्त्यमृतिगे चन्द्रे शतायुर्नृणां

त्यार्द्धे लग्नगते मृगाद्यदलगारे केन्द्रगेज्ये शतं ।

धीकेन्द्रार्कनवान्यगा यदि खला लग्ने गुरोर्भे सिते

केन्द्रे चाष्टशुभेऽस्य(थ) केन्द्र[ग]गुरौ मृत्यौ शुभे स्याच्छतं ॥ ३ ॥

---

शुभग्रहान्तरेण युते वा दृष्टे वा चत्वारिंशन्मितमायुः । गुरौ स्वराशौ स्वद्रेष्काणे स्थिते सप्तविंशतिवर्षमितमायुः । कर्काटकलग्नगते चन्द्रे, मकरगते एकस्मिन् शुभे षष्टिवर्षमितमायुः । कर्काटकलग्नगते गुरौ, पञ्चमनवमलग्नान्यतमगतयोर्बुधशुक्रयोरशीतिवर्षमितमायुः ॥ १ ॥ १ अत्र चतुर्थः पादो लुप्तः । गुरौ लग्नगते, अष्टमे ग्रहरहिते, केन्द्रगते एकस्मिन् शुभग्रहे, लग्नचन्द्रयोरुभयोरपि पापदृष्ट्यभावे सप्ततिवर्षमितमायुः । गुरुशुक्रयोरुभयोरपि केन्द्रगतत्वे एको योगः । कर्काटकलग्नगते गुरौ, केन्द्रगते शुक्रे द्वितीयो योगः । लग्ननवमान्यतरगते शनौ, अष्टमद्वादशान्यतरगते चन्द्रे तृतीयो योगः । मकरोत्तरार्धे लग्नगते, मकरपूर्वार्धगते कुजे, केन्द्रगते गुरौ चतुर्थो योगः । धनुर्मीनयोरन्यतरगते लग्ने, केन्द्रत्रिकोणद्वादशभिन्नस्थानगतेषु पापेषु, केन्द्रगते शुक्रे, अष्टमगते एकस्मिन् शुभे पञ्चमो योगः । केन्द्रगते गुरौ, अष्टमगते एकस्मिन् शुभे षष्ठो योगः । एषु जातः शतवर्षजीवी भवति ॥ २—३ ॥

खे(स्वें)गे नाष्टमभं गतो(तौ) न च खलैरिन्दोः सवीर्यौ कवी
ज्यौ खांशाः स्वभगाः शुभास्तनुविधाउ(वु)चे व(ब)लिन्यभषट् ।
चापान्ते तनुगे परोच्चनिखिलैवि(र्वि)त्तत्वलिप्तो वृषे
स्यादायुः परमास्फुजित्सुरगुरू केन्द्रे भवेदौ(न्दौ) परं ॥ ४ ॥

दृष्टे सौम्यखगैर्विधौ निधनगे मीनोदये भार्गवे
जीवे केन्द्रगते शतं तनुपतौ छिद्रे ख इन्दौ गुरौ ।

अमितायुर्योगः

वीर्याढ्ये तपसीतरैः शतमथो कर्कीन्दुजीवान्विते
लग्ने केन्द्रगवित्सितौ त्र्यरिभवेऽन्यैश्चामितायुर्भवेत् ॥ ५ ॥

॥ इति श्रीजातकसारदीपे योगायुर्दायाध्यायः अष्टसप्ततितमः ॥

---

१ खरांशिगतयोर्लग्नगतयोः, पूर्णबलयोः शुक्रगुर्वोरेको योगः । चन्द्रात् अष्टमं विहायान्यत्र स्थितयोः, पापैरदृष्टयोः, पूर्णबलयोर्गुरुशुक्रयोर्द्वितीयो योगः । अत्र योगद्वये जातः शतवर्षजीवी भवति । वृषभलग्नगते चन्द्रे बलयुते, सर्वेषु शुभेषु खरांशिगतेषु षष्टिवर्षमितमायुर्भवति । धनुरन्त्यद्रेकाणगते लग्ने, बुधे वृषभाद्यपञ्चविंश- तिलिप्तागते, शेषेषु ग्रहेषु परमोच्चमागगतेषु एको योगः । केन्द्रगतयोर्गुरुशुक्रयोः, एकादशगते चन्द्रे द्वितीयो योगः । मीनलग्नगते शुक्रे, गुरौ केन्द्रगते, शुभैर्दृष्टे अष्टमगे चन्द्रे तृतीयो योगः । लग्नेशे अष्टमगे, चन्द्रे दशमगे, बलयुते गुरौ, शेषेषु नवमगतेषु चतुर्थो योगः । एषु जातः शतवर्षजीवी भवति । गुरुचन्द्रयुते कर्काटकलग्ने, बुधशुक्रयोः केन्द्रगतयोः, पापेषु तृतीयषष्ठलाभान्यतमगतेषु अमितायुर्योगः ॥ ४—५ ॥

## ॥ अथ अष्टकवर्गाध्यायः एकोनाशीतितमः ॥

### सूर्याष्टकवर्गः

[1]स्वादर्कः प्रथमास(य)बन्धुनिधनद्याजा(ज्ञा)तपोसू(द्यू)नगो
वक्रात्स्वादिव तद्वदेव रविजाच्छुक्रात्स्मरात्या(न्त्या)रिषु ।
जीवाद्धर्मसुताय[शत्रुषु द]शत्र्यायारिगः शीतगो
क्षे(स्ते)ष्वेवांत्यतपःसुतेषु च बुधाल्लग्नात्सबन्ध्वंत्यगः ॥ १ ॥

### चन्द्राष्टकवर्गः

[2]लग्नात् षट्त्रिदशायगः सधनधीधर्मेषु चाराच्छशी
स्वात्सास्तादिषु साष्टमसप्तु रवे(वेः) ष[ट्त्र्या]यधीस्थो म(य)मात् ।

---

१ अष्टकानां सलमानां सूर्यादिसप्तग्रहाणां अष्टकेभ्यः जन्मकालीनतत्तद्ग्रहलग्ना-श्रितस्थानेभ्यः गोचाररीत्या राशिद्वादशके चरतां सूर्यादिसप्तग्रहाणां येषु येषु स्थानेषु शुभप्रदत्वं तेषां स्थानानां वर्गः समुच्चयोऽष्टकवर्गः । तत्र सूर्याष्टकवर्गोऽत्राभिधीयते । सूर्यः स्वाश्रितजन्म-कालीन स्थानात् १-२-४-७-८-९-१०-११ स्थानेषु चरन् शुभप्रदः । एवं शन्याश्रितस्था-नात् कुजाश्रितस्थानाच्च १-२-४-७-८-९-१०-११ स्थानेषु, शुक्राश्रितस्थानात् ६-७-१२ स्थानेषु, गुर्वाश्रितस्थानात् ५-६-९-११ स्थानेषु, चन्द्राश्रितस्थानात् ३-६-१०-११ स्थानेषु, बुधाश्रितस्थानात् ३-५ ६-९-१०-११-१२ स्थानेषु, लग्नाश्रितस्थानात् ३-४-६-१०-११-१२ स्थानेषु चरन् शुभप्रदो रविर्भवति ॥ १ ॥ २ चन्द्राष्टकव-र्गोऽत्राभिधीयते । लग्नादित्यादीनां पूर्ववत् जन्मकालीनलग्नाश्रितराशेरित्या-दिरर्थो ज्ञेयः । एवमग्रेऽपि । लग्नात् ३-६-१०-११ स्थानेषु, कुजात् २-३-५-६-९-१०-११ स्थानेषु, स्वस्मात् १-३-६-७-१०-११ स्थानेषु, सूर्यात् ३-६-७-८-१०-११ स्थानेषु, शनेः ३-५-६-११ स्थानेषु, बुधात् १-३-४-५-७-८-१० ११ स्थानेषु, गुरोः १-४-७-८-१०-११-१२ स्थानेषु, शुक्रात् ३-४-५-७-९-१०-११ स्थानेषु चरन् चन्द्रः शुभप्रदः ॥ २ ॥

धीव्याय(या)ष्टमकंटकेषु च बुधाज्जीवाद्व्यया(द्युना)याष्टगः
केन्द्रसु(स्थ)श्च सिताच्च धर्मसुखधीव्याय(या)स्पदानंगगः ॥ २ ॥

कुजाष्टकवर्गः

[१]वक्रस्तूपचयेष्विनात्सतनयेष्वाधा(द्या)भिकेषूदया
चन्द्राद्दिग्वि(दृद्विट्त्रि)फलेषु केन्द्रनिधनप्रास्य(द्य)र्थगाः(गः) स्वाच्छुभः।
धर्मायाष्टमकेन्द्रगोऽर्कतनयाज्ज्ञात् षट्त्रि[धी]लाभगः
शुक्रात् षट्(ड्)व्ययलाभमृत्युषु(षु) गुरोः कर्मान्त्यि(र्मान्त्य)लाभारिषु ॥ ३॥

बुधाष्टकवर्गः

[२]द्याद्यायाष्टतपःसुखेषु भृगुजात्सव्यात्मजेष्विन्दुजः
साता(ज्ञा)स्तेषु यमारयोर्व्ययरिपुप्राप्त्य(ष्ट)यो(गो) वाक्पतेः।
धर्मायारिसु[त]व्ययेषु सवितुः स्वात्साद्य(द्य)कर्मत्रिगः
षट्स्वायाष्टसुखास्पदेषु हिमगोः साद्येषु लग्नाच्छुभः ॥ ४ ॥

गुर्वष्टकवर्गः

[३]दिक्चा(क्स्वा)द्याष्टमदायबन्धुषु कुजात्स्वात्सत्रिकेष्वंगिराः
सूर्यास्त्य(र्स्त)त्रिनवेषु(तप.सु) स्वाद्यु १–५–६–८ धीस्वनवदिक्
लाभारिगो भार्गवात्।

---

१ सूर्यात् ३-५-६-१०-११ स्थानेषु, लग्नात् १-३-६-१०-११ स्थानेषु, चन्द्रात् ३-६-११ स्थानेषु, स्वस्मात् १-२-४-७-८-१०-११ स्थानेषु, शनेः १-४-७-८-९-१०-११ स्थानेषु, बुधात् ३-५-६-११ स्थानेषु, शुक्रात् ६-८-११-१२ स्थानेषु, गुरोः ६-१०-११-१२ स्थानेषु चरन् कुजः शुभप्रदः ॥ ३ ॥ २ शुक्रात् १-२-३-४-५-८-९-११ स्थानेषु, कुजात् शनेश्च १-२-४-७-८-९ १०-११ स्थानेषु गुरोः ६-८-११-१२ स्थानेषु, सूर्यात् ५-६-९-११-१२ स्थानेषु, स्वस्मात् १-३-५-६-९-१०-११-१२ स्थानेषु, चन्द्रात् २-४-६-८-१०-११ स्थानेषु, लग्नात् १-२-४-६-८-१०-११ स्थानेषु चरन् बुधः शुभप्रदः ॥ ४ ॥ ३ कुजात् १-२-४-७-८-१०-११ स्थानेषु, स्वस्मात् १-२-३-४-७-८-१०-११, स्थानेषु

जाजा(या)यार्थनचा(वा)स्तजेषु हिमगोर्मन्दात् त्रिषट्धीव्यये
दिग्धीषट्स्वसुखायपूर्वनवमो(गो) ज्ञात्सस्मरेष्वृदयात् ॥ ५ ॥

## शुक्राष्टकवर्गः

[1]लग्नादासुतलाभरन्ध्रनवगः सांत्यः शशांकात्सितः
स्वात्साज्ञेषु सुखत्रिधीदशनवच्छिद्रातिगः सूर्यजात् ।
रन्ध्रायव्ययगो रवेर्नवदशपाष(प्त्य)ष्टधीस्थे(स्थो)प्त्यगुरो
र्ज्ञाद्धीत्र्यायनवारिगस्त्रिनवषट्पुत्रा(बन्ध्वा)गभांत्ये कुजात् ॥ ६ ॥

## शन्यष्टकवर्गः

[2]मन्दः स्वात्त्रिपुतारिशत्रुषु शुभः साज्ञांति(त्य)गो भूसुतात्
केन्द्रायाष्टधनेष्विनादुपचयेष्वाद्ये सुखे तूदयात् ।
धर्मायारि(यत्रि)दशांत्यमृत्युषु बुधाच्चन्द्रात् त्रिषट्लाभगः
षष्ठांत्यायगतः सितात्सुरगुरोः प्राप्त्यंत(त्य)धीशत्रुगः ॥ ७ ॥

---

सूर्यात् १-२-३-४-७-८-९-१०-११ स्थानेषु, शुक्रात् २-५-६-९-१०-११ स्थानेषु, चन्द्रात् २-५-७-९-११ स्थानेषु, शनेः ३-५-६-१२ स्थानेषु, बुधात् १-२-४-५-६-९-१०-११ स्थानेषु, लग्नात् १-२-४-५-६-७-९-१०-११ स्थानेषु चरन् गुरुः शुभप्रदः ॥ ५ ॥ १ लग्नात् १-२-३-४-५-८-९-११ स्थानेषु, चन्द्रात् १-२-३-४-५-८-९-११-१२ स्थानेषु, स्वस्मात् १-२-३-४-५-८-९-१०-११ स्थानेषु, शनेः ३-४ ५-८-९-१०-११ स्थानेषु, सूर्यात् ८-११-१२ स्थानेषु, गुरोः ५-८-९-१०-११ स्थानेषु, बुधात् ३-५-६-९-११ स्थानेषु, कुजात् ३-४-६-९-१०-१२ स्थानेषु चरन् शुक्रः शुभप्रदः ॥ ६ ॥ २ स्वस्मात् ३-५-६-११ स्थानेषु, कुजात् ३-५-६-१०-११-१२ स्थानेषु, सूर्यात्

## अष्टकवर्गबिन्दुफलम्

इति निगदि[तमिष्टं नेष्टमन्यद्विशेषा
दधिकफलविपा]कं जन्मभत्रे(भात)त्र दद्युः ।
रदयच(पचय)गृहमित्रस्थो(स्वो)च्चगाः पुष्टमिष्टं
त्वपचयगृहनीचारातिगैर्न(र्नै)ष्टसंपत् ॥ ८ ॥

---

१-२-४-७-८-१०-११ स्थानेषु, लग्नात् १-३-४-६-१०-११ स्थानेषु, बुधात् ६-८-९-१०-११-१२ स्थानेषु, शुक्रात् ६-११-१२ स्थानेषु, चन्द्रात् ३-६-११ स्थानेषु, गुरोः ५-६-११-१२ स्थानेषु चरन् शनिः शुभप्रदः ॥ ७ ।

१ स्वादर्क इत्यादिभिः सप्तभिः श्लोकैरुक्तानां अनुक्तानां च स्थानानां फलमाह (इति निगदितमिति) इति पूर्वोक्तप्रकारेण निगदितं स्थानजातं इष्टफलदं । अन्यत् अनुक्तं स्थानजातं कष्टफलदं । तथा हि सूर्यः स्वाश्रितस्थानात् १-२-४-७-८-९-१०-११ एषु अष्टसु स्थानेषु चरन् इष्टफलदः । ३-५-६-१२ एषु चतुर्षु स्थानेषु चरन् कष्टफलदः । एवं सर्वत्रापि योज्यम् । एवं च सलग्नेभ्यः जन्मकालीनेभ्यः सप्तभ्यो ग्रहेभ्यः आरभ्य गोचाररीत्या सूर्याश्रितानि प्रथमश्लोकोक्तानि ४८ स्थानानीष्टफलानि । अनुक्तानि ४८ स्थानानि कष्टफलानि । एवं चन्द्रस्य ४९, कुजस्य ३९, बुधस्य ५४, गुरोः ५६, शुक्रस्य ५२, शनेः ३९ स्थानानि इष्टफलानि । एवं चन्द्रस्य ४७, कुजस्य ५७, बुधस्य ४२, गुरोः ४०, शुक्रस्य ४४, शनेः ५७ स्थानानि कष्टफलानीति ज्ञेयम् । एवं इष्टफलदत्वेन कष्टफलदत्वेन च ज्ञातानां पूर्वोक्तानां स्थानानां तत्तत्स्थानतत्तद्ग्रहविशेषवशादधिकफलदानयोग्यतामाह (विशेषादिति) तत्र सर्वसाधारण्येन इष्टफलदेषु कष्टफलदेषु च स्थानेषु मध्ये । विशेषादिति ल्यब्लोपनिमित्ता पञ्चमी । जन्मकालतत्कालयोः सलग्नसप्तग्रहाश्रितधातुमूलजीवादिद्रेक्काणविशेषं वा, सलग्नसप्तग्रहोक्तगुणविशेषं वा, तात्कालिकपञ्चभूतगुणविशेषं वा, सलग्नसप्तग्रहेभ्यो प्रथमादिद्वादशभावरूपविशेषं वा, आत्मादिकारकविशेषं वा निमित्तीकृत्येति तदर्थः । जन्मभात् जन्मकालीनतत्तद्ग्रहस्थानेभ्यो जन्मकालीनलग्नाच्च । गोचाररीत्या चरन्तो ग्रहाः इति

शेषः। अधिकफलविपाकं दद्युरिति योजना। पूर्वोक्तेषु इष्टफलदेषु स्थानेषु चरन्तः सूर्यादयो ग्रहाः शरीरादिसकलवस्तुसाधारणं शुभमापादयन्ति। तथापि पूर्वोक्तान् विशेषाभिमित्तीकृत्य विषयविशेषे अधिकं शुभमापादयन्ति इति भावः। इदमुक्तं भवति-प्रतिराशि विद्यमानेषु त्रिषु द्रेक्काणेषु प्रथमः कर्मद्रेक्काणः, द्वितीयः भोगद्रेक्काणः, तृतीयो नाशद्रेक्काणः। प्रतिद्रेक्काण विद्यमानेषु त्रिषु नवांशेषु प्रथमो धातुनवांशः, द्वितीयो मूलनवांशः तृतीयो जीवनवांशः। तथा च कर्मधातुः कर्ममूलं कर्मजीवः भोगधातुः भोगमूलं भोगजीवः नाशधातुः नाशमूलं नाशजीव इत्येवं नवसु नवांशेषु सर्वराशिगतेषु विभागो ज्ञेयः। पृथुयशसा तु-ओजराशावयं क्रमः, युग्मराशौ त्वेतद्वैपरीत्यमित्युक्तम्। जन्मकाले कर्मधातुगतो रविः गोचाररीत्यापि कर्मधातुगतः इष्टफलदस्थानेषु यदि चरति तर्हि सुवर्णादिमृत्तिकान्तधातु-विषयकं कर्म निर्विघ्नमाधिक्येन चलति, यदि कष्टफलदेषु स्थानेषु चरति तर्हि तद्विषयकं कर्म बहुविघ्नोपहतं विनश्यति। एवं जन्मकाले इष्टफलेषु स्थानेषु स्थितः शनिः भोगजीवे वर्तते। गुरुर्गोचाररीत्या शनेः सकाशादिष्टफलदेषु स्थानेषु नाशमूले वर्तते। तदा शनेर्गुर्वपेक्षया बलवत्त्वेपत्न्यादिभोगजीवलाभः, दुर्बलत्वे नाशकत्वेन प्रसक्तानां वृक्षादितृणान्तानां सकाशादधिकलाभः। एवं पूर्वोक्तदृष्टान्त एव शनेः सकाशात् कष्टफलेषु स्थानेषु स्थितो गुरुः शन्यपेक्षया यदि प्रबलः तर्हि वृक्षादिमूलनिमित्तो नाशो भवति, यदि च दुर्बलस्तर्हि पत्न्यादिभोगभङ्ग इत्यादिकमूह्यम्। एवं द्रेक्काणवशादधिक-फलविपाको दर्शितः। एवं सूर्यस्य रूपप्रधानं कटुरसप्रधानं वा द्रव्यम्। शनेः स्पर्शप्रधानं कषायरसप्रधानं वा द्रव्यम्। सूर्यसकाशाच्छनेः शनिसकाशात् सूर्यस्य वा इष्टफलदस्थानगतत्वे उभयोर्बलाधिक्ये रूपप्रधानं स्पर्शप्रधानं च पट्टवस्त्रादिकं लभ्यते, उभयोर्दौर्बल्ये विरूपं कटुस्पर्शं च कम्बलादिकं लभ्यते, शनेः प्राबल्ये रूपविशेषरहितं स्पर्शसुखयुतं वस्तु लभ्यते, सूर्यस्य प्राबल्ये रूपप्रधानं स्पर्शप्राधान्यरहितं वस्तु लभ्यते इत्यादिकमूह्यम्। एवं सप्तमसप्तमहोक्तगुणवशात् फलनिर्देशो दर्शितः। एवं कुजो भूमि-भागगतः गगनभागगताद्गुरोः सकाशादिष्टफलदस्थानगतो यदि स्यात्तदा कुजस्य बलवत्त्वे

भूमिगतवस्तुलाभः गुरोर्बलवत्वे गगनगतवस्तुलाभः इत्यादिकमूह्यम्। एवं तात्कालिक-पञ्चभूतगुणवशात् फलनिर्देशो दर्शितः। एवं लग्नाद्वा सूर्यादिग्रहेभ्यो वा मूर्त्यादिद्वादशभावेषु इष्टफलसंभवे तद्गता ग्रहाः स्वाश्रितमूर्त्यादिसंबन्ध्यधिकमिष्टं फलं दद्युः, कष्टफलसंभवे अधिकं कष्टं फलं दद्युः। एवं सलग्नसप्तग्रहाश्रितमूर्त्यादिद्वादशभाववशात् फलनिर्देशो दर्शितः। एवं सूर्येण आत्मप्रभावपितृचिन्ताविषयाणि, चन्द्रेण मनोजनन्यादि-विषयाणि, कुजेन सत्वसहजादिविषयाणि, बुधेन वचनविषयाणि, गुरुणा ज्ञानसुखसन्तत्यादिविषयाणि, शुक्रेण कलत्रभोगविषयाणि, शनिना दुःखदास्यादिविषयाणीष्टानिष्टानि पूर्वोक्तदिशा ज्ञेयानि। एवं आत्मादिकारकवशात् फलनिर्देशो दर्शितः। एवं सर्वसाधारण्ये-नेष्टानिष्टफलदत्वेन, पूर्वोक्तनिमित्तविशेषाश्रयणेनाधिकेष्टानिष्टफलदत्वेन च ज्ञातानां स्थानां पुनरपि पुष्टापुष्टफलदानयोग्यतामाह (उपचयेति) लग्नात् तृतीये वा षष्ठे वा दशमे वा एकादशे वा मूलत्रिकोणे वा मित्रक्षेत्रे वा स्वक्षेत्रे वा उच्चक्षेत्रे वा स्थिता ग्रहाः इष्टफल-दस्थानगता यदि स्युः तर्हि सर्वसाधारण्येन पुष्टमिष्टं, पूर्वोक्तनिमित्तविशेषाश्रयणेन पुष्टमधिकेष्टं च दद्युः। अपचये वा नीचे वा शत्रुक्षेत्रे वा स्थिता ग्रहा इष्टफलदस्थानगता यदि स्युः तर्हि अपुष्टं इष्टं, पूर्वोक्तनिमित्तविशेषाश्रयणेन अपुष्टमधिकेष्टं च दद्युरिति भावः। अत्रेदं रहस्यम्-इष्टकष्टफलदत्वेन निर्णीते स्थाने संचरन्तो ग्रहाः तद्राशिप्रवेशादारभ्य तद्राशिपरित्यागपर्यन्तं फलं न ददति। किं तु पञ्चचत्वारिंशत्कलाधिकभागत्रयात्मके राश्यष्टमभागे प्रथमे शनेः सकाशात् इष्टफलदस्थानेषु चरन्तः सूर्यादिग्रहा इष्टं ददति। एवं द्वितीये राश्यष्टमभागे गुरोः सकाशात्, तृतीये भागे कुजस्य सकाशात्, चतुर्थे रवेः सकाशात्, पञ्चमे शुक्रस्य सकाशात्, षष्ठे बुधस्य सकाशात्, सप्तमे चन्द्रस्य सकाशात्, अष्टमे राश्यष्टमभागे लग्नस्य सकाशात् इष्टफलदस्थानेषु चरन्तः सूर्यादिग्रहा इष्टं ददति। पूर्वोक्तं राश्यष्टमभागमेकं विहायान्यत्र भागसप्तके संचरन्तो ग्रहा नेष्टफलदाः। एवं कष्टफलविषयेऽपि ज्ञेयम्। अथाष्टकवर्गबिन्दुप्रस्तारार्थं कोष्ठकरचनाक्रमो लिख्यते। याम्योत्तराभिर्नवभिः ऊर्ध्वाधराभिः त्रयोदशभिश्च रेखाभिः षण्णवतिकोष्ठात्मकं चक्रं

लिखेत् । तत्र दक्षिणोत्तरक्रमेण स्थितानां द्वादशकोष्ठकात्मकाष्टपंक्तीनामुपरि देशे मेषादिक्रमेण वामभागादारभ्य द्वादशराशयः लेख्याः। तदुपरि जन्मकालिकग्रहलग्नाश्रित राशेरुपरि सलग्ना ग्रहाः स्थाप्याः । ऊर्ध्वाधरकोष्ठकपंक्तीनां द्वादशानां मध्ये प्रथमकोष्ठकपंक्तिवामभागे उपरि शनिः, तदधः प्रतिकोष्ठवामभागं क्रमेण गुरुकुजरविशुक्रबुधचन्द्रलग्नानि लेख्यानि । जन्मकालीनात् उपरि लिखितात् सूर्यग्रहस्थानादधः पार्श्वलिखितसूर्यग्रहस्थानादग्रतश्च विद्यमानं कोष्ठकमारभ्य स्वादर्क इति श्लोकोक्तेषु स्थानेषु बिन्दवो निक्षेप्याः । अनुक्तेषु स्थानेषु रेखा निक्षेप्याः । एवमेव चन्द्रादधश्चन्द्रपङ्क्तौ, कुजादधः कुजपङ्क्तौ, बुधादधः बुधपंक्तौ, गुरोरधः गुरुपंक्तौ, शुक्रस्याधः शुक्रपंक्तौ, शनेरधः शनिपंक्तौ, लग्नादधः लग्नपंक्तौ विद्यमानं स्थानमारभ्य तत्तद्ग्रह लग्नपंक्तिषु तत्तद्ग्रहलग्नोक्तबिन्दवो रेखाश्च स्थाप्याः। एवं सलग्नानां सप्तग्रहाणां द्वादशकोष्ठकात्मिकासु तिर्यग्गतासु अष्टसु पङ्क्तिषु बिन्दुयुतानि स्थानानीष्टफलदानि । रेखायुतानि कष्टफलदानि। तासु पङ्क्तिषु प्रथमपङ्क्तिफलदानकालः राश्यष्टमभागे प्रथमे संचारकालः । द्वितीयादिपंक्तिफलदानकालः द्वितीयादौ राश्यष्टमभागे संचारकालः ते च फलदानयोग्यभागाः तत्तत्पङ्क्तिदक्षिणभागे लेख्याः। अस्मिन् चक्रे मेषराशेरधस्तात् विद्यमानेष्वष्टसु कोष्ठकेषु विद्यमानान् बिन्दून् एकीकृत्य मेषपङ्क्तावधो लिखेत् । एवं वृषभादिपंक्तावपि । एवं कृते सूर्यस्य प्रतिराशिगतः इष्टबिन्दुयोगो भवति। अयं सूर्याष्टकवर्गः। एतज्ज्ञानाय प्रथमः कोष्ठकः पार्श्वे निर्दिष्टः। उदाहरणं-पार्श्वस्थे कोष्ठके कन्या लग्नम् । लग्नात् सूर्यस्य इष्टफलदानि स्थानानि ज्ञेयानि । तदा लग्नस्य दक्षिणतो विद्यमानायां लग्नपङ्क्तौ कन्याया अधो विद्यमानं स्थानं प्रथमं । तत आरभ्य "दशान्त्यायारिगः सबन्ध्वन्त्यगो लग्नात्" इत्युक्तदिशा कन्यायाः सकाशात् तृतीये वृश्चिके, चतुर्थे चापे, षष्ठे कुंभे, दशमैकादशद्वादशेषु मिथुनकर्काटकसिंहेषु बिन्दवो निक्षिप्ताः। शेषेषु रेखा निक्षिप्ताः । तस्याः पंक्तेः दक्षिणभागे ३०-० इति, उपरितनायाः चन्द्रपङ्क्तेः दक्षिणभागे २६-१५ इति च लिखितम् । तेन बिन्दुयुक्तेषु वृश्चिकादिषु षट्सु स्थानेषु २६-१५

# कोष्ठकः १

## आदित्याष्टकवर्गः

| | रविः शनिः मेषः | बुधः वृषभः | कुजः मिथुनः | कर्काटकः | सिंहः | लग्नम् गुरुः कन्या | तुला | वृश्चिकः | धनुः | चन्द्रः मकरः | कुंभः | शुक्रः मीनः | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शनिः | ० | ० | — | ० | — | — | ० | ० | ० | ० | ० | — | ३-४५ |
| गुरुः | — | ० | — | ० | — | — | — | — | — | ० | ० | — | ७-३० |
| कुजः | ० | — | ० | ० | — | ० | — | — | ० | ० | ० | ० | ११-१५ |
| रविः | ० | ० | — | ० | — | — | ० | ० | ० | ० | ० | — | १५-० |
| शुक्रः | — | — | — | — | ० | ० | — | — | — | — | ० | — | १८-४५ |
| बुधः | ० | — | — | ० | — | ० | ० | — | — | ० | ० | ० | २२-३० |
| चन्द्रः | — | — | ० | — | — | — | ० | ० | — | — | — | ० | २६-१५ |
| लग्नम् | — | — | ० | ० | ० | — | — | ० | ० | — | ० | — | ३०-० |
| बिंदुयोगः | ४ | ३ | ३ | ६ | २ | ३ | ४ | ४ | ४ | ५ | ७ | ३ | |

अष्टकवर्गफलस्यास्थिरता अष्टकवर्गबिन्दुयोगफलं च

द्वेधं जातकमस्थिरं स्थिरमिति स्यादष्टवर्गं च(गैश्च)लं

पाकाद्यं(द्यैः) स्थिरमस्थिरात्तदधिकं सद्बिन्दुरेखाधिकं ।

अष्टकवर्गफलस्य वृद्धिह्रासौ

राशेर्जन्मतनोश्च वृद्धिषु गतः स्वस्वत्रिकोणोच्चगो

मित्रर्क्षे शुभभेऽस्य सद्बहुतरं यत्कष्टमल्पं भवेत् ॥ ९ ॥

---

भागेभ्यः परं ३०-० भागपर्यन्तं चरन् सूर्यः शुभप्रदः, रेखायुक्तेषु कन्यादिषु षट्सु स्थानेषु २६-१५ भागेभ्यः परं ३०-० भागपर्यन्तं चरन् कष्टफलद इत्येवं ज्ञेयम् । एवं तस्मिन् चक्रे सर्वाधोगतायां पंक्तौ मेषाधः ४ वृषभाधः ३ इत्यादिकं लिखितम् । तच्च मेषादिगतबिन्दुयोगरूपम् । एवं चन्द्रादीनामपि अष्टकवर्गबिन्दवः रेखाः बिन्दुयोगाः तत्फलदानभागाश्च कोष्ठकलेखनेन ज्ञेयाः ॥ ८ ॥ १. जातकं जन्मकालीनग्रहसूचितं फलं, द्विविधं अस्थिरं स्थिरमिति । तत्र दृढकर्मोद्भवं प्रायश्चित्तादिना प्रयत्नसहस्रेणाप्य-परिहार्यं स्थिरं । अदृढकर्मोद्भवं प्रायश्चित्तादिना परिहार्यं अस्थिरं । तत्रास्थिरं अष्टकवर्गै र्ज्ञायते, स्थिरं पाकाद्यैः दशान्तर्दशादिभिर्ज्ञायते । स्थिरास्थिरयोः फलयोर्विरोधे स्थिरमेव फलं भवति नास्थिरम् । स्थिरास्थिरयोः फलयोरविरोधे उभयमपि भवति । स्थिरास्थिरयोः साम्ये तस्य फलस्य बहुभिः प्रकारैः पुष्टिर्भवति । अतः तत् स्थिरं, अस्थिरात् अधिकम् । एवं लग्नेभ्यः सप्तभ्यो ग्रहेभ्यः इष्टफलदानि कष्टफलदानि च स्थानान्यभिधाय तेषां प्रत्येकं फलमभिहितम् । इदानीं पूर्वोक्तरीत्या साधितानां मेषादिराशिगतानां बिन्दूनां योगस्य रव्याद्यष्टकवर्गचक्रसप्तकाधोभागलिखितस्य फलमाह (सदिति) अस्मिन् ग्रन्थे इष्टफलदस्थाने रेखा लिखिताः । मया तु प्राचीन-बहुग्रन्थानुसारेण बिन्दवो लिखिताः । रेखाबिन्द्वोरन्यतरस्य लेखनेऽपि फलैक्यमेव । अतोऽस्मिन् ग्रन्थे अष्टकवर्गप्रकरणे विद्यमानं रेखापदं बिन्दुपरतया व्याख्येयम्

प्रोक्ताद्व्यत्ययगस्य स तमिष्टं नेष्टमन्यद्विशेषादधिकं
फलविपा द्दड्(लघु)तरं यत्कष्टमत्यु ष्ट त्कटं ।

## सर्वाष्टकवर्गफलम्

ज्ञात्वा वी[र्य]मिहाष्टवर्गजमुहे(मिदं) [सा] सर्वके(रे)खायुतिः ।
यत्राष्टाधिका शुभं च तदहः स्यादन्यथाऽनिष्टकृ
त्तच्छान्त्यै जपदानपूजनविधिं कुर्याच्छिन्त्यस्यै(त्तदीयं) बुधः ॥ १० ॥

---

वेदरेखाधिकं बिन्दुचतुष्टयापेक्षया अधिकबिन्दुयुक्तं, स्थानं सत् इष्टफलदं इत्यर्थः। अर्थात् बिन्दुचतुष्टयापेक्षया न्यूनबिन्दुयुतं स्थानं कष्टफलदमिति सिध्यति। अत्र रेखापदस्य रेखापरत्वेन व्याख्याने तु प्राचीनमतरीत्या रेखाया अनिष्टफलदस्थानगतत्वेन "वेदरेखाधिकं सत्" इत्युक्तिरनुपपन्नेति मन्दानां भ्रमो भवेदेव। प्राज्ञास्तु प्राचीनोबिन्दोरिव एतद्ग्रन्थकारेण रेखाया इष्टफलदस्थानज्ञापकत्वमुपगतमिति मन्वाना न भ्राम्यन्ति। अतो मन्दभ्रमनिरासार्थमेव रेखापदं बिन्दुपरतया व्याख्यातम्। अत्र अष्टबिन्दुयुतं स्थानं अतीव इष्टफलदम्। बिन्दुशून्यं स्थानं अतीव कष्टफलदम्। एकद्वित्रिचतुर्बिन्दुयुतं स्थानं क्रमेण अल्पाल्पकष्टफलदम्। पञ्चषट्सप्ताष्टबिन्दुयुतं स्थानं क्रमेण अधिकाधिकेष्टफलदमिति तरतमभावो ज्ञेयः। (राशेरिति) जन्मकालीनचन्द्राश्रितराशेः जन्मलग्नाच्च तृतीयषष्ठदशमैकादशान्यतमेषु, स्वक्षेत्रे, स्वमूलत्रिकोणे, स्वोच्चे, मित्रक्षेत्रे, शुभराशौ च यो वर्तेत अस्य ग्रहस्य सत् इष्टफलदं स्थानं, बहुतरं अतिपुष्टं भवेत्, कष्टं कष्टफलदं स्थानं, अल्पं अल्पकष्टदं, भवेत्। इदमुक्तं भवति-प्रत्येकबिन्दुफलं बिन्दुयोगफलं च पूर्वोक्तं ग्रहस्य लग्नचन्द्राभ्यामुपचयादिस्थानगतत्वे शुभं वर्धते, अशुभं हीयते इति ॥ ९ ॥ १. अस्मिन् श्लोके स्थूलाक्षरनिर्दिष्टो भागोऽधिकः। स च त्याज्यः। प्रोक्तात् व्यत्ययगस्य शत्रुक्षेत्रे, पापक्षेत्रे, नीचक्षेत्रे, लग्नद्वितीयचतुर्थपञ्चमसप्तमाष्टमनवमद्वादशेषु स्थितस्य ग्रहस्य, सत् इष्टफलदं स्थानं, लघुतरं अत्यल्पेष्टफलदं,

## अष्टकवर्गस्वरूपम्

यद्राशिसंस्थाः खचरास्तु सप्त
यो लग्नराशिः कथितोऽत्र चाष्टौ ।
तु(ते) राशयस्तज्जनि[तानि] यानि
फलानि तान्यष्टकवर्गजानि ॥ ११ ॥

---

यत् कष्टं कष्टफलदं स्थानं, तत् अत्युत्कटं अत्यधिककष्टफलदं भवेदिति योजना। पूर्वोक्तं स्वोच्चादिस्थानस्थितिरूपं वीर्यं ज्ञात्वा इदं अष्टवर्गजं फलं वाच्यं सुधियेति शेषः। एवं प्रत्येकं सूर्यादीनां प्रत्येकबिन्दुफलं "इति निगदितमिष्टं" इत्यनेन, बिन्दुयोगफलं "सप्तदरेखाधिकं" इत्यनेन च कथयित्वा इदानीं सर्वग्रहबिन्दुयोगरूपस्य समुदायाष्टकवर्गस्य फलमाह (सा सर्वरेखेति) याम्योत्तराभिः अष्टभिः ऊर्ध्वाधराभिः त्रयोदशभिः रेखाभिः चतुरशीतिकोष्ठात्मकं चक्रं लेखनीयं। तत्र पूर्ववत् राशयः जन्मकालीनग्रहाश्च चक्रशिरोगतद्वादशकोष्ठकोपरि दक्षिणोत्तरक्रमेण लेख्याः। सूर्यादिसप्तग्रहाश्च चक्रवामभागगतकोष्ठकसप्तकपार्श्वे क्रमेण लेख्याः। एवं कृते तिर्यग्गतकोष्ठकद्वादशकात्मिकाः सप्त पङ्क्तयः सूर्यादीनां भवन्ति। तासु प्रथमायां सूर्यपङ्क्तौ सूर्याष्टकवर्गचक्राधोभागे मेषादिगतो बिन्दुयोगः तत्तद्राशिषु लेख्यः। एवं चन्द्रादिपंक्तौ चन्द्रादिबिन्दुयोगो लेख्यः। एवं कृते मेषाधोभागे विद्यमानायां सप्तकोष्ठकात्मिकायां मेषपङ्क्तौ विद्यमानानां बिन्दूनां योगः मेषपङ्क्त्यधोभागे लेख्यः। एवं वृषभादिपंक्तावपि। एवं कृते द्वादशराशिगतानां सर्वग्रहसंबन्धिनां अष्टबिन्दूनां योगो भवति। अयमेव समुदायाष्टकवर्गः। स च पार्श्वगतद्वितीयकोष्ठकदर्शनेन स्पष्टीभवति। एवं समुदायाष्टकवर्गसिद्धा सर्वरेखायुतिः सर्वग्रहसंबन्धिनां प्रत्येकराशिगतानां बिन्दूनां योगः, अष्टाधिका अष्टाविंशत्यपेक्षया अधिकः, यत्र यस्मिन् राशौ वर्तते, तदह्नः गोचाररीत्या तद्राशिगतग्रहवारः, शुभः अन्यथा गोचाररीत्या अष्टाविंशत्यपेक्षया न्यूनबिन्दुयुतराशिगतग्रहसंबन्धी वारः अनिष्टकृत् इति योजना। शिष्टं सुगमम् ॥ १० ॥

# कोष्ठकः २

## समुदायाष्टकवर्गः

| | रविः शनिः मेषः | बुधः वृषभः | कुजः मिथुनः | कर्काटकः | सिंहः | लग्नम् गुरुः कन्या | तुला | वृश्चिकः | धनुः | चन्द्रः मकरः | कुंभः | शुक्र मीनः | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| रविः | ४ | ३ | ३ | ६ | २ | ३ | ४ | ४ | ४ | ५ | ७ | ३ | ४८ |
| चन्द्रः | २ | ३ | ६ | ६ | ४ | ५ | ३ | ६ | ३ | ३ | ५ | ४ | ४९ |
| कुजः | २ | ० | ५ | ५ | ३ | ४ | ३ | ३ | २ | ४ | ५ | ३ | ३९ |
| बुधः | ७ | ३ | ४ | ६ | ३ | ४ | ५ | ३ | ४ | ४ | ७ | ४ | ५४ |
| गुरुः | ४ | ४ | ६ | ६ | ३ | ६ | ४ | ४ | ५ | ५ | ४ | ५ | ५६ |
| शुक्रः | ५ | ५ | ३ | ५ | ३ | ३ | ४ | ६ | ४ | ६ | ४ | ४ | ५२ |
| शनिः | ३ | २ | ३ | ३ | ४ | २ | ३ | ४ | २ | ४ | ६ | ३ | ३९ |
| बिन्दुयोगः | २७ | १९ | ३० | ३७ | २२ | २७ | २६ | ३० | २४ | ३१ | ३८ | २६ | ३३७ |

तथा च यवनः

### अथ यवनरीत्या अष्टकवर्गबिन्दुयोगफलम्

[1]कष्टं स्यादेक १ रेखायां द्वाभ्यां २ मर्थक्षयो भवेत् ॥
त्रिभिः ३ क्लेशं विजानीयाच्चतुर्भिः ४ समता मता ॥ १२ ॥

पंचभिः ५ परमानन्दः षड्भि ६ रर्थागमो भवेत् ॥
सप्तभिः ७ परमं सौख्यं अष्टभिः ८ सर्वसंपदः ॥ १३ ॥

॥ इति यवनरीत्या अष्टकवर्गबिन्दुयोगफलम् ॥

## ॥ अथ यवनरीत्या समुदायाष्टकवर्गफलम् ॥

[2]अथ वा जन्मकाले च येषु राशिषु संस्थिताः ॥
तत्रस्थे(स्थ)रेखासकलं(साकल्य)फलं वाच्यं शुभाशुभं ॥ १४ ॥

नाशः सप्तेन्दुभि १७ स्त्वष्ट(ष्टा)दशभि १८ र्धध(न)संक्षयः ॥
नंदेन्दुभिः १९ कुबुद्धित्वं बन्धुपीडा च जायते ॥ १५ ॥

---

१. "सद्धेदरेखाधिकं" इत्यनेनोक्तमेव प्रत्येकसूर्याद्यष्टकवर्गफलमिदानीं स्पष्टी-क्रियते (कष्टमिति), २. "सा सर्वरेखायुतिः" इत्यनेनोक्तसमुदायाष्टकवर्गफलमाह (अथवेति) जन्मकाले ग्रहाः येषु राशिषु स्थिताः तत्रस्थानां बिन्दूनां साकल्यस्य समुदायस्य फलं शुभं वा अशुभं वा वक्ष्यमाणप्रकारेण वाच्यम्। जन्मकाले अष्टाविंशत्यपेक्षया न्यून-बिन्दुयुतराशिगताः कष्टप्रदाः, तथा तदपेक्षया अधिकबिन्दुयुतराशिगता इष्टप्रदाः। एवं इष्टकालेपि ज्ञेयम्। एवं जन्मकालेष्टकालयोरुभयोरपि अष्टाविंशत्यधिकबिन्दुयुत-राशिगता ग्रहा अधिकेष्टफलदाः। तयोरन्यतरकाले तथा स्थिता मध्यमफलदाः। तयोरुभयोरपि कालयोः तन्न्यूनबिन्दुयुतराशिगताः अधिककष्टफलदा इत्यादिकमूह्यम्। तमेव फलविशेषमाहोत्तरश्लोकैः ॥ १४ ॥

विंशत्या २० व्यय(र्थ)कलहौ(हः) कृते(ने)त्रे २१ हृदि दुःखभा (जिता) ॥

नेत्रनेत्रे २२ भवेतां वै सदा दैन्यपराभवौ ॥ १६ ॥

धर्मार्थहानिस्त्रियमैः २३ सिद्धे २४ धनहतिर्भवेत् ॥

पंचते(ने)त्रे २५ हस्तगतं धनं नाशयति क्षणात् ॥ १७ ॥

उत्कृत्या २६ क्लेशमाप्नोति समता सप्तनेत्रकैः २७ ॥

अष्टाविंशतिभि २८ र्द्रव्यलाभसौख्यं लभेन्नरः(त च) ॥ १८ ॥

नन्दाक्षिभि २९ र्धनाप्तिः स्यात्सुखं पूजां च विन्दति ॥

त्रिंशता ३० मानमित्राप्तिरत ऊर्ध्वं शुभाधिकं ॥ १९ ॥

इति यवनरीत्या समुदायाष्टकवर्गफलम्

ग्रहाणामवयवकारकत्वं पीडाकरत्वं च

[1]शीर्षाऽस्य सूर्य इह कंव(ठ)हृदिंदुरारः

पृष्ठोदरेऽहि(ज्ञि)करवित्कटिजंघजीवः ।

शुक्रा(ष्कोरु)गुह्यसित आर्किरपानकस्फि

गेते निजे[विदधते किल] दोषपीडां ॥ २० ॥

तथा च विश्नु(ष्णु)धर्मोत्तरे व्यासवचनं

ग्रहपीडाशान्तिः

ग्रहर्क्षजातां समवाप्य पीडां

पूजा तु कार्या विधिना स्वकेन ।

---

१. सूर्यः कष्टफलदस्थानगतः शिरसि मुखे च स्वकीयेन पित्तदोषेण पीडयति । एवं स्थितश्चन्द्रः हृदयकण्ठयोः, कुजः पृष्ठोदरयोः, बुधः करपादयोः, गुरुः कटिजङ्घयोः, शुक्रः ऊरुगुह्यवृषणेषु, शनिः स्फिगपानयोः स्वोक्तदोषैः पीडयन्तीति भावः ॥ २० ॥

ततः शुभं विन्दति राजसिंह

विधौतपापः पुरुषः सदैव ॥ २१ ॥

ग्रहपीडापरिहारार्थं आश्रयणीया ब्राह्मणादिवर्णाः

[1]शुभौ सितेज्यौ हि सुखं द्विजेभ्यः

कुजार्कजौ(कौ) चेदिह भूमिपेभ्यः ।

चन्द्रो यदि स्याच्छुभदो हि [वि]ड(ड्)भ्यः

शूद्रादबुधो हीनजनात्तथाऽर्किः ॥ २२ ॥

अथ ग्रहदोषहराणि दानानि

कौसुंभवस्त्रं गुडहेमताम्रं

माणिक्यगोधूमहिरण्यपद्मं ।

सवत्सगोदानमृषिप्रणीतं

दुष्टाय सूर्याय [म]सूरिकाश्च ॥ २३ ॥

पात्रं वेणुमयं सितांबरयुतं शुक्लाक्षतैः पूरितं

गन्धाढ्यं सितपुष्पयुक् तदुपरिष्टाद्रौप्यदुग्धान्वितं ।

कांस्यं शंखमपि ग्रहाभिविदुषे दद्यादनिष्टेन्द्र(न्द)वे

मुक्तां साज्यघटं सितोऽक्षरजते शंखं सितं वांऽशुकं ॥ २४ ॥

---

१. जन्मकालेष्टकालयोः गुरुशुक्रयोर्बलवत्वे इष्टफलदस्थानगतत्वे च ब्राह्मणेभ्यः सुखं भवति। अतो येन केनापि ग्रहेण पूर्वोक्तरीत्या पीडायां प्रसक्तायां गुरुशुक्रयोर्बलवत्वे इष्टस्थानगतत्वे च ब्राह्मणास्तोषणीयाः । तद्द्वारा पीडापरिहारः। एवं कुजसूर्ययोः शुभत्वे राजतोषणेन, चन्द्रस्य शुभत्वे वैश्यतोषणेन, बुधस्य शुभत्वे शूद्रतोषणेन, शनेः शुभत्वे चण्डालतोषणेन पीडापरिहार इति भावः ॥ २२ ॥

प्रवालगोधूममसूरिकाश्च
विषः सताम्रः करवीरपुष्पं ।
आरक्तवस्त्रं गुडहेमदानं
दुष्टाय भौमाय च [च]न्दनानि ॥ २५ ॥

नीलं वस्त्रं मुद्गदानं बुधाय
रत्न(त्नं) पाचिर्दासिका हेम सर्पिः ।
कांस्यं दन्तः कुंजरश्चाथ मेषौ
रौप्यं सर्वं पुष्पजात्यादिकं च ॥ २६ ॥

अश्वः सुवर्णं शुभपीतवस्त्र
सपीतधान्यं लवणं सपुष्पं ।
सशर्करं तद्रजनीप्रयुक्तं
दुष्टाय शान्त्यै गुरवे प्रदद्यात् ॥ २७ ॥

शुक्रे तंडुलहेमवस्त्रशबला गौ रौप्यगंधं घृतं
मन्दे माषकुलित्थतैलमहिषीनीलांबरायां(श्मां)सि च ।
राहोर्मेषसुवर्णलोहरजतोऽर्णानागताम्रं तिला
गोमेदं शिखिने मृगोऽस्थसतिलोऽर्णावस्त्रवैडूर्यकं ॥ २८ ॥

॥ इति ग्रहदोषहराणि दानानि ॥

## औषधधारणं ज्योतिः सारे—

ग्रहदोषशान्त्यर्थं धार्याण्यौषधानि

धार्यं मूलं त्रिशल्याः सवितरि विगुणे जीरकामूलमिन्दौ
गोजिह्वा भूमिपुत्रे रजनिकरसुते वृद्धदारोश्च मूलं ।

गुंजां(जा) जीवे च शुत्रे(क्रे) दिनकरतनये सिंहपृष्ठस्य मूलं
राहोरापार्गमूलं त्वय इति कथितं केतुदोषे च गन्धं ॥ २९ ॥

**स्नानं रत्नमालायां—**

अथ ग्रहदोषहराणि स्नानानि

मनःशिलैलासुरदारुकुङ्कुमै
रुशीरयष्टोमधुपद्मकाःचेतैः(कांचनैः) ।
सताम्रपुष्पैर्विषमस्थिते रवेः(वौ)
शुभावहं स्नानमुदाहृतं बुधैः ॥ ३० ॥

पंचगव्यज[ल] **लैलासुरदारुकुंकुमै**
**रुशीरयष्टीमधुपद्मकाःचेतैः**
**सताम्रपुष्पैर्विषमस्थिते रवेः**
**शुभाहृतं स्नानमुदाहृतं** दानं(न)विमिश्रैः
शंखशुक्तिकुमु[द]स्फु(स्फ)टिकैश्च ।
शीतरश्मिकृतवैकृतहं[तृ]
स्नानमेतदुदितं नृपतीनां ॥ ३१ ॥

बिल्वचन्दनबलारुपापुष्पै
हिं(हिं)गुलकफलिनीवकुलैश्च ।
स्नानमद्भिरिह मांसियुताभिः
भौमदौस्थ्यविनिवारणमाहुः ॥ ३२ ॥

गोरुपाक्षतफलैः सलो(रो)चनैः
क्षौद्रशुक्तिभवमूलहेमभिः ।

स्नानमुक्तमिदमत्र भूभृतो

बोधनाशुभविनाशनं बुधैः ॥ ३३ ॥

मालतीकुसुमशुभ्रसर्षपैः

पल्लवैश्च मदयन्तिकोद्भवैः ।

मिश्रमंबु मधुकेन च स्फुटं

वैकृतं गुरुकृतं निकृन्तति ॥ ३४ ॥

प(पा)लया च शिलया समन्वितै

र्वारिभिः सफलमु[स्त]कुङ्कमैः ।

स्नानतो भृगुसुतोऽपपादितं

दुःखमेति विलयं न संशयः ॥ ३५ ॥

असिततिला(लां)जनलोध्रवळा(ला)भिः

शतकुसुमाघनलाजयुताभिः ।

स्विन्ननये गदितं विषमस्थे

दुरितहृदाप्ण(प्ल)वतं(नं) मुनिमुख्यैः ॥ ३६ ॥

सप्रियंगुरजनीद्वयपुंखा

कुष्ठलाजसितसर्षपचन्द्रैः ।

वारिभिः सहबलैः सहलाध्रौ(लोध्रैः)

स्नानमस्ति निखि(स्यति ख)लग्रहपीडां ॥ ३७ ॥

॥ इति ग्रहपीडाहराणि स्नानानि ॥

## ॥ अथ सकलग्रहपीडाहरा योगाः ॥

देवब्राह्मणवन्दनाद्गुरुवचःसम्पादनात् प्रत्यहं
साधूनामभिभाषणाच्छ्रु[1]तिरवः(व) श्रेयःकथाकर्णनात् ।
होमादध्वरदर्शनाच्छुचिमनोभावाज्जपाद्दानतो
नो कुर्वन्ति कदाचिदेव पुरुषस्यैवं ग्रहाः पीडनं ॥ ३८ ॥

नवग्रहजयन्तीदिनानि

[2]सप्तम्यां नभसि द्वि(द्वि)दैवभसितेऽर्को माघ्व(घ)शुक्ला(क्ला)ष्टमी
वघृ(धृ)क्षेऽब्ज इहारकौं(कों)बुभनभस्यै(स्ये)ऽमूद्दशम्यां सिते ।
आद्यद्वादशिभाद्रवासववुधोऽथैकादशीफाल्गुना
द्ये पुष्ये च गुरुर्मघोः(घोः) सितनवम्यां पैत्र्यजातो भृगुः ॥ ३९ ॥
कृष्णज्यैष्ठकरोहिणीयुतचतुर्दश्यां शनिश्चाश्विने
पूर्णायां भरणीतमः फणिभजश्चाषाढदर्शे शिखी ।
खेटानां जननाख्ययोगसमये यो दानपूजाकरो
लक्ष्मी(क्ष्मीं) सौख्यमवाप्नुयाद्गृ(द्ग्र)हभवां पीडां न चाप्नोति सः
॥ ४० ॥

॥ इति सकलग्रहपीडापरिहारयोगाः ॥

---

१. श्रुतिरवस्य वेदघोषणस्य श्रेयःकथाया महाभारतादेश्च आकर्णनात् इत्यर्थः ॥ ३८ ॥ २. श्रावणशुक्लसप्तम्यां विशाखानक्षत्रे सूर्यः, माघशुक्लाष्टम्यां कृत्तिकायां चन्द्रः भाद्रपदशुक्लदशम्यां पूर्वाषाढा नक्षत्रे कुजः, भाद्रपदशुक्लद्वादश्यां धनिष्ठानक्षत्रे बुधः, फाल्गुनशुक्लैकादश्यां पुष्यनक्षत्रे गुरुः, वैशाखशुक्लनवम्यां मघानक्षत्रे शुक्रः, ज्येष्ठकृष्णचतु-

## ॥ अथ जन्मभाविकुष्टषणनक्षत्रफलम् ॥

¹षड्भो(वै)नानवमो(शिकभं) नृपोस्ति(पस्य) जनिभं गोऽ ९ त्यष्टि १७

तिथ्य १५ ईदा २४

कृपा(त्या) २२ ढ्यं खलु कर्म सामुदयिकं संघा(घा)तचेतोभवं ।

षट्स्वृक्षेषु खलोऽपरागनिहतेष्वार्तिः स्वहानिस्तथा

क्लेशायेषु गदोद्भवो न हि शुभं यात्राविवाहादिकं ॥ ४१ ॥

---

वैश्यां रोहिण्यां शनिः, आश्विनपूर्णिमायां भरण्यां राहुः, आषाढामावास्यायां आश्लेषा-नक्षत्रे केतुः जातः। एतासु ग्रहजयन्तीषु तत्तद्ग्रहदोषपरिहारार्थं तत्तद्ग्रहोक्तस्नानदानादिकं तत्तद्ग्रहपूजनं च ग्रहपीडाहरं संपत्सुखप्रदं चेति भावः ॥ ३९-४० ॥

१. जन्मनक्षत्रं जन्मभं। जन्मनक्षत्रे यस्मिन् चरणे जन्म तस्मात् षट्त्रिंशं चरणं यस्मिन् नक्षत्रे भवति तत् कर्मभं। प्रथमचरणे जन्मनि तत् कर्मभं नवमं नक्षत्रं भवति। द्वितीयतृतीयतुरीयचरणेषु जन्मनि दशमं भवति। प्राचीनैः शास्त्रकारैस्तु बाहुल्येन दशमस्यैव कर्मभत्वेन व्यवहारः कृतः। अतः नवमं नक्षत्रं यदा कर्मभं भवति तदा तस्य संग्रहः प्राचीनशास्त्रकाररीत्या न स्यात्। अतस्तत्संग्रहार्थं "गोत्यष्टितिथ्यईदाकृत्याढ्यं" इत्यत्र गोशब्देन नवमस्य नक्षत्रस्य पृथङ्निर्देशः कृतः। एवं जन्मनक्षत्रचरणात् चतुःषष्टितमांशयुतं नक्षत्रं सांघातिकं, द्विसप्ततितमांशयुतं नक्षत्रं वैनाशिकं, षण्णवतितमनवांशयुतं नक्षत्रं चेतोभवं (मानसं) इति ज्ञेयम्। अनेन लक्षणेन जन्मभात् पञ्चदशं षोडशं वा सांघातिकं, सप्तदशं अष्टादशं वा सामुदयिकं, द्वाविंशं त्रयोविंशं वा वैनाशिकं, चतुर्विंशं पञ्चविंशं वा मानसं भवति। प्राचीनशास्त्रकाररीत्या तु षोडशं सांघातिकं, अष्टादशं सामुदयिकं, त्रयोविंशं वैनाशिकं, पञ्चविंशं मानसमिति व्यपदिश्यते। तद्रीत्या पञ्चदशसप्तदशद्वाविंशचतुर्विंशनक्षत्राणां संग्रहो न स्यात्।

तथा च—

[1]रोगाभ्यागमवित्तनाशकलहाः संपीडिते जन्मभे
सिद्धिं याति न (चैव) कर्मणि हते भेदस्तु सांघातिके।
इच्प(ष्ट)स्योऽपचितस्य सामुदयिके संपीडिते संक्षयो
वैनाशेऽनुभवंति कामविपदश्चिन्ताऽसुखं मानसे ॥ ४२ ॥

[2]निर(रु)पद्रुजभो(द्रवभे) निरामयः
सुखभाग्म(ङ्न)ष्टरिपुर्धनान्वितः।
षड्डुपद्रुजभो(तमे) विनश्यति
त्रिभिरन्यैश्च सहावनीश्वरः ॥ ४३ ॥

॥ इति जन्मादिदुष्टषण्नक्षत्रफलम् ॥

---

## ॥ अथ जन्मादिदुष्टषण्नक्षत्रदोषप्रायश्चित्तानि ॥

सावित्रमन्त्रहवनं सुपयःसमिद्भि
रेकं दिनं त्वु(ह्यु)पवसेन्निखिले(लं) सुगोश्च(ष्ठे)।

---

अतस्तत्संग्रहार्थं गोत्यष्टीत्याद्युक्तं। एतेषु कर्मादिषु षट्सु नक्षत्रेषु पापग्रहपीडितेषु ग्रहणदुष्टेषु च शारीरमानसपीडा धनहानिश्च स्यात्। एषु जातो रोगो बहुक्लेशदः स्यात्। एषु यात्रादिकं न शुभं भवेदिति भावः ॥ ४१ ॥ १. पूर्वोक्तानां षण्णां दुष्टग्रहपीडितानां क्रमेण फलमाह (रोगेति) ॥ ४२ ॥ २. पूर्वोक्तेषु षट्सु जन्मभादिषु ग्रहपीडारहितेषु जातो निरामयत्वादियुतो भवति, दुष्टग्रहपीडितेषु च जातो राजा स्वसदृशैस्त्रिभिः बन्धुभिः सह विनश्यंति ॥ ४३ ॥

गोक्षीरशुक्लवृषमूत्रशकृत्कपूर्ण-
कौशातकीछदयुताऽप्लुतिरुद्ध(द्र)वर्क्षे ॥ ४४ ॥

दूर्वाप्रियंगुशतपुष्पशतावरीक
दर्भान्नसर्पिषमिहाज्यमधूनि होमः ।
अक्षारमद्यपिशितादउडौच(गुडैश्च) कर्मा-
ख्यायां शुचि(चिः) प्रतिदिनं खलु पीडितायां ॥ ४५ ॥

सांघातिकोनु(के तु) मधुमन्मथमांसमौग्र्यं
त्यक्ता(क्त्वाऽऽ)हुतिं हरितयाऽ[1]विभवानुदानं ।
भे सामुदायिनि सतारसुवर्णदान(नं)
वैनाशिके वसुमतीं द्विजतर्पणं च ॥ ४६ ॥

भे मानसे नु(तु) हवनं कमलैः कि(क)रीटी(न्द्र)
कुंभांबुचन्दनबलान्वितसर्षपाद्भिः ।
स्नानं च दानमिह पायसपूर्णमन्नं
[2]राज्ञोऽभिषेकपदजाति(जन्म)भ उक्तशान्तिः ॥ ४७ ॥

इति जन्मादिदुष्टषण्नक्षत्रदोषशान्तिः

॥ इति श्रीनृसिंहदेवज्ञविरचिते जातकसारदीपे अष्टकवर्गफलाध्यायः एकोनाशीतितमः ॥

---

१. अविः मेषः तद्भवः कम्बलादिः तस्य दानमित्यर्थः ॥ २. राज्ञः अभिषेकनक्षत्रात्, पदवीलाभनक्षत्रात्, जन्मनक्षत्राद्वा पूर्वोक्तेषु षट्सु नक्षत्रेषु पूर्वोक्ता शान्तिः कार्या । अथ वा राज्ञः अभिषेकनक्षत्रे, पदवीलाभनक्षत्रे, च या शान्तिरुक्ता सा पूर्वोक्तेषु षट्सु नक्षत्रेष्वपि कार्येति भावः ॥ ४७ ॥

## अथ स्वरशास्त्रोक्तचक्राध्यायः अशीतितमः.

### ॥ अथ प्रतिदिनं शुभाशुभज्ञानार्थं स्वरशास्त्रोक्तं सर्वतोभद्रचक्रमपि लेख्यं ॥

अथ सर्वतोभद्रचक्रविन्यासः

[1]ऊर्ध्वगा दश विन्यस्यास्तिर्यग्रेखास्तथा दश ॥
एकाशीतिपदं चक्रं सर्वतोभद्रसंज्ञितं ॥ १ ॥

सर्वतोभद्रचक्रे षोडशस्वरविन्यासः

[2]ऐशादिकोणेऽकारादीन् स्वरान् षोडश विन्यसेत् ॥

सर्वतोभद्रचक्रे अष्टाविंशतिनक्षत्रविन्यासः

कृत्तिकादीनि पूर्वादौ सप्त सप्त क्रमेण च ॥ २ ॥

---

१. ऊर्ध्वाधरा दश रेखा विन्यस्य तदुपरि दक्षिणोत्तरा दश रेखा लिखेत् । एवं कृते एकाशीतिकोष्ठकात्मकं सर्वतोभद्रचक्रं भवेत् । तस्य चक्रस्य ऊर्ध्वभागे पूर्वा, दक्षिणभागे दक्षिणा, अधोभागे पश्चिमा, वामभागे उत्तरा च दिग्ज्ञेया ॥ २ ॥

२. तत्र ऐशानकोणादारभ्य नैर्ऋत्यकोणपर्यन्तं कोणगतेषु नवसु कोष्ठकेषु पंचमं कोष्ठकं विहाय शिष्टेष्वष्टसु कोष्ठकेषु क्रमेण अकारं, उकारं, लृकारं, ओकारं, अंकारं, एकारं, ऋकारं, इकारं च लिखेत् । एवं आग्नेयकोणादारभ्य वायव्यकोणपर्यंतं कोणगतेषु नवसु कोष्ठकेषु पंचमं कोष्ठकं विहाय शिष्टेष्वष्टसु कोष्ठकेषु क्रमेण आकारं, ऊकारं लॄकारं औकारं, अः कारं, ऐकारं, ॠकारं, ईकारं च लिखेत् । ततः अकारस्य आकारस्य च मध्यगतेषु पूर्वगतेषु सप्तसु कोष्ठकेषु क्रमेण कृत्तिकादीनि सप्त नक्षत्राणि लिखेत् । एवं दक्षिणगतेषु आकारस्य इकारस्य च मध्यगतेषु मघादीनि सप्त, पश्चिमगतेषु इकारस्य ईकारस्य च मध्यगतेषु अनूराधादीनि अभिजित्सहितानि श्रवणान्तानि सप्त, उत्तरगतेषु ईकारस्य अकारस्य च मध्यगतेषु

सर्वतोभद्रचक्रे अवकहडादिविन्यासः

[1]अवहकपः(कहडाः) पूर्वस्यां प(म)टपरता दक्षिणे देयाः ॥
नयभजस्वा(जखा वा)रुण्यां गदस(सद)चलाश्चोत्तरे देयाः ॥ ३ ॥

सर्वतोभद्रचक्रे द्वादशराशिविन्यासः

[2]त्रयस्त्रयोऽपि विन्यस्या वृषाद्या राशयः क्रमात् ॥

सर्वतोभद्रचक्रे नन्दादितिथिविन्यासः

पूर्वादिशेषकोष्ठेषु नन्दादितिथिपंचकं ॥ ४ ॥

सर्वतोभद्रचक्रे सूर्यादिवारविन्यासः

वाराणां सप्तकं लेख्यं यथोक्तस्वरमार्गगं ॥
[भौमादित्यौ च नन्दायां भद्रायां बुधशीतगू ॥ ५ ॥]
[जयायां च गुरुः प्रोक्तो रिक्तायां भार्गवस्तथा ॥
पूर्णायां शनिवारश्च लेख्यश्चक्रे विनिश्चितम् ॥ ६ ॥]

---

धनिष्ठादीनि सप्त नक्षत्राणि लिखेत् ॥ २ ॥ १. एवं उकारस्य ऊकारस्य च मध्यगतेषु पञ्चसु कोष्ठकेषु क्रमेण अं, वं, कं, हं, डं, लिखेत्। एवं ऊकारस्य ऋकारस्य च मध्यगतेषु पंचसु कोष्ठकेषु क्रमेण मं टं पं रं तं, ऋकारस्य ॠकारस्य च मध्यगतेषु नं यं भं जं खं, ॠकारस्य उकारस्य च मध्यगतेषु क्रमेण गं सं दं चं लं लिखेत् ॥ ३ ॥ २. एवं ऌकारस्य ॡकारस्य च मध्यगेषु त्रिषु कोष्ठकेषु क्रमेण वृषभं मिथुनं कर्काटकं लिखेत्। एवं ॡकारस्य एकारस्य च मध्यगतेषु त्रिषु कोष्ठकेषु क्रमेण सिंहं कन्यां तुलां, एकारस्य ऐकारस्य च मध्यगतेषु क्रमेण वृश्चिकं धनुः मकरं, ऐकारस्य ऌकारस्य च मध्यगतेषु क्रमेण कुम्भं मीनं मेषं च लिखेत्। अवशिष्टेषु पञ्चसु कोष्ठकेषु पूर्वकोष्ठके नन्दां (प्रतिपत् षष्ठी एकादशी च नन्दा), दक्षिणकोष्ठके भद्रां (द्वितीया सप्तमी द्वादशी च भद्रा), पश्चिमकोष्ठके जयां (तृतीया अष्टमी त्रयोदशी च जया), उत्तरकोष्ठके रिक्तां (चतुर्थी नवमी चतुर्दशी च रिक्ता), मध्यमकोष्ठके पूर्णां (पञ्चमी दशमी पञ्चदशी च पूर्णा) लिखेत् ॥ ४ ॥ १. अत्र सार्धः श्लोको

सर्वतोभद्रचक्रे वेधत्रयज्ञानम्

[1]यस्मिन् धिष्ण्ये ग्रहे(ह)[स्तिष्ठेद्दृष्टित्रयवशात्ततः] ॥
[संभवेत्त्रिविधो] वेधो वामदक्षिणसंमुखः ॥ ७ ॥

सर्वतोभद्रचक्रोक्तेषु व्यञ्जनेष्वनुक्तानां व्यञ्जनानामन्तर्भावः

घङछौ(छा) रौद्रभे विद्धाः षणठा(ठा) हस्तेऽथ तोयभे धफढा(ढाः) ॥
अ(आ)हिर्बुध्न्ये मञथा(थझञा) दृष्टिवशाद्ग्रहभनो(वो) वेधः ॥ ८ ॥

---

लुप्त इति भाति । तत्र राजविजयात् उद्धृतो भागो लिखितः । नन्दा यस्मिन् कोष्ठके लिखिता तत्र रविकुजवारौ लेख्यौ । एवं भद्राकोष्ठके चन्द्रबुधवारौ, जयाकोष्ठके गुरुवारः, रिक्ताकोष्ठके शुक्रवारः, पूर्णाकोष्ठके शनिवारश्च लेख्याः ॥ ५-६ ॥ १. एवं षड्भिः श्लोकैः सर्वतोभद्रचक्रे अकारादिषोडशस्वराणां अवकहडादिविंशत्यक्षराणां अष्टाविंशति-नक्षत्राणां मेषादिद्वादशराशीनां नन्दादितिथीनां सूर्यादिवाराणां च विन्यासः प्रदर्शितः इदानीं तत्फलं वक्तुं तदुपयुक्तं वेधमाह (यस्मिन्निति) यस्मिन्नक्षत्रे सूर्यादिर्ग्रहो वर्तते स ग्रहः तत्संमुखगतं नक्षत्रं संमुखदृष्ट्या पश्यति । यथा भरणीस्थो ग्रहः मघां संमुखदृष्ट्या पश्यति । ग्रहाश्रितनक्षत्रात्पृष्ठगामिषु कोणगतेषु कोष्ठकेषु विद्यमानान् तिथिनक्षत्रव्यं-जनराशिजन्मवारस्वरान् दक्षिणदृष्ट्या पश्यति । यथा भरणीस्थो ग्रहः अनुराधानक्षत्रं, लकारनकारौ व्यंजनाक्षरौ, वृश्चिकमेषौ राशी, रिक्ताजये तिथी, गुरुशुक्रवासरौ च दक्षिणदृष्ट्या पश्यति । एवं ग्रहाश्रितनक्षत्रात् अग्रगामिषु कोणगतेषु कोष्ठकेषु विद्यमानान् नक्षत्रादीन् वामदृष्ट्या पश्यति । यथा-कृत्तिकास्थो ग्रहः विशाखानक्षत्रं, अकारं स्वरं, तकारं व्यञ्जनं, तुलावृषभौ राशी, नन्दाभद्रे तिथी, रविचन्द्रकुजबुधवारान् वामदृष्ट्या पश्यति । संमुखदृष्टौ संमुखवेधः वामदृष्टौ वामवेधः दक्षिणदृष्टौ दक्षिणवेधः भवति ।

[(बवौ सशौ खषौ चैव जयौ ङञौ परस्परम् ॥
एकेन द्वितयं विद्धं ज्ञेयं सौम्याशुभग्रहैः ॥ ९ ॥)]

---

अवकहडादिवर्णविन्यासे अकार एकः स्वरः। शिष्टानि ककारादीनि लकारान्तान्येकोनविंशतिर्व्यञ्जनानि। अनुक्तानां घकारादीनां व्यञ्जनानां विन्यासक्रममाह (घङछा इति) रौद्रभे आर्द्रानक्षत्रे तदधोभागे विद्यमाने ककारे इति यावत्। विद्धे इति शेषः। घङछा विद्धा ज्ञेया इति योजना। ककारे येन केनापि ग्रहेण विद्धे घकारङकारछकारास्त्रयोऽपि विद्धा ज्ञेयाः। अतः ककारकोष्ठके घं, ङं, छं लिखेत् इति भावः। एवं हस्ताधोभागगते पकारकोष्ठके षणठाः, पूर्वाषाढाधोभागगते भकारकोष्ठके धफढाः उत्तराभाद्रानक्षत्राधोभागगते दकारकोष्ठके थझञा लेख्या इति भावः। अत्र तृतीयश्लोके "नयभजखा" इत्यस्य स्थाने "नयबजशा" इति, अष्टमश्लोके "धफढा" इत्यस्य स्थाने "धभढा" इति, "थझञा" इत्यस्य स्थाने "सझथा" इति च पाठान्तरं वर्तते। एवं एतद्ग्रन्थोक्तपाठानुसारेण बकारशकारळकारभिन्नानां, ग्रन्थान्तरोक्तपाठान्तरानुसारेण अकारफकारळकारभिन्नानां वर्णानां विन्यासो दर्शितः। बकारशकारळकाराणां वा ग्रन्थान्तरपाठरीत्या अकारफकारळकाराणां वा विन्यासो न दर्शितः। तत्र लकारळकारयोरभेदः सर्वसिद्ध इति लकारस्थाने एव ळकारस्यापि विन्यासः। शिष्टानां बकारादीनां विन्यासप्रदर्शकः श्लोकः राजविजयादुद्धृतः (बवाविति) वकारेण विद्धेन बकारोऽपि विद्धो भवति। अतो वकारकोष्ठके बकारं लिखेत्। एवं सशावित्यादावपि। अत्र बवौ सशौ ङञौ इत्येतत्त्रयमेव प्रकृतोपयोगि। "खषौ जयौ" इत्येतद्द्वयं दृष्टान्ततया वा वस्तुस्थितिकथनपरतया वा गृहीतम्। तु न बवौ सशौ ङञौ इत्यत्रेव खकारस्थाने षकारस्य जकारस्थाने यकारस्य विन्यासविधानार्थं। तयोर्विन्यासस्थलस्य कण्ठत एव ग्रन्थकारेणोदितत्वात्। एवं च बकारशकारञकाराणां विन्यासः सिद्धः। ग्रन्थान्तरपाठरीत्या फकारस्य विन्यासः कुत्रेति न ज्ञायते। विधामाधवस्तु

अवकहडादिचक्ररीत्या नामनक्षत्रनिर्णयप्रकरणे वर्गप्रथमाक्षरेण वर्गद्वितीयाक्षरस्य वर्गतृतीयाक्षरेण वर्गतुरीयाक्षरस्य ग्राह्यतामाह। तथा ङकारञकारणकारङकाराणां नामादिगतत्वस्य प्रायशः असंभवेन तेषां चक्रे विन्यासं नादृतवान्, "नयबजद्या इति पाठं चादृतवान्। अतस्तन्मतरीत्या पकारकोष्ठके फकारस्य विन्यासः, "घङछा रौद्रभे विद्धा" इत्यादिश्लोकद्वयोक्तप्रमेयपरित्यागश्च सिध्यति। परं तु तन्मते "षण्मुखः" इत्यादिनामनक्षत्रनिर्णयो दुःशकः स्यात्। अतस्तदर्थं तेनापि "षण्मुखः" इत्यादिनामस्थले "घङछा रौद्रभे विद्धा" इति श्लोकोक्तः प्रकारोऽनुसर्तव्यः। मदुक्त-पाठान्तररीत्या फकारविन्यासार्थं विद्यामाधवोक्तः प्रकारोऽनुसर्तव्यः। एवं परस्पराभ-यत्रैव गतिः। एवं सर्वतोभद्रचक्रे स्वरव्यंजननक्षत्रवारतिथिराशयो विन्यस्ताः। एतेषु विद्धेषु फलमग्रे वक्ष्यते। तत्र नामाद्यक्षरस्य स्वरत्वे तस्य विद्धत्वे च स्वरवेधफलं भवति। यथा-अर्जुन इत्यत्र अकारस्य। एवं नामाद्यक्षरस्य व्यंजनत्वे नामादिगतव्यञ्जनस्य स्वरान्तता‌नियमेन व्यञ्जने विद्धे व्यञ्जनवेधफलं, स्वरे विद्धे स्वरवेधफलम्, उभयोर्विद्धयोरुभयवेधफलम् भवति। यथा-[illegible]ीः इति नाम्नि कृत्तिकागते ग्रहे अकारवेधः, तदा स्वरवेधफलम्, एवं भरणीगते लकारवेधः, तदा व्यञ्जनवेधफलम्। मृगशिरोगते अकारलकारयोरुभयोर्वेधः, तदा उभयवेधफलम् इत्यादि ज्ञेयम्। एवं नामाद्यक्षरस्य संयुक्ताक्षरत्वे अनेकव्यंजनमध्ये प्रथमं व्यञ्जनमेव स्वीकार्यम्। यथा-त्र्यंबक इत्यादौ तकार एव ग्राह्यः न रकारः। अत्र नामाद्याक्षरस्य व्यञ्जनत्वे स्वरस्य नामादिगतत्वाभावेन स्वरवेधे सति तत्फलं न वक्तव्यमिति केचिदाहुः। तदयुक्तम्। तत्पक्षे वक्ष्यमाणस्य पञ्चवेधफलकथनस्यायुक्त-तापातात्। तथा हि-वक्ष्यमाणे "भमो धिष्ण्ये" इति श्लोके नक्षत्रव्यञ्जनस्वरतिथि-राशिवेधानां प्रत्येकं फलमभिधाय "पञ्चविद्धो न जीवति" इति एतेषां पञ्चानामपि विद्धत्वे फलमभिधीयते। तस्य च नामाद्यक्षरस्य व्यञ्जनत्वे, तत्र च स्वरवेधव्यं-जनवेधरूपवेधद्वयाश्रयणे च संभवः। अन्यथा नामाद्यक्षरस्य स्वरत्वे व्यञ्जनवेधा

[1]वक्रगे दक्षिणा दृष्टिर्वामदृष्टिस्तु शीघ्रगे ॥
मध्या दृष्टिर्मध्यचारे ज्ञेयं दृष्टिज(त्र)यं बुधैः ॥ १० ॥

[2]राहुकेतू सदा वक्रौ शीघ्रगौ शनि(शि)भास्करौ ॥
दृष्टिद्व(त्र)यं चारवशात् भौमादिग्रहपंचके ॥ ११ ॥

---

भावेन, व्यञ्जनत्वे स्वरवेधाभावेन पञ्चवेधस्यैवाभावेन तत्फलकथनमयुक्तमेव स्यात् इति। एवं जन्मनक्षत्रे विद्धे नक्षत्रवेधफलं, जन्मराशिवेधे राशिवेधफलं, जन्मतिथिवेधे तिथिवेधफलं, जन्मवारवेधे वारवेधफलं च वक्तव्यम्। एवं यस्मिन् जन्मतिथिवारादीनां शुभो वेधः तद्दिनं शुभं, यद्दिने अशुभो वेधस्तद्दिनं अशुभमिति ज्ञेयम् ॥ ७-९ ॥

१. वक्रगे ग्रहे दक्षिणा, मार्गगे ग्रहे वामा, वक्रारंभवक्रनिवृत्तिकालगते स्पष्टग्रहे संमुखा दृष्टिः। एवं दृष्टित्रयम् ॥ १० ॥ २. राहुकेत्वोः सदा वक्रगत्वेन दक्षिणा दृष्टिरेकैव। स्पष्टरविचन्द्रयोः ऋजुगतियुक्तत्वेन सदा शीघ्रगत्वं। तेन च वामा दृष्टिरेकैव। भौमादिताराग्रहपञ्चके तु वक्रगतिसंभवे दक्षिणा दृष्टिः, ऋजुगतिसंभवे वामा दृष्टिः वक्रारंभकालवक्रनिवृत्तिकालयोः संमुखा दृष्टिः इत्येवं दृष्टित्रयं संभवति। राजविजये तु-येषां राहुकेत्वादीनां पूर्वोक्तरीत्या एकैव दृष्टिः, संभवति तेषां सदापि दृष्टित्रयं वक्तव्यम्। येषां कुजादीनां दृष्टित्रय संभवति तेषां तत्तद्दृष्टिसंभवकाले तत्तद्दृष्टिरेव ग्राह्या, नैकदा दृष्टित्रयसंभव इत्युक्तम्। तथा चोक्तम्—"एतैरेकस्वभावत्वादेषां दृष्टित्रयं वदेत्" इति। एषां राहुकेतुरविचन्द्राणां एकस्वभावत्वात् वक्रगत्वशीघ्रगत्वयोर्मध्ये एकस्वभावविशिष्टत्वात्, एतैः दृष्टित्रयं वदेत् इति तदर्थः। तथा च भरणीस्थो रविः कृत्तिकानक्षत्रमात्रं विध्यति। राजविजयरीत्या मघाकृत्तिकानुराधा नक्षत्राणि, लकारनकारौ, मेषवृश्चिकौ राशी, रिक्ताजये तिथी विध्यति। एवमन्यत्रापि ऊह्यम् ॥ ११ ॥

ग्रहाणां अतिक्रूरत्वादिकम्

क्रूरा वक्रे महाक्रूराः सौम्या वक्रेऽतिशोभनाः ॥
शीघ्राः स्वल्पफलाः सर्वे मध्ये पूर्णफलप्रदाः ॥ १२ ॥

कोणगतवर्णपूर्णातिथीनां वेधज्ञानम्

[1]कोणस्थे(स्थ)धिष्ण्ये(ष्ण्य)योर्मध्येऽन्त्ये पूर्वे(र्वे)ग्रौ ग्रहो यदा ॥
अकारादिचतुष्कस्य वेधः पूर्णातिथेस्तथा ॥ १३ ॥

वेधकपापग्रहसङ्ख्याफलम्

[2]एकादिक्रूरवेधेनोऽद्वेगो हानिरुजो मृतिः ॥

सौम्यमिश्रग्रहवेधफलम्

सौम्यवेधे शुभं ज्ञेयं मिश्रैर्मिश्रं समादिशेत् ॥ १४ ॥

---

१. पूर्वोक्तरीत्या दृष्टित्रयवशात् कोणस्थकोष्ठकचतुष्टयं मध्यगतमेकं कोष्ठकं च विहाय शिष्टेषु षट्सप्ततिकोष्ठकेषु स्थितानां नक्षत्रादीनां वेधः संभवति। कोणस्थ-कोष्ठगतानां अ, आ, इ, ई वर्णानां मध्यकोष्ठगतपूर्णातिथिशनिवारयोश्च वेधः केनापि प्रकारेण नैव संभवति। अतस्तत्र वेधज्ञानाय प्रकारान्तरमाह (कोणस्थेति) ऐशान-कोणगतयोः भरणीकृत्तिकयोर्मध्ये भरण्याः अन्त्यपादे कृत्तिकाया आद्यपादे वा स्थितो ग्रहः ऐशानकोणस्थमकारं मध्यकोष्ठगतौ पूर्णातिथिशनिवारौ च विध्यति। भरण्या आद्यपादत्रये कृत्तिकाया अन्त्यपादत्रये च विद्यमानो ग्रहः पूर्वोक्तरीत्या दृष्टित्रयवशात् विध्यति। एवं आश्लेषान्त्यपादे मघाप्रथमपादे स्थितो ग्रहः आकारं, पूर्णाशनिवारौ, विशाखान्त्यपादे अनुराधाप्रथमपादे च स्थितो ग्रहः इकारं, पूर्णाशनिवारौ, श्रवणान्त्यपादे धनिष्ठाप्रथमपादे च स्थितो ग्रहः ईकारं, पूर्णाशनिवारौ च विध्यति। उक्तनक्षत्रेषु शिष्टपादेषु स्थितो ग्रहः पूर्वोक्तरीत्या दृष्टित्रयवशात् विध्यति ॥ १३ ॥

२. एवं एकाशीतिकोष्ठकगतेषु स्वरादिषु वेधे जाते वेधकर्तृग्रहाणां शुभाशुभमिश्रभावैः

### नक्षत्रादिपञ्चकवेधफलम्

[1]भ्रमो धिष्ण्येऽक्षरे हानिः स्वरे व्याधिर्भयं तिथौ ॥
राशिवेधे महाविघ्नं पंचविद्धो न जीवति ॥ १५ ॥

एकविद्धे भयं युद्धे द्वयोर्वेधेन संक्षयः ॥
त्रयाणां वेधतो भंगश्चतुर्णां वेधतो मृतिः ॥ १६ ॥

### सूर्यादिप्रत्येकग्रहवेधफलम्

[(स्वजन्मवासरं विद्धं यस्य क्रूरग्रहेण तु ॥
न तस्य सौमनस्यं स्यादाधिपीडा च जायते ॥ १७ ॥)]

अर्कवेधान्मनस्तापो भौमे हानिः शनौ रुजः ॥
राहुकेत्वोर्भयं वेधे सौम्यक्रूरयुतो न सत ॥ १८ ॥

---

संख्यया च फलविशेषमाह (एकादीति) एकेन क्रूरेण विद्धे स्वरादौ उद्वेगः, द्वाभ्यां हानिः, त्रिभिः नानारोगाः, चतुर्भिर्विद्धे मृतिर्भवति। अत्र राहुकेतुरविकुजशनयः पञ्च क्रूरग्रहाः। एतद्ग्रन्थरीत्या राहुणा विद्धं स्वरादिकं केतुना नैव विध्यते। अतः पापैः पञ्चभिर्वेधो नेकस्य स्वरादेः कदापि संभवति। चतुर्भिर्वेधस्तु संभवति। अतः ग्रन्थेऽस्मिन् पापपञ्चककर्तृकवेधफलमनुक्त्वा पापचतुष्टयकर्तृकवेधफलमेवोक्तम्। पूर्वोक्तराजविजयादिग्रन्थान्तररीत्या पापपञ्चककर्तृकवेधोपि संभवति। राहुकेत्वोर्दृष्टित्रयस्य सर्वद्[ा] सद्भावेन एकस्यैव नक्षत्रस्य उभाभ्यां वेधसंभवात्। अतस्तेषु ग्रन्थेषु पञ्चकर्तृकवेधस्यापि फलमुक्तम्। शिष्टं स्पष्टम् ॥ १४ ॥ १. जन्मनक्षत्रादीनां पञ्चानां मध्ये एकैकस्य पापग्रहवेधे फलमाह (भ्रम इति) तेषामेव मध्ये द्वयोर्वा त्रयाणां वा चतुर्णां वा पञ्चानां वा पापग्रहवेधे फलमाह पञ्चविद्ध इत्यादिना मृतिरित्यन्तेन। अत्र ग्रन्थे वारवेधफलं नोक्तम्। तत्र स्वरचिन्तामणिग्रन्थादुद्धृत्य कुण्डल्यां निवेशितम् ॥ १५-१७ ॥

चन्द्रे मिश्रफलं पुंसां रतिलाभस्तु भार्गवे ॥
बुधवेधाद्भवेद्बुद्धिर्गुरौ सर्वार्थसिद्धयः ॥ १९ ॥

वेधकर्तृग्रहाणां स्वाश्रितस्थानवशात् फलम्

स्वक्षेत्रस्थे फलं पूर्णं पादोनं मित्रगेहगे ॥
अर्द्धं समगृहे ज्ञेयं पादः शत्रुगृहस्थिते ॥ २० ॥

रोगकाले क्रूरग्रहवेधफलम्

[1]रोगकाले यदा वेधः क्रूरखेचरसंभवः ॥
वक्रगत्या भवेन्मृत्युः शीघ्रे वाच्यो(याप्य)रुजाऽन्वितः ॥ २१ ॥

पूर्वादिदिशां उदयास्तज्ञानम्

[2]त्रयं(यत्र) पूर्वादिकाष्ठायां वृषराश्यादिगो रविः ॥
सा दिशाऽस्तमिता ज्ञेया[(तिस्रः शेषाः सदोदिताः ॥ २२ ॥)]

कोणगतानां स्वराणां पूर्वादिदिग्विभागः

[3][(ईशावस्थाः स्वराः प्राच्यां ज्ञेयाश्चाग्नेयगा यमे ॥
नैर्ऋतस्थास्तु वारुण्यां वायव्यां सौम्यगा मताः ॥ २३ ॥)]

---

१. जन्मनक्षत्रादिकं क्रूरग्रहेण यदा दक्षिणदृष्ट्या विद्धं तदा रोगारंभे मृत्युः भवति। वामदृष्ट्या विद्धं यदा तदा रोगारंभे रोगपरिहारो भवति। अथ वा रोगारंभनक्षत्रं, रोगारंभराशिः, रोगारंभतिथिः, रोगनामादिमस्वरव्यञ्जने, रोगारंभवारश्च यदा पापग्रहेण दक्षिणदृष्ट्या विद्धा भवन्ति तदा रोगारंभे मृतिश्च भवति। वामदृष्ट्या वेधे रोगपरिहारो भवतीति भावः ॥ २१ ॥ २. अस्मिन् श्लोके चतुर्थः पादो लुप्तः। अस्मात् परं ईषदूनश्लोकद्वयं च लुप्तम्। तत्र स्वरचिन्तामणिग्रन्थात् उद्धृतो भागो निवेशितः। पूर्वदिग्गतेषु वृषभादिषु त्रिषु स्थिते सूर्ये पूर्वा दिक् अस्तमिता एवं सिंहादिषु स्थिते सूर्ये दक्षिणा दिक्, वृश्चिकादिषु पश्चिमा दिक्, कुंभादिषु त्रिषु उत्तरा दिक्, अस्तमिता ज्ञेया। अस्तमितदिग्भिन्नास्तिस्रो दिशः उदिता ज्ञेयाः ॥ २२ ॥ ३. कोणगतानां

नक्षत्रस्वरादीनां उदयास्तज्ञानम्

[1][नक्षत्राणि स्वरा वर्णा राशयस्तिथयो दिशः ॥
ते सर्वेऽस्तं गता ज्ञेया य]त्र भानुस्त्रिमासिकः ॥ २४ ॥

जन्मनक्षत्रादिष्वेकैकस्यास्तमनफलम्

नक्षत्रेऽस्ते रुजो वर्णो(र्णे) हानि(निः) शोकः स्वरेऽस्तगे ॥
राशौ विघ्नं तिथौ भीतिर्मरणं पंचसु स्मृतं ॥ २५ ॥

अस्तदिगाभिमुख्येन त्याज्यानि

या[त्रा] युद्धं विवादाध्वगृहे(दश्च द्वारं)प्रासादहर्म्ययोः ॥
न कर्तव्यं शुभं चान्यदस्ताशाभिमुखं त(स्तै)रैः ॥ २६ ॥

नाममाद्याक्षरस्यास्तमनफलम्

अस्ताचा(शा)भिमुखं यावद्दिनेनामाद्यमक्षरं ॥
[ता]वत्सर्वेषु कार्येषु भवेद्दैवहतो नरः ॥ २७ ॥

नक्षत्रादीनामुदयफलम्

नक्षत्रेऽभ्युदिते पुष्टिर्वर्ण(र्णे) लाभः स्वरे सुखी ॥
राशौ च(ज)यति(स्ति)थौ तेजः पदाप्तिः य(पं)चकोऽदये ॥ २८ ॥

दीपो यथा गृहस्यान्तः प्रकाशयति सर्वतः ॥
तथैव सर्वतोभद्रं चक्रं ज्ञानप्रकाशकं ॥ २९ ॥

॥ इति सर्वतोभद्रचक्रं ॥

---

स्वराणां दिग्ज्ञानमाह (ईशानस्था इति, ईशानदिग्गता अ उ ऌ ओ स्वराः पूर्वदिशि, आग्नेयगताः आ ऊ ॡ औ स्वराः दक्षिणदिशि, नैर्ऋत्यगताः इ ऋ ए अं स्वराः पश्चिमदिशि, वायव्यगताः ई ॠ ऐ अः स्वराः उत्तरदिशि स्थिता ज्ञेयाः ॥ २३ ॥

१. अस्तमित दिग्गताः नक्षत्रादयः षट् अस्तमिता ज्ञेयाः ॥ २४ ॥

# सर्वतोभद्रचक्रम् (कोष्ठक : ३)

पूर्वा

उत्तरा

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अ | कृत्तिका | रोहिणी | मृग | आर्द्रा | पुन | पुष्य | आश्लेषा | आ |
| भरणी | उ | अ | व, ब, | क, घ, ङ, छ, | ह | ड | ऊ | मखा |
| अश्विनी | ल, ळ | ऌ | वृष | मिथुन | कर्क | ॡ | म | पू, फ |
| रेवती | च | मेष | ओ | नन्दा रविवार: कुजवार: | औ | सिंह | ट | उ, फ |
| उ, भा | द, थ, झ, ञ, | मीन | रिक्ता शुक्रवार: | पूर्णा शनिवार: | भद्रा चन्द्रवार: बुधवार : | कन्या | प, ष, ण, ठ, | हस्ता |
| पू, भा | स, श, | कुंभ | अः | जया गुरुवार: | अं | तुला | र | चित्रा |
| शत | ग | ऐ | मकर | धनु | वृश्चिक | ए | त | स्वाती |
| धनिष्ठा | ऋ | ख | ज | भ, ध, फ, ढ, | य | न | ॠ | विशाखा |
| ई | श्रवणा | अभि | उ, आ | पू, आ | मूला | ज्येष्ठा | अनूराधा | इ |

दक्षिणा

पश्चिमा

## ॥ अथ चन्द्रकालानलं चक्रम् ॥

चन्द्रकालानलं चक्रं वृत्ताकारं लिखेद्बुधः ॥
चतुर्दिक्षु त्रिशूलानि मध्यभिन्नानि कारयेत् ॥ ३० ॥

पूर्वत्रिशूलमध्यस्थं(स्थ)दिनधिष्ण्यादि विन्यसेत् ॥
शूले बहिस्तथा गर्भे गर्भे बाह्ये त्रिशूलके ॥ ३१ ॥

शूलान्तर्जन्मभे मृत्युः स्वक्षत(क्षिशू)लं तु पार्श्वगे ॥
बाह्याष्टके मध्यमं स्याच्चन्द्रगर्भे जयप्रदं ॥ ३२ ॥

॥ इतिचन्द्रकालानलं चक्रं ॥

## ॥ अथ सूर्यकालानलचक्रं ॥

ऊर्ध्वरेखास्त्रिशूलाग्रास्तिस्रस्तिर्यक्तथा त्रयं ॥
द्वे द्वे रेखे कोणगे स्तः शृङ्गयुग्मं तथैकया ॥ ३३ ॥

---

१. वर्तुलाकारं चन्द्रबिम्बं लिखित्वा तत्र केन्द्रगामिनी पूर्वापरा दक्षिणोत्तरा च रेखा कार्या। ते रेखे उभयतो वर्धयित्वा रेखाग्रगामीनि चत्वारि त्रिशूलानि कार्याणि। तत्र पूर्वत्रिशूलगतशूलत्रये मध्यशूलाग्रे तद्दिनसंबन्धि चन्द्रनक्षत्रं लिखेत्। ततो द्वितीयं नक्षत्रं त्रिशूलाद्बहिः दक्षिणपार्श्वे, तृतीयचतुर्थे नक्षत्रे वृत्तान्तर्भागे पूर्वरेखायाः क्रमेण दक्षिणोत्तरपार्श्वयोः, पञ्चमं नक्षत्रं त्रिशूलाद्बहिर्वामपार्श्वे, षष्ठसप्तमे नक्षत्रे क्रमेण त्रिशूलवामदक्षिणशूलयोर्लिखेत्। अनेनैव क्रमेण दक्षिणपश्चिमोत्तरत्रिशूलेषु साभिजिन्नष्टाविंशतिर्नक्षत्राणि लिखेत्। एवं लिखिते चक्रे जन्मनक्षत्रं त्रिशूलचतुष्टये मध्यशूलगतनक्षत्रचतुष्टयान्तर्गतं यदा तदा नेत्रबाधा, त्रिशूलबहिर्गताष्टकान्तर्गतं यदा तदा मध्यमं, चन्द्रबिम्बान्तर्गताष्टकान्तर्गतं यदा तदा जयः भवतीति ज्ञेयम् ॥ ३०-३२ ॥

२. ऊर्ध्वाधरास्तिस्रः याम्योत्तरास्तिस्रः रेखाः कार्याः। ऊर्ध्वाधरासु तिसृषु रेखा

# सूर्यकालानलचक्रम् ८



मध्यशूलाधरे दण्डे भानुभाद्यं भमंडलं ॥
अधस्त्रयं जन्मधिष्ण्यमुद्वेगो बन्धनं वधः ॥ ३४ ॥

रेखाष्टके जयः षट्के लाभः शृङ्गयुगे रुजः ॥
शूलत्रये मृतिर्युद्धे वादि(वादे) रोगार्दिते गमे ॥ ३५ ॥

॥ इति सर्व(सूर्य)कालानलचक्रं ॥

## ॥ अथ वैनतेयचक्रं ॥

[1]चंघां(च्चां) शीर्षे गले वल(क्ष)स्युदरेऽङ्घ्योश्च(पक्ष)पादयोः ॥
त्रीणि त्रीणि क्रमेणैव नरजन्मर्क्षतो न्यसेत् ॥ ३६ ॥

चंचुमस्तकयोर्मृत्युः कण्ठे ह्युयु(द्यु)दरे जयः ॥
पादे पक्षे भवेद्भंगो वैनतेयाख्यचक्रके ॥ ३७ ॥

॥ इति वैनतेयचक्रं ॥

---

सूर्ध्वभागे त्रीणि त्रिशूलानि कार्याणि । त्रिशूलत्रयपार्श्वगामिनी शृङ्गाकारा एका रेखा कार्या । ऐशाननैर्ऋतकोणगे द्वे, आग्नेयवायव्यकोणगे च द्वे रेखे कार्ये । अत्र चक्रे मध्यमत्रिशूलमूले पश्चिमदिशि तात्कालिकं सूर्यनक्षत्रं लिखेत् । तत आरभ्य प्रदक्षिणक्रमेण रेखाग्रे त्रिशूलाग्रे शृङ्गाग्रे च अभिजित्सहितान्यष्टाविंशतिर्नक्षत्राणि लिखेत् । तत्र त्रिशूलत्रयाधोभागगतनक्षत्रत्रयान्तर्गतं यदा जन्मनक्षत्रं तदा क्रमेण उद्वेगो बन्धनं वधः फलम्, कोणगतरेखाग्राष्टकगतं यदा तदा जयः, तिर्यग्गतरेखाग्राषट्कगतं यदा तदा लाभः, शृङ्गद्वयगतं यदा तदा रोगाः, त्रिशूलत्रयशूलाग्रनवकगतं यदा तदा मृत्युर्भवति । एतत्सर्वं युद्धे रोगे विवादे यात्रायां च चिन्त्यमिति भावः ॥ ३३-३५ ॥ १. वैनतेयाकारं चक्रं विलिख्य तत्र जन्मनक्षत्रादारभ्य तद्दिननक्षत्रपर्यन्तं वक्ष्यमाणप्रकारेण लिखेत् । प्रथमानि त्रीणि चंच्वां, ततः पराणि शिरसि त्रीणि, कण्ठे त्रीणि, वक्षसि त्रीणि, उदरे

## घोरकालानलचक्रम् ६

कु 7 पुनर्वसुः
चं 6 आर्द्रा
चं 5 मृगशिरा
चं 4 रोहिणी
र 3 कृतिका
र 2 भरणी
र 1 अश्विनी

कु 8 पुष्यम्
कु 9 आश्लेषा
बु 10 मघा
बु 11 पूर्वफल्गुनी
बु 12 उत्तरफल्गुनी
गु 13 हस्ता
गु 14 चित्रा

गु 15 स्वाती
शु 16 विशाखा
शु 17 अनुराधा
शु 18 ज्येष्ठा
श 19 मूला
श 20 पूर्वाषाढा
श 21 उत्तराषाढा

22 अभिजित्
रा 23 श्रवणा
रा 24 धनिष्ठा
रा 25 शतभिषा
के 26 पूर्वाभाद्रा
के 27 उत्तराभाद्रा
के 28 रेवती

## ॥ अथ घोरकालानलचक्रं ॥

¹शलाकासप्तकं चक्रं दिनर्क्षाद्यभिजिद्विनः(ना) ॥
त्रिषु त्रिषु च धिष्ण्येषु नव सूर्यादयो ग्रहाः ॥ ३८ ॥

यदङ्गे नाम[न]क्षत्रं तदंग(द्गते)स्तत्फलं वदेत् ॥
नाभौ(भानौ) तापो विधौ लाभः कुजे मृत्युर्व(र्बु)धे धियः ॥ ३९ ॥

जीवे सौख्यं सिते भोगो मन्दे भीरुरगे क्षतं ॥
केतौ नाशः फलानि स्युर्घोरे कालानलाख्यके ॥ ४० ॥

॥ इति घोरकालानलं चक्रम्

²स्वच्छाया जि(द्वि)गुणा विश्वयुक्ता भाज्या ष्टभिः फलं ॥
लाभोऽथो(र्थो) हानि रुग्वृद्धिर्भयं सिद्धिर्मृतिः क्रमात् ॥ ४१ ॥

---

त्रीणि, पक्षद्वये प्रत्येकं त्रीणि त्रीणि, पादद्वये प्रत्येकं त्रीणि त्रीणि एवं स्थापनीयानि। नित्यनक्षत्रे चञ्चुगते वा शिरोगते वा कार्यकरणे मृत्युः, पादगते वा पक्षगते वा कार्यकरणे पराजयः, अन्यत्र गते कार्यकरणे जयः स्यादिति भावः ॥ ३६-३७ ॥ १. ऊर्ध्वाधराः सप्त रेखा विलिख्य तदुपरि याम्योत्तराः सप्त रेखा लिखेत्। दिक्षु चतुर्षु रेखा वर्धयेत्। पूर्वदिग्गतेषु रेखाग्रेषु वामभागे ईशानदिग्गतरेखाग्रात् आरभ्य तद्दिननक्षत्रतः प्रदक्षिणक्रमेण अभिजिद्युतान्यष्टाविंशतिर्नक्षत्राणि लेख्यानि। ततः तेनैव क्रमेण जन्मनक्षत्रादारभ्य त्रिषु त्रिषु नक्षत्रेषु क्रमेण सूर्यादयो नव ग्रहा लेख्याः। ग्रहलेखनसमये अभिजितं विहाय शिष्टेषु सप्तविंशतिनक्षत्रेष्वेव ग्रहा लेख्याः। ततः अवकहडाचक्रानुसारेण नामनक्षत्रं विहाय तदपि तस्मिंश्चक्रे लेख्यम्। नामनक्षत्रगतो यो ग्रहो भवति तयोर्भ्यं वक्ष्यमाणं फलं ज्ञेयम्। अश्विनीनक्षत्रं दिननक्षत्रं प्रकल्प्य मया चक्रं लिखितं पार्श्वे द्रष्टव्यम्। तत्र भरण्यादौ दिननक्षत्रे अश्विनीस्थाने भरण्यादिकं विलिख्य परिष्करणीयम् ॥ ३८-४० ॥ २. तात्कालिकी स्वकीया छाया स्वीयेन पादेन मापिता

## पथिराहुचक्रम् ७

पूर्वा

उत्तरा

| | | | |
|---|---|---|---|
| धर्मः | अर्थः | कामः | मोक्षः |
| अश्विनी | भरणी | कृत्तिका | रोहिणी |
| पुष्यम् | पुनर्वसुः | आर्द्रा | मृगशिरा |
| आश्लेषा | मघा | पूर्वफल्गुनी | उत्तरफल्गुनी |
| विशाखा | स्वाती | चित्रा | हस्ता |
| अनूराधा | ज्येष्ठा | मूला | पूर्वाषाढा |
| धनिष्ठा | श्रवणम् | अभिजित् | उत्तराषाढा |
| शतभिषक् | पूर्वाभाद्रा | उत्तराभाद्रा | रेवती |

दक्षिणा

पश्चिमा

## ॥ अथ शनिचक्रं ॥

..................यं त्रिभिर्मूर्नि पूजनं ॥
अक्ष्णोऽर्द्ध(?)जनसौभाग्यं ब्रूयात् द्वयं गुह्यगेऽपमृत्युदं ॥ ४२ ॥

॥ इति शनिचक्रं ॥

## ॥ अथ पथिराहुचक्रं

[२]धर्मेऽ[र्के] शशिनस्तदादिनु(षु) फलं वैरं जयो भंगता
लाभश्चेऽति तथाऽर्थतः(गे) क्षयसमत्वे लाभवस्त्रागमौ ॥
तद्वत्कामगते रवौ भयधने सौख्यं जयः कीर्तितो
मोक्षेऽर्के मृतिलाभनिष्फलसमत्वं राहुपंथा इति ॥ ४३ ॥

---

द्विगुणा हार्या। त्रयोदशयुता सा अष्टभिर्भाज्या। लब्धं फलं त्याज्यम्। शिष्टस्य फलं वक्ष्यमाणरीत्या ज्ञेयम्। एकशेषे लाभ इत्येवं क्रमेण शेषाभावे मृतिः फलम् ॥

१. अत्र शनिचक्रे प्रथमः श्लोकः द्वितीयश्लोके ईषदूनः पादश्च लुप्तः। २. ऊर्ध्वाधराः पञ्च रेखाः दक्षिणोत्तराः नव रेखाः कार्याः। एवं द्वात्रिंशत्कोष्ठकात्मकं चक्रं भवति। तत्रोर्ध्वगतकोष्ठकचतुष्टये ऐशानकोष्ठकादारभ्य क्रमेण धर्मार्थकाममोक्षा लेख्याः। तदधः तेनैव क्रमेण अभिजित्सहितानि अष्टाविंशतिनक्षत्राणि अश्विनीतः क्रमेणोत्क्रमेण च धर्मादिकोष्ठकेषु लेख्यानि। एवं कृते सप्त सप्त नक्षत्राणि धर्मादिपङ्क्तिचतुष्टये ऊर्ध्वाधरगतं भवन्ति। एवं पथिराहुचक्रेण धर्मादिनक्षत्रज्ञानम्। सूर्ये धर्मनक्षत्रगते तदादिषु धर्मार्थकाममोक्षेषु स्थितस्य शशिनः क्रमेण वैरादिचतुष्टयं फलम्। चन्द्रे धर्मगते वैरं, अर्थगते जयः, कामगते भङ्गः, मोक्षगते लाभः भवतीति भावः। एवं अर्थगे अर्के तदादिषु अर्थकाममोक्षधर्मेषु स्थिते चन्द्रे क्रमेण क्षयः समत्वं लाभः वस्त्रागमश्च भवति। एवं कामगते सूर्ये तदादिषु काममोक्षधर्मार्थेषु स्थिते चन्द्रे क्रमेण भयं धनं

[1][धर्मार्थकाममोक्षाः स्युः] साभिजिद्भेऽष्टशेषिते ॥
सैके द्विसप्तसु त्र्यंगे पंचवेदे क्रमात्फलं ॥ ४४ ॥

॥ इति पथिराहुचक्रं ॥

## अथ सूर्यपुरुषचक्रम्

[2]मूर्ध्नि त्रिभिर्नपतितांऽघ्रिगतै(जैः)र्विदेशो
हस्ताष्टभिर्विधनता हृदि पंच लक्ष्मीः ॥
चक्रे (वक्त्रे) त्रिभिर्भवति वाहनभोगयुक्तो
जन्मर्क्षतो दिनमणिः फलमिष्टकाले ॥ ४५ ॥

इति सूर्य पुरुषचक्रम्

---

सौख्यं जयः भवति। एवं मोक्षगते सूर्ये तदादिषु मोक्षधर्मार्थकामेषु स्थिते चन्द्रे क्रमेण मृतिः लाभः निष्फलत्वं समत्वं भवतीति भावः ॥ ४३ ॥ १. इदानीं चक्रलेखनप्रयासं विनैव सूर्याचन्द्रमसोः धर्मार्थकाममोक्षगतत्वज्ञानोपायमाह (धर्मेति) अत्र प्रथमः पादो लुप्तः। स च मया पूरितः। अश्विनीमारभ्य सूर्याश्रितनक्षत्रपर्यन्तं नक्षत्रसंख्यां अभिजिता सह एकीकुर्यात्। तां संख्यां अष्टभिर्भजेत्। लब्धं फलं त्यक्त्वा शेषे सैके द्विसप्तसु त्र्यंगे पञ्चवेदे क्रमेण धर्मार्थकाममोक्षाः स्युः। तैर्धर्मादिभिः पूर्वश्लोकोक्तदिशा क्रमात् फलं वदेत् इति योजना। सैके शून्यशेषे एकशेषे च धर्मः, द्विसप्तसु द्विशेषे च सप्तशेषे च अर्थः, त्र्यंगे त्रिशेषे षट्शेषे कामः, पञ्चवेदे पञ्चशेषे चतुः शेषे च मोक्षः भवतीति भावः। एवं चन्द्रस्यापि धर्मादिनक्षत्र गतत्वं ज्ञेयम् ॥ ४४ ॥ २. पुरुषाकारे चक्रे जन्मनक्षत्रादारभ्य वक्ष्यमाणक्रमेण मूर्धाद्यवयवेषु नक्षत्राणि लिखेत्। इष्टकाले यस्मिन्नङ्गे सूर्यनक्षत्रं भवति तदङ्गनक्षत्रोक्तं फलं वक्तव्यम्। तथा हि -जन्म नक्षत्रात् आरभ्य त्रीणि नक्षत्राणि मूर्धगतानि राज्यदानि, ततः परं वक्त्रगतानि त्रीणि वाहनभोगदानि, ततः परं हस्तगतान्यष्टौ

अथ चन्द्रपुरुषचक्रम्

[1]चक्रे(वक्त्रे) के न धनं च मूर्ध्नि गुणभैः स्थानं द्वये गुह्यके
भीतिः पादरसैर्गतिः सधनता हस्तेऽब्धि(ब्धि)भिर्दक्षिणे।
वित्तं क(कु)क्षिशरैश्च वामकरगै र्वेदैः सुता(तो)[क्षि]द्वये
सौख्यं जन्मभतो विधाविति फलं जन्तोर्व(र्ब)लिष्टे (ष्ठे) स्मृतं॥ ४६॥

॥ इति चन्द्रपुरुषचक्रं॥

अथ भौमपुरुषचक्रम्

[2]स्थानं च मूर्ध्नि गुणभैरथ वामहस्ते
वेदैर्भयं चरणयोर्दशभिश्च पीडा॥
श्रीर्दक्षहस्तयुगभैर्हृदि पंचभै(भी)रु
र्वक्त्रैकतः सुखफलं जनिभात् कुजर्क्षे॥ ४७॥

॥ इति भौम पुरुषचक्रं॥

---

धनहराणि, ततः परं हृदयगतानि पञ्च लक्ष्मीप्रदानि, ततः परं पादगतान्यष्टौ देशान्तर-यात्राप्रदानि। एवं क्रमेण ज्ञेयम्॥ एवमेव वक्ष्यमाणश्लोकेष्वपि चन्द्रपुरुषचक्रादिकं ज्ञेयम्॥ ४५॥ १. जन्मनक्षत्रात् ३ शिरसि स्थानदानि, ४, ५ नेत्रे सुखदे ६ वक्त्रे धनदं, ७-१० दक्षिणहस्ते धनदानि, ११-१४ वामहस्ते सुतदानि, १५-१९ कुक्षौ वित्तदानि, २०- २१ गुह्ये भीतिदानि, २२-२७ पादयोः गतिदानि। एषु स्थितश्चन्द्रो बली तत्तत्फलप्रदः॥ ४६॥ २. जन्मनक्षत्रात् १. २. ३, मूर्ध्नि स्थानदानि ४. मुखे सुखदं, ५, ६, ७, ८, दक्षिणहस्ते श्रीप्रदानि ९, १०, ११, १२ वामहस्ते भयदानि १३, १४, १५, १६, १७ हृदये भयदानि १८, १९, २०, २१, २२, २३, २४, २५, २६, २७ पादद्वये पीडाप्रदानि। कुजे एष्वङ्गेषु स्थिते इदं फलं

॥ अथ बुधपुरुषचक्रम् ॥

[1]कण्ठे त्रिभिर्धनमथो जनिमाद्बुधर्क्षे
मूर्ध्नि त्रिभिश्च(र्न) सुखमंत्रिगजैः सुखं स्यात् ॥
गुह्यद्वयेऽथ(न) सुखयुक् त्वथ कुक्षिबाणै
र्लाभो रसैर्भुजगतैः पुरुषाकृतिज्ञै(र्थहानिः) ॥ ४८ ॥

॥ इति बुधपुरुषचक्रं ॥

## ॥ अथ गुरुपुरुषचक्रम् ॥

[2]जन्मर्क्षतः शिरसि वेदमितैर्नृपत्वे(त्वं)
नेत्रे त्रिभिः स्वमथ वामकराधि(ङ्घ्रि)मृत्युः ॥
पादांगस्लहृ(ग्घ्र)दि शनै(रै)र्धनयुमाले(माननै)क
लक्ष्मीरसव्यकरवेदसुखं गुरोर्भे ॥ ४९ ॥

॥ इति गुरुपुरुष चक्रं ॥

---

भवति ॥ ४७ ॥ १. जन्मनक्षत्रात् १, २, ३ शिरसि असुखदानि ४, ५, ६ कण्ठे धनदानि ७, ८, ९, १०, ११, १२ भुजयोः पुरुषार्थहानिदानि १३, १४, १५, १६, १७ कुक्षौ लाभदानि १८, १९ गुह्ये असुखदानि २०, २१, २२, २३, २४, २५, २६, २७ पादयोः सुखदानि नक्षत्राणि। बुधे पुरुषाङ्गेषु स्थिते इदं फलं भवति ॥ ४८ ॥

२. जन्मनक्षत्रात् १, २, ३, ४ शिरसि राज्यदानि ५, ६, ७ नेत्रे धनदानि ८ मुखे लक्ष्मीप्रदं ९, १०, ११, १२ दक्षिणहस्ते सुखदानि १३, १४, १५, १६ वामहस्ते मृत्युदानि १७, १८, १९, २०, २१ हृदि धनदानि २२, २३, २४, २५, २६, २७ पादयोः रोगदानि नक्षत्राणि। एषु स्थिते गुरौ इदं फलं भवति ॥ ४९ ॥

## ॥ अथ शुक्रपुरुषचक्रम् ॥

[1]कान्तिस्तु कण्ठगुणभैर्जनिभात्सितर्क्षे
पादेऽष्टभिः सुखमथो गुदद्धरोगः ॥
क्रोडे जयः शरमितैः करषड्भयं च
मूर्ध्न्यग्निभिः सधनता पुरुषे सिताख्ये ॥ ५० ॥

॥ इति शुक्रपुरुषचक्रं ॥

## ॥ अथ शनिपुरुषचक्रम् ॥

[2]वक्त्रेकेन रुजो गुदद्वयमृतिर्द्वाभ्यां मृतिर्नेत्रयो
मूर्ध्नि स्याद्धनमग्निभैस्व(स्त्व)थ शरैः क्रोडस्थितैः स्याद्धनं ॥
वेधो वामकरेऽक्षि(ब्धि)भिश्चरणयोः षड्भिस्तु यानं भवे-
ल्लाभो दक्षकरेऽक्षि(ब्धि)भिर्जननभान्मन्दस्थितेः स्यात्फलं ॥ ५१ ॥

इति शनिपुरुषचक्रम्

---

१. जन्मनक्षत्रात् १, २, ३, शिरसि धनदानि ४, ५, ६ कण्ठे कान्तिदानि ७, ८, ९, १०, ११, १२, करयोः भयदानि १३, १४, १५, १६, १७ उदरे जयदानि १८, १९ गुदे रोगदे २०, २१, २२, २३, २४, २५, २६, २७ पादयोः सुखदानि नक्षत्राणि । एषु अङ्गेषु स्थिते शुक्रे इदं फलं भवति ॥ ५० ॥ २. जन्मनक्षत्रात् १, २, ३ मूर्ध्नि धनदानि ४, ५ नेत्रयोः मृतिदे ६ वक्त्रेरोगदं ७, ८, ९, १० दक्षिणहस्ते लाभदानि ११, १२, १३, १४ वामहस्ते वेधप्रदानि १५, १६, १७, १८, १९ उदरे धनदानि २०, २१ गुदे मृतिदे २२, २३, २४, २५, २६, २७ चरणयोः यानदानि नक्षत्राणि । एषु स्थिते शनौ इदं फलं भवति ॥ ५१ ॥

## अथ यामलोक्तत्रित्रिवेधचक्रम्

[1]श्री यामके हि शिवकीर्तितवृत्तचक्रं
वक्ष्ये नृणां हि सदसत्फलबोधहेतोः ॥
आदानरोगकरपीडनजन्मयात्रा
द्वन्द्वा[ह]वादिचतुरंगविवादमुख्ये ॥ ५२ ॥

### त्रित्रिवेधज्ञानम्

श्रीद्वादशारकु(क)सुदर्शनतुल्यमत्र
वेधौ त्रिकोणजनितौ भय[दौ] समस्थौ ।
दंष्ट्रे च राहुदिनपावुडुपोऽत्र जिह्वा
कालस्य तद्ग्रसितविश्वमिह त्रिवेधे ॥ ५३ ॥

---

१. वृत्ताकारं चक्रं लिखित्वा तत्परिधिं राशिद्वादशकेनाङ्कयित्वा तत्तद्राशिगत-बिन्दुभिः केन्द्रगामिन्यः उभयतः चक्रपरिधिस्पर्शिन्यश्च षड्रेखाः व्यासरूपाः कार्याः । एवं कृते रथचक्राकारं द्वादशारं चक्रं भवति । तत्र रविचन्द्रराहूणां त्रयाणां तात्कालिकस्थानं लेख्यं । तत्र तेषामन्योन्यत्रिकोणगतत्वे त्रित्रिवेधो भवति । त्रयाणां रविचन्द्रराहूणां त्रिषु त्रिकोणस्थानेषु वेध इति तदर्थः । यथा रविचन्द्रराहूणां मध्ये एकस्मिन् मेषगते, द्वितीये सिंहगते, तृतीये चापगते त्रित्रिवेधः एकप्रकारः । स च त्रित्रिवेधः मेषसिंहचापगतेषु वा, वृषभकन्यामकरगतेषु वा, मिथुनतुलाकुंभगतेषु वा, कर्काटकवृश्चिकमीनगतेषु वा, रविचन्द्रराहुषु चतुःप्रकारो भवति । तत्र प्रथमतृतीयौ ओजराशिगतौ । द्वितीयतुरीयौ समराशिगतौ । तत्र समराशिगतौ द्वौ त्रित्रिवेधौ भयदौ । त्रित्रिवेधयुतनक्षत्रादौ ऋणादिस्वीकारे रोगारंभे विवाहे जन्मनि यात्रा द्वन्द्वयुद्धादौ चतुरङ्गादिक्रीडायां वाग्व्यवहारादौ च वक्ष्यमाणमनर्थफलं भवति । कालस्य राहुसूर्यौ दंष्ट्रास्थानीयौ, चन्द्रो जिह्वास्थानीयः ।

राशिप्रमाणानि

कुंभांत्यमे(मे)षवृषभा युगनाडिकाख्या
द्वन्द्वाङ्गनाघटमृगाः शरनाडिकाः स्युः ।
कर्कालिसिंहधनुषो रसनाडिकाख्या
स्तेषु क्रमाद्युगशरांगकनाडिकेषु ॥ ५४ ॥

चलसूर्यराहुचन्द्रसाधनम्

भोगः कुनाडिसदलाद्य(द्वि)षड्भिः (रसैः)[पृथक्कै]
सूर्यस्य राशिजनितोऽथ च वच्मि भस्य ।

चलसूर्यादिनक्षत्रसाधनम्

सर्वोऽश्च पंचघटिकान्परिकल्प्य राशीन्
नाडीयुतिर्भनिहिता स्वरसाप्तधिष्ण्यं ॥ ५५ ॥
शेषांशकस्व(केष्व)थ चरः(तुः)शरषट्कभेषु
स्युः प्रत्यहं गजदशार्कपलानि सूर्ये ॥
राह्वर्कचन्द्रखचरच(त्र)यमत्र वीक्ष्यं
सव्यं नभो(तमो) भ्रमति सूर्यविधू त्वसव्यं ॥ ५६ ॥

---

त्रिविधवेधविद्धनक्षत्रादिकं कालदंष्ट्रामध्यगतरसनाग्रमिव विश्वभयंकरमिति भावः । अत्र त्रिविधवेधे राहुरव्योरुभयोरपि चन्द्राभिमुखत्वे अतिभयंकरत्वम्, तदभावे भयंकरतामात्रमिति विभावनीयम् ॥ ५३ ॥ १. पूर्वश्लोके तात्कालिकरविचन्द्रराहुभिः त्रिविधवेधज्ञानप्रकारः प्रदर्शितः । एवमेव सूर्योदयात् इष्टकालपर्यन्तं गतघटिकाभिः लग्नसाधनरीत्या रविचन्द्रराहवस्तात्कालिका आनेतव्याः । इमे सूक्ष्मरविचन्द्रराहुनाम्ना वा चलरविचन्द्रराहुनाम्ना वा व्यपदिश्यन्ते । एतैरपि तत्तत्काले त्रिविधवेधं ज्ञात्वा उक्तवेधमानफले वक्तव्ये । तत्र चलरविचन्द्रराहुसाधनार्थं सर्वदेशसाधारणं स्थूलं मेषादिप्रमाणमाह

(कुंभात्त्येति) कुंभमीनमेषवृषभाः चत्वारो राशयः प्रत्येकं चतुर्भिर्घटिकाभिरुदिता भवन्ति। एवं मिथुनकन्यातुलामकराः प्रत्येकं पञ्चभिः, कर्काटकसिंहवृश्चिकचापाः प्रत्येकं षड्भिः घटिकाभिः उदिता भवन्ति। चतुर्घटिकाभोगेषु चतुर्षु राशिषु एकया घटिकया सार्धाः सप्त भागाः, अष्टभिः पलैः एकोभागः, पञ्चघटिकाभोगेषु चतुर्षु राशिषु एकया घटिकया षट् भागाः, दशभिः पलैः एको भागः, षड्घटिकाभोगेषु चतुर्षु राशिषु एकया घटिकया पञ्च भागाः, द्वादशभिः पलैः एको भागः, भुज्यन्ते। एवं गतघटीभिः चलरविचन्द्रराहून् साधयेत्। तथा हि-तात्कालिकं स्पष्टरविं राशिभागकलात्मकं लिखित्वा तदीये भागकले त्रिंशद्भिः शोधयेत्। लब्धाः सूर्याश्रितराशौ भोग्यांश-कलाः। चतुर्घटिकाभोगराशौ सार्धसप्तभिर्भोग्य भागेषु भक्तेषु लब्धा भोग्य घटिकाः शिष्टभागेषु अष्टभिर्गुणितेषु लब्धानि भोग्यपलानि। एवं पञ्चघटिकाभोगराशौ षड्भिर्भक्तेषु भोग्यभागेषु लब्धा भोग्यघटिकाः। शिष्टभागेषु दशभिर्हतेषु लब्धानि भोग्य-पलानि। एवं षड्घटिकाभोगराशौ पञ्चभिर्भक्तेषु भोग्यभागेषु लब्धा भोग्यघटिकाः। शिष्ट भागेषु द्वादशभिर्गुणितेषु लब्धानि भोग्यपलानि। एवं सूर्यस्य तदाश्रितराशौ भोग्य-घटिकाः विघटिकाश्च सिद्धाः। ताः इष्टघटिकाभिः शोधयेत्। ततः परं सूर्याश्रितरा-श्यग्रे विद्यमानानां यावतां राशीनां प्रमाणानि शोधयितुं शक्यन्ते तावतां प्रमाणानि शोधयेत्। शिष्टघटिकाभिः विघटिकाभिश्च भुक्तभागा गणनीयाः। चतुर्घटिकाभोगराशौ शिष्टासु भुक्तघटिकासु सार्धसप्तभिर्गुणितासु, विघटिकासु अष्टभिर्भक्तासु च लब्धयोर्योगे भुक्तभागा भवन्ति। एवं पञ्चघटिकाभोगराशौ शिष्टासु भुक्तघटिकासु षड्भिर्गुणितासु, विघटिकासु दशभिर्भक्तासु लब्धयोर्योगे भुक्तभागा भवन्ति। एवं षड्घटिकाभोगराशौ शिष्टासु भुक्तघटिकासु पञ्चभिर्गुणितासु विघटिकासु द्वादशभिर्भक्तासु लब्धयोर्योगे भुक्तभागा भवन्ति। ते च येषां प्रमाणानि शोधितानि तदग्रिमराशिगता भवन्ति। इदं च सूर्याश्रित राशौ भोग्यघटिकापेक्षया इष्टघटिकानामाधिक्ये ज्ञेयम्। इष्टघटीनां तदपेक्षया न्यूनत्वे तद्घटिकासंबन्धिनो भागान् पूर्वोक्तदिशा प्रसाध्य सूर्यभुक्तभागेषु योजयेत्। एवं कृते

स्पष्टचलसूर्यो भवति। अत्रोदाहरणम् तात्कालिकस्पष्टरविः ६ १५ ३० इष्टघटी १० विघटिका ३० अत्र तुलायां रविभुक्तभागाः १५ ३० एते त्रिंशद्भिः शोधिताः १४ ३० भोग्यभागाः। अस्य राशेः पञ्चघटिकाभोगत्वेन एते भोग्यभागाः षड्भक्ताः। फलम् २ घटिकाः। शेषः २ ३० दशभिर्गुणिताः। फलम् २५ पलानि। आहत्य २ २५ घटयः भोग्याः। एतत् अग्रिमराशिप्रमाणं ६ च इष्टं घटीतः १० ३० शोधितम्। शेषः २ ५ घटिकाः। एताः षड्घटिकाभोगराशौ धनुषि भुक्तघटिकाः। अत्र घटिकाः २ पञ्चगुणिताः १० भागाः। विघटिकासु ५ द्वादशभक्तासु लब्धिः भागाः शून्यम् कलाः २५। एते भागाः कलाश्च धनुषि चलसूर्यस्योदिता भवन्ति। तथा च चलसूर्यस्फुटम् ८ १० २५ उदाहरणान्तरम्—पूर्वोक्त एव रविः। इष्टघटी १ घटिका ९ विघटिकाः। अत्र तुलायां पूर्वसाधित रविभोग्यघटिकापेक्षया इष्टघटी न्यूना। स च राशिः पञ्चघटीभोगः। अत्र इष्टघटी १ षड्गुणिता ६ भागाः लब्धाः। विघटिकासु ९ दशभक्तासु लब्धिः भागाः शून्यम् कलाः ५४। एतेषु भागेषु पूर्वोक्ते ६ १५ ३० रवौ योजितेषु ६ २२ २४ चलरविर्भवति। एवमेव चलचन्द्रसाधनमपि तात्कालिकस्पष्टचन्द्रात् कर्तव्यम्। राहोस्तु विलोमगतिमत्वया विलोमलग्नसाधनरीत्या चलराहुसाधनं कर्तव्यम्। तथा हि—राह्वाश्रितराशौ भोग्यघटीसाधनरीत्या भुक्तभागैः भुक्तघटीपलानि साध्यानि। तानि इष्टघटीभ्यः शोधयेत्। ततः परं राह्वाश्रितराशेः पूर्वतनानां यावतां राशीनां प्रमाणानि शोधयितुं शक्यन्ते तावतां प्रमाणानि शोधयेत्। शिष्टा घटिकाः शोधितेभ्यो राशिभ्यः पूर्वतनराश्यन्तादारभ्य वक्रगत्या भुक्ता भवन्ति। अतस्तद्घटिकासंबन्धिनो भागान् पूर्वोक्तरीत्या संसाध्य त्रिंशता शोधयेत्। शिष्टा भागाः तद्राशिसंबन्धिनः चलराहुस्फुटभागा भवन्ति। इदं च राह्वाश्रितराशौ भुक्तघटीनां इष्टघटिकापेक्षया न्यूनत्वे ज्ञेयम्। इष्टघटीनां भुक्तघटिकापेक्षया न्यूनत्वे तु पूर्वोक्तरीत्या साधितान् इष्टघटिसंबन्धिनो भागान् तात्कालिकस्पष्टराहौ शोधयेत्। लब्धश्चलराहुर्भवति। उदाहरणम्-तात्कालिकराहुः १० १५ ३० इष्टघटयः १० ३० अत्र पूर्वोक्तरीत्या साधिताः कुंभे गतघटयः २ ४ मकरमानम् ५ एतयोर्योगे ७ ४ इष्टघटीभिः १० ३० शोधिते ३ २६

धनुषि भुक्तघटयः। पूर्वोक्तरीत्या एताभिः साधिताः १७ १० वक्रगत्या भुक्तभागाः। एते सिंहता शोधिताः १२ ५० धनुषि चलराहुस्फुटभागाः तथा च ८ १२ ५० स्पष्टचलराहुः सिद्धः। उदाहरणान्तरम्—पूर्वोक्त एव राहुः इष्टघटी १ १०। अत्र इष्टघटी भुक्तघटिकापेक्षया न्यूना। अतः पूर्वोक्तरीत्या साधितान् इष्टघटीसंबन्धिनो भागान् ८ ४५ स्पष्टराहौ १० १५ ३० शोधयेत्। शिष्टाः १० ६ ४५ चलराहुः। एवं चलरविचन्द्रराहवः निरयनैस्तात्कालिकै रविचन्द्रराहुभिः स्थूलराशिप्रमाणाश्रयणेन लाघवार्थं साधिताः। वस्तुतस्तु तत्तद्देशसंबन्धिभी राशिप्रमाणैः सायनतात्कालिकरव्यादि-साधिता एते सूक्ष्मा भवन्ति। एतैश्चलरविचन्द्रराहुभिरपि तात्कालिकरविचन्द्रराहुभिरिव त्रिविधो ज्ञेयः। एवं एतेषां चलरव्यादीनां स्थाश्रितनक्षत्रविशेषेणापि फलविशेषो वक्ष्यते। अतस्तन्नक्षत्रज्ञानार्थमाह (अथ च बभिम भस्येति) अर्थ भावः—चलसूर्यादीनां गतराशयः पञ्चभिर्गुणनीयाः। लब्धा घटिकाः। तासु वर्तमानराशिभागान् षड्भिर्भक्त्वा लब्धा घटिका योज्याः। शिष्टान् भागान् दशभिर्गुणयित्वा लब्धानि पलानि तासु योज्यानि। एवं कृते अश्विन्युदयादारभ्य तद्ग्रहोदयपर्यन्तं भुक्ताः स्थूलघटिकाः। षष्टिघटीभिः सप्तविंशतिनक्षत्राणामुदयो भवति। अतोऽत्रानुपातः यदि षष्टिघटीभिः सप्तविंशतिर्नक्षत्राणि लभ्यन्ते तर्हि ग्रहभुक्तघटीभिः कियन्ति इति। तथा च ग्रहभुक्तघटिकाः सप्तविंशतिगुणिताः षष्टिभक्ताश्चेत्फलं गतनक्षत्राणि। शेषश्चतुर्गुणितः षष्टिभक्तश्चेल्लब्धिः गतनक्षत्रचरणम्। उदाहरणं-चलरविः पूर्वोक्तः ६ २२ २४। अत्र गतराशयः ६ पञ्चगुणिताः ३० घटिकाः। गतभागाः २२ २४ षड्भिर्भक्ताः। लब्धाः ३ घटिकाः। शेषः ४ २४ दशगुणिताः ४४ पलानि। एवं च अश्विनीमारभ्य ग्रहोदयपर्यन्तं गतघटिकाः ३३ ४४। एताः सप्तविंशतिगुणिताः ९ १० ४८ षष्टिभक्ताः। लब्धिः २५। शेषः १० ४० चतुर्गुणितः ४२ ४० षष्टिभक्तः। लब्धिः शून्यम्। शेषः ४२ ४०। अतोऽत्र अश्विनीमारभ्य १५ नक्षत्राणि गतानि। षोडशे विशाखानक्षत्रे प्रथमचरणे रविर्वर्तते इति ज्ञेयम्। अत्र सर्वेषामपि राशीनां पञ्चघटिकाभोगो लाघवायाङ्गीकृतः। चतुर्घटिकादिभोगाश्रयणेन क्रियाकरणे तु गणितगौरवं भवति। फलं तु पक्षद्वयेऽपि सममेव अतोऽयं मार्गो ग्रन्थकृतः॥ ५४-५६॥

एकराशित्रिवेधसमसप्तमत्रिवेधनवाष्टत्रिवेधानां ज्ञानम्

¹एकर्क्षगाश्च समसप्तमगा नवेष्टोः(वाष्ट)
संस्थास्तदा स्वरविदः प्रवदन्ति मृत्युं ।

त्रिवेधचतुष्टयफलम्

एकेन सक्षत इह द्वितयेन मृत्यु
र्युद्धे त्रिभिश्च जनितेऽत्र मृतिर्विशेषात् ॥ ५७ ॥

चलसूर्यादीनां नक्षत्रसाधने प्रकारान्तरम्

²स्यात्पंचभोगमखिलं हि गृघं(हं) हृतं भैः
षष्ठ्याप्त(स)मृक्षमिह शेषकतोऽशमूचुः ।

---

१. पूर्वोक्तरीत्या साधितानां तात्कालिकरविचन्द्रराहूणां वा चलरविचन्द्रराहूणां वा एकराशिगतत्वे एकराशित्रिवेधः, अन्योन्यं सप्तमराशिगतत्वे समसप्तमत्रिवेधः, पूर्वोक्तेषु ग्रहेषु एकस्मात् ग्रहात् इतरयोर्द्वयोर्ग्रहयोर्मध्ये एकस्याष्टमगतत्वे अपरस्य नवमगतत्वे नवमाष्टमत्रिवेधः। एतद्वेधत्रयफलं मृत्युः। पूर्वोक्तवेधचतुष्टये त्रिकोणत्रिवेधे नवाष्टत्रिवेधे च पूर्वोक्तग्रहत्रये एकैकस्य ग्रहस्यैकैकराशिगतत्वं, समसप्तमत्रिवेधे च एकस्य राशेरेकग्रहयुतत्वं अपरस्य राशेर्ग्रहद्वययुतत्वं, एकराशित्रिवेधे च एकस्यैव राशेर्ग्रहत्रययुतत्वं। तत्र एक एव ग्रहो इतराभ्यां ग्रहाभ्यां विद्धो यस्मिन् राशौ नक्षत्रे वा वर्तते तस्मिन् राशौ नक्षत्रे वा जातः, कार्यकर्ता वा युद्धे सक्षतः शस्त्रजनितव्रणपीडितो भवति। एवं ग्रहद्वयं तृतीयेन विद्धं यस्मिन् राशौ नक्षत्रे वा वर्तते तस्मिन् राशौ नक्षत्रे वा जातः, कार्यकर्ता वा युद्धे मृतो भवति। एकराशित्रिवेधे जातो विशेषात् बहुधा हिंसितो म्रियते इति भावः ॥ ५७ ॥ २ नक्षत्रसाधने पूर्वोक्तमेव प्रकारमनूद्य तत्र लघु प्रकारान्तरमाह (स्यादिति)। अत्र पूर्वार्धं व्याख्यातप्रायम्। ¹पूर्वं नक्षत्र-

नाड्यः खगैर्विनिहि(ह)ता नखभाजिता भं
शे(षें ऽ)शको भवति भुक्तवि(भ)भोगहीनात्(ने) ॥ ५८ ॥

चलचन्द्रसप्तमराशिनक्षत्रफलम्

[१]कालः शशांकवशतस्त्वथ सप्तमोऽस्थो
वा स्यात्स मारयति निश्चितमेव जन्तुं ।

---

साधनवेलायां चलरविचन्द्रराहुसंबन्धिनीनां गतघटिकानां सप्तविंशतिर्गुणा: षष्टिर्हारः । तत्र गुणहारयोस्त्रिभिरपवर्तने कृते नव गुणाः विंशतिर्हारः । अतो गतघटिकाः नवगुणिताः विंशति-भक्ताश्चेत् लब्धानि गतनक्षत्राणि । भुक्तानां, नक्षत्राणां, गतानां भानां भोगेन भोगकालेन नाडिकात्मना हीने चलरव्यादीनां गतकाले घटिकारूपे यः शेषः तस्मिन् अंशको भवतीति योजना । शेषेण पूर्वोक्तरीत्या चरणज्ञानम् सुलभमिति भावः ॥ ५८ ॥

१ तात्कालिकचन्द्रे चलचन्द्रे वा राशिषट्कं संयोज्य पूर्वोक्तरीत्या साधितनक्षत्र-राश्यादौ जातो वा कार्यकर्ता वा निश्चयेन म्रियते । रविराहुचन्द्रकुजकेतुशनीनां षण्णां मध्ये येषां केषांचित् त्रयाणां ग्रहाणां लग्नगतत्वे एकराशित्रिवेधो भवति । अत्र रोगारंभे जनने विवाहे च मृत्युः, चोरागमे युद्धे च पराजयः स्यात् । अत्र षण्णामपि लग्नगतत्वं न ग्रंथकृदभिमतम् । राहुकेत्वोरेकस्थानगतत्वासंभवात् । अतः त्रिवेध-प्रकरणानुरोधेन त्रयाणामेवेति विभावनीयम् । इयांस्तु विशेषः । रविराहुचन्द्राणां कालदंष्ट्राजिह्वारूपत्वेन तत्सम्बन्धी त्रिवेधः क्रूरतमः । अतो यत्र कुत्रापि तत्संभवे पूर्वोक्तं फलं वक्तव्यम्, इतरेषां ग्रहाणां तथात्वाभावेन तत्संबन्धी त्रिवेधो नातिक्रूरः । अतस्तस्य लग्नगतत्वे एव क्रूरत्वं नान्यस्थानगतत्वे । तथा एकराशित्रिवेधरूपत्वे एव क्रूरत्वम् । न तु समसप्तमत्रिवेधादिरूपत्रिवेधत्रयात्मकत्वे इति । एवं क्रूरग्रहसंबन्धि-त्रिवेधफलमभिधायेदानीं सौम्यग्रहसंबंधित्रिवेधफलमाह (सौम्याः स्थिता इति) बुधगुरु-

लग्नगतैकराशित्रिवेधफलम्

लग्नस्थितो रविरगुर्हिमगुः कुजश्च
केतुः [श]ति(नि)र्भवति यस्य च तस्य मृत्युः ॥ ५९ ॥

रोगे जनौ च करपीडनके मृतिं च
चोरागमे युधि पराजयमामनंति ।

सौम्यग्रहसंबन्धित्रिवेधत्रयफलम्

सौत्या धि(म्याः स्थि)ता यदि सरुक् क्षतयुक् च जीवेत्

तात्कालिकलग्नगतशुभग्रहफलम्

सौम्याः शुभस्य फलदा अथ सर्वकाले ॥ ६० ॥

तात्कालिकलग्नगतप्रत्येकग्रहफलम्

सूर्ये नृपाद्भयमुड्ड(डो) पतितो मृतिः स्या
द्भौमे हि रक्तविकृतिः शशिजे च लाभ ।

जीवे धनं भृगुसुते धनकर्म(मर्क)पुत्रे
लोहाद्भयं हि शिखिराहुकृते त्रिपाद्य ॥ ६१ ॥

---

शुक्राश्चयः पूर्वोक्तरीत्या त्रिवेधयुताश्चेत्तदा जनने दीर्घजीवी, युद्धारंभे जयशाली रोगारंभे निवृत्तरोगश्च भवतीति भावः । अत्र बुधशुक्रयोः अन्योन्यपंचमराश्यवस्थानायोगात् सौम्यग्रहाणां त्रिकोणत्रिवेधो नास्त्येव । अवशिष्टं त्रिवेधत्रयं वर्तते । अत्र चक्रस्थादिसाधनवत् चलकुआदिसाधनेनापि त्रिवेधो ज्ञेयः । एवं विस्तरेण त्रिवेधफलमभिधाय प्रसङ्गात् लग्नगतानां शुभानां अशुभानां च क्रमेण फलमाह (सौम्याः शुभस्येत्यादिना) ॥ ५९—६१ ॥

जन्मनक्षत्रात् चलचन्द्रनक्षत्रफलम्

[1]द्वाविंशकत्रितयपंचमषष्ठकाद्ये
चन्द्रो(न्द्रे) मृतिस्त्वथ च सक्षतकोऽग्रपृष्ठे ।

चलसूर्यचन्द्रनक्षत्राभ्यां जन्मनक्षत्रफलम्

भूपंव(च)शक्रमितभे त्रिकयुग्म(ग्न)खाख्यं(ख्ये)
सूर्याद्विधोश्च निजभं मृतिदं निरुक्तं ॥ ६२ ॥
अष्टाङ्कधृत्यतिधृतिप्रम(भु)सप्तविंश
द्विंशं च सक्षतनगो यदि जायते भं ।

जन्मनक्षत्रलग्नादिषु पापग्रहयोगफलम्

न(ज)न्मर्क्षकं(के) हि दशमेऽनि(ति)धृतौ खलैश्च
लग्ने मृतिर्युधि च जन्मनि रोगकाले ॥ ६३ ॥

जन्मलग्नाद्याश्रिततात्कालिकलग्नफलम्

[2]आद्याख्यपंचनवसप्ततनुश्च लग्ना
दानंहि(दि) लग्नखलकं विपदं करोति ।

---

१ चलचन्द्रादीनां नक्षत्रफलमाह (द्वात्रिंशेति) जन्मनक्षत्रात् प्रथमे वा पञ्चमे वा षष्ठे वा द्वात्रिंशे वा त्रयोविंशे वा चतुर्विंशे वा चलचन्द्रनक्षत्रे सति मृतिः । द्वितीये वा सप्तविंशे वा सति क्षतबाधा भवति । एवं चलसूर्यनक्षत्राद्वा चलचन्द्रनक्षत्राद्वा प्रथमपञ्चमचतुर्दशत्रयोविंशान्यतमे जन्मनक्षत्रे मृतिः । एवं चलचन्द्रसूर्यनक्षत्राभ्यां षष्ठाष्टमषोडशाष्टादशैकोनविंशविंशसप्तविंशान्यतमे जन्मनक्षत्रे क्षतबाधा भवति । एवमेव चलराहुनक्षत्रादपि फलं ज्ञेयम् । एवं चलचन्द्रादिफलमभिधाय प्रसंगात् जन्मनक्षत्रादिफलमाह (जन्मर्क्षके इति) जन्मनक्षत्रे वा तस्मात् दशमैकोनविंशनक्षत्रयोर्वा लग्ने वा पापग्रहयोगे युद्धारंभे जनने रोगारंभे च मरणम् ॥ ६२ ६३ ॥

२ अथ जन्मलग्नात् स्थानविशेषाश्रिततत्काललग्नफलमाह (आद्येति) जन्मलग्नं

लग्नं स्वभात्तु समसंख्यशुभं ग्रहि(दि)ष्टं
द्वन्द्वाहवादिगमनादिकसर्वकार्ये ॥ ६४ ॥

चलरव्यादीनां नक्षत्रसाधने पुनरपि प्रकारान्तरम्

¹सांघ्रीशताडितचतुर्घटिभं ग्रहैश्च
रा(स्या)त्पंचसंख्यमथ षड्ग(घ)टिकं हतं तत्।

---

वा तस्मात् पञ्चमसप्तमनवमान्यतमं वा तात्कालिकलग्नं चेत् सर्वकार्येषु आनंददम्। एवं लग्नराशेरारभ्य समसङ्ख्येषु द्वितीयचतुर्थादिषु राशिषु शुभग्रहयुतत्वेऽपि तल्लग्नं शुभदम्। लग्ने पापग्रहयोगे विपत् भवतीति भावः ॥ ६४ ॥ १ चलरव्यादिभिर्नक्षत्रसाधने प्रकारद्वयं पूर्वमुक्तम्। इदानीं प्रकारान्तरमाह (सांघ्रीशेति) चतुर्घटिकाभोगराशौ चतुर्भिर्घटिकाभिः सपादनक्षत्रद्वयं तद्राशिगतं भुज्यते। एवं विंशतिघटिकाभिः सपादैकादशनक्षत्राणि भुज्यन्ते। एवं पञ्चघटिकाभोगे राशौ सपादनक्षत्रद्वयं पञ्चघटिकाभिर्भुज्यते। एवं त्रिंशतिघटिकाभिः नव नक्षत्राणि भुज्यन्ते। तथा षड्घटिकाभोगराशौ सपादद्वयनक्षत्रं षड्भिर्घटिकाभिर्भुज्यते। अतः त्रिंशतिघटिकाभिः सार्धं नक्षत्रसप्तकं भुज्यते। अनेनेदं सिध्यति-चलरव्यादीनां गतराशिषु यावन्तो राशयः चतुर्घटीभोगाः तावतां राशीनां एकैकराशेर्घटीचतुष्टयक्रमेण घटिकायोगः कार्यः। एवं पञ्चघटीभोगानां गतराशीनां एकैकराशेः पञ्चघटीक्रमेण, घटिकायोगः कार्यः। तथा षड्घटीभोगानां गतराशीनां एकैकराशेः षड्घटिकाक्रमेण घटिकायोगः कार्यः। अथ चलरव्यादीनां चतुर्घटिकाभोगराशिगतत्वे तदाश्रितराशिसंबन्धिनीर्गतघटिकाः ५५ श्लोकोक्तविधया प्रसाध्य ताः पूर्वानीते चतुर्घटिकाभोगराशिसंबन्धिनि गतघटिकायोगे योज्याः। एवं पञ्चघटिकाभोगराशिगतत्वे तत्संबन्धिन्यो गतघटिकाः पूर्वानीते पञ्चघटिकाभोगराशिसंबन्धिनि गतघटिकायोगे योज्याः। एवं षड्घटिकाभोगराशिगतत्वे तत्संबन्धिन्यो गतघटिकाः पूर्वानीते षड्घटिकाभोगराशिसंबन्धिनि गतघटिकायोगे

सार्धाद्रिभिश्च विभजेत्त्रयमेश्च धिष्ण्यं
शेषांशकं स्वरविदः कथयन्ति पूर्वे ॥ ६५ ॥

॥ इति यामलोक्तं त्रित्रिवेधचक्रं ॥

---

## ॥ अथ अरिष्टज्ञानार्थं स्वरशास्त्रोक्तं अंशचक्रम् ॥

[1]रेखास्तिर्यगिहोऽर्ध्वगास्त्रयमिताः केन्द्रैर्मिथो भेदिता
लाभांत्येंऽकच(य)मेऽष्टवह्निषु शरांगे द्वित्रिकेऽत्यात्मजेः(जे) ॥

---

योज्याः । एवमानीताः चतुर्घटिकाभोगराशिसंबन्धिनीर्गतघटिकाः सपादैरेकादशभिर्गुणयेत् । एवं पञ्चघटिकाभोगराशिसंबन्धिर्नीर्गतघटिकाः नवभिर्गुणयेत् । एवं षड्घटिकाभोगराशिसंबन्धिनीर्गतघटिकाः सार्धसप्तभिर्गुणयेत् । गुणनफलत्रययोगः विंशतिभिर्भाज्यः । लब्धिर्गतनक्षत्राणि । शेषेण पूर्ववत् गतचरणज्ञानम् । अत्रोदाहरणम्-पूर्वोक्तः चलरविः ६ २२ २४ अत्र गतराशिषु मेषवृषभौ द्वौ चतुर्घटीभोगराशी । अतस्तत्संबन्धिन्यो गतघटिकाः ४×२=८ । एताः सपादैकादशगुणिताः ८×११ १/४=९० प्रथमफलम् । एवं पञ्चघटिकाभोगी गतराशी मिथुनकन्ये । तत्संबन्धिन्यो गतघटिकाः ५ × २ = १० । एवं चलरविः पञ्चघटिकाभोगराशिगतः । अतः पूर्वोक्तरात्या साधिता गतघटिकाः ३—४४ । ताः मिथुनकन्यासंबन्धिनीषु गतघटिकासु योजिताः १३ – ४४ । एताः नवगुणिताः १३ - ४४ × ९ = १२३ - ३६ द्वितीयं फलम् । एवं षड्घटिकाभोगी गतराशी कर्कटकसिंहौ । तत्संबंधिन्यो गतघटिकाः ६ × २ = १२ एताः सार्धसप्तगुणिताः १२ × ७ १/२ = ९० तृतीयं फलम् । फलत्रययोगः ९० + १२३ – ३६ + ९० = ३०३ – ३६ । अयं विंशतिभक्तः फलम् १५ गतनक्षत्राणि । शेषः ३ – ३६ चतुर्गुणितः १४ — २४ विंशतिभक्तश्चेत् फलम् शून्यम् । अतः चित्राप्रथमचरणे चलरविः पूर्ववत्सिद्धः ॥ ६५ ॥ १ दक्षिणोत्तरास्तिस्रो रेखाः

## अंशायवेधचक्रम् (२)

लग्ननवांशः ।

अथ वा लग्नम् ।



कार्याः। तदुपरि ऊर्ध्वाधरास्तिस्रो रेखाः कार्याः। तत्र मध्यगतायां ऊर्ध्वाधररेखायां उपरिभागे तात्कालिकचन्द्रराशिर्लेख्यः। ततः प्रदक्षिणक्रमेण शिष्टेषु एकादशसु रेखाग्रेषु चन्द्रात् द्वितीयादिव्ययान्तभावाश्रिता राशयो लेख्याः। ततः परं जन्मकालीना ग्रहाः स्वाश्रितराशौ लेख्याः। अयमाद्यः क्रमः। एवं जन्मचन्द्रराशिं मध्यगतोर्ध्वाधररेखोर्ध्वभागे लिखित्वा शिष्टेषु रेखाग्रेषु पूर्ववत् राशयः तात्कालिग्रहाश्च लेख्याः। अयं द्वितीयः क्रमः। अनेन क्रमद्वयेन राशिवेधो ज्ञेयः। अथ वा तात्कालिकचन्द्रनवांशकराशिं मध्यगतोर्ध्वाधररेखोर्ध्वभागे विलिख्य शिष्टेषु रेखाग्रेषु पूर्ववत् तदुपरितनांशकराशीन् तत्तदंशकगतान् जननकालिकग्रहांश्च लिखेत्। अयमाद्यः क्रमः। एवं जननचन्द्रनवांशराशिं मध्यगतोर्ध्वाधररेखोर्ध्वभागे लिखित्वा शिष्टेषु रेखाग्रेषु पूर्ववत् तदुपरितनांशकराशीन् तत्तदंशकगतान् तात्कालिकग्रहांश्च लिखेत्। अयं द्वितीयः क्रमः। अनेन क्रमद्वयेनांशकवेधो ज्ञेयः। राशिवेधांशकवेधयोर्मध्येंऽशकवेध एव बलीयान्। अत एवास्यांशकवेधचक्रमिति संज्ञा। अथ वेधज्ञानम्। पूर्वोक्तरीत्या लिखिते चक्रे एकादशभावगतरेखाग्रात् द्वादशभावगतरेखाग्रं प्रति, षष्ठभावगतरेखाग्रं प्रति च द्वे रेखे कार्ये। एवं नवमभावगतरेखाग्रात् अष्टमभावगतरेखाग्रं प्रति, द्वितीयभावगतरेखाग्रं प्रति च द्वे रेखे कार्ये। एवं पञ्चमभावगतरेखाग्रात् षष्ठभावगतरेखाग्रं प्रति, द्वादशभावगतरेखाग्रं प्रति च द्वे रेखे कार्ये। एवं तृतीयभावगतरेखाग्रात् अष्टमभावगतरेखाग्रं प्रति, द्वितीयभावगतरेखाग्रं प्रति च द्वे रेखे कार्ये। एवं कृते अंशकचक्रं भवति। पूर्वोक्तचक्रे एकरेखागतानां ग्रहाणां अन्योन्यं वेधो भवति। तत्र जन्मकालिकचन्द्रतन्नवांशकाभ्यां मध्यगतोर्ध्वाधररेखोर्ध्वभागगताभ्यां आरब्धे चक्रद्वये तात्कालिकः शुभाशुभान्यतरग्रहः पापविद्धः तद्राशिस्थितिकालपर्यन्तं कष्टं विदधाति। मिश्रग्रहविद्धश्चेत् स ग्रहस्तस्मिन् राशौ यावन्तं कालं तिष्ठति तद्द्वादशांशमिते काले कष्टं विदधाति। शुभग्रहविद्धश्चेत् स ग्रहस्तस्मिन् राशौ यावन्तं कालं तिष्ठति तस्य कालस्य षष्ट्यधिकशिततमांशमिते काले कष्टं ददाति। अत्र शुभस्य ग्रहान्तरवेधे

षष्ठायेऽकगते(जे) न्यसेज्जनिखगाद्वोब्दैर्विधुः क्षयरि ?
ब्दैराशनी मृतिस्त्वगुविधू यत्रैकरेखाश्रितौ ॥ ६६ ॥

कष्टं वर्षे(र्षे)विभोगर्वाद्दे(वाब्दि)नै
र्मासैश्चेति शुभोऽन्यवेधकः ।
मध्यस्थोऽर्ध्वकरेऽखिका तनो
राहुः खेटविलोमनोऽशके ॥ ६७ ॥

॥ इत्यरिपुजा(ष्टम्रा)नार्थं स्वरशास्त्रोक्तमंशचक्रं ॥

---

## ॥ अथ शुभाशुभफलज्ञानं ॥

तिथिगतघटिकाभिः स्वरज्ञानम्

**भूपालवल्लभे—**

तिथिमु(भु)क्तघटीसंख्य(ख्यां) कृत्वा तानि फ(तस्याः प)लानि च ॥
भदद्दिभिः ३२७ हृते शेषं स्वरस्तत्कालसंभवः ॥ ६८ ॥

---

कष्टं, पापस्य ग्रहान्तरवेधे अतिकष्टं भवति । एवं तात्कालिकचन्द्रतनवांशाभ्यां मध्यगतोर्ध्वाधररेखोर्ध्वभागगताभ्यां आरब्धे चक्रद्वयेऽपि ज्ञेयम् । अत्र चन्द्रतनवांशक-स्थाने लग्नतनवांशकौ विलिख्य पूर्ववदेव चतुर्धा चक्रविन्यासं विधाय फलम् ज्ञेयम् । अत्रायं विशेषः । राहुः मध्यगतोर्ध्वाधररेखोर्ध्वभागगतश्चेत् सर्वेपि ग्रहा वैपरीत्य-क्रमेण लेख्याः । यथा द्वितीयस्थो द्वादशे तृतीयस्थ एकादशे इत्येवमादि ज्ञेयम् । अथ वा जन्मकालीनानि सूर्यादिनवग्रहाश्रितस्थानानि मध्यगतोर्ध्वाधररेखोर्ध्वभागे विलिख्य पूर्ववत्तात्कालिकग्रहान् विन्यस्य सूर्यादिग्रहाणां नव चक्राणि ज्ञेयानि । एवं सूर्यादिनवग्रहाश्रितनवांशस्थानेभ्योपि नव चक्राणि पूर्ववत् ज्ञेयानि । तत्र राहुकेत्वोश्चक्रे ग्रहविन्यासः पूर्ववत् वैलोम्येन ज्ञेयः तत्र ग्रहेभ्यः तत्तद्भावाश्रिता ग्रहाः तत्तद्भावोचितं फलं भावाध्यायोक्तदिशा दद्युः । वेधसद्भावे तु अत्रोक्तदिशा तद्भावोक्तशुभफलहानिनि-मित्तं अशुभफलवृद्धिनिमित्तं च कष्टं दद्युः । शिष्टं पूर्ववत् ज्ञेयम् । पूर्वोक्तचक्रेषु राहु-चन्द्रयोः शनिकुजयोश्च वेधः मृतिकरः ॥ ६६—६७ ॥ १ इष्टकाले वर्तमानपर्यासितथेः

## स्वरपञ्चकनामानि तत्फलम् च

आद्यो बालः कुमारश्च युवा वृद्धो मृतस्तथा ॥
नामावस्थाप्रभेदेन फलदो नात्र संशयः ॥ ६९ ॥

## वर्णस्वरतिथिस्वरौ

[1]अकारादिक्रमा[त्] न्यस्य स्य नंदादितिथिपंचकं ॥
दिने भो(सो)मस्वरोऽप्येवं तिथ्यादावुदितो भवेत् ॥ ७० ॥

---

इष्टकालपर्यन्तं गतघटिकाः पलानि च साधयित्वा गतघटिकासु षष्टिगुणितासु पलानि योज्यानि। फलं ससत्रिंशत्त्रिशतभक्तं चेत् यल्लभ्यते तत् त्याज्यम्। शेषः पञ्चभिर्भाज्यः। तत्रापि लब्धिः त्याज्या। शेषेण बालाद्यवस्था ज्ञेया। एकशेषे बालः शेषद्वये कुमारः, शेषत्रये युवा, शेषचतुष्टये वृद्धः, शेषाभावे मृतः। एते पञ्च स्वराः नामोचितं फलं दधुरिति भावः। अत्रोदाहरणम्—तिथिगतघटिकाः १०-४० तत्पलानि ६४० मवहिभक्तानि यदि तर्हि फलम् १। तत् त्याज्यम्। शेषः ३१३ पञ्चभक्तश्चेत् फलम् ६२। तत् त्याज्यम्। शेषः ३। अत युवस्वरोदयः॥ ६८—६९ ॥

१ पूर्वश्लोके तिथिगतघटीभिः बालादिस्वरोदयोऽभिहितः। इदानीं तिथिभिरपि तमाह (अकारादीति) अवकहडचक्रे अवकहडाः मटपरताः नसमजखाः गसदचलाः इति पञ्च पञ्च वर्णाः व्यूहचतुष्टयेन कथिताः। तत्र व्यूहचतुष्टये प्रथमाः चत्वारो वर्णाः (अमनगाः) बालवर्णाः, द्वितीयाः (वटयसाः) कुमारवर्णाः, तृतीयाः (कपमदाः) युववर्णाः, चतुर्थाः (हरजचाः) वृद्धवर्णाः, पञ्चमाः (डतखलाः) मृतवर्णाः। नामाक्षरेषु प्रश्नाक्षरेषु वा प्रथमवर्णवशात् बालादिवर्णस्वरो ज्ञेयः। एवं नन्दायां बालस्वरः, भद्रायां कुमारस्वरः, जयायां युवस्वरः, रिक्तायां वृद्धस्वरः, पूर्णायां मृतस्वरो भवति। जन्मतिथिवशात् प्रश्नतिथिवशाच्च तिथिस्वरो ज्ञेयः। अथ वा प्रश्नाक्षरेषु नामाक्षरेषु वा प्रथमो वर्णः अकह-

नरनारीस्वरज्ञानम्

१ओजस्वरा नरा नार्यः समौ (माः) स्वोदयतः फलं ॥

स्वरवशात् नरनारीजन्मज्ञानम्

गर्भार्थे पुंस्वरे पुत्रः कन्या कन्यास्वरोदये ॥ ७१ ॥

---

डादिव्यूहचतुष्टये प्रथमो (अमनगान्यतमः) यदि तर्हि नन्दायां, द्वितीयो (बटयसान्यतमः) यदि तर्हि भद्रायां, तृतीयो (कपमदान्यतमः) यदि तर्हि जयायां, चतुर्थो (हरजचान्यतमः) यदि तर्हि रिक्तायां, पञ्चमो (डतखलान्यतमो) यदि तर्हि पूर्णायां बालस्वरोदयः। बालस्वरोदयतिथेरनन्तरासु चतसृषु तिथिषु क्रमेण कुमारयुववृद्धमृतस्वरोदया भवन्ति। यथा राम इति नाम्नि रिक्तायां बालस्वरोदयः, पूर्णायां कुमारस्वरोदयः, नन्दायां युवस्वरोदयः, भद्रायां वृद्धस्वरोदयः, जयायां मृतस्वरोदयो भवति। अत्र प्रथमकल्पे तिथिस्वरवर्णस्वरयोः साम्ये तत्तत्स्वरोक्तं फलं पूर्णम्। वैषम्ये मिश्रमिति ज्ञेयम् ६८, ६९, ७०, श्लोकोक्तविषयज्ञानार्थं १०, ११, कोष्ठकौ द्रष्टव्यौ ॥ ७० ॥ १ अकारादिषु षोडशसु स्वरवर्णेषु अ, इ, उ, ऋ, ऌ, ए, ओ, अं, वर्णाः नरस्वराः। शिष्टा अष्टौ स्वरवर्णा नारीस्वराः। नामाक्षरेषु वा प्रश्नाक्षरेषु वा प्रथमवर्णस्य स्वराक्षरत्वे तैरेव नरनारीस्वरौ ज्ञेयौ, व्यञ्जनाक्षरत्वे तत्संयुक्तेन स्वरवर्णेन नरनारीस्वरौ ज्ञेयौ। गर्भप्रश्ने नरस्वरोदये पुत्रजननं, नारीस्वरोदये स्त्रीजननं भवति। प्रश्नप्रथमवर्णे पृच्छकदोषवशात् द्विरुच्चारिते सति युग्मजननम् भवति। एवं तस्मिन् हिक्कादिवशात् निगीर्णे सति गर्भे शिशुनाशो भवति। एवं तस्यास्पष्टोच्चारणेनाज्ञाने वा वर्णान्तरताभ्रमे वा गर्भिण्याः यात्रा तत्रैव मृत्युश्च भवति। एवं पूर्वोक्तरीत्या साधितेषु तिथिनाडीस्वरेषु तिथिस्वरेषु वर्णस्वरेषु च प्रथमतृतीयपञ्चमाः बालयुवमृतस्वरा नरस्वराः। शिष्टाः कुमारवृद्धस्वरा नारीस्वराः। एवं सिद्धेषु तिथिस्वरेषु तिथिनाडीस्वरेषु वर्णस्वरेषु च पुरुषत्वे

## कोष्ठकः १०

### तिथिनाडी स्वरतिथिस्वरवर्णस्वरनरतारीस्वरचक्रम्

| स्वराः | वर्णाः | | | | तिथयः | तिथिगणनाङ्काः | नरनारीस्वराः |
|---|---|---|---|---|---|---|---|
| बालः | अ | म | न | ग | नन्द | १ | नरः |
| कुमारः | ब | ट | य | स | भद्र | २ | स्त्री |
| युवा | क | प | भ | द | जया | ३ | नरः |
| वृद्धः | ह | र | ज | च | रिक्ता | ४ | स्त्री |
| मृतः | ड | त | ख | ल | पूर्णा | ० | नरः |

## कोष्ठकः ९१

### प्रकारान्तरेण तिथिस्वरनरनारीस्वरचक्रम्

| वर्णाः | अ, म, न, ग | व, ट, य, स | क, प, भ, द | ह, र, ज, च | ड, त, ख, ल | नरनारी संज्ञा |
|---|---|---|---|---|---|---|
| बालः | नन्दा | भद्रा | जया | रिक्ता | पूर्णा | नरः |
| कुमारः | भद्रा | जया | रिक्ता | पूर्णा | नन्दा | स्त्री |
| युवा | जया | रिक्ता | पूर्णा | नन्दा | भद्रा | नरः |
| वृद्धः | रिक्ता | पूर्णा | नन्दा | भद्रा | जया | स्त्री |
| मृतः | पूर्णा | नन्दा | भद्रा | जया | रिक्ता | नरः |

## कोष्ठकः १२

### प्रकाशन्तरेण नरनारीस्वरचक्रम्

| नरनारी स्वराः | स्वरवर्णाः | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| नरः | अ | इ | उ | ऋ | ऌ | ए | ओ | अं |
| नारी | आ | ई | ऊ | ॠ | ॡ | ऐ | औ | अः |

## कोष्ठक ११

### शतपदचक्रम्

पूर्वा

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| कृ १ अ | कृ २ इ | कृ ३ उ | कृ ४ ए | रो १ ओ | म १ म | म २ मि | म ३ मु | म ४ मे | पू,फ १ मो |
| रो २ व | रो ३ वि | रो ४ वु | मृ १ वे | मृ २ वो | पू,फ २ ट | पू,फ ३ टि | पू,फ ४ टु | उ,फ १ टे | उ,फ २ टो |
| मृ ३ क | मृ ४ कि | आर्द्रा कु घ ङ छ | पुन १ के | पुन २ को | उ फ ३ प | उ फ ४ पि | हस्ता पु ष ण ठ | चि १ पे | चि २ पो |
| पुन ३ ह | पुन ४ हि | पुष्य १ हु | पुष्य २ हे | पुष्य ३ हो | चि ३ र | चि ४ रि | स्वा १ रु | स्वा २ रे | स्वा ३ रो |
| पुष्य ४ ड | आश्ले १ डि | आश्ले २ डु | आश्ले ३ डे | आश्ले ४ डो | स्वा ४ त | वि १ ति | वि २ तु | वि ३ ते | वि ४ तो |
| ध १ ग | ध २ गि | ध ३ गु | ध ४ गे | श १ गो | अनु १ न | अनु २ नि | अनु ३ नु | अनु ४ ने | ज्ये १ नो |
| श २ स | श ३ सि | श ४ सु | पू भा १ से | पू भा २ सो | ज्ये २ य | ज्ये ३ यि | ज्ये ४ यु | मू १ ये | मू २ यो |
| पू भा ३ द | पू भा ४ दि | उ भा दु थ झ ञ | रे १ दे | रे २ दो | मू ३ भ | मू ४ भि | पू आ भु ध फ ढ | उ आ १ भे | उ आ २ भो |
| रे ३ च | रे ४ चि | अश्वि १ चु | अश्वि २ चे | अश्वि ३ चो | उ आ ३ ज | उ आ ४ जि | अभि १ जु | अभि २ जे | अभि ३ जो |
| अश्वि ४ ल | भ १ लि | भ २ लु | भ ३ ले | भ ४ लो | अभि ४ ख | श्र १ खि | श्र २ खु | श्र ३ खे | श्र ४ खो |

दक्षिणा

पश्चिमा

स्वरवशात् यमलजन्मज्ञानम्

युग्मे युग्मं क्षयो नष्टे यात्रा मृत्युश्च संक्रमे ॥

स्वरवशात् यमलजनने गर्भसाम्यासाम्यज्ञनम् (भर्त्यैः)

तिथिनाडीस्वरे साम्ये पुंसि पुंस्त्री(मर्त्यैः) प्रजायते ॥ ७२ ॥

[तिथिनाडीस्वरे साम्ये नार्यो नारी प्रजायते । ]

असाम्ये तिथिनाडीस्थो(स्थे) गर्भे साम्यं न विद्यते ॥ ७३ ॥

जन्मनक्षत्रवशात् बालादिस्वरज्ञानम्

[1]जातधिष्ण्यः(ष्ण्य)स्थिने वर्णेऽवकह[डा]क्रमेण च ॥
तेनाक्षरेण ज्ञातव्यं तत्काले बालजं फलं ॥ ७४ ॥

---

पुरुषजननम्, स्त्रीत्वे स्त्रीजननम् ज्ञेयम् । पूर्वोक्तरीत्या युग्मजननसंभवे तिथिनाडीतिथि-वर्णस्वराणां त्रयाणामपि पुरुषत्वे युग्मपुरुषजननम्, स्त्रीत्वे युग्मस्त्रीजननम् ज्ञेयम् । तेषु केषाञ्चित् पुरुषत्वे केषाञ्चित् स्त्रीत्वे च एका स्त्री एकः पुरुषश्च जायते इति वक्तव्यम् । अत्र ७३ श्लोके पूर्वार्धं लुप्तम् । तच्च मया पूरितम् । नरनारीस्वरज्ञानार्थं १०, ११, १२ कोष्ठका द्रष्टव्याः ॥ ७१-७३ ॥ १ ऊर्ध्वाधरा एकादश रेखा विलिख्य तदुपरि दक्षिणोत्तरा एकादश रेखा लिखेत् । एवं कृते शतकोष्ठकात्मकं चक्रं भवति । तत्र वामभागगतायां ऊर्ध्वाधरकोष्ठकपङ्क्तौ उपरितनकोष्ठकादारभ्याधस्तनकोष्ठकपर्यन्तं क्रमेण अ, व, क, ह, ड, ग, स, द, च, ल, वर्णान् लिखेत् । तथा वामभागादारभ्य षष्ठात् उपरितनात् कोष्ठकात् दशसु कोष्ठकेषु ऊर्ध्वाधरक्रमेण म, ट, प, र, त, न, य, भ, ज, ख, वर्णान् अधस्तनकोष्ठकपर्यन्तं लिखेत् । एवां विंशतिवर्णानां पार्श्वगतेषु चतुर्षु कोष्ठकेषु इ, उ, ए, ओ, स्वरयुतास्त एव वर्णा लेख्याः । एवं कृतं कोष्ठकाः

बालस्वरोदयफलम्

चपलः कातरो मूर्ख(र्खः) क्षेपणा(ण)श्चाजितेन्द्रियः ॥
असत्यो बहुभाषी च जातो बालस्वरोदये ॥ ७५ ॥

---

पूरिता भवेयुः। तत्र ऐशानदिग्गतेषु अ, व, क, ह, ड, संबन्धिषु पञ्चविंशतिकोष्ठकेषु मध्यगते कु, वर्णयुते कोष्ठके आर्द्रानक्षत्रं भवति। शिष्टेषु चतुर्विंशतिकोष्ठकेषु प्रतिकोष्ठं एकैकचरणक्रमेण कृत्तिकादीनि आश्लेषान्तानि षट् नक्षत्राणि ईशानदिग्गतोर्ध्वकोष्ठकादारभ्य दक्षिणोत्तरक्रमेण लेख्यानि। एवं आग्नेयगतेषु म, ट, प, र, त, संबंधिषु पञ्चविंशतिकोष्ठकेषु मध्यगते पु, वर्णयुते कोष्ठके हस्तनक्षत्रं विलिख्य शिष्टेषु चतुर्विंशतिकोष्ठकेषु क्रमेण मघादिविशाखान्तानि षट् नक्षत्राणि लेख्यानि। एवं नैर्ऋत्यगतेषु न, य, भ, ज, ख, संबन्धिषु पञ्चविंशतिकोष्ठकेषु मध्यगते भु, कोष्ठके पूर्वाषाढां विलिख्य शिष्टेषु चतुर्विंशतिकोष्ठकेषु अनूराधादिश्रवणान्तानि साभिजिन्ति षट् नक्षत्राणि लेख्यानि। एवं वायव्यगतेषु पञ्चविंशतिकोष्ठकेषु ग, स, द, च, ल, संबन्धिषु मध्यगते दु, कोष्ठके उत्तराभाद्रानक्षत्रं विलिख्य शिष्टेषु चतुर्विंशतिकोष्ठकेषु धनिष्ठादिभरण्यन्तानि नक्षत्राणि लेख्यानि। सर्वतोभद्रचक्रे क, वर्णकोष्ठके लेख्यतयोक्ताः घ, ङ, छ, वर्णाः एतच्चक्रे स्तंभरूपे कु, वर्णयुते मध्यकोष्ठके लेख्याः। कु, कोष्ठके चरणचतुष्टययुतस्य आर्द्रानक्षत्रस्य कु, वर्णः प्रथमचरणे घ, वर्णः द्वितीयचरणे ङ, वर्णः तृतियचरणे छ, वर्णः चतुर्थचरणे च भवति। एवं सर्वतोभद्रचक्रे प, भ, द, वर्णकोष्ठकेषु लेख्यतयोक्ता वर्णाः अत्र चक्रे क्रमेण पु, भु, दु, वर्णयुतकोष्ठकेषु स्तंभरूपेषु लेख्याः। एवं अष्टाविंशतिनक्षत्राणामपि प्रतिचरणं एकैकाक्षरसंबन्धो जातः। एवं चक्रं विलिख्य जन्मनक्षत्रसंबन्धिनं वर्णं तदीयं बालादिस्वरं च विज्ञाय वक्ष्यमाणक्रमेण तत्फलं वदेदिति भावः। जयार्णवग्रन्थोक्तमिदं शतपदचक्रम् नामनक्षत्रज्ञानोपयुक्तं मया १३ कोष्ठके लिखितं द्रष्टव्यम् ॥ ७४ ॥

कुमारस्वरोदयफलम्

व्यवसायी कलाभिज्ञा(विज्ञः) श्रीरतः सुभगः शुचिः ॥
दीर्घायुर्विग्रही शूरः कुमारोऽदयसंभवः ॥ ७६ ॥

युवस्वरोदयफलम्

सर्वलक्षणसंपूर्णो राजा भवति विश्रुतः ॥
सर्वकालजयी युद्धे युवस्वरभवः शिशुः ॥ ७७ ॥

वृद्धस्वरोदयफलम्

स्त्रीजितो थ(ध) अ इ उ ए आ मरहितः कामी मूढोऽतिसाहसो ॥
सत्यवादी स्थिराचारो जातो वृद्धस्वरोदये ॥ ७८ ॥

मृतस्वरोदयफलम्

१२ ३ ४ ७ ११ स्वक्लेशो मत्सरी शूरो निष्कामो विकलेन्द्रियः ॥
सर्वकार्यालसो दुष्टो जातो ११ १२ १३ १४ १५ बालो
मृतोदये ॥ ७९ ॥

॥ इति श्रीजातकसारदीपे स्वरशास्त्रोक्तचक्राध्यायः अशीतितमः ॥

॥ अथ मूलदशाध्यायः एकाशीतितमः ॥

आयुर्दायप्रतिज्ञा

[आयुर्ज्ञानं नो विना सत्फलानां
दुष्टानां वा निर्णयः] शक्यतेऽत्र ।

१ अत्र ईश्वरूनं पूर्वार्धं लुप्तम् । तथा तृतीयः श्लोको लुप्तः । इमौ श्लो-

आयुर्दायः संप्रदायागतोऽसौ
सच्छिष्याणां प्रीतये कथ्यतेऽतः ॥ १ ॥

## सामान्यतः आयुर्दायत्रैविध्यम्

तत्रायुस्त्रिविधं नियतं, अनियतं, योगजं चेऽति ।

कर्कीन्द्वीज्येत्यादिना अनियतं प्रागुक्तं ।

अरिष्टादि त(च) षो(यो)गजं ॥

नियतं गणितागतं पद्धतावुक्तं ।

## नियतायुर्दायचातुर्विध्यम्

तत्रापि [ग]णितागतमपि चतुर्विधं ॥

अंशायुः ॥ पिण्डायु ॥ नैसर्गिकमायुः ॥ जीवशर्मोक्तमिति ॥

---

लुप्तभागो मया पूरितो । तथा पञ्चमषष्ठो श्लोकौ लुप्तौ । तौ ग्रन्थान्तरान् उद्धृतौ ।

१ अस्मिन् ग्रन्थे आयुर्दायसाधनप्रकारो न वर्णितः । अतो मया सङ्ग्रहेण तत्साधनप्रकारो वर्ण्यते । आदौ अंशायुरानयनक्रमो वर्ण्यते । तथा हि—जन्मकालिकाः सूर्यादयः सप्त ग्रहाः सलग्नाः साधनीयाः । ते प्रत्येकं कलात्मकाः कार्याः । गतराशिषु त्रिंशद्गुणितेषु गतभागा योज्याः । एते मेषादितो गतभागा भवन्ति । गतभागेषु षष्टिगुणितेषु गतकला योज्याः । एताः मेषादितो गतकला भवन्ति । एवं कलीकृताः सलग्नाः सप्त ग्रहाः प्रत्येकं चतुःशताधिकेन सहस्रद्वयेन विभाज्याः । लब्धिं त्यक्त्वा शेषं शतद्वयेन विभजेत् । लब्धा वत्सराः । शेषं त्रिभिः संगुण्य पञ्चाशता विभजेत् । लब्धा मासाः । शेषं त्रिभिः संगुण्य पञ्चभिर्विभजेत् । लब्धा दिवसाः । शेषं द्वादशभिः संगुण्य लब्धा घटिकाः । एवं वर्षमासदिनघटिकात्मकं आयुः सप्तग्रहसंबन्धि लग्नसंबन्धि च संसाध्य क्रमेणाष्टसु

पंक्तिषु लिखेत् । लग्नस्य दुर्बलत्वे पूर्वसिद्धमेव लग्नायुः । लग्नस्य बलाधिक्ये तस्मिन्नायुषि वक्ष्यमाणं संस्कारं कुर्यात् । तथा हि—लग्नराशिसंबन्धिनो लग्नगतभागान् षष्टिभिः संगुण्य गतकला योजयेत् । एवं सिद्धाः लग्नराशि संबन्धिनीर्लग्नगतकलाः सार्धशतेन विभज्य लब्धा मासाः । शेषं पञ्चभिर्विभज्य लब्धा दिवसाः । शेषं द्वादशभिः संगुण्य लब्धा घटिकाः । एवं सिद्धाः मासदिवसघटिकाः मेषादितो गतलग्नराशिमितैर्वत्सरैर्युक्ताः पूर्वानीते लग्नायुषि योज्याः । एवं लग्नस्य बलाधिकत्वे सिद्धं लग्नायुः । अथ सूर्यादिसप्तग्रहाणां नीचगतत्वे तद्ग्रहसंबन्धिनि पूर्वसिद्धे आयुषि अर्धमेव ग्राह्यम् । नीचांशमकराशिगतत्वे अंशायुषि नीचार्धहरणं नास्त्येव । पिण्डायुर्दायजीवशर्मायुर्दाययोः सकलराशिगता-नामपि तदस्ति । अत्र केचित् नीचराशिभिन्नराशिगतानामपि अंशायुर्दाये नीचार्धहरणं कुर्वन्ति । अतस्तन्मतरीत्या नीचार्धहरणं प्रदर्श्यते । तथा हि—तात्कालिकरविणा रव्युच्चध्रुवं शोधयेत् । शिष्टं षड्राश्यूनं चेत् तर्हि तच्छिष्टं द्वादशभिः शोधयेत् लब्धस्य पूर्वोक्तवत् कलाः कार्याः । ताभिः पूर्वानीतं रव्यायुः संगुण्य भचक्रकलाभिः (२१६००) विभजेत् । लब्धा वत्सराः । शेषं राशिकलाभिः (१८००) विभजेत् । लब्धा मासाः । शेषं षष्टिभिर्विभजेत् । लब्धा दिवसाः । शेषः घटिकात्मको भवति । एवं कृते नीचार्धहरणेन शुद्धं सूर्यायुर्भवति । एवं चन्द्रादि-षड्ग्रहेभ्योपि स्वस्वोच्चध्रुवकान् संशोध्य नीचार्धहरणेन शुद्धमायुः साधयेत् । एवं नीचार्धहरणम् । अथ कुजभिन्नानां षण्णां ग्रहाणां शत्रुक्षेत्रगतत्वे तदायुः स्वत्र्यंशेन हीनं कार्यम् । इदं शत्रुक्षेत्रहरणमित्युच्यते । अथ मूढहरणम् । कुजबुधगुरूणां सूर्यसांनिध्यवशेनास्तमने पूर्वसिद्धायुषः अर्धमेव ग्राह्यम् । अथ दृश्यार्धहरणम्—रविकुजशनिषु व्ययभावमध्यगतेषु तेषामायुः शून्यम् । एकादशभावमध्यगतेषु अर्धं, दशमभावमध्यगतेषु त्र्यंशोनं, नवमभावमध्यगतेषु पादोनं, अष्टमभावमध्यगतेषु पञ्चम-भागोनं, सप्तमभावमध्यगतेषु षष्ठभागोनं तेषामायुः शुद्धं भवति । एवं चन्द्रबुध-

शुक्रकेषु व्ययभावमध्यगतेषु अर्धं, एकादशभावमध्यगतेषु पादोनं, दशमभावमध्यगतेषु षष्ठभागोनं, नवमभावमध्यगतेषु अष्टमभागोनं, अष्टमभावमध्यगतेषु दशमभागोनं, सप्तमभावभोग्यभागगतेषु द्वादशभागोनं तत्तद्ग्रहसंबन्ध्यायुः शुद्धं भवति। पूर्वोक्तद्वादशादिषु दृश्यभावेषु एकैकराशौ अनेकग्रहसद्भावे तयोर्मध्ये बलवत एकस्यैव ग्रहस्योक्तरीत्या दृश्यार्धहरणं कार्यम्। न तु तद्राशिगतानां सर्वेषामपि ग्रहाणामिति ज्ञेयम्। एवं नीचार्धहरणं शत्रुक्षेत्रहरणं, मूढहरणं, दृश्यार्धहरणं चेत्येतानि चत्वार्यायुःक्षयकराणि हरणान्युक्तानि। अथ आयुर्वृद्धिकरा गुणा उच्यन्ते। ये ग्रहाः स्वोच्चगता वा वक्रगता वा सन्ति तेषां पूर्वानीतमायुः त्रिगुणं कार्यम्। ये च वर्गोत्तमे वा स्वनवांशे वा स्वगृहे वा स्वद्रेक्काणे वा सन्ति तेषां पूर्वानीतमायुः द्विगुणं कार्यम्। अत्रायं विशेषः—एकस्य ग्रहस्य स्वोच्चस्थितिवक्रतायायुर्वर्धकबहुगुणयोगे तेषु गुणेषु श्रेष्ठस्यैकस्य गुणस्य संबन्धिना गुणकेनैकेनैव तदीयमायुर्गुणनीयम्। न तु सर्वगुणसंबन्धिभिर्गुणकैः। यथा—कुजो मकरे प्रथमनवांशके वक्रगतश्चेत् तदा तस्य वर्गोत्तमांशगतत्वेन द्विगुणता, वक्रत्वेन पुनस्त्रिगुणता, स्वोच्चगतत्वेन पुनस्त्रिगुणता च न कार्या। किं तु एकवारमेव सर्वाधिका त्रिगुणता कार्या। एवं हरणभरणादिना सिद्धमंशायुः लग्नस्य सूर्यचन्द्राभ्यामधिकबलवत्त्वे साध्यम्। सूर्यस्य लग्नचन्द्राभ्याम अधिकबलवत्त्वे पिण्डायुः साधनीयम्। तथा हि-सूर्यादीनां उच्चगतानां क्रमेण १९, २५, १५, १२, १५, २१, २०, परमायुर्वत्सराः। एतेषां अंशायुर्दायसाधनरीत्या नीचार्धहरणं शत्रुक्षेत्रहरणं मूढहरणं दृश्यार्धहरणं च कार्यम्। नीचार्धहरणे तु—ग्रहेभ्यः स्वस्वोच्चभुवं विशोध्य पूर्वोक्तवत्साधिताभिः कलाभिः एतान् तत्तद्ग्रहपरमायुर्वत्सरान् संगुण्य भचक्रकलाभिर्विभजेत्। लब्धं नीचार्धहरणशुद्धं तत्तद्ग्रहसंबन्ध्यायुर्भवति। एवं हरणचतुष्टयं विधायास्मिन् पिण्डायुषि लग्नस्य क्रूरग्रहयुतत्वे क्रूरोदयहरणसंज्ञं एकं हरणं अधिकं कर्तव्यम्। तथा हि लग्नराशिसंबन्धिभिः

लग्नगतकलाभिः प्रत्येकं सप्तग्रहाणां लग्नस्य च पूर्वानीतमायुः संगुण्य भचक्रकलाभिर्विभजेत्। लब्धं तत्तद्ग्रहायुषः लग्नायुषश्च शोध्यम्। शिष्टं स्फुटमायुर्भवति। इदं च लग्नस्य पापग्रहयुतत्वे कार्यम्। तस्य लग्नगतस्य पापस्य शुभदृष्टत्वे पूर्ववत् साधितं फलं अर्धीकृत्य शोधयेत्। इदं क्रूरोदयहरणं अंशायुर्दाये न कर्तव्यम्। अत्र पिण्डायुषि स्वोच्चस्थित्यादिनिमित्ता द्विगुणता त्रिगुणता वा न कर्तव्या। अत्र पिण्डायुर्दाये लग्नायुर्दायसाधने मतद्वयम्। तथा हि—लग्नस्य गतराशीन् परित्यज्य लग्नराशिसंबन्धिनीर्गतकलाः द्विकला विभजेत्। लब्धा वत्सराः। शिष्टकलाभिः संगुण्य पञ्चाशता विभजेत्। लब्धा मासाः। शेषं त्रिभिः संगुण्य पञ्चभिर्विभजेत्। लब्धा दिवसाः। शेषं द्वादशभिः संगुण्य लब्धा नाड्यः। अयं प्रथमः क्रमः लग्ननवांशस्य प्राबल्ये ज्ञेयः। अथ लग्नस्य प्राबल्ये द्वितीयः क्रमो निरूप्यते। तथा हि—अंशायुर्दाये लग्नस्य बलवत्त्वे लग्ने क्षेपकतयोक्ता वत्सराः ग्रहभुक्तराशिसमाः द्वितीयक्रमे लग्नायुः। एवं पिण्डायुः। अथ चन्द्रस्य रविलग्नाभ्यामधिकबलवत्त्वे नैसर्गिकायुर्दायः। तथा हि—जन्मदिनादारभ्य प्रथमवर्षसमाप्तिपर्यन्तं चन्द्रदशा। ततः परं तृतीयवत्सरसमाप्तिपर्यन्तं कुजदशा। ततः परं द्वादशवर्षसमाप्तिपर्यन्तं बुधदशा। ततः परं द्वात्रिंशद्वत्सरसमाप्तिपर्यन्तं शुक्रदशा। ततः परं पञ्चाशद्वत्सरसमाप्तिपर्यंतं गुरुदशा। ततः परं सप्ततितमवर्षसमाप्तिपर्यंतं रविदशा। ततः परं विंशत्यधिकशततमवत्सरपर्यन्तं शनिदशा। तदनन्तरं जीवति चेत् लग्नदशा यावज्जीवनं भवति। सा च सर्वदा शुभैवेति केचित् यवना वदन्ति। अन्ये च लग्नस्य प्राबल्ये अंशायुर्दायरीत्या वा पिण्डायुर्दायरीत्या वा आनीता लग्नदशा प्रथमतो भवति। ततः परं चन्द्रादीनां पूर्वोक्तवत्सरा आयुर्दायः इति वदन्ति। अस्मिन्नायुर्दाये गणनाप्रयासो नास्ति। सर्वेषामपीमे वत्सराः स्थिरा एव। अयं नैसर्गिकायुर्दायः लग्नसूर्याभ्यां चन्द्रस्याधिकबलवत्त्वे तत्तद्दशाकाले तत्तद्ग्रहोक्तफलदो भवति। एवं

लग्नस्य अधिकबलवत्वेन अंशायुर्दायसंभवे, सूर्यस्याधिकबलवत्वेन पिण्डायुर्दायसंभवे च तत्तदायुर्दायक्रमसिद्धसूर्यादिदशाकाले तत्तद्ग्रहसंबन्धिनिसर्गदशाकालयोगे तत्तद्ग्रह-दशा पुष्टफलदा भवतीति ज्ञेयम् । अयं नैसर्गिकायुर्दायः । अथ लग्नचन्द्रसूर्याणां त्रयाणामपि दुर्बलत्वे जीवशर्मायुः । तथा हि—सूर्यादीनां सप्तग्रहाणां प्रत्येकं १७ वत्सराः १ मासः २२ १/७ दिवसाः परमायुः । अनेन पिण्डायुर्दायसाधनवत् सलग्नानां सप्तग्रहाणामायुः साधनीयम् । अत्रापि निसर्गदशया साम्ये पूर्ववत् पुष्टफलत्वं ज्ञेयम् । इति जीवशर्मायुः । लग्नचन्द्रसूर्याणां त्रयाणां बलसाम्ये अंशायुर्दाय-पिण्डायुर्दायनैसर्गिकायुर्दायरीत्या सिद्धानां तत्तद्ग्रहायुषां योगः त्रिभिर्भाज्यः । लब्धं तत्तद्ग्रहायुः । तेषां लग्नादीनां मध्ये द्वयोर्बलवत्वे तत्तत्संबन्ध्यायुर्दायद्वयसिद्धानां वत्सराणां योगः द्वाभ्यां भाज्यः । लब्धं तत्तद्ग्रहायुः । एवं चतुर्विधायुर्दाय-साधनक्रमो वर्णितः । अत्रोदाहरणम्—लग्नम् ११-२९-५९ रवि ०-१० चन्द्रः १-३, कुजः ९-२८ बुधः १०-२५. गुरुः ३-५ शुक्रः ११-२७ शनिः ६-२० एतेषु राश्यादिषु गतेषु सलग्नेषु ग्रहेषु प्रथमं अंशायुः साध्यते । लग्नम् ११-२९-५९ तस्य राशयः ११ त्रिंशद्गुणिताः ३३० गतभागैः २९ युताः ३५९ षष्टिगुणिताः २१५४० गतकलाभिः ५९ युताः २१५९९ मेषादितो लग्नगतकलाः । एताः २४०० भक्ताश्चेत् लब्धिः ८ । एताः त्यक्ताः । शेषं २३९९ । एताः आयुष्कलाः २०० भक्ताश्चेत् लब्धाः ११ वत्सराः । शेषः १९९ त्रिगुणितः ५९७ पञ्चाशद्भक्तश्चेत् लब्धाः ११ मासाः । शेषः ४७ त्रिगुणितः १४१ पञ्चभक्तश्चेत् लब्धानि २८ दिनानि । शेषः १ द्वादशगुणितश्चेत् लब्धाः १२ घटिकाः । एवं लब्धं ११-११-२८-१२ वत्सरादि लग्नायुः । लग्नस्य अधिकबलवत्वेन पुनरपि तत्र लग्नगतराशिप्रमः क्षेपकः साध्यते । लग्नराशिर्मीनः । तत्र गतभागाः २९ षष्टिहताः १७४० गतकलाभिः ५९ युताः १७९९ स्वराशिसंबंधिन्यो लग्नगतकलाः । एताः सार्धशतभक्ताश्चेत् लब्धाः ११

गतमासाः। शेषः १४९ पञ्चभक्तो गतदिनानि २९। शेषः ४ द्वादशगुणितो ४८ गतघटिकाः। एतन्मासादिकमायुः गतराशिमितैः ११ वत्सरैर्युतं चेत् जातः क्षेपकः ११-११-२९-४८ वर्षाः। अयं पूर्वसाधिते ११-११-२८-१२ युतश्चेत् जातं शुद्धं वर्षादिकं लग्नायुः २३-११-२८। इदं अंशायुषि। पिण्डायुर्दाये च लग्नलग्नपयोर्मध्ये लग्नस्य बलाधिक्ये पूर्वसाधितः ११-११-२९-४८ अयं क्षेपक एव लग्नायुः। अंशकस्य बलाधिक्ये तु—लग्नराशिसंबंधिन्यो लग्नगतकलाः १७९९ द्विशतोभक्ताश्चेत् लब्धाः ८ वत्सराः। शेषः १९९ त्रिगुणितः ५९७ पंचाशद्भक्तश्चेत् लब्धाः ११ गतमासाः। शेषः ४७ त्रिगुणितः १४१ पञ्चभक्तश्चेत् लब्धानि २८ गतदिनानि। शेषः १ द्वादशगुणितश्चेत् लब्धाः १२ गतघटिकाः। एवं ८-११-२८-१२ वत्सरादि लग्नायुः। अथ अंशायुर्दाये पूर्ववत्साधिताः रव्यायुर्वत्सराः ३ रवेरुच्चगतत्वेन त्रिगुणिताः ९ रव्यायुर्वत्सराः। अत्र जातके सर्वेषामपि ग्रहाणां नीचे, शत्रुगृहे चाभावेन अस्तमनाभावेन च तन्निमित्तं हरणत्रयं नास्ति। कुजशन्योः दृश्यार्धगतत्वेन दृश्यार्धहरणं तयोः परं वर्तते। नान्येषां। बुधभिन्नानामुच्चगतत्वेन तदीयानामायुषां त्रिगुणता च वर्तते। बुधस्य यथागतमेवायुः। एवं च पूर्ववत् सिद्धं ५-४-२४ कुजायुः त्रिगुणितं १६-२-१२ एकादशगतत्वेन अर्धितं ८-१-६ वर्षादि कुजायुः एवं च सिद्धं लग्नादीनां अंशायुः लिख्यते। लग्नस्य २३-११-२८, रवेः ९, चन्द्रस्य २९-७-१२, कुजस्य ८-१-६, बुधस्य ९-१-१५, गुरोः १३-६-०, शुक्रस्य ३३-३-१८ शनेः २८-९-१८। सर्वायुर्योगः १५५-५-७। अंशायुर्दाये नीचक्षेत्रभिन्नक्षेत्रगतानां नीचार्धहरणं नास्तीति मतमाश्रित्येदमायुः साधितम्। तत्सत्वे च बुधस्य आयुषि नीचार्धहरणं कार्यम्। तदित्थम्—बुधस्य उच्चध्रुवः ५-१५ बुधात् १-०-२५ शोधितः ७-१५-२५ कलीकृतः १३५२५ पूर्वलब्धेन ९-१-१५ गुणितः १२३४१५-७-१५ भचक्रकलाभिः (२१६००) भक्तश्चेत् लब्धं ५-८-१६-५५ १८ वत्सरादिकं बुधायुः। एतन्मतरीत्या सिद्धः पूर्णायुर्योगः १५२-०-६-

## चतुर्विधायुर्दायस्वीकारव्यवस्था

एवं प्राङ्गिराचार्यैर्व्यवस्था कृता ॥

---

५५ १८/८। इदमंशायुः। अथ पिण्डायुः। अत्र जातके लग्ने पापग्रहाभावात् पिण्डायुर्दायजीवशर्मायुर्दाययोः क्रूरोऽयहरणं नास्ति। उच्चादिनिमित्तं त्रिगुणतादिकं मास्त्येव। शिष्टं अंशायुर्दायवत्। अतः पिण्डायुर्दायसिद्धं लग्नादीनां वर्षादिकमायुर्लिख्यते। लग्नस्य ८-११-२८-१२, सूर्यस्य १९, चन्द्रस्य २५, कुजस्य ७-६, बुधस्य ७-६-५ गुरोः १५ शुक्रस्य २१, शनेः १६, सर्वायुर्योगः १२०-०-३-१२। अत्र जातके लग्ने एककलाधिक्ये ९ वत्सराः लग्नायुः भवति। तदा सर्वायुर्योगः १२०-०-५ भवति। अतो वराहोक्तं "अनिमिषपरमांशके विलग्ने शशितनये गवि पञ्चवर्गलिप्ते। भवति हि परमायुषः प्रमाणं यदि सकलाः सहिताः स्वतुङ्गमेषु"। इति "समाः षष्टिर्द्विघ्ना मनुजकरिणां पञ्च च निशा" इति च सङ्गच्छते। अथ पूर्ववत् साधिताः जीवशर्मायुर्वत्सराः लिख्यते। लग्नस्य ८-११-२८-१२ सूर्यचन्द्र-गुरुशुक्राणां प्रत्येकं १७-१-२२-८ १/२, बुधस्य १०-८-१५, कुजस्य ८-६-२६-४ १/४ शनेः १३-८-१८ सर्वायुर्योगः ११०-६-२५-५० १/४। लग्नस्य बलाधिक्ये पिण्डायुर्दाये सर्वायुर्योगः। १२३-०-४-४८, जीवशर्मायुर्दाये ११३-६-२७-२६ १/२। अत्र सूर्यचन्द्रलग्नानां मध्ये लग्नस्य बलाधिक्ये रवेः ९ वत्सराः अंशायुः, चन्द्रस्य बलाधिक्ये २० वत्सराः नैसर्गिकायुः, रवेः बलाधिक्ये १९ वत्सराः पिण्डायुः, रविलग्नयोर्बलसाम्ये अंशायुषः ९ पिण्डायुष १९ श्च योगार्धं १४ वत्सराः, लग्नचन्द्रयोर्बलसाम्ये अंशायुर्दाय ९ नैसर्गिकायुर्दाय २० योगार्धं १४१/२ वत्सराः, रविचन्द्रयोर्बलसाम्ये पिण्डायुर्दाय १९ नैसर्गिकायुर्दायस्योगार्धं १९१/२ वत्सराः, त्रयाणां बलसाम्ये आयुर्दायत्रययोगस्य ४८ त्र्यंशः १६ वत्सराः, त्रयाणां बलहीनत्वे १७-१-२२१/७ जीवशर्मोक्तवत्सरा आयुर्दायः। एवं कालचक्रायुर्दायेऽपि ज्ञेयम् ॥ २— ४ ॥

उक्तं च—

अंशोद्भवं लग्नबलात्प्रसाध्यं
आयुश्च पिण्डोद्भवमर्कवीर्यात् ।
नैसर्गिकं चन्द्रमसो बलेनेति ॥ २ ॥

[लग्नेन्दुसूर्या यदि तुल्यवीर्याः
पिण्डादिदायत्रयवर्षयोगः ।
रामैर्हृतो द्वौ यदि तुल्यवीर्यौ
तदुक्तदायैक्यदलं हि दायः ॥ ३ ॥]

लग्नसूर्यशशिनो बलशून्याः
स्युर्यदाऽत्र परमायुरगांशं ।
सर्व एव खचरा ददतीदं
जीवशर्मगदितं हि तदायुः ॥ ४ ॥

नियतायुर्दायस्य पूर्णस्य लाभः

इदमायुः केषां घट(त) इत्याह श्रीपतिः—

[(ये धर्मकर्मनिरता विजितेन्द्रिया ये
ये पथ्यभोजनजुषो द्विजदेवभक्ताः ।
ये वा नराः विदधते कुलशीललीलां
तेषामिदं कथितमायुरुदारधीभिः ॥ ५ ॥

[(अहिंसकस्य दान्तस्य धर्माजितधनस्य च ॥
सर्वदा नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥ ६ ॥)]

गौरीजातकेऽपि—

### नियतायुर्दायस्य ह्रासः

पापिष्ठा ये दुराचारा देवब्राह्मणनिन्दकाः ॥
बह्वाशिनश्च ये ते(अपथ्यभोजिनस्ते)षामकालमरणं भवेत्(ध्रुवं) ॥ ७ ॥

### दशाक्रमः

एवं ग्रहाणामायुर्दायं विलिख्य ततो [1]लग्नादित्योडुपानामित्यादिना दशाक्रमो लेख्यः । यतः सर्वेषां फलानां विपाको दशापाके ॥

---

१ पूर्वोक्तदिशा सलग्नानां सप्तग्रहाणां सिद्धमायुरेव तत्तद्ग्रहलग्नदशानाम्ना व्यपदिश्यते । तत्तद्ग्रहलग्नदशाकाले तत्तद्ग्रहलग्नोचितो वक्ष्यमाणः फलपाको भवति । ताश्च दशाः क्रमेण भवन्ति । तं च दशानां प्रथमद्वितीयादिक्रममाह (लग्नेति) लग्नचन्द्रसूर्याणां मध्ये यो बली तस्य दशा प्रथमा । त्रयाणां बलसाम्ये तेषां मध्ये अधिकवर्षायुर्दातुः प्रथमा दशा । त्रयाणां बलसाम्ये आयुर्वर्षसाम्ये च लग्नस्यैव प्रथमा दशा । त्रयाणां मध्ये एकस्मात् द्वयोर्बलाधिक्ये तयोर्बलसाम्ये च अधिकवर्षायुर्दातुः प्रथमा दशा । लग्नसूर्ययोश्चन्द्रात् बलाधिक्ये तयोर्बलसाम्ये वर्षसाम्ये च लग्नस्यैव प्रथमा । लग्नचन्द्रयोः सूर्यात् बलाधिक्ये तयोर्बलसाम्ये वर्षसाम्ये च लग्नस्यैव प्रथमा । सूर्यचन्द्रयोर्लग्नात् बलाधिक्ये तयोर्बलसाम्ये वर्षसाम्ये च सूर्यस्यैव प्रथमा दशा । एवंरीत्या यस्य दशा प्रथमा भवति तस्मात् केन्द्रगतेषु ग्रहेषु अधिकबलवतो द्वितीया, ततो न्यूनबलस्य तृतीयेत्येवं क्रमेण केन्द्रस्थेषु सर्वाल्पबलवतश्चरमा दशा । एवं केन्द्रस्थग्रहाणां मध्ये द्वयोर्वा अनेकेषां वा बलसाम्ये तद्दशामध्ये अधिकवर्षदातुः प्रथमा ।

[(लग्नादित्योडुपानामधिकबलवतः स्याद्दशादौ ततोऽन्या
तत्केन्द्रादिस्थितानामिह बहुषु पुनर्वीर्यतो वीर्यसाम्ये ।
बह्वायुर्वर्षदातुः प्रथममिनवशाच्चोदितस्याब्दसाम्ये
वीर्यं किं त्वत्र सन्धिग्रहविवरहतं भावसन्ध्यन्तराप्तम् ॥ ८ ॥

**तथा चाह श्रीपतिः—**

मतभेदेन फलविपाकसङ्ख्याभेदः

पाकं द्वादशधा वदन्ति यवना दिग्भेदभिन्नं तथा
माणिक्य (न्धः) खलु बादरायणमुनिस्तं चाष्टधा प्रोक्तवान् ।
षड्भेदं खलु रिवद्धेश(सिद्धसे)नविबुधस्तं देच(व)लाद्याः पुन
र्भेदैरे(दैवे)[द]मितैरुदारधिषणः श्रीविष्णुगुप्तस्त्रिभिः ॥ ९ ॥

पाकं त्रिभेदं पुनराह सत्य
स्तछा(स्तं शा)स्त्रदृष्ट्या कथयाम्यतोऽहं ।

---

आयुर्वर्षसाम्ये बलसाम्ये च सूर्यादतिदूरवर्तिनः प्रथमा । एवं केन्द्रगतग्रहदशानन्तरं पणफरगतग्रहदशा, तदनन्तरं आपोक्लिमगतग्रहदशा च पूर्वोक्तक्रमेण भवति । पणफरस्थेषु आपोक्लिमगतेषु च अधिकबलवतो दशा प्रथमा इत्यादिकं पूर्ववत् ज्ञेयम् । केन्द्रे ग्रहाभावे पणफरतेषु, केन्द्रपणफरयोरुभयोरपि ग्रहाभावे आपोक्लिमगतेषु अधिकबलवतो दशा द्वितीया तदनन्तरं पूर्वोक्तक्रमेण सर्वं ज्ञेयम् । गणितागतं ग्रहबलं ग्रहे भावमध्यगते पूर्णम् । भावसन्धिगते शून्यम् । मध्ये अनुपातः स चेत्थम् । गणितागते ग्रहबले ग्रहभावसन्ध्योरन्तरेण गुणिते भावमध्यभावसन्ध्योरन्तरेण भक्ते लब्धं फलं स्पष्टं बलं दशाक्रमोपयोगि ज्ञेयम् ॥ ८ ॥

पाकद्वादशभेदाः

[1]नैसर्गिकः स्यात्प्रथमोऽत्र भेदो
दशाक्रमाख्यश्च भवेद्वि(द्द्वि)तीयः ॥ १० ॥

अन्तर्दशाख्यः कथितस्तृतीयः
प्रोक्तश्चतुर्थो वि(ऽपि) दशाभिधानः ।
स्याद्राशिसंज्ञः खलु पंचमोऽत्र
षष्ठस्तदा(था) भावफलाभिदः(धः) [स्यात्] ॥ ११ ॥

योगाभिधः स्यादिह सप्तमोऽपि
स्यादष्टमो द(दृ)ष्टिफलाभिधश्च ।
प्रोक्तोऽष्टवर्गो नवमो मुनीन्द्रैः
होरादिवर्गो दशमो ग्रहाणां ॥ १२ ॥

प्रत्यब्दमासद्युनिशाफले स्या
देकादशो भोजनमैथुनाद्यैः ।

---

१ एते द्वादशभेदाः सर्वेषामप्याचार्याणां संमताः । तत्र यवना एतैर्भेदैः पाकं द्वादशधा वदन्ति । मणित्थः दशान्तर्दशादशाक्रमाणां ऐक्यमभिप्रेत्य शिष्टैर्नवभिः सह दशधा वदति । बादरायणः मणित्थोक्तेषु दशसु राशिहोरादिवर्गभावानामैक्यमभिप्रेत्य शिष्टैः सप्तभिः सह अष्टधा वदति । सिद्धसेनः प्रथमसप्तमाष्टमभेदानामैक्यमभिप्रेत्य बादरायणोक्तेष्वष्टसु शिष्टैः पञ्चभिः सह षोढा वदति । एवमन्येपि मुनयः केषांचित् पाकानामेकत्वातर्भावमुपेत्य पाकसंख्याभेदमुरीचक्रुः । अस्मिन् ग्रन्थे आयुर्दायसाधनपराः श्लोकाः न सन्ति । अतस्ते श्लोकाः फलदीपिकाग्रन्थात् उद्धृत्य कुण्ठस्था निवेशिताः । एतच्चाश्चर्यं द्वितीयश्लोकव्याख्यावसरे प्रदर्शितम् ॥ १२ ॥

स्याद्द्वादशः सत्त्वशरीरधातु
स्वरूपभेदैः कथितोऽत्र [त]थैः(ज्ज्ञैः) ॥ १३ ॥

अंशदशा

[(लिप्तीकृत्य भजेद्ग्रहं खखजिनैस्तच्छिष्टभागायुष्कला
आशाख्याब्धिहताब्दमासदिवसाः सत्योदितेंऽशायुषि ।
वक्रिण्युच्चगते त्रिसंगुणमिदं स्वांशत्रिभागोत्तमे
द्विघ्नं नीचगतेऽर्धमप्यथ दलं मौढ्ये सिताकीं विना ॥ १४ ॥)]

[(सर्वार्धत्रिकृतेषुषण्मितलवह्रासोऽसतामुत्क्रमा-
द्रिःफात्सत्सु दलं तदा हरति बल्येको बहुष्वेकमे ।
ऽप्यंशोनं रिपुभे विना क्षितिसुतं सत्योपदेशे दशा
लग्नस्यांशसमा बलिन्युदयभे स्याद्राशितुल्यापि च ॥ १५ ॥)]

[(सत्योपदेशो वरमत्र किं तु
कुर्वन्त्ययोग्यं बहुवर्गणाभिः ।
अचार्यकत्वं तु बहुप्रताया-
मेकं तु यद्भूरि तदेव कार्यम् ॥ १६ ॥)]

पिण्डायुर्दशा

[(चेयं १९ शूर २५ शके १५ श्रियं १२ स्मय १५ परे २१ निद्राः २० समा भास्करात्
पिण्डाख्यायुषि पूर्ववच्च हरणं सर्वं विदध्यादिह ।
लग्ने पापिनि भं विनोदयलवैर्निघ्नं नतांगैर्हृतं
त्याज्यं सौम्यनिरीक्षितेऽर्धमृणमंत्रायुष्यभिज्ञा विदुः ॥ १७ ॥)]

[(हरणं नीचेऽर्धमृणं स्यात्पूर्णं प्रोक्तवर्षमुच्चगृहे ॥
पैण्डादौ ह्यन्तरगे प्राज्ञैस्त्रैराशिकं चिन्त्यम् ॥ १८ ॥)]

[(लग्नदशामंशसमां बलवत्यंशे वदन्ति पैण्डाख्ये ॥
बलयुक्तं यदि लग्नं राशिसमैवात्र नांशोत्था ॥ १९)]

निसर्गदशा

[(एकं द्वे नव विंशतिर्धृतिकृती पञ्चाशदेषां क्रमा
चन्द्रारेन्दुजशुक्रजीवदिनकृद्दैवाकरीणां समाः ।
स्वैः स्वैः (स्वे स्वे) पुष्टफला निसर्गजनितैः(समये) पक्तिर्दशायाः क्रमात्
अन्ते लग्नदशा शुभेति यवना नेच्छन्ति केचित्तथा ॥ २० ॥)]

जीवशर्मदशा

[(सूर्यादिकानां स्वमतेन जीव-
शर्मा स्वरांशं परमायुषोऽत्र ।
अस्यापि सर्वं ह्रणं विधेयं
पूर्वोक्तवल्लग्नदशामपीह ॥ २१ ॥)]

[(नृणां द्वादशवत्सरा दशहता युक्ताः शरैर्वासरै
राख्यातं परमं शनेस्त्रिभगणं यावत्परैरीरितम् ।
केश्चिच्चन्द्रसहस्रदर्शनमिह प्रोक्तं कलौ किं तु य
द्वेदोक्तं शरदः शतं द्वि परमायुर्दायमाचक्ष्महे ॥ २२ ॥)]

दशासु चिन्तनीयानि

अथ गदितसमस्तायत्फलौघा(लेऽया)वशिष्टं
सदशुभयुगयोगाद्भाववृत्या(दृष्ट्या)दि सर्वं ।

सुमतिरनुलिलेखो(तो)कस्य निर्देशकाले
तदनु कथितयुक्त्या यद्दशोत्थं च तस्य ॥ २३ ॥

प्रभवति यदि चांतर्थ(स्त)र्हि दातुं फलं च
प्रभवति त(तु) दशैतद्वर्व(र्ग)मुख्या वतंति ।

अत इह फलसारं वच्मि सम्यग्दशायाः
सुजनगणकतुष्टयै चानुभावा ससिद्धिः ॥ २४ ॥

अथ सूर्यादिप्रत्येकग्रहाणां सामान्यदशाफलं

सूर्यदशाफलम्

[1]सौर्यो(र्या)मौषधदंतचर्मनखतो राजाद्य(ध्व) शैलाग्निप्र
हिंस्रो धर्मी हेमार्द्रदममलवद्धनिभवो धान्यं शुभायां तुषैः ॥ २५ ॥

[सौर्यां स्वं नखदन्तचर्मकनकक्रौर्याध्वभूपाहवैः
शैलाग्न्यौषधदोस्थ्यधान्यविषतो व्यर्थैस्तुषाद्यैरपि ।
तैक्ष्ण्यं धैर्यमजस्रमुद्यमरतिः ख्यातिः प्रतापोन्नतिः
भूपत्वं विजयः सुखं वनरतिः श्रेष्ठ्यं शुभायां भवेत् ॥ २५ ॥]

शस्त्राग्निक्षितिपारिपुत्रवनितावित्तार्तिचित्तासुखं
रुक्को(क्षुत् पा)पं भयवा(रदंतु)दरुग्मृ(ग्भृ)तकलिस्त्यागी तथा पित्तरुक् ।
उद्वेगा(गो) नु(नि)त्नविग्रहः प(प्र)वसनं गात्रप्रपीडा क्षतिः
पूर्वोक्तैरपि चेद्(द्र)वेरशुभ[दा] मिश्राणि मध्या यदा ॥ २६ ॥

---

[1] अयं श्लोको न पूर्णः । अशुद्धश्च । अतस्तत्स्थाने मदीयः कुण्डलीगतः श्लोकोऽनुसन्धेयः ।

## चन्द्रदशाफलम्

इन्दोरिक्षुपयोविकारसुमनोवस्त्रांम्र(स्त्राध्व)पत्नीजल-
द्रव्याश्वादिचमूपभोग्यमधुसत्कर(राजाया)[स]कांदर्पिकैः।
सौख्यं शंखविमुक्तकाब्जकृषिभिर्गोधूमशाल्यौषधीः(धी)
मूलैः कन्दफलैश्च मन्त्रि(न्त्र)मणिभिर्लाभो द्विजात्य(तेः) शुभा ॥ २७॥

कन्याजन्म श(भ)यालसौ हि(द्वि)जसुरप्रीतिर्मतिः स्वैर्जनै
र्वैरं स्याद्बलिभिः स्ववृ[ध्य]पचयौ ख्यातिः कफाध्वो(फव्या)धयः।
जिह्वायामपटुः प्रवास्यहिभयं पण्यांगनासंश्रयः
शोकः शृङ्गिनिशाचराग्निलभयं चेच्चाब्ज्य(चान्द्य)निष्टा दशा ॥ २८ ॥

## कुजदशाफलम्

क्षित्यजो(क्षेत्रा जा)विकताम्रहेमविपणिचूतारिमर्दै रसैः
कषायैः कटु[कै]नृ(नृ)पानुजमहाकष्टे(कूटै)र्द्धनं विद्रुसैः(मैः)।
सेनानीत्वगुडासवायुधगजछत्राभिरा(ग्निभी) रक्तकै
र्द्धात्राका(चौर्यैः कू)रचतुष्पदैर्युनप(र्विषव)लैः कौशे(कौर्यै)श्च कौज
शुभा ॥ २९ ॥

स्त्रीपुत्रारिसुहृद्धुधानुजगुरुप्रद्वेषिताऽ[सृ]ग्ज्वरा
स्तृष्णा पित्तरुजाऽग्निभी(भीः) परुषता तैक्ष्ण्यं परस्त्रीरतिः।
व्यङ्गत्वं कलहश्चतुष्पदमुखैश्चोरैश्च हानिर्नृपा
द्भीतिः सङ्ग[रपा]मकोपविषतः शस्त्रैरनिष्टाऽरजा ॥ ३० ॥

## बुधदशाफलम्

वित्तं दौत्यसुहृद्गुरुर्द्विजसुरोद्युक्ताद्द्रणिगम्यो मही
स्त्रणस्त्रीहयवेग(शुक्ति)संगरधनं लेख्यादिशिल्पैर्नृपात्।

गान्धर्वोऽद्कपा(या)नय(म)न्त्रगणितैर्गेधेंद्रजालैर्यशो
धर्मासिः कपिकौतुकादि विदलैर्धान्यैः शुभा चेद्विदः ॥ ३१ ॥

घातं बन्धुकुलक्षयं प्रवसनं बन्धं [म]नस्याद्ध(म)यं
कष्टं मानविनाशनं(रं)गकटकं(कैर्भी)तिं त्रिदोषं(ष)ज्वरं ।

पण्यद्यूतमहीरसाश्व(श्व)कपितो हानि(निं) करांघ्र्यो रुजं
पारुष्यं भृतकैः कलिं प्रकुरुते बौधी दशाऽनिष्टदा ॥ ३२ ॥

गुरुदशाफलम्

जैष्यां मन्त्रिनृपप्रणीतिविभवं कान्ता(न्तां) सुवर्णं गजा
श्वान्माङ्गल्यपुरोष्टिकानि लभते मानं नृपाद्वा गुरोः ।

सद्भक्ष्यं व्यजनातपत्रसुमनोवस्त्राध्वजाद्यं तथा
प(पु)ण्याद्वा मधुमांसिकुष्ठतगरैरारक्तधान्यादिभिः ॥ ३३ ॥

शोकं गोत्रजनैर्व्रपुण्यशुचिनां(तां) गुह्ये च कर्णे रुजं
हस्तः(मेदः)पुंस्त्वविनाशनं नृपभयं कट्यां रुजं जंघयोः ।

हृच्चिह्नं कफतो मरुद्धि(द्रि)जबुधे(धै)रारक्तकैर्वस्तुभि
र्हानिं चाश्वमुखैः(रै) कलिं युवतिभिः कुर्यादनिष्टा गुरोः ॥ ३४ ॥

शुक्रदशाफलम्

गोप(गेय)स्त्रीरतिसं(रं)गराजकृषितो वित्तं च कान्दर्पिका[त्]
ज्ञानायोष्ठ(ष्टे)सुखासिमान्य(सयान)मदन(न)क्ष्माभोज्यवस्त्रो(स्त्रा) रा
श(स)यः ।

उद्यानानि वणिग्दुकूलविहगौ पूर्णार्घ(र्थ)जात्यगुरु(रू)-
श्च(न)श्वालंकृतिगोमहीसितरुचीन् शौकी विधत्ते शुभा ॥ ३५ ॥

स्त्रीपक्षादशुभं नृपादपि तथा मार्गे गृहध्वंसनं
सेना(ता)नादसुखं हि यानपतनं वृद्धैर्विवादं कुले ।

गुह्ये पु(मु)ष्कगुदे भयं कफमरुत्पीडा च धान्यादिभि
र्हानि(निं) मेवचचि(स्ने)हशुचं)[च] कण्डुसहितां शौकी दशाऽनिष्टदा
॥ ३६ ॥

शनिदशाफलम्

वित्तं शाकुनि(न)तैलहीनमलिनैर्लोहैस्तिलैः कोद्रवैः
कृष्णैर्धान्ययवैश्च लेरुयविहगैर्युक्तत्रपुष्टैः(क्तो वृषोष्ट्रैः) खरैः ।

वृन्दग्रामपुराधिपत्यमहिषीभू(षैर्भू)भृत्यवृद्धांगना-
सीसाघं(घैः) कटुतिक्तवस्तुषु रतिं मान्दी दशा चेच्छुभा ॥ ३७ ॥

म[द्य]द्यूतरतिं रुजं धनभयं युद्धे भयं स्त्रीरुजं
बन्धं भृत्यसुतैः कलिं निजजनैस्तन्द्रो(न्द्रीं) भ्रमं व्यंगतं(तां) ।

आलस्यं श्रुतिपीडनं गुदरुजं वातोऽस्थरोगं मृतिं
स्फिक्पय(क्पी)डामपि कीर्तितैः शुभ[फ]तै(लै)र्हानिं च कष्टाऽर्किजा
॥ ३८ ॥

---

१ पूर्णार्था निघगः ॥ २ स्नेहशुचं स्वेहज शोकं

इति सूर्यादिप्रत्येकग्रहाणां सामान्यदशाफलम्

ग्रहाणां पञ्चभूतच्छायाकारकत्वम्

[1]सूर्याष्ट(सू)जौ च शिखिनः शशिजो [ध]रिड्याः
छायी(यां) गुरुश्च नभसः सितशीतरश्मी ।
वारोऽर्कजोऽपि कुरुते मरुतः स्वपाके
दग्धु(ग्धो)णकर्णवदनत्वगुपाहितां तु ॥ ३९ ॥

अथ पञ्चभूतच्छायाफलम्

छाया नृणां भवति भूप्रभवा सुगन्धा
सुस्निग्ध [चर्मनखदन्तसुरोमकेशा]
देहरदरोपि कुरुते मरुतः स्वपाके ।
दमनखाक्षिकोशा च तुष्व(ष्ट्य)र्थलाभसुखभोगसमृद्धिदा च
धर्मस्य वृद्धिपजननी(द्धिजननीति) वदंतज्ञदाः(ति तज्ज्ञाः) ॥ ४० ॥

स्निग्ध(ग्धा) सित(ता) हरितक(का) [नयनाभिरामा
सौभाग्यमार्दवसुखाभ्युदयान् करोति ।

---

१ इमे छायाकारकफलपराः श्लोकाः तनुचिन्ताध्यायोक्तैः पुनरुक्ताः । तथापि तत्तद्ग्रहदशायां तत्तद्ग्रहोक्तछायाफलं अवश्यमभिव्यज्यते इति ज्ञापनार्थं दशाध्याये तस्य पुनः कथनमिति न दोषः । जन्मकालिकग्रहेष्वधिकबलवतश्छाया जातकस्य सार्वदिकी भवतीति ज्ञापनाय तनुचिन्ताध्याये तदुक्तिः । उत्तरश्लोके स्थूलाक्षरनिर्दिष्टो भागोऽशुद्धः । स च त्याज्यः । तत्स्थाने कुण्डलीगतो मदीयः पाठोऽनुसर्तव्यः । ४१, ४२ श्लोकौ च लुप्तौ । तत्रापि मदीयः पाठोऽनुसर्तव्यः ॥ ३९ ॥

सर्वार्थसिद्धिजननी जननीव चाप्या
छायां शुभा तनुभृतां फलमादधाति ॥ ४१ ॥]

[हेमाग्निपद्म]वर्णा(र्णः) शिखिमायां नरो भवति चण्डः ॥
आरोग्यविक्रमयशस्तेजोजयवांछितार्थाः स्युः ॥ ४२ ॥

मलिना कृद(हत)भा परुषा दुर्गन्धा पवनसंभवा छाया ॥
व्याधिवधबन्धनान[र्थ]शोकदैन्यप्रदा नृणां ॥ ४३ ॥

स्फटिक **सिक** सितोऽत्पलकान्तिः स्वच्छा गगनोद्भवा प्रभां(भा) पुंसां ॥
सौभाग्यभाग्यध[र्म]नानार्थकामसौख्यभाग्यवती ॥ ४४ ॥

इति ग्रहाणां पञ्चभूतच्छायाफलम्

॥ इति सामान्यदशाफलविचारः ॥

---

**सारावल्यां—**

## ॥ अथ विशेषदशाफलम् ॥

उच्चमित्रस्वगृहनवांशगतसर्वग्रहदशाफलम्

स्वोच्चस्वराशिनिजभागसुहृद्गृहस्थाः
संपूर्णवीर्यरुचिला(रा) बलिनः स्वकाले ।
मित्रोच(च्च)भागसहिताः शुभदृष्टियुक्ताः
श्रेष्टां(ष्ठां) दशां विद[ध]ते स्ववयःसु खेगः(टाः) ॥ ४५ ॥

मूढनीचारिराश्यंशगतपापयुक्तसर्वग्रहदशाफलम्

नीचशत्रुगृहं प्रासः शत्रुनिम्नांशसूर्यगः ॥
विवर्णः पापसंबद्धो दशां कुर्यादशोभनं(नां) ॥ ४६ ॥

अवरोहिमध्यदशयोर्लक्षणम्

[1]तुङ्गाद्यु(च्च्यु)तस्य हि दशा सुहृदुच्चांशेऽवरोहिणी मध्या ॥

आरोहिकष्टदशयोर्लक्षणम्

नीचादि(रि)षु नीचांशे गृ(ग्र)हस्य चारोहिणी कष्टा ॥ ४७ ॥

अथ सूर्यविशेषदशाफलम्

सूर्यदशायाः पञ्च भेदाः

स्वोच्चं नीचं त्रिकोणं च क्षेत्रं(केन्द्रं) शत्रुगृहं तथा ॥
पंचमा(प्र)कारसंयुक्ता दशा भानोः प्रकीर्तिता ॥ ४८ ॥

---

१ परमोच्चभागानतिक्रम्य नीचाभिमुखगामिनः दशा उच्चात् नीचं प्रति अवरोहणात् अवरोहिणीसंज्ञा भवति । मित्रगृहे स्वगृहे मित्रांशे स्वोच्चनवांशे स्वनवांशे वा स्थितस्य अवरोहिणी दशा मध्यमफला भवति । अन्यत्र स्थितस्य अधमफला भवति । एवं परमनीचभागानतिक्रम्य उच्चाभिमुखगामिनः दशा नीचात् उच्चं प्रति आरोहणात् आरोहिणीसंज्ञा भवति । स्वोच्चे तन्नवांशे स्वक्षेत्रे स्वनवांशे मित्रगृहे तन्नवांशे वा स्थितस्य आरोहिणी दशा श्रेष्ठफला । नीचांशे शत्रुक्षेत्रे शत्रुनवांशे वा स्थितस्य आरोहिणी दशा कष्टफला (अधमा) भवति । तादृशी अवरोहिणी दशा अतिकष्टफला (अत्यधमा) भवति । मूलत्रिकोणस्वक्षेत्रान्यतरगतस्य नीचांशशत्रुक्षेत्रांशान्यतरस्थितौ आरोहिणी दशा मध्या भवति । पूर्वोक्तं शुभदशाफलं आरोहिण्यां पूर्णं, मध्यायां मध्यं, अधमायां अत्यधमायां च शून्यम् । एवं अशुभं दशाफलं आरोहिण्यां शून्यं, मध्यायां मध्यं अधमायां अत्यधमायां च पूर्णं भवतीति ज्ञेयम् ॥ ४७ ॥

लग्नकेन्द्रगतसूर्यदशाफलम् षष्ठस्थानगतसूर्यदशाफलम् च

राज्यं ददाति विपुलं दशा रवेर्लग्नसंस्थितस्य नृणां ॥
केन्द्रस्थितस्य चैवं [कटि]फलं(गल)नेत्रभकोगमरिगस्य ॥ ४९ ॥

नीचगतसूर्यदशाफलम्

नीचस्थितस्य भानोर्दशाऽक्षिनाशं ज्वरं शिरोरोगं ॥
ब(ब)न्धनक(म)न्याश्च रुजः कष्टस्यवै(कुष्ठामय)दशा(र्शनं) चिह्नं ॥ ५० ॥

स्वोच्चगतसूर्यदशाफलम्

स्वोच्चं प्राप्तस्य दशा ददाति राज्यं सहस्रकिरणस्य ॥
तुरगातपत्रचामरकरीन्द्रसंवाहनाप्तिश्च(प्तिं च) ॥ ५१ ॥

मूलत्रिकोणगतसूर्यदशाफलम्

सवितुर्दशा च पुंसो विदधाति स्वत्रिकोणसंस्थस्य ॥
उत्तमविषयपतित्वं विध्वस्ताशेषदुःखत्वं ॥ ५२ ॥

शत्रुक्षेत्रगतसूर्यदशाफलम्

शत्रुगृहेऽर्कदशायां नयनविनाशो भवेच्च कुब्जत्वं ॥
ज्वालगर्दभ(वक्त्रज)रोगा भवन्ति क्रि(क्र)मयः परिभवाश्च ॥ ५३ ॥

अष्टमगतसूर्यदशाफलम्

अष्टमगतस्य भानोर्दशा क्षयं नयति सर्वगात्रस्य ॥
भ्रमति च देशाद्देशं प्रमापयत्यपि च सु(वि)क्लिष्टं ॥ ५४ ॥

॥ इति सूर्यविशेषदशाफलम् ॥

## ॥ अथ चन्द्रविशेषदशाफलम् ॥

### चन्द्रदशायाः षट् भेदाः

सामान्यतश्च षोढा चन्द्रदशा भिद्य(द्य)ते समासेन ॥
स्वोच्चसुहृच्छत्रुगृहे नीचगृहे क्षीणदेहपूर्णस्य ॥ ५५ ॥

### स्वोच्चनीचमित्रशत्रुगृहगतचन्द्रदशाफलम्

तत्रोऽच्चदशा राज्यं नीचदशा मरणमरिदशा बन्धं ॥
कथयति नलिनीशत्रोर्मित्रदशा स्वजनसंगा(प्रा)प्तिं ॥ ५६ ॥

### क्षीणचन्द्रदशाफलम्

क्षीणेऽन्दुदशायंपो(योगे) वि(चि)ह्नान्येतानि लक्षयेद्विद्वान् ॥
उदरामयज्वरशिरोनयनोऽत्कोपप्रतिश्यायात्(श्रमांश्चापि) ॥ ५७ ॥

### पूर्णचन्द्रदशाफलम्

व(ब)लिनः संपूर्णस्य [च] शशिनः कुरुते सदा दशा पुंसः ॥
योषित्सहस्रपरिवृतमन्तःपुरमुत्तमश्रीकं ॥ '५८ ॥

### अष्टमगतचन्द्रदशाफलम्

भवति च धनस्य भ्रंशो विषयस्यांतःपुरस्य भृत्यानां ॥
अष्टमचन्द्रदशायो(यां) म्रियते च स्वजनपरिभूतः ॥ ५९ ॥

### षष्ठगतचन्द्रदशाफलम्

प(यं)त्रतृणकाष्ठगोमयवंशकरीरोप(रज्जीफ)लोदकाजीवि(वी) ॥
भवति कदन्नकुचेली नृपोऽ[पि] मृ(भृ)तकोऽरिगृहशशिदशायां ॥ ६० ॥

॥ इति चन्द्रविशेषदशाफलम् ॥

---

## ॥ अथ कुजादिपञ्चग्रहविशेषदशाफलम् ॥

### स्वोच्चलग्नकेन्द्रगतकुजादिपञ्चग्रहदशाफलम्

लग्ने(ग्र)गृह[ग]स्य [हि] दशा मंडललाभं स्वबुं(तुं)गगस्यापि ॥
केन्द्रस्थितस्य दशा मं(कुरुते) धनवाह[न]देशसंप्राप्तिं ॥ ६१ ॥

### षष्ठाष्टमगतमूढकुजादिपञ्चग्रहदशाफलम्

षष्ठदशा व्यसनकरी मरणं च [करोति] नैधनस्थदशा ॥
अस्तमितग्रहपाको बन्धनमात्रेण पीडयति ॥ ६२ ॥

### वक्रगतकुजादिपञ्चग्रहदशाफलम्

वक्रोऽपगतस्य दशा भ्रामयति कुलालचक्रवत्पुरुषं ॥
व्यसनानि रिपुनिरोधं करोति पापस्य तु(न) शुभस्य ॥ ६३ ॥

### रिक्तानिष्टफलयोर्दशयोः फलम्

नुछा(तुच्छा)तिनुछ(तुच्छ)निस्तानि(म्नाति)नि[म्न]रिप्त्र(प्त्र)धिरिपुगृहदशासु ॥
पृथिवीपतिरपि भूत्वा स्वभृत्यभृत्यो भवेत्पुरुषः ॥ ६४ ॥

### शत्रुक्षेत्रगतकुजादिपञ्चग्रहदशाफलम्

देशत्यागो व्याधिभ्रं(भ्रं)शोऽर्थानां मुहुर्मुहुः कलहः ॥
बन्धनमरातिजनितं रिपुराशिगतस्य हि दशायां ॥ ६५ ॥

### कुजादिपञ्चग्रहरिक्तदशाफलम्

मत्तकरिगलितमदजलसंकरधरापीठनाशितरजस्कः ॥
राजैकाश्वसहायो रिक्तदशायां ध्रुवं भ्रमति ॥ ६६ ॥

पञ्चमभावादिनवमभावांन्गतकुजादिपञ्चग्रहरिक्तदशाफलम्

अंगप्रत्यङ्गानां छेदं विदधाति षष्ठशत्रुदशा ॥
कोणघू(घू)नारिदशा निधनारिदशा शिर छे(रश्छे)दं ॥ ६७ ॥

नीचराशिगतकुजादिपञ्चग्रहदशाफलम्

रिपुभयं विदेशगमनं बन्धनरोगाभि(दि)पीडनं भवति ॥
नीचस्थग्रहपाके राजाभिभवो ध्रुवं पुंसां ॥ ६८ ॥

शीर्षोदयादिराशिवशात् तदाश्रितग्रहदशाफलपाककालः

आदौ दशापु(सु) फलदाः शीर्षोदयराशिसंस्थिता विहगाः ॥
उभयोदयभे मध्ये त्वंते पृष्ठोदयर्क्षेषु(ये च नीचर्क्षे) ॥ ६९ ॥

इति कुजादिपञ्चग्रहविशेषदशाफलम्

॥ इति विशेषदशाफलम् ॥

इति श्रीजातकसारदीपे मूलदशाध्यायः एकाशीतितमः

---

## ॥ अथ सारावल्युक्तान्तर्दशाध्यायः द्व्यशीतितमः ॥

अथ सामान्यतः अन्तर्दशाफलम्

एकराशिगतग्रहलग्नान्तर्दशाफलम्

एकर्क्षसंस्थितदशा प्रवि(दि)शति बन्धनं स्वनाशं वा ॥

दशाधिपात् पञ्चमनवमगतग्रहलग्नान्तर्दशाफलं

जनयति कंटकरहिता(तं) त्रिकोणसंस्व(स्थ)स्य सुखमतुलं ॥ १ ॥

एकनक्षत्रगतैश्चतुर्भिर्ग्रहैर्युतस्य दशाधिपशत्रोरन्तर्दशाफलम्

एकत्र या चतुर्णा(र्णां) नक्षत्रे रिपुदशा ग्रहाणां स्यात् ॥
व्याधिक्लेशविवादं(दान्) नृपतेश्च भयं तथा जनयेत् ॥ २ ॥

दशाधिपात् सप्तमगतग्रहलग्नान्तर्दशाफलम्

दारमरणं च जनयति सप्त[म]भांतर्दशा प्रणाशं वा ॥

दशाधिपात् सप्तमगतस्य दशाधिपशत्रोरन्तर्दशाफलम्

शत्रोर्दास्यं हरणं परपुरुषेणोऽपभोगं वा ॥ ३ ॥

दशाधिपात् अष्टमस्थानगतग्रहलग्नान्तर्दशाफलम्

अन्तर्दशा ग्रहाणां अष्टमधाम्नि प्रमापयेत्पुरुषः(षम्) ॥

दशाधिपात् अष्टमगतस्य दशाधिपशत्रोरन्तर्दशाफलम्

कुरुते च धनविनाशं शत्रुदशा बन्धनं सविध्वंसं ॥ ४ ॥

त्र्यादिग्रहयुतग्रहलग्नान्तर्दशाफलम्

अन्तर्दशा यदा स्यात् त्रिचतुर्णामेकराशिसंस्थानां ॥
बन्धविनाशं(शो) दैन्यं विदधाति शुभग्रहाणां तु ॥ ५ ॥

दशाधिपात् चतुर्थस्थानगतग्रहलग्नान्तर्दशाफलम्

चतुर्थस्थानसंस्थस्य ग्रहस्यान्तर्दशा भवेत् ॥
मित्रारोग्यकरी नित्यं सौख्यमानविवर्द्धिनी ॥ ६ ॥

॥ इति सामान्यतः अन्तर्दशाफलम् ॥

## ॥ अथ विशेषान्तर्दशाफलम् ॥

### अथ सूर्यदशायां अन्तर्दशाफलम्

शमयति रिपुषु(प्र)तापं नीरोगत्वं करोति धनलाभं ॥
भानुदशायां चन्द्रः प्रविश(शं)[स्त]न्नास्ति यन्न शुभं ॥ ७ ॥

विद्रुमसुवर्णमणयः सङ्ग्रामजयः प्रचं[ड]ता पुंसः ॥
असूतो(सृजो) दशाप्रवेशे सूर्यदशायां नृपतिसौख्यं ॥ ८ ॥

दद्रुविचर्चिकाद्यैः पामा(म्ना) सा कुष्ठैश्च गर्हितशरीरः ॥
तरणिदशायां प्रविशति बुधो दया(यदा) स्याद्दरिविवृद्धिः ॥ ९ ॥

व्यसनैर्व्याधिभिररिभिः पापैश्च विमुच्यते महा(तथाऽ)लक्ष्म्या ॥
अनुयाति धर्मपद्वीं जीवस्यान्तर्दशा यदा भानोः ॥ १० ॥

शिरसो रुग्नव(ग्गल)रोध(ग)श्चित्रं सहसा ज्वरः शूलं ॥
तपनदशायां शुक्रे देशत्यागो भवेदरिभिः ॥ ११ ॥

आदित्यस्य दशायां सौरस्यांतर्दशा प्रतापयति ॥
नृपपरिभूतं दीनं परिवर्जितसाधनं च हतशक्तिं ॥ १२ ॥

॥ इति सूर्यदशायां अन्तर्दशाफलम् ॥

---

## ॥ अथ चन्द्रदशायां अन्तर्दशाफलम् ॥

क्षयरोगभयं शौर्यं नृपप्रतापं सदा महाविभवं ॥
चन्द्रदशायां पुंसो भानुः कुरुतेऽर्थलाभं च ॥ १३ ॥

पित्तासृग्वह्निभयं केश(क्लेशं) भ्रंशं(रोगं) करोति वक्रदशा ॥
[चन्द्रदशा]यां नु(नृ) भयं प्रशो(मो)षणं भवति चोरैश्च ॥ १४ ॥
चन्द्रदशायां ज्ञदशाप्रवेशने चिह्नमुत्तमो लाभः ॥
गजवाजिनां धनानां संप्राप्तिं(प्तिः) सौख्यमतुलं च ॥ १५ ॥
चन्द्रदशायां जाता शक्रेज्यदशा करोति धनलाभं ॥
वस्त्रोऽप्युत्तमकस्माद्वस्त्रालंकारवि[त्रि]धहस्त्यश्वं ॥ १६ ॥
तुहिनकरस्य दशायां प्रविशत्यन्तर्दशा यदाऽस्फुजितः ॥
जलयानमहा(हार)भूषणं(ण)बहुपत्नीभिः समागमं लभते ॥ १७ ॥
स्वजनायासंशोके(सवियोगौ) रोगाभिभवं [तथा] महाव्यसनं ॥
चन्द्रदशायां सौरः करोति निःसंशयं पुंसां ॥ १८ ॥

॥ इति चन्द्रदशायां अन्तर्दशाफलम् ॥

———

## ॥ अथ कुजदशायां अन्तर्दशाफलम् ॥

चंडं /साहसनिरतं नरेन्द्रसंग्रामपूजितं धन्यं ॥
विविधधनागमयुक्तं भौमदशायां करोति रविः ॥ १९ ॥
विविधधनागमलाभं सौख्यं बहुमित्रसंप्राप्तिं ॥
वक्रदशायां चन्द्रः करोति मुक्तामणिप्रभृतीन् ॥ २० ॥
विशति भयं शत्रुभ्यो गजवाजिधनप्रमोषणं चोरैः ॥
दाहं च यदा प्रविशति भौमदशायां बुधस्य दशा ॥ २१ ॥
वक्रदशायां च गुरोः सुरुचिर(चरित)करणेन भवति मुनिधर्मः
(शुभधर्मा) ॥
नृ(नृ)पतिविरु(विशु)द्धचेताः पुण्यानि करोत्यनेकानि ॥ २२ ॥

रुधिरदशायां शुक्रप्रवेशने भवति संगरभयार्तः ॥
व्याधिव्यसनायासैर्द्धनापहारैः(रः) प्रवासैश्च ॥ २३ ॥

व्यसनानि व्यसनानां भवन्त्युपर्युपरि जनविनाशः ॥
वक्रदशायां रविजे प्रविशत्यन्तर्दशयां तु ॥ २४ ॥

॥ इति कुजदशायां अन्तर्दशाफलम् ॥

---

## ॥ अथ बुधदशायां अन्तर्दशाफलम् ॥

इन्दुसुतस्य दशायां प्रविशति भानुर्यदा तदा चिह्नं ॥
कनकाश्व(श्च)विद्रुमयशो(गजान्) विदधाति श्रियमकस्माच्च ॥ २५ ॥

प्रभवति(विशन्ती) चन्द्रदशा बुधस्य कण्डूं करोति कुष्टत्वं(ष्ठं च) ॥
क्षयरोगमङ्गभङ्गं राजभ(गजाङ्ग)यं वाहनविनाशं ॥ २६ ॥

[1]मस्तकशूलनिरोधैर्नानाक्लेशैश्च युज्यते जन्तुः ॥
चन्द्रसुतस्य दशायां [(भौमस्यान्तर्दशा यदा भवति ॥ २७ ॥)]

[(रिपुरोगपापयुक्तः पुण्यानि करोति भूपतेर्मन्त्री ॥
जीवे चरति दशायां)] बुधस्य पुरुषो भवेन्नियतं ॥ २८ ॥

गुरुविबुधातिथिभक्तो वस्त्रालङ्कारपुष्पगन्धरुचिः ॥
इन्दुसुतस्य दशायां [शुक्रस्यां(न्त)र्दशा यदा भवति ॥ २९ ॥

---

१ अस्मिन् श्लोके चतुर्थः पादः उत्तरश्लोके आद्यपादात्रयश्च लुप्ताः । ते च सारावलीतः संगृह्य लिखिताः ।

खरसु(षण्डमु)खकामसेवी लुब्धो धर्मार्थभोगगंभीरः (विलुप्तधर्मार्थ-
भोगसुतवित्तः) ॥
भवति नरोऽत्र दशायां बुधस्य मन्दो यदा चरति ॥ ३० ॥

॥ इति बुधदशायां अन्तर्दशाफलम् ॥

---

## ॥ अथ गुरुदशायां अन्तर्दशाफलम् ॥

रिपुभयकलहैर्यु(र्मु)क्तः प्रयाति गुरुतां नरेन्द्रस्य ॥
विक्रमसहाय(साहस)सौख्यंगु(स्थैर्यं)रोर्दशायां रवौ चरति ॥ ३१ ॥

पत्नीसहस(स)भर्ता जितरोगरिपुः परोऽन्नतिं लभते ॥
प्रकटयति राजचिह्नं चन्द्रदशा गुरुदशायां हि ॥ ३२ ॥

[१]तीक्ष्णः परोपतापी शूरो रणलब्धकीर्तिधनः ॥
सौख्यमनंतं लभते जीवदशायां कुजे चरति ॥ ३३ ॥

[(वेश्यामद्यव्यसनैः परिभूतो भवति निर्धनः सोपि ॥
सौम्ये जीवदशायां विलुप्तधर्मो भवेत्पुरुषः ॥ ३४ ॥

व्याधिविनाशं सौख्यं मित्रैः सह सन्नतिं तथा पुंसां ॥
मातापित्रोर्भक्तिं जीवदशायां बुधः कुरुते ॥ ३५ ॥

रिपुधनविनाशदुःखैरभिभूतो ब्राह्मणोपजीवी च ॥
जीवदशायां शुक्रे प्रविशति नित्यं भवेत्पुरुषः ॥ ३६ ॥

---

१ गुरुदशायां बुधान्तर्दशाफलपरौ द्वौ श्लोकौ सारावल्यां दृश्येते । अत्र श्लोक एव । अतः अधिकः श्लोकः कुण्डल्यां निवेशितः । स च पापयुक्तबुधान्तर्दशाफलपर इति भाति ॥ ३३ ॥

वेश्यांमद्यद्यूतैरभिभूतो धनमहिषखरयुक्तः ॥
सौरे जीवदशायां विलुप्तधर्मा भवेत्पुरुषः ॥ ३७ ॥

॥ इति गुरुदशायां अन्तर्दशाफलम् ॥

---

## ॥ अथ शुक्रदशायां अन्तर्दशाफलम् ॥

गण्डोदराक्षिरोगैः क्षितिपतितो बन्धनादिभिस्तप्तः ॥
शुक्रदशायां सु(सू)[र्ये] विचरति नूनं भवेत्पुरुषः ॥ ३८ ॥

अन्तर्दशा दशायां सितस्य शशिनो यदा भवति [चिह्नम] ॥
नखदशनशिरोरोगैः सह भवति च व कामलो(मिला)रोगः ॥ ३९ ॥

पित्तासृक्(कृ)तरोगो भूलाभ(भः) संश्रयो नृपतितश्च ॥
शुक्रदशायां भौमे मन्दोत्साहः पुमान्भवति ॥ ४० ॥

शुक्रदशायां पुंसां बुधस्य चान्तर्दशा यदा भवति ॥
तदातिलब्धि(स्त्रीधनलाभं) सौख्यं भवति मनोरथाभि(धि)गतं ॥ ४१ ॥

अन्तर्दशा दशायां भृगोर्गुरोर्धर्मशीलसंपत्ति ॥
विदधाति विपुलं(ल)राज्यं पुंसां धनरत्नमतिसौख्यं ॥ ४२ ॥

वृद्धस्त्रीभिः क्रीडां पुरव(रन)गरगणाधिपत्यमरिनाशं ॥
शुक्रस्य दशायां सौरिः करोति बहुमित्रसंयोगं ॥ ४३ ॥

॥ इति शुक्रदशायां अन्तर्दशाफलम् ॥

---

## ॥ अथ शनिदशायां अन्तर्दशाफलम् ॥

धनपुत्रदान(र)नाशं भयमतुलं संदधाति पुरुषस्य ॥
रविपुत्र[स्य] दशायां सूर्यस्यान्तर्दशा न संन्देहः ॥ ४४ ॥

स्त्रीह(म)रणं ग(ह)रणं वा बन्धुविनाशं पुनः पुनः कलहं ॥
अन्तर्दशा दशायां शनेः शशांकस्य विदधाहः(ति) ॥ ४५ ॥

देशभ्रंशं व्याधिं दुःखानि करोत्यनेकरूपाणि ॥
अन्तर्दशा दशायां रविजस्य महीसुतस्य यदा ॥ ४६ ॥

सौभाग्यसौख्यविजयप्रमोदसत्कारमानधनलाभं ॥
सौरिदशायां सौम्यो विदधात्यन्तर्दशां प्राप्तः ॥ ४७ ॥

अनुयाति शिष्टपदवीं ग्रामादिकलत्रसौख्यसंपन्नः ॥
रवितनयस्य दशायां प्रविशति जीवे सदा पुरुषः ॥ ४८ ॥

वर्धयति मित्रपक्षं भिनत्ति शोकान्यशः प्रकाशयति ॥
सौख्यविजयप्रमोदसत्कारमानधनलाभं ॥ ४९ ॥

**सौख्यविजयप्रमोदसत्कारमानधनलाभं ॥ ४९ ॥**
**सौरिदशायां सौलत्रसौख्यसंपन्नः ।**
**रवितनये प्रविशति जीवे सदा पुरुषः ॥**

॥ इति शनिदशायां अन्तर्दशाफलम् ॥

### उच्चादिगतग्रहदशाफलस्य अन्तर्दशायां अतिदेशः

नीचोऽच्चादिविधिश्चै(र्वि चै) वशत्रुमित्रबलाबलं ॥
अन्तर्दशासु मतिमांश्चिन्तयेत्तत्(च्च) प्रयत्नतः ॥ ५१ ॥

### राज्यप्रदान्तर्दशाः

व्योमलग्ने(ग्न)प्रपन्नस्य दशायां राज्यमाप्नुयात् ॥
नरेन्द्राणां यदा योगाः सुवीर्याद्(र्यस्या)थ वा पुनः ॥ ५२ ॥

### भोगिजननयोगः

लग्ने जीवः सितबुधयुतः सप्तमस्थोऽर्कपुत्रः
कर्मप्राप्तो दहनकिरणो भोगिनो जन्मसूक्तः ।

### शबरनृपतियोगः

केन्द्रे सौम्या न शुभगृहगा यत्र पापाभिधाना
य[ये]च(वं) स्याच्छव(ब)रनृपतिर्जायते वित्तवांश्च ॥ ५३ ॥

### शुभग्रहदशायां शुभग्रहान्तर्दशाफलम्[1]

[(अन्तर्दशा शुभायां मूलदशायां यदा शुभा भवति ॥]
भवति तदा बहुसौख्यं धनलब्धिरतीव पुरुषाणाम् ॥ ५४ ॥)]

### अस्तमितग्रहदशान्तर्दशयोः फलम्

[(रविकिरणमुषितदीप्तेर्दशा ग्रहस्य मलिनां तनुं कृत्वा ॥
मानयशोर्थविलासप्रतापरूपोद्यमान् हन्ति ॥ ५५ ॥)]

---

१ अस्मिन्नध्याये श्लोकत्रयं लुप्तमिति भाति। तच्च सारावलीतः संगृह्य लिखितम् ॥ ५२ ॥

लग्नजन्माधिपशत्रुदशाफलम्

[(होराजन्माधिपयोः शत्रुदशायां नरो विमूढमतिः ॥
राज्याच्च्युतो विपक्षैरभिभूतोऽन्यं समाश्रयति ॥ ५६ ॥)]

॥ इति श्रीजातकसारदीपे सारावल्युक्तान्तर्दशाध्यायः त्र्यशीतितमः ॥

---

## ॥ अथ दशारिष्टाध्यायः त्र्यशीतितमः ॥

क्रूरग्रहदशायां क्रूरग्रहान्तर्दशाफलम्

क्रूरदशायां क्रूरः प्रविश्य चांतर्दशां यदा कुरुते ॥
पुंसां स्यात्संदेहस्तदाऽरियोगे(गः) सदैव महान् ॥ १ ॥

कुजदशायां शन्यन्तर्दशाफलम्

क्षितितनयस्य दशा[यां] रविजस्यांतर्दशा भवति यदा ॥
बाहुकालजीविनामपि मरणं निःसंशयं कुर्यात् ॥ २ ॥

शनिदशायां कुजान्तर्दशाफलम्

अन्तर्दशा दशायां रविजस्य गता महीसूनोः ॥
कल्पायुषोऽपि मरणं कुर्यान्निःसंशयं पुंसः ॥ ३ ॥

षष्ठाष्टमक्रूरराशिगतपापग्रहदशान्तर्दशाफलम्

क्रूरराशौ स्थित पापः षष्ठे वा निधनेऽपि वा ॥

षष्ठाष्टमक्रूरराशिगतशत्रुदृष्टग्रहदशान्तर्दशाफलम्

तत्स्थेन चारिणा दृष्टः स्वपाके मृत्युदो ग्रहः ॥ ४ ॥

लग्नाधिपशत्रोः लग्नान्तर्दशाफलम्

लग्नस्याधिपतेः शत्रुर्लग्नस्यांतर्दशां गतः ॥
करोत्यकस्मान्मरणं सत्याचार्यः प्रभाप(ष)ते ॥ ५ ॥

॥ इति श्रीजातकसारदीपे दशारिष्टाध्यायः त्र्यशीतितमः ॥

---

## ॥ अथ दशारिष्टभङ्गाध्यायः चतुरशीतितमः ॥

[1]प्रवेशे बलवान् खेटः शुभैर्वा संनिरीक्षितः ॥
सौम्याधिमित्रवर्गस्थो मृत्युकृन्न भवेत्तदा ॥ १ ॥

दशान्तर्दशानाथयोरन्यतरस्य बलवत्वे दशारिष्टभङ्गः

[2]अन्तर्द(मूला द)शाऽधिनाथस्य विबलस्य दशा यदा ॥
बलिनः स्यात्तदा भंगो नवोयान(दशारिष्ट)स्य च ध्रुवं ॥ २ ॥

प्रकारान्तरेण दशारिष्टभङ्गः

युद्धे च विजयी तस्मिन् ग्रहयोगे शुभो यदि ॥
दशायां न भवेत्कष्टं स्वोच्चादिष्वपि चेत्स्थितः ॥ ३ ॥

॥ इति श्रीजातकसारदीपे दशारिष्टभङ्गाध्यायः चतुरशीतितमः ॥

---

१ दशाप्रवेशकाले दशापतेर्बलवत्वे शुभदृष्टत्वे सौम्यग्रहषड्वर्गगतत्वे अधिमित्रषड्वर्गगतत्वे च पूर्वाध्यायोक्तदिशा दशारिष्टसंभवेपि तद्भंगो भवतीति भावः। एवं अन्तर्दशाधिपस्यापि अन्तर्दशाप्रवेशकाले बलशुभदृष्टत्वादिसद्भावे दशारिष्टभङ्गो ज्ञेयः ॥ १ ॥

२ दशानाथस्य दौर्बल्ये अन्तर्दशानाथस्य प्राबल्यं, अन्तर्दशानाथस्य दौर्बल्ये दशानाथस्य प्राबल्यं च यत्र भवति तत्र दशारिष्टभङ्ग इति भावः ॥ २ ॥

## ॥ अथ होरासारोक्तसूर्यदशाध्यायः पञ्चाशीतितमः ॥

### अथ सूर्यदशासामान्यफलम्

भानोर्दशाप्रु(नु)भूते(तौ) विदेशवासी नयाति(वनाद्रि)दुर्गचरः ॥
द्विजदेववह्निभूपैः श(शा)स्त्रैर्भैषज्यतो धनप्राप्तिः ॥ १ ॥

मंत्राभिचारकुशलो विघातकुशलो(ल)[श्च]भू(भू)पतिश्चण्डः ॥
विख्यातः(त)कर्मनिरतो धीमान् विस्पष्टवागनिष्टश्च ॥ २ ॥

व्याह(ल)मृगोदर(रग)हस्तो(न्ता) दारसुतस्थानवर्जितश्चपलः ॥
ऋणवानदीनवद(च)नो नेत्रोदरदंतकर्णरोगी स्यात् ॥ ३ ॥

नृपतक(स्क)राश्रित(रादि)पीडा बन्धुद्वेषो(षः) स्वगोत्रनाशार्थः ॥
सामान्यमेतदुक्तं राशिविशेषान्वितं फलं वक्ष्ये ॥ ४ ॥

### ॥ अथ सूर्यदशाविशेषफलम् ॥

#### मेषे उच्चभागगतसूर्यदशाफलम्

[१]भानोरुच्चदशायां [(बहुप्रतापः स्वधर्मकर्मरतः ॥
नृपजनितार्तिं लभते पित्रार्जितवित्तदेशकर्माढ्यः ॥ ५ ॥)]

#### मेषे उच्चातिरिक्तभागगतसूर्यदशाफलम्

[(उच्चातिक्रान्तदशा भानोरुदरामयं शिरोरोगम् ॥
स्वजनविरोधं कुरुते चतुष्पदाद्यैर्भयं समाप्नोति ॥ ६ ॥)]

---

१ अस्मिन् श्लोके त्रयः पादा लुप्ताः । ततः परं षष्ठसप्तमौ श्लोकौ, अष्टमश्लोके आदिभागश्च लुप्ताः । ते च मया होरासारात् उद्धृत्य लिखिताः ॥ ५ ॥

### वृषभराशिगतसूर्यदशाफलम्

[(भानोर्दशा वृषस्था कृषिपशुसुतदारवर्जितं जनयेत् ॥
हृद्गुह्यनेत्ररोगी बन्धुक्लेशान्वितोपि मानी स्यात् ॥ ७ ॥)]

### मिथुनराशिगतसूर्यदशाफलम्

[(मिथुनदशायां)] भानौ(नोः) शास्त्रकलाकाव्यगोष्ठिशिल्परतः ॥
कृषिपशुधनधान्याद्यैः संयुक्तो ज्ञातितो धनाप्तिर्वा ॥ ८ ॥

### कर्काटकगतसूर्यदशाफलम्

दिवसकृद्दशायां चन्द्रग्र(गृ)हे ख्यातिमातृ(न्नृ)पा(पा)प्तधनः ॥
स्त्रीनिर्जितोऽनिलात्मा पितृबन्धु[वि]वर्जितोऽतितीक्ष्णश्च ॥ ९ ॥

### सिंहगतसूर्यदशाफलम्

क्षेत्रदशायां भानोरनेकवित्तान्वितो नृपसमो वा ॥
आरण्यदुर्गकृषिमान्सुतदारसमन्वितोऽतिविख्यातः ॥ १० ॥

### कन्यागतसूर्यदशाफलम्

कन्यारूढदशायां भानोः पशुमा न्न् गता(गतोऽ)र्थसिद्धिः स्यात् ॥
द्विजदेवधनावाप्तिः स्त्रीजनको लोकमान्यश्च ॥ ११ ॥

### तुलायां नीचभागगतसूर्यदशाफलम्

नीचदशायां (या) भानोः कृषिसुतमित्रार्थदारनाशकरी ॥
लभते विदेशगमनं घो(चो)राग्निलसाध्वसं जनयेत् ॥ १२ ॥

### तुलायां नीचभिन्नभागगतसूर्यदशाफलम्

नीचातिक्रान्तदशायां सूर्यस्य सुखा[न्नृपाद्ध]तं(नं) लभते ॥
स्त्रीदोषजनितदुःखं जन[य]ति परवंचनाद्धनप्राप्तिं ॥ १३ ॥

### वृश्चिकगतसूर्यदशाफलम्

आहा(अज्ञो) रे(र)णप्रतापी वृश्चिक[भ]संस्थभानुदशायां ॥
विषजनित(लज)शस्त्रपीडा पितुर्जनन्याश्च दुर्भगो भवति ॥ १४ ॥

### चापगतसूर्यदशाफलम्

कार्मुकभानुदशायां सुपुत्रदारान्वितो धनाढ्यश्च ॥
द्विजनृपजनितपूजां(जा) शास्त्रश्रुतिगेयमा(वा)द्यसंतुष्टः ॥ १५ ॥

### मकरगतसूर्यदशाफलम्

मकरे भानुदशायां परकार्यरतो [न] चातिधनपुत्रः ॥
स्त्रीदोषजनितदुःखं(खी) पाण्डुवामयपीडितोऽङ्गहीनो वा ॥ १६ ॥

### कुंभगतसूर्यदशाफलम्

कुम्भस्थे(स्था)र्कदशायां हृद्रोगसमन्वितो विनसृयु(ष्टसु)तः ॥
पिशुनः परस्त्रभोगी(जी) भार्याजनबन्धुवैरी स्यात् ॥ १७ ॥

### मीनगतसूर्यदशाफलम्

भानुदशायां मीने स्त्रीप्रीत्या लब्धमान[धन]सौख्यः ॥
विषमज्वरपीडा स्यात्सुतचिन्ताचा(न्तश्चा)टनो नरेन्द्रजनः(समः)
॥ १८ ॥

अष्टमगतसूर्यदशाफलम्

अष्टम[सं]स्थ[स्थ] दशा भानोरुच्चेऽपि दोष वि वृद्धिकरी ॥

षष्ठगतसूर्यदशाफलम्

षष्ठदशा प्रा(व्र)णपीडां कुरुते पितृमातृदोष वि वृद्धिकरी ॥ १९ ॥

सद्योमरणयोगैः प्रथमदशाफलनिरोधः

[1]पुरुष स्व प्रथमदशाय(यां) मतो वाच्यं शुभमशुभंवा ॥
चेत्सद्योमरणयोगैर्विशुद्धिदशाफलं याति ॥ २० ॥

[(पुरुषप्रथमदशायां फलं तु वाच्यं शुभाशुभं वापि ॥
सद्योमरणं योगै रुणद्धि स दशाफलं न चायाति ॥ २० ॥)]

मातृपितृदोषाभ्यां प्रथमदशाफलनिरोधः

मातृपितृदोषाभ्यां कचिन्नरोधं(न्निरुद्ध) दशाफलं ज्ञेयं ॥
तस्माद्योगान्सम्यक् समीक्षच(क्ष्य प)[श्चात्] दशाफलं चिन्त्यं ॥ २१ ॥

---

१ अयं श्लोकोऽशुद्धः। अतस्तत्स्थाने होरासारगतः श्लोक; मया लिखितः। अत्र पुरुषशब्दः स्त्रीपुरुषसाधारणजातकमात्रपरः। यस्य कस्यापि पुरुषस्य प्रथमदशायां तदुक्तं शुभं अशुभं वा फलं भवति। किं त्वेतत् सद्योमरणयोगाद्यभावे। तत्सद्भावे च सद्योमरणं मातृदोषःपितृदोषश्चेत्येते त्रयः स्वकीयैर्योगैर्दशाफलं निबन्धन्ति। अत्र मातृपितृदोषशब्दौ मातृपितृजातकगतपुत्रहानियोगपराविति ज्ञेयम्। एवं च सद्योमरणयोगाद्यभावे एवं प्रथमदशाफलं वक्तव्यमिति भावः॥ २०—२१ ॥

प्राथमिकसूर्यदशाफलम्

यस्यादौ भानुदशा मातृपितृ[दोषदा स]पक्षाद्यां(क्षघ्नी) ॥

प्राथमिकलग्नचन्द्रदशयोः फलम्

लग्नदशाक्लेशकरी चन्द्रदशा ज्ञानविघ्नकरी ॥ २२ ॥

इति सूर्यदशाविशेषफलम्

॥ इति श्रीजातकसारदीपे होरासारोक्तसूर्यदशाध्यायः पञ्चाशीतितमः ॥

---

## ॥ अथ होरासारोक्तचन्द्रदशाध्यायः षडशीतितमः

## चन्द्रदशायाः षट् भेदाः ॥

सामान्यतश्च षोढा चन्द्रदशा भिद्यते समासेन ॥

तिथिकृतारोहावरोहदशयोर्लक्षणम्

शुक्लस्य प्रथमतिथेरारभ्यारोहिसंज्ञिता शशिनः ॥ १ ॥

---

१ अत्र तृतीयश्लोकोत्तरार्धं चतुर्थश्लोकपूर्वार्धं च लुप्तम् । लुप्तो भागः होरासारात् उद्धृतः । अथ श्लोकत्रयार्थः संगृह्यते । शुक्लपक्षप्रतिपदं आरभ्य पूर्णिमापर्यन्तं आरोहिणी चन्द्रदशा । एवं कृष्णप्रतिपदं आरभ्य अमावास्यान्तं अवरोहिणी चन्द्रदशा । इमे दशे तिथिकृते । एवं दशमभावे भोग्यभागाः, एकादशद्वादशभावौ, लग्ने भुक्तभागाः, चतुर्थभावे भोग्यभागाः, पञ्चमषष्ठौ भावौ सप्तमभावे भुक्तभागाश्च यदा चन्द्रयुता भवन्ति तदा समुद्रे जलाभिवृद्धिर्भवति । एतेभ्योन्यत्र गते चन्द्रे समुद्रे जलह्रासो भवति । जलाभिवृद्धिभावगते चन्द्रे आरोहिणी चन्द्रदशा । जलह्रासभावगते चन्द्रे अवरोहिणी चन्द्रदशा । इमे दशे समुद्र-

कृष्णस्या[द्य]प्रभृति मासांतं चावरोहिणी स्व्याता ॥

समुद्रजलाभिवृद्धिकृतारोहावरोहदशयोर्लक्षणम्

जलधिजलोऽस्थितिकाले नृणां [सूतौ] दशा शशाङ्कस्य ॥ २ ॥

आरोहिणीतिसंज्ञा विपरीता तु साऽवरोहिणी स्व्याता ॥

नीचोच्चकृतारोहावरोहदशयोर्लक्षणम्

[(नीचाच्च्युतस्य हि दशा हिमगोरारोहिणी कथिता ॥ ३ ॥)]

[(तुङ्गाच्च्युतस्य तु दशाऽवरोहिणी निगदिता शशिनः ॥)]

रोहवरोहा(ह)[भेदा] सम्यक् त्रिविधा पुरातनैः कथिता ॥ ४ ॥

आरोहत्रययुक्तचन्द्रदशाफलम्

आरोहत्रययुक्ता चन्द्रदशा सर्वकार्यकरी ॥ ५ ॥

आरोहदशारूढ(ढो) मर्त्यो यः सर्वलोकविख्यातः ॥

अवरोहत्रययुक्तचन्द्रदशाफलम्

अवरोहि(ह)दशाप्राप्ते(प्तौ) पुरुषस्य यथाक्रमं [क्ष]या(यो) [भव]ति ॥ ६ ॥

आरोहयुतचन्द्रसूर्यहोरागतानां अशुभानामपि शुभदत्वम्

चन्द्रे प्रोक्तवदारूढे शशिहोरागता ग्रहाः ॥

आशुभास्ते शुभान्दद्यु रवेरेवं शशी यथा ॥ ७ ॥

---

जलाभिवृद्धिकृते । एवं नीचोच्चनिमित्ते आरोहावरोहदशे पूर्वमेव व्याख्याते । एवं च आरोहदशात्रयं अवरोहदशात्रयं च ज्ञेयम् ॥ १—४ ॥

अथ चन्द्रदशासामान्यफलम्

चन्द्रदशान्वितकाले मन्त्री नृपसंमतोऽतिमानी स्यात् ॥
देवद्विजमन्त्राद्यैर्धनवान् विनयान्वितः कलाज्ञश्च ॥ ८ ॥

गन्धमधुरतिलककुसुमैः फलवृक्षैर्वृक्ष(वित्त)वानति(नि)यथा(ता)र्थः ॥
ख्यातिप्रतापशशिवत्(बलः) सदाटनः स्त्रीप्रजान्वितो धीमान् ॥ ९ ॥

देवद्विजार्चनरतः परोपकारी मृदुस्वभावः स्यात् ॥
कृष्या(नृत्या)दिक(न)र्मकुशलः कफानिलात्मा जलादिक(ध)र्मपरः ॥ १० ॥

बलवान् स्वजनविरोधी निद्रालस्यश्रमा(मदा)न्वितः क्षीणे ॥
सामान्यमेतदुक्तं राशिप्रत्येकमंशकान्(प्रतिराशिफलं यथाक्रमं) वक्ष्ये ॥ ११ ॥

॥ इति चन्द्रदशासामान्यफलम् ॥

---

## ॥ अथ चन्द्रदशाविशेषफलम् ॥

मेषगतचन्द्रदशाफलम्

मेषाश्रितचन्द्रदशा स्त्रीसुखलाभ(भं) विदेशकर्मपरं ॥
सहजविनाशं क्रौर्यमसद्व्ययार्थ(तिं) शिरोरुजं जनयेत् ॥ १२ ॥

वृषभे स्वोच्चभागगतचन्द्रदशाफलम्

स्वोच्चगतस्य हिमांशोर्दशावरूढे(रोहे) नृपस्य राज्याप्तिः ॥
बहुरत्नसुतः समृद्धः स्त्रिया(यो) वरां(शो) गोश्व(श्व)पशुमांश्च ॥ १३ ॥

वृषभे मूलत्रिकोणभागगतचन्द्रदशाफलम्

मूलत्रिकोणगेन्दोर्दशाभिलाषी(यायी) नरो विदेशभु(र)तः ॥
कृषिविक्रयाद्धनाप्तिः स्वजनद्वेषी कफानिलार्ति (र्त) स्यात् ॥ १४ ॥

वयोमध्ये वृषभगतचन्द्रदशाफलम्

वयसो मध्यमकाले चन्द्रदशायां महासुखी धनवान् ॥
द्विजदेवमन्त्रभावैः संपन्नो युवतिवल्ल[भो] भवति ॥ १५ ॥

वृषभपूर्वार्धगतचन्द्रदशाफलम्

पूर्वार्धे संभूतो जननीमृत्यु(त्युं) करोति पापयुतः ॥

वृषभोत्तरार्धगतचन्द्रदशाफलम्

पश्चादर्धे वृषभे पितुर्वियोगं शशी कुरुते ॥ १६ ॥

मिथुनगतचन्द्रदशाफलम्

द्विजदेवाश्रिता(त)कार्ये(र्यो) मतिमान् [धन]वस्त्रभोगसंपन्नः ॥
मिथुने चन्द्रदशायां स्थानात्स्थानांतरं व्रजति ॥ १७ ॥

कर्काटकगतचन्द्रदशाफलम्

चन्द्रदशायां क्षेत्रे जन्म(ल)कृषिपशुधान्य(वित्त)वान् भवति ॥
ज्योतिर्ज्ञानकलाज्ञो गुह्यरुगार्तो न चाति(वनाद्रि)दुर्गचरः ॥ १८ ॥

सिंहगतचन्द्रदशाफलम्

सिंहे चन्द्रदशायां ज्ञातिधनाप्तिं मनोरथं लभते ॥
स्वजनश्रेष्ठो मतिमान् विव(क)लाज्ञो नातिपुत्रवान् भवति(सुभगः)
॥ १९ ॥

### कन्यागतचन्द्रदशाफलम्

कन्यायां चन्द्रदशा विदेशगमनं परस्त्रियो लाभं ॥
काव्यकलास्वतिनिपुणं कुरुते स्वरूपार्थकार्यसिद्धिकरं ॥ २० ॥

### तुलागतचन्द्रदशाफलम्

चन्द्रदशायां जूके स्त्रीकृतदोषान्मानहानिः स्यात् ॥
ल(भ)ग्नोत्साही चपलो दारिद्र(द्र्य)वश(शो) गो मनोदुःखी ॥ २१ ॥

### वृश्चिके नीचभागगतचन्द्रदशाफलम्

नीचदशायां नीचांशे व्याधिं व्या(शी)तगोरनेकविधं ॥
कुरुते दारवियोगं स्वबुद्धिपरितापजं मनोदुःखं ॥ २२ ॥

### वृश्चिके नीचभिन्नभागगतचन्द्रदशाफलम्

नीचान्मुक्तदशायां शनि(शि)नः प्रथितोऽल्प[युवति]वित्तेशः ॥
क्रयविक्रयाद्धनाप्तिर्मर्मस्वतिरोगवान् स्वपक्षघ्नः ॥ २३ ॥

### चापगतचन्द्रदशाफलम्

चन्द्रदशायां चापे गजाश्वनाथो निवासबहुलाप्तिः ॥
पूर्वार्जितधननाशोऽप्यन्यत्र सुखी धनी भवति ॥ २४ ॥

### मकरगतचन्द्रदशाफलम्

मकरे चन्द्रदशायां वातोत्मा(तात्मा) दीनविग्रहावासी ॥
स्त्रीमेदिन(स्त्रीमेदिनी)प्रवासी(जीर्णो) लोके श्रुतवान्न वा(चा)त्तिधनपुत्रः
॥ २५ ॥

### कुंभगतचन्द्रदशाफलम्

कुंभाश्रितचन्द्रदशाप्रवर्तते(ने) क्षीणवृत्तिरायाः(रम्या)से ॥
बहुवृणभागी चपलः कुस्त्रीसक्तो ग(गु)दोदरार्तिः स्यात् ॥ २६ ॥

### कुंभे वर्गोत्तमांशगतचन्द्रदशाफलम्

वर्गोत्तमांशकदशा तस्मिन्बलवद्विरोधिता(धतो) निस्वः ॥
दन्तादि(क्षि)कर्णपीडा(डः) स्वपुत्रदारैः परित्यक्तः ॥ २७ ॥

### मीनगतचन्द्रदशाफलम्

मीने चन्द्रदशायां जलार्थभा(भो)गी सदावरो(टनो) धीमान् ॥
गोमहिषदारपुत्रैः समन्वितो विगतशत्रुगणः ॥ २८ ॥

### मीने वर्गोत्तमगतचन्द्रदशाफलम्

नीचे(मीने) वर्गोत्तमदशा हिमगोर्निधिसंग्रहं सुखं लभते ॥
कन्यापीना(पिताऽ)ऋहीनो मातापितृवर्जितो दशा(भवेत्) बाल्ये
॥ २९ ॥

### कुंभमीनभिन्नराशिषु वर्गोत्तमगतचन्द्रदशाफलम्

वर्गोत्तमगतस्य दशायां नोक्तस्थानेघ(ष्व)भीप्ट(ष्ट)लाम(भ)करः ॥
स्वकुलश्रेष्ठो मतिमान् ज(ब)लधर्मपरोऽतिविद्वांश्च ॥ ३० ॥

### द्वादशगतपूर्णचन्द्रदशाफलम्

चन्द्रदशा व्ययभवने सर्वोपायैर्धनागमं(मः) पूर्ण(र्णे)

### द्वादशगतंक्षीणशत्रुनीचक्षेत्रगतचन्द्रदशाफलम्

क्षीणे रिपुनीचस्थे पूर्वोक्तफलं क्षणत्क्षयं याति ॥ ३१ ॥

अष्टमगतक्षीणचन्द्रदशाफलम्

अष्टमचन्द्रदशायां क्षीणे व्याध्यादिपीडितो मनुजः ॥
स्त्रीकृतदोषनिमित्तैर्दारिद्र्यं संप्रयच्छति(ग्याध्युन्नतिं लभते) ॥ ३२ ॥

अष्टमगतनीचस्थचन्द्रदशाफलम्

नीचस्थाष्टमदशा(यां) मरणं व्याध्यादिमाप्नुयात्सततं ॥

अष्टमगतपापयुतचन्द्रदशाफलम्

पापग्रहेण युक्ते निधनं वा जातिविभ्रंश ॥ ३३ ॥

मूलनक्षत्रगतचन्द्रदशाफलम्

मूल(मौढ्य) गते च हिमांशौ राज्या(च्चैव) च्च्युतिर्मनोदुःख ॥
पाण्डवामयरोगाद्यैः(याद्रिरोगै)[र्नि]पीडितं वारिजं [भयं] भवति ॥ ३४ ॥

षष्ठगतक्षीणचन्द्रदशाफलम्

षष्ठदशा व्यसनकरी नृणां क्षीणे स्वबन्धुनाशकरी ॥

षष्ठगतपूर्णचन्द्रदशाफलम्

पूर्णे धनागमोऽत्र(मंच) जनयति खलु केवलं नित्यं ॥ ३५ ॥

लग्नदशमगतचन्द्रदशाफलम्

उदयगते राज्याप्तिः कर्मगते स्त्रीप्रजार्थसंपत्ति(तिः) ॥
एवं चन्द्रदशाफलमंशका(क)चारैस्तथैव वक्तव्यं ॥ ३६ ॥

इति चन्द्रदशाविशेषफलम्

॥ इति श्रीजातकसारदीपे होरासारोक्तचन्द्रदशाध्यायः षडशीतितमः ॥

## ॥ अथ होरासारोक्तकुजदशाध्यायः सप्ताशीतितमः ॥

### अधोमुखग्रहलक्षणम्

आदित्यपूर्वषट्कस्था ये ग्रहास्ते अधोमुखाः ॥

### ऊर्ध्वमुखग्रहलक्षणम्

अगरस्थाश्च ये भानोरूर्ध्वास्यात्ते(स्ते) सुखप्रदाः ॥ १ ॥

### वक्रानुवक्रताराग्रहदशाफलम्

वक्री यदाऽवरोही स्यादारोही त्य(चा)नुवक्रतः(गः) ॥

वक्री स्वोच्चब(फ)लं तुल्यं(दद्यात्) दशा तस्य तु मध्यमा ॥ २ ॥

वक्रानुवक्रमा(क्रावा)लोक्य दशाफलमुदीरयेत् ॥
ताराग्रहाणां सर्वेषां एवं ज्ञात्वा विचक्षणः ॥ ३ ॥

### कुजदशासामान्यफलम्

भौमस्यार्थ(थ) फलानि शस्त्रहुतभुग्भूपा(वा)हवा(ना)द्वैर्धनं
भैषज्यानृतवंचनैश्च विविधैः क्रौर्यैर्धनस्यागमं(मः) ॥

पित्तासृक्ज्वरबाधनैश्च(नं च) सततं नोचादनश्चा(क्रनासे)वनं
विद्वेषी सुतदारबन्धुगुरुभिः कष्टा(ष्टोऽ)न्यभाग्ये नरः ॥ ४ ॥

### अथ कुजदशाविशेषफलं

### मेषे मूलत्रिकोणगतकुजदशाफलम्

मूलत्रिकोणसंस्था(स्थ)स्यात्स्व(रस्य) दशा फ(कु)लाधिकं जनयेत् ॥
सुतदारधना[प्तिं]प्तिः स(स्र)ह[स]कारी रण(ति)प्रियो धीमान् ॥ ५ ॥

मेषे मूलत्रिकोणभिन्नभागगतकुजदशाफलम्

मेषाश्रितभौमदशाप्रवर्तते(ने) ख्यातिमान्महोत्साही ॥
पित्ताग्निचोरबाधा बह्वाये(या)सेन संपत्तिः(तापः) ॥ ६ ॥

वृषभगतकुजदशाफलम्

वृषभे भौमदशायां (स्थितिहीनो रोगशोकसंतुष्टः(तप्तः) ॥
वान्य(व्य)सनी प्र(ना)तिसुप्तोध(तः प)रवित(त्त)रतो त(न)
देवगुरुभक्तः ॥ ७ ॥

मिथुनगतकुजदशाफलम्

मिथुने भौमदशायां विदेशवासी कलाविधिज्ञश्च ॥
स्वजनायास(त्यन्त)विरोधी बहुव्यया(था)र्तोऽनिलाग्निसंतप्तः ॥ ८ ॥

कर्काटके नीचभागगतकुजदशाफलम्

भौमदशायां शशिभे तोयोष्वा(धा)नाग्निवित्तवान् स्व(सु)गुणैः(णः) ॥
दारसुतबन्धुहीनो विकलांगः क्लेश(लोक)विक्रु(द्वि)ष्टः ॥ ९ ॥

कर्काटके नीचभिन्नभागगतकुजदशाफलम्

नीचारू(दू)र्ध्वंदशायां भौमस्य गुम(णा)तिरेकविख्यातः ॥
बलवान्यथानु(न्मधान)वैरी गुह्यरुगार्तो गवा(जा)श्वसंपन्नः ॥ १० ॥

सिंहगतकुजदशाफलम्

सिंहाश्रितभौमदशा कुरुते जनपात(नाय)कं महोत्साहं ॥
सुतदारवित्तहीनं शस्त्राग्निनिपीडितं विषं(नरं) जनयेत् ॥ ११ ॥

कन्यागतकुजदशाफलम्

कन्याश्रितभौमदशायां प्राथ(यः) स्थानं [धनं] सुखं लभते ॥
यज्ञक्रियासु निपुणं(णो) विषमाक्षं(क्षो) भूमिदारपुत्रार्ति(र्तः) ॥ १२ ॥

तुलागतकुजदशाफलम्

तौलिनि भौमदशायां मध्य(मेढू)रुचिः स्त्री(जास्त्री)कृतार्थपरिहीनः(णः) ॥
परजनकलहोऽद्रि(द्रि)क्तो गजाश्वहीनो(नोऽ)गहीनो वा ॥ १३ ॥

वृश्चिकगतकुजदशाफलम्

अलिनि(सं)स्थितभौमदशाप्रवर्तते(ने) सर्वस(त)त्त्वविदे(दे)शः ॥
कृषिधान्यधनावाप्तिः सुहृदां द्वेषी विषाग्निशस्त्रहतः ॥ १४ ॥

चापगतकुजदशाफलम्

चापे भौमदशायां द्विजदेवनृपादिभिर्धनं लभते ॥
दुःखाद्य(साध)कर्मकर्ता कउ(ल)हप्रायोऽतिमान(न्य)श्च ॥ १५ ॥

मकरे स्वोच्चभागगतकुजदशाफलम्

[1]भौमस्योऽच्चदशायां वाहनसुखराज्यरत्नसंपन्नः ॥
अनिवारितरणवेगः प्रधानजनबन्धुमा **विवर्जितोऽतिमानी स्यात्**
**दारिद्र्यदुःखतप्तो दुर्मार्गवि......**न्भवति ॥ १६ ॥

मकरे स्वोच्चभिन्नभागगतकुजदशाफलम्

उच्चातिक्रान्तदशा मकरे भौमस्य यत्नतोऽर्थाप्तिः(प्तिम्) ॥
व्यालमृगोऽरगशस्त्रैः पीडां कुरुतेऽल्पसंतुष्टः(ष्टिम्) ॥ १७ ॥

---

१ अस्मिन् श्लोके स्थूलाक्षरनिर्दिष्टो भागोऽधिकः । स च त्याज्यः ॥ १६ ॥

## कुंभगतकुजदशाफलम्

कुंभे भौमदशायामाचारविवर्जितोऽतिमानी स्यात् ॥
दारिद्र्यदुःखतप्तो दुर्मार्गवि[रति](विं)नष्टतनयश्च ॥ १८ ॥

## मीनगतकुजदशाफलम्

मीने भौमदशायां रोगी विगतात्मजो व्ययार्तश्च ॥
ऋणवान् विदेशवासी विचर्चिकाद्यैर्व्रणैश्च परितप्तः ॥ १९ ॥

## वर्गोत्तमांशगतकुजदशाफलम्

वर्गोत्तमस्यहि(स्थित)दशा राशिषु भौमस्य लोकविख्यातः ॥
तत्प्रोक्ताभाव(क्तफलं) द्विगुणं लभते संग्रामविश्रुतो बलवान् ॥ २० ॥

## नीचनवांशगतकुजदशाफलम्

नीचांशेहिसदा(शस्थस्य दशा) भौमस्य सदारतं(टनं) मनोदुःखं ॥
फलसत्रि(संनि)कर्षनाशः श्रेष्ठं त्यक्त्वाऽधमं भजते ॥ २१ ॥

## मूढकुजदशाफलम्

भौमस्यास्तम[न]दशा सर्वोऽपद्रवकारिणी विनाशमतिः ॥

## उदितकुजदशाफलम्

कर्मा(क्रम)यो[गो]दय[राशौ] राशिप्रोक्तफलानि सिद्ध्यन्ति ॥ २२ ॥

## अष्टमगतकुजदशाफलम्

भौमस्याष्टमदशा शत्रुविरोधान्मृ(धं मृ)तिं विवादं च ॥
जनयति [च] सर्वदिन्नं बन्धु[नि]मित्रा[त्ता]त्स्वमानहानिर्वा(र्निं वा)
॥ २३ ॥

राज्यप्रदकुजदशा

ऊर्ध्वस्व(र्ध्वास्य)तुङ्ग[स]मवस्थितभूमिजस्य
कर्मायगस्य विदधाति दशा हि राज्यं ।
जित्वा रिपून् विपुलवाहनसैन्ययुक्तां
राज्यश्रियं वितनुते निधिकंत(कृत्न) दात्र(ता) ॥ २४ ॥

इति भौमदशाविशेषफलं

॥ इति श्रीजातकसारदीपे होरासारोक्तकुजदशाध्यायः सप्ताशीतितमः ॥

---

## ॥ अथ होरासारोक्तबुधदशाध्यायः अष्टाशीतितमः ॥

अथ बुधदशासामान्यफलम्

सौम्यदशायां लभते (विद्या)विनियोगमित्रबंधुधनं ॥
कृषिवी(बी)जयाव(ज)नाद्यैः स्ववृत्तिकार्यैर्धनं समाप्नोति ॥ १ ॥

शिल्पादिकर्मकुशलो नीतिज्ञो गेयवाद्यसंतुष्टः ॥
ग्र(गृ)हभाण्डानां संग्रहमिंगितवेत्ता कुतूहल(ला)भाषी ॥ २ ॥

हास्य(भार्या)प्रियो विनीतो विद्वान् गुरुसंमतोऽव(ल्प)रोग(ग)श्च ॥
परिग्राहबन्धुजनैर्मित्रै(त्रै)श्च नखायुधैः पीडा ॥ ३ ॥

सुभगो न संवया(चिता)र्थो मारुतकफपित्तजैर्वि(रुग्नि)कारी स्यात् ॥
पीडां कुरुते नित्यं मनो(न उ)पतापं च कष्टदशा ॥ ४ ॥

॥ इति बुधदशासामान्यफलम् ॥

---

## ॥ अथ बुधदशाविशेषफलम् ॥

अत ऊर्ध्वं प्रत्येकं राश्यंशक[दशा]फला[नि] सौम्यस्य ॥
वक्ष्यतेऽ(न्तेऽ)त्र समासात्पूर्वाचार्यैश्च कथितानि ॥ ५ ॥

### मेषगतबुधदशाफलम्

मेषगतज्ञदशायां स्वल्पो(ज्ञान्यु)त्साही सदाऽटनो धीमान् ॥
चौर्यानृतशाथ(ठ्य)रतो निजधनहीनोऽन्यभाग(ग्य)निरतः स्यात् ॥ ६ ॥

### वृषभगतबुधदशाफलम्

सौम्यदशायां वृषभे भानु(मातु)रनिष्टो धनी यशस्वी स्यात् ॥
ऋणवान् बन्धुनिमित्तः(त्तैः) कुदारतनयान्वितो गलार्तिः स्यात् ॥ ७ ॥

### मिथुनगतबुधदशाफलम्

मिथुने सौम्यदशायां अनेकवार्तान्वितोऽवि(ति)भाषी स्यात् ॥
नैकर्यु(सु)तदारनाथो विमातृको ज्ञातिवल्लभो धीमान् ॥ ८ ॥

### कर्काटकगतबुधदशाफलम्

बन्धुजनपीडितात्मा विदेशनिरतोऽल्पसौख्यसंपन्नः ॥
काव्यज(क)लार्जितविभवश्चन्द्रगृहस्थबुधदशायां ॥ ९ ॥

### सिंहगतबुधदशाफलम्

सिंहाश्रितबुधदशायां ज्ञातिधनैश्वर्यवर्जितं जनयेत् ॥
दार(भ्रातृ)सुत(ख)बन्धुहीनः स्त्रीद्वेषी भोग(लोक)विश्रुतो भवति ॥ १० ॥

### कन्यायां स्वोच्चभागगतबुधदशाफलम्

उच्चाश्रितसौम्यदशा ज्ञातिधनैश्वर्यसंपदं कुरुते ॥
लिपिलेख्यकाव्यनिरतो नीतिज्ञो निर्जितारिपक्षश्च ॥ ११ ॥

### कन्यायां मूलत्रिकोणभागगतबुधदशाफलम्

मूलत्रिकोणभागे स्यात्सुदशा बुधस्य [वि]ख्यातिं(तम्) ॥
कुरुते विदेशसक्तं स्वगुणबलपराक्रमैर्धनं लभते ॥ १२ ॥

### कन्यायां स्वक्षेत्रभागगतबुधदशाफलम्

क्षेत्रांतरांशकस्थितदशा कन्यायां सोमजस्य वि[क]लासं(क्रम्) ॥
जनयति बन्धुवैरं सुखपशुधनवर्जितं जनयेत् ॥ १३ ॥

### तुलागतबुधदशाफलम्

सप्तमराशौ बौध्यां वाग्मी विकलेऽक्षणो न शांतमतिः ॥
शिल्पादिकर्मकुशलो विपण्यजीवी गवाश्वसु(दुः)खरतः ॥ १४ ॥

### वृश्चिकगतबुधदशाफलम्

कीटे सौम्यदशायामास(दा)नरतोऽल्पसंतुष्टः ॥
वेश्यां(प्रेष्यां)गनानुरक्तो न गृहाश्च(श्र)[म]संयुतो दरिद्रश्च ॥ १५ ॥

### चापगतबुधदशाफलम्

कार्मुकसंस्थितदशायां बुधस्य गणनायकोऽथ वा मंत्री ॥
मान(नाम)द्वयं च लभते कृषिपशु[धन]धान्यसंयुतो भवंति ॥ १६ ॥

### मकरगतबुधदशाफलम्

सौम्यस्य मृगदशायामृणवत्प(वान्प)रकार्यकृद्वि(त्कु)देशरतः ॥
अटलोऽ(नोऽ)ल्पजनस्निग्धो मायामोहेन मायिन(तापित)शरीरः
॥ १७ ॥

कुंभगतबुधदशाफलम्

कुंभगतज्ञदशायां तेजोहानिर्मिताशनो निस्वः ॥
बन्धुजनपीडितात्मा दुष्टस्त्रीनायको विदेशरतः ॥ १८ ॥

मीनगतबुधदशाफलम्

[(मीनाश्रितसौम्यदशा प्रशस्तवेदार्थशास्त्रपारगतम् ॥
धर्मादिचिन्तनपरं प्रधानजनवल्लभं कुरुते ॥ १९ ॥)]

मीने नीचभागगतबुधदशाफलम्

नीचाश्रितसौम्यदशा सलोल[को] बन्धुसत्वगुणहीनः ॥
कुष्यासना(शनोऽ)ल्पजीवी मृत(दु)रोगसमाश्रितोऽन्यगेहस्थः ॥ २० ॥

मीने नीचभिन्नभागगतबुधदशाफलम्

नीचसद्भ्रष्ट(ष्टमग)दशा[यां] सौम्यस्य विषमा(षायु)[धा]ग्निपश्वाद्यैः ॥
जनयति पीडां नित्यं कुकर्मनिरतोऽल्पसत्वगुणयु[क्तः] ॥ २१ ॥

मूढबुधदशाफलम्

सौम्यस्यास्तमयदशा क्षेत्रं हित्वा सदा मनोदुःखी ॥
पाण्डवामयकासाद्यैः पीडां कुरुते धनं क्षयं याति ॥ २२ ॥

वर्गोत्तमांशकगतबुधदशाफलम्

वर्गोत्तमांशकदशा सौम्यस्य शुभाशुभानि वर्द्धन्ते ॥
उक्तफलाद्द्वित्रिगुणं सर्वत्र [फलं] शुभाशुभैर्मिश्रा(श्रम्) ॥ २३ ॥

---

१ अस्मात् श्लोकात् परं एकः श्लोको लुप्तः। स च होरासारात् उद्धृतः ॥ १८ ॥

लग्नचतुर्थदशमैकादशगतबुधदशाफलम्

कर्मद्व्योदयबन्धुस्थ[सोमज]दशा [भवेद्विमिश्रफला] ॥

लभते स्वकुलाधिक्यं ज्ञानधनसुखसंयुतं जनयेत् ॥

सर्वत्र बुधदशाया मिश्रफलत्वम्

सर्वत्र बुधदशा[यां] मिश्रफलं [प्राक्तनैर्विनिर्दिष्टम्] ॥ २४ ॥

इति बुधदशाविशेषफलम्

॥ इति श्रीजातकसारदीपे होरासारोक्तबुधदशाध्यायः अष्टाशीतितमः ॥

---

## ॥ अथ होरासारोक्तगुरुदशाध्यायः एकोननवतितमः ॥

अथ गुरुदशासामान्यफलम्

जीवस्य दशां प्राप्य प्रशस्तवेदार्थशास्त्रपार(ठ)रतः ॥
धर्मादिवर्गचिंता(तः) प्रधानजनवल्लभोऽतिमेधावी ॥ १ ॥

अध्ययनदेवतार्चनसमस्त(र्चागदत्रय)यज्ञक्रियादिभिर्वित्तं ॥
जन्मप्रभावतोऽर्थान्नृपप्रसादाद्धनं लभते ॥ २ ॥

अश्वादिवाहनासिर्भूम्यंबरदारपुत्रसंपन्नः ॥
सत्संगतिः कुलाढ्यो बलाढ्यभूमी(ता भू)पतित्वं वा ॥ ३ ॥

कार्ये सुसूक्ष्मबुद्धिस्त्रिकालवि[त्] ज्ञान[कर्म]कुशलश्च ॥
प्लीहविद्रु(द्र)धिगुल्माद्यैः पीडां गतोऽर्थ(र्ध्व)रोगी स्यात् ॥ ४ ॥
एतन्नु सर्वराशिषु जीवस्य दशाफलं विनिर्देश्यं ॥

॥ इति गुरुदशासामान्यफलम् ॥

---

## ॥ अथ गुरुदशाविशेषफलम् ॥

प्रत्येकं राशिफलं तस्मादूर्ध्वं समादिशेत्तद्ज्ञः ॥ ५ ॥

### मेषगतगुरुदशाफलम्

जीवदशायां मेषे गणनाथो ज्ञानवान्नरेन्द्रधनः ॥
दारसुतमित्र[भोगैः] समन्वितो विगतशोकश्च ॥ ६ ॥

### वृषभगतगुरुदशाफलम्

वृषभाश्रितजीवदशाप्रवर्तते(ने) (शत्रु)पीडितो दुःखी ॥
अन्यत्र देशवासी स्वल्पोत्साहो धनं समाप्नोति ॥ ७ ॥

### मिथुनगतगुरुदशाफलम्

मिथुने जीवदशायां स्त्रीद्वेषी वित्तवान्नृषिः (न्कृषि)प्राज्ञः(यः) ॥
कुलगणवृद्धैर्वादो मातुरनिष्टोऽर्थहीनो वा ॥ ८ ॥

### कर्काटके स्वोच्चभागगतगुरुदशाफलम्

उच्चाश्रितदेवगुरोर्दशाविपाके स्वजन(न्म)वृत्तिकरः ॥
राजा सुखभोगवृद्धिर्विशिष्टनामान्वितो धनी विद्वान् ॥ ९ ॥

### कर्काटके स्वोच्चभिन्नभागगतगुरुदशाफलम्

[1]उच्चातिक्रान्तदशा जीवस्य [(सदाटनं कुदाररतम् ॥
पितृमातृदुःखतप्तं पूर्वार्जितवित्त)] तन(विक्र)यं कुरुते ॥ १० ॥

### सिंहगतगुरुदशाफलम्

सिंहे जीवदशायां धर्माध्यक्षो नृप(पात्) सुसंपदो लाभः ॥
गुणातिरेको मतिमान् दारसुतपशुवित्तवान्भवति ॥ ११ ॥

[2]कन्याश्रितजीवदशा नृपदारसमाश्रयाद्धनी भवति ॥
शूद्रादिनीचकलहः प्रवर्तते स्थानसंभ्रमं कुरुते ॥ १२ ॥

[(कन्याश्रितजीवदशा नृपपूजां दारसंग्रहं कुरुते ॥
पशुजां वृद्धिं वित्तं विद्यांबरवाहनावाप्तिम् ॥ १३ ॥)]

### तुलागतगुरुदशाफलम्

तौलिनि जीवदशायां मन्दोत्साही स्वदारपुत्रघ्नः ॥
दुष्टवृत्तार्थ(व्रणास)देहे(हो) दिवसे दिवसे मिताशनो भवति ॥ १४ ॥

### वृश्चिकगतगुरुदशाफलम्

अष्टमजीवदशायां सुत(सुर)कार्यरतोऽ[टनो] महोत्साही ॥
ऋणवाननेकभावैः प्रज्ञा(जा)नुरक्तो न विनय(सुनियम)शीलः ॥ १५ ॥

---

१ अस्मिन् श्लोके कुण्डलीगतो भागो लुप्तः । स च होरासारात् उद्धृतः ॥ १० ॥ २ कन्यागतगुरुदशाफलपरौ द्वौ श्लोकौ होरासारे दृश्येते । अत्र त्वेक एव । अतो मया एकः श्लोको होरासारादुद्धृत्य कुण्डल्यां निवेशितः ॥ १२ ॥

चापे मूलत्रिकोणभागगतगुरुदशाफलम्

मूलत्रिकोणसंस्थस्य गुरोर्दशायां पित्त(जलाधि)को धीमान् ॥
मन्त्री माण्डलिको वा प्रमदासक्तो धनी [सुखी] भवति ॥ १६ ॥

चापे स्वक्षेत्रगतगुरुदशाफलम्

धनुषि क्षेत्रांशे(श)दशा गुरोः प्रवासाद्धनं सुखं ल **ततेस्थान** भते ॥
यज्ञक्रियासु निरतो गोमान् कृषिवित्तसंग्रहं कुरुते ॥ १७ ॥

मकरे नीचभागगतगुरुदशाफलम्

नीचस्थितजीवदशाप्रवर्त्तते(ने) बन्धुशोकसंतापी ॥
परकार्य[कृत्] दरिद्रो जठरामयकर्णगुह्यरोगी स्यात् ॥ १८ ॥

मकरे नीचभिन्नभागगतगुरुदशाफलम्

मृगमुकस्थेजी(मुखस्थजै)ऽयां भवनाश्रितो कृषितो निपादयानः ॥
(मृगमुखजीवदशायां वनवासनिषादधनलाभौ) ॥
कृष्याश्रयोपजीवी भूरुहजन(ल)वंचनात् क्लेशः ॥ १९ ॥

कुंभगतगुरुदशाफलम्

कुंभाश्रितदेवगुरोर्दशाविपाके स्वमान(नाम)शौर्यधनं ॥
पिशि(शु)नोऽल्प[कर्म]जीवी स्ववचनदोषभावैः क्षयार्तः स्यात्
(स्वजनद्वेषोऽर्थनाशः स्यात्) ॥ २० ॥

मीनगतगुरुदशाफलम्

मीनाश्रितदेवगुरोर्दशाविपाके क(कु)लाधिको धीमान् ॥
वित्त(धां)कथाप्रसंगैर्धनवान्प्रमदाप्रियो विनीतश्च ॥ २१ ॥

वर्गोत्तमांशगतगुरुदशाफलम्

वर्गोत्तमांशकदशा देवाचार्यस्य पूजितो लोके ॥
बहुविधसंपन्न(वित्तं ल)भते सुतदारसमाश्रयी कृतांगी(शांगः) स्यात्
॥ २२ ॥

[1]मूलाश्रितदेवगुरोर्दशायां प्रवर्तते दुःखसुखे तुल्ये ॥
नीचारिभे जयपुत्रदारो वित्तं च रोगानि बहूनि
सन्ति ॥

[(मूढस्य देवेन्द्रगुरोर्दशायां
प्रवर्तते सुखदुःखं च तुल्यम् ।
नीचारिभेष्वात्मजदारवित्त
नाशाश्च रोगा बहवो भवेयुः ॥ २३ ॥)]

॥ इति गुरुदशाविशेषफलम् ॥

इति श्रीजातकसारदीपे होरासारोक्तगुरुदशाध्यायः एकोननवतितमः

---

## ॥ अथ होरासारोक्तशुक्रदशाध्यायः नवतितमः ॥

अथ शुक्रदशासामान्यफलम्

सामान्यं सर्वराशिषु शुक्र[स्य] दशाफलं समाचेष्टे(चक्षे) ॥
स्त्रीभूषणांबरसुखप्रमोदसत्कारमान[धन]लाभं(भः) ॥ १ ॥

---

१ अयं श्लोकोऽशुद्धः । ततस्तत्स्थाने होरासारादुद्धृतः कुण्डलीगतः श्लोकोऽनुसन्धेयः ॥ १३ ॥

कन्दर्पशास्त्रनिपुणो नानाविद्याश्रितोऽतिमेधावी ॥
नृत्यादिगीतकुशलो दाक्षिण्यरतोऽन्नदानशीलश्च ॥ २ ॥

क्रयविक्रयेषु कुशलो गोमान् कृत(बहु)[दार]वान्सुतार्थयुतः ॥
पूर्वार्जितधनभोक्ता कुलगणवादैः क्षयार्थश्च (गुणविख्यातः क्रियोद्युक्तः)
॥ ३ ॥

वातकफान्वितरोगी भ्रातृसम(सुत)स्नेहलो(तो) दुःखी ॥
नीचजनवैरं लभते कष्टायां धर्मवैरिभिः प्रीतिं ॥ ४ ॥

॥ इति शुक्रदशासामान्यफलम् ॥

---

## ॥ अथ शुक्रदशाविशेषफलम् ॥

राशीनां प्रत्येकं शुक्रस्य दशाफलानि वक्ष्यन्ते ॥
रिपुनीचांशकहीनो(ने) निश्चयं(यात्) [स]फ(त्फ)लं ब्रूयात् ॥ ५ ॥

### मेषगतशुक्रदशाफलम्

शुक्रदशायां मेषे स्त्रीकृतसुखवित्तमानहानिः स्यात् ॥
अटनोमहा(ऽसहोऽ)ल्पजीवी प्रभुसेवी राजयोषितो दयितः ॥ ६ ॥

### वृषभगतशुक्रदशाफलम्

वृषभे शुक्रदशायां कृषिपशुदारान्वितो मतिमान् ॥
बहोवित्तशास्त्रसुदतिः(बहुशास्त्रवित्सुदान्तः) कन्याजनको नरेन्द्रदयितश्च
॥ ७ ॥

मिथुनगतशुक्रदशाफलम्

मिथुने शुक्रदशायां अनेककाव्या(र्या)न्वितो महोत्साही ॥
विस्मयकथाभिलाषी विदेशनिरतोऽर्थवान् भवति ॥ ८ ॥

कर्कटकगतशुक्रदशाफलम्

चन्द्रगृहस्थस्य भृगोर्दशाविपाके स्वकार्यसंयुक्तः ॥
द्विस्त्रीभरण[सु]शीलो [ब]हुप(हुप्र)कारेषु जीवितं कुरुते ॥ ९ ॥

सिंहगतशुक्रदशाफलम्

सिंहे शुक्रदशायां प्रवरस्त्रीसंश्रयाद्धनानि स्युः ॥
प्रवरवित्तयुक्तो(तो) धीमान् अल्पसुखो(तो) गोगणानि(वि)नश्यंति ॥ १० ॥

कन्यायां नीचभागगतशुक्रदशाफलम्

कन्याश्रितशुक्रदशाप्रवर्त्तते(ने) पुत्रवित्तसुखहीनः ॥
भग्नोत्साही चपलो विदेशवासी स्वदारसंत्यक्तः ॥ ११ ॥

कन्यायां वर्गोत्तमभागगतशुक्रदशाफलम्

वर्गोत्तमदशाविपाके के नृपचेष्टा(पेष्टचो)रतोऽर्थहानिः स्यात् ॥
असंतोषो(स्वस्थो) बलहीनो भिक्षाट(श)नः सदाटनो भवति ॥ १२ ॥

तुलागतशुक्रदशाफलम्

मूलत्रिकोणसंस्थस्य भृगोर्दशायां विशिष्टमान(नाम)युतः ॥
कृषिपशुधनधान्याद्यैः संपन्नो ज्ञातितो(निनो) धनाप्तिर्वा ॥ १३ ॥

### वृश्चिकगतशुक्रदशाफलम्

अटनो बहुप्रलापी परकार्यरतो निमित्तकलहाद्यः ॥
बहृणभागी पुरुषो वृश्चिकसंस्थितभृगुदशायां ॥ १४ ॥

### चापगतशुक्रदशाफलम्

चापे शुक्रदशायां धीरोऽशत्रुः कुलाधिको धीमान् ॥
काव्यकलास्वतिनिपुणो नृपदयितो दारपुत्रसंपन्नः(तुष्टः) ॥ १५ ॥

### मकरगतशुक्रदशाफलम्

मकरे शुक्रदशायां श्लेष्म(क्लेश)सहिष्णुः सुखी व(च) रिपुहन्ता ॥
वातश्लेष्मजय(प्र)कृति(तिः) कुत्सितदारो विगर्हितकुटुंबः ॥ १६ ॥

### कुंभगतशुक्रदशाफलम्

कुंभे शुक्रदशायामुद्वेगो रोगवान्पु(प्र)यत्नश्च ॥
परयुवतिगो.व्रतघ्नो नीचाचारः(रोऽ)[ल्प]कर्मरहि(निर)तश्च ॥ १७ ॥

### मीने स्वोच्चभागगतशुक्रदशाफलम्

मीने शुक्रदशायां वंशधरो ज्ञानवान्नरेन्द्रधनः ॥
कृषिनिधनिन(तो धनवान्) लोभी [कम]नीयवपुः प्रधानतां याति ॥ १८ ॥

### मीने वर्गोत्तमांशगतशुक्रदशाफलम्

ही(मी)ने वर्गोत्तमदशा स्वनामगुणवित्तशौर्यवान्भवति ॥
रोगैर्निपीडितात्मा अल्पप्रतिष्ठादिधर्मपरः ॥ १९ ॥

परमोच्चगतशुक्रदशाफलम्

स्वोच्चस्थितो भृगुसुतो व्ययकर्मगो वा
लग्नेऽ(लाभेऽ)पि वाऽऽर्ति(पाप)रहितो न नु(तु) वैरियुक्तः(पापदृष्टः) ॥
तस्यात्र पाकविष(सम)ये बहुरत्नपूर्णो
धीमान् विशालनयनो निजवंशनाथः ॥ २० ॥

॥ इति श्रीजातकसारदीपे होरासारोक्तशुक्रदशाध्यायः नवतितमः ॥

---

## ॥ अथ होरासारोक्तशनिदशाध्यायः एकनवतितमः ॥

अथ शनिदशासामान्यफलम्

न(सरस्य दौशा)(शां) यां प्राप्य प्रथितो धीमाननेकशास्त्रज्ञः ॥
बृन्दग्रामपुराणां नेता पितृपोऽ(तृतोऽ)धिको त्रिविज्ञश्च ॥ १ ॥

गजतुरगवाह(गोध)नाद्यैः संपन्नो ज्ञातितो धनप्राप्तिः ॥
द्विजदेवपूजितत्वात्पु(तात्मा पु)राणी(ण)भवनाश्रितोऽल्पसंतुष्टः ॥ २ ॥

निद्रालस्यश्रमं(म)वा[न्] स्वजनद्वेष्यो जरांगनासक्तः ॥
धर्मप्रियो विनीतो देवायतनक्रियार्चनाभिरतः ॥ ३ ॥

वातकफाद्यैः पीडा विकलांगो जायते कृशांगो वा ॥
सामान्यमेतदुक्तं राशि(शौ) प्रत्येकमंशकाद्वक्ष्ये ॥ ४ ॥

॥ इति शनिदशासामान्यफलम् ॥

## ॥ अथ शनिदशाविशेषफलम् ॥

### मेषे नीचभागगतशनिदशाफलम्

मन्ददशायां मेषे प्रवासनिरतः(तोऽ)स्वतन्त्रनिरत(वृत्ति)श्च ॥
पामादिचर्मरोगी मायावी मा(भ्रा)तृबन्धुरहितश्च ॥ ५ ॥

### मेषे नीचभिन्नभागगतशनिदशाफलम्

धान्यजधर्मावाप्तिं(कृषिधान्यधर्मलाभो) नीचाद् भ्रष्टश्च(स्य) सूर्यपुत्रस्य ॥
पतनाद्यैः(द्यैः) क्लेशांग(शाढ्यो) निश्च(नीच) यः प्रायो निरुत्साही ॥ ६ ॥

### वृषभगतशनिदशाफलम्

वृषभे सौरिदशायां विशिष्टना[मा]न्वितोऽतिमेधावी ॥
राजा राजसमो वा शु(यु)द्धेश(षु) कृतश्रमोऽतिधर्मरतिः ॥ ७ ॥

### मिथुनगतशनिदशाफलम्

मिथुने क्षमाविहीनो मंददशायां क्षमांग(सुतार्थ)भोगरतः ॥
स्त्रीचोरतोऽर्थहानिः परकार्यरतो रणातिभीरुश्च ॥ ८ ॥

### कर्कटकगतशनिदशाफलम्

मातृसुतबन्धुहीनो नेत्रश्रवणादिदुर्बलो धीमान् ॥
मन्ददशायां शशिभे चिंताविष्टोऽस्वतन्त्रनिरतश्च ॥ ९ ॥

### सिंहगतशनिदशाफलम्

सिंहे सिहोसे(सिंहांशे) वा मन्ददशा[या]मनेकरोगयुक्तः(तः) ॥
सुतदारबन्धुकलहो गोमहिष्या(षा)[श्वा]दिवित्तवान्भवति ॥ १० ॥

कन्यागतशनिदशाफलम्

कन्याश्रितमन्ददशा ददाति विद्यां धनं श्रमात्फलं(मोत्पत्तिं) ॥
भूरुहजलप्रमादी गुरुद्विजार्ययोषितां [द]यिता(यितः) ॥ ११ ॥

तुलागतशनिदशाफलम्

उच्चाश्रितमन्ददशा ज्ञानधनैश्वर्यभोगसंपत्तिः(त्तिम्) ॥
जनयति लोके श्रुतवान् स्वभावतोऽर्थागमं सुखं लभते ॥ १२ ॥

वृश्चिकगतशनिदशाफलम्

मन्ददशायां कीटे वननि(वधबन्ध)रतो वृथाटनोऽनृतवाक्॥
कृपणो दयाविहीनो नीच[(जनानुग्रहोपजीवी स्यात् ॥ १३ ॥)]

चापगतशनिदशाफलम्

[(चापे मन्ददशायां स्वस्थो नृपसंमतो नृपेन्द्रो वा ॥
जीवधनादिप्राप्तिः)] सुतदारसमन्वितो रणोत्साही ॥ १४ ॥

मकरगतशनिदशाफलम्

मकरे मन्ददशायां बहुश्रमास(मोत्प)न्नवित्तवान्सुभगः ॥
वंध्याजरांगता(ना)नां दयितो विश्वासतोऽर्थहानिः स्यात् ॥ १५ ॥

कुंभगतशनिदशाफलम्

मूलत्रिकोणसंस्थस्य शनेर्दशायां सुखानि सिद्ध्यन्ति ॥
स्वकुलश्रेष्ठो मतिमान् कृषिपशुधनधान्य[पुत्र]वान्भवति ॥ १६ ॥

मीनगतशनिदशाफलम्

मीने मन्ददशायामन्यो(ल्पो)त्साहाङ्गनानि सिद्ध्यंति ॥
श्रेणीग्रामपुराणामीषद्ध(शो व)निताद्दशो(तोऽ)[पि] मोक्षार्थः(र्थी) ॥ १७ ॥

मूढशनिदशाफलम्

आयव्ययकु(तु)ल्यकरो मूल(ढ)दशायां शनेरसंतोषी ॥
क्षणभंगुरो(रा)तिकीर्तिर्वि[वि]धैः क्लेशैश्च पीडितो भवति ॥ १८ ॥

उक्तस्य राशिफलस्यांशकफलेऽतिदेशः

राश्यंशक[फल]मेवं प्रोक्तं कथितं बलवत्तरं(बलवत्तरं तयोः कथितम्) ॥
राश्यंशकबलसमानां(समत्वे) समानरूपं वदेत्प्राज्ञः ॥ १९ ॥

एवं ग्रहाणां विविधैः प्रकारैः
दशाफलान्यत्र मयेऽरितानि ।
ज्ञात्वा नराणां प्रकृतिं समग्रां
समादिशेत्तस्य(त्र) समानरूपं ॥ २० ॥

इति शनिदशाविशेषफलम्

॥ इति श्रीजातकसारदीपे होरासारोक्तशनिदशाध्यायः एकनवतितमः ॥

---

## ॥ अथ नष्टजातकायुर्दायाध्यायः द्विनवतितमः ॥

प्रश्नतोऽप्यविदितोद्भवपुंसां
वाच्यमायुरुदितं हि मुनीन्द्रैः ।
बादरायणमुनीरितमायुः
प्रश्नतोऽपि कथयामि सुबोधं ॥ १ ॥

सूर्यात्पंचविकृन्मनुग्रहगजत्रीशा गुणाः प्रश्नभा
लिप्ताः स्वार्कगुणा भचक्रकलिकाभक्ता इहायुस्तनोः ।
यातर्क्षेशगुणाहतं स्वरवि-१२०-हृल्लब्धं पृथक् वा(स्वा)र्कतः
संशोध्यं च समीपगं तदुभयोर्यन्मू(त्यू)च्छकेना(कस्या)युषा(षः) ॥ २ ॥

तद्ग्राह्ये(ह्यं) प्रथमांत्यमध्यमवयस्त्र्यंगांकं(क)युक्त्वहितो(ग्वर्जितं)
यातं स्या[त्म]वियोजितं तनुभवायुष्येण संताडयेत् ।
एष्यर्क्षेशगुणेन स्वार्क जात विहृतं शेषं तदैव्यं रवे
र्बाधीर्याध्यस्वगादर्थोशकभवायुर्वज्र(द्रम)हैर्वा कुरु ॥ ३ ॥

॥ इति जातकदीपिकायां प्रश्नकालादायुरानयनं ॥

इति श्रीजातकसारदीपे नष्टजातकायुर्दायाध्यायः द्विनवतितमः

---

## ॥ अथ यवनोक्तदीप्ताद्यवस्थाध्यायः त्रिनवतितमः ॥

दीप्तः स्वोच्चगतः स्ववेश्मनि भवेत्स्वस्थस्तथा हर्षितो
मित्रर्क्षे शुभवर्गगो गगनगः शांतः प्रदिष्टो बुधैः ।
शक्तो रश्मिवितानभृच्च विकलः सूर्यांशुलुप्तद्युतिः
दीनो नीचगतः खलोऽशुभयुतः खेटार्दितः पीडितः ॥ १ ॥

दीप्ते प्रतापविजिताखिलशत्रुपक्षो
लक्ष्मीयुतः स्वमदकुंजरराजकेलिः ।
स्वच्छे(स्थे) गृहाश्वमणिधान्यकुटुंबयुक्तः
सेनापतिर्भवति हं(हं)त्यखिलारिपक्षं ॥ २ ॥

क्ष(स्व)कयुवतियुक्तेस्वि(तः स्यात्) हर्षिते निर्जितारिः
सुख[व]चनविलास(सः) स्याच्च(न्न)मची(धी)युक् प्रशांते ।
वसनकुसुमकान्ताकेलिरिष्टस्तु शक्ते
व्रजति गतधनोऽस्माद्दैन्ययुक्तश्च दीने ॥ ३ ॥

स्थानच्युतः क्षतधनो विकलेऽरिभीतः
स्यात्पीडिते गतसुतो बहुदुःखशोकः ।
दुःखान्वितो गतधनो वनितावियुक्तो
देशान्तरं व्रजति वीतसुहृत् खलाख्ये ॥ ४ ॥

इति श्रीजातकसारदीपे यवनोक्तदीप्ताद्यवस्थाध्यायः त्रिनवतितमः

इति सकलागमाचार्यश्रीनृसिंहदैवज्ञकृतः जातकसारदीपः संपूर्णः

वादिराजहृदम्भोजलसन्मङ्गलदेवता ॥
घोटीमुखी दुर्घटार्थविवृतिं शोधयत्विमाम् ॥ १ ॥

हयग्रीवपदज्योत्स्ना व्याख्येयं मन्मुखोद्गता ॥
भूयाज्जातकसाराध्वखिन्नसत्तापहारिणी ॥ २ ॥

ज्यौतिषविदुषा तर्कविदुषा वेदान्तशिरोमणिना महीशूरमहारा-
जास्थानविदुषा रजतपीठपुर (उडुपी) क्षेत्रान्तर्गत-
पणियाडयभिजनेन पञ्चाङ्गोपाधिधारिणा
लक्ष्मीनारायणोपाध्यायेन रचिता
श्रीजातकसारदीपदुर्घटार्थ-
विवृतिः समाप्ता

---

# जातकसारदीपस्य शुद्धाशुद्धपत्रिका

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| स पूज्य: | संपूज्यः | ८ | १५ |
| वुद्धि | वृद्धि | ८ | १७ |
| (ना) | [ना] | ९ | ६ |
| (वर्ण) | [वर्ण] | १० | १ |
| दरिदो | दरिद्रो | ११ | १४ |
| ह्रस्व | ह्रस्वः | ११ | २० |
| का(मी) | का[मी] | १२ | १५ |
| नरा | नरो | १४ | १ |
| (न)रो | [न]रो | १६ | १० |
| सुथिरा | सुस्थिरा | २० | ५ |
| ह्रस्व | ह्रस्व | २० | १४ |
| अप्रजा: | अप्रजः | २५ | ६ |
| उदाराढथः | उदाराढ्यः | ३० | १८ |
| प्राप | नाप | ३१ | ४ |
| सपन्नः | प्रपन्नः | ३१ | ५ |
| नृप | नृप | ३४ | ७ |
| भतिव | भवति | ३६ | १९ |
| स्त्र्याप्तः | स्त्र्याप्तिः | ३७ | ५ |
| धृत्यब्दे | धृत्यब्दे | ३८ | १० |
| श्लाकोक्त | श्लोकोक्त | ३८ | १५ |
| (गजाब्धौ) | [गजा](ब्धौ) | ४१ | १० |
| भूपेंर८४ | भूपें८२४ | ४२ | ३ |
| वध्यके | न्ध्यके | ४२ | १० |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| संशय | संशयः | ४२ | १५ |
| देशात्सतती | देशाप्तती | ४४ | १७ |
| विस्फुटिना | विस्फुटिता | ६१ | १६ |
| ॥ १ ॥ | ॥ ३४ ॥ | ६३ | १५ |
| वृषभाद्ये | वृषभाद्ये | ६४ | ८ |
| उद्धृत(द्ध) | उद्धृ(द्ध)त | ६७ | १ |
| विजि(ष्टघुः) | विजिष्टघुः | ७१ | ९ |
| कांत तः | कांत(तः) | ७१ | ११ |
| लुब्धो(ध) | लुब्धो(ब्ध) | ७२ | २ |
| धनबान् | धनवान् | ७३ | ११ |
| रव्यातो | ख्यातो | ७४ | १२ |
| सुमृदु | सुमृदुः | ८२ | ३ |
| निक्ष | निज | ८६ | १७ |
| (श्रुतः) | (श्रुताः) | ८८ | ८ |
| हारा | होरा | ९४ | ११ |
| अथ पृथङ्नवांशफलम् | अथ पृथङ्नवांशफलम् अथ चन्द्रनवांशफलाध्यायः | ९५ | १ |
| लिनोऽतिमे | लिनोऽतिमे | १०६ | १५ |
| (कृकी) | कृ(की) | १०६ | ७ |
| (दर) | (दा) | १०६ | ७ |
| वख्यात | विख्यात | १२३ | १ |
| गदार्तित(आ)श्चा | गदार्तितश्चा | १३४ | ४ |
| लटि | कटि | १३९ | ४ |
| वीक्षितेऽज्ञे | वीक्षिते ज्ञे | १६१ | ४ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| जव | जन | १७० | १० |
| श्रुकेक्षिते | शुक्रेक्षिते | १७१ | १० |
| कुच | कुज | १८३ | १८ |
| समान्य | सामान्य | १८९ | ११ |
| (कर) | (कर:) | १९१ | ५ |
| परिपतिः | परिणतिः | १९२ | १५ |
| ग्वामीक्षिते | स्वामीक्षिते | १९६ | १७ |
| सप्तमगौ | सप्तमगो | १९७ | ३ |
| पश्यन्त्यं(त्य)बर | पश्यन्त्यं(त्यं)बर | २०७ | ८ |
| खोग्राग्रेदु | खोग्राग्रेन्दु | २२९ | २ |
| शौलांबु | शैलांबु | २४९ | १७ |
| च्यनाष्ट | द्युनाष्ट | २७६ | ५ |
| प्रवासार्त | प्रवासार्तम् | २८५ | १४ |
| सुकृति | सुकृत | २९५ | २ |
| सु(व)र्ग | सु[व]र्ग | ३१५ | ७ |
| नियान्ति | नियन्ति | ३३० | १५ |
| उद्यूक्त | उद्युक्त | ३४४ | १६ |
| प्रकष्टश्च | प्रकृष्टश्च | ३६३ | १३ |
| स्वीन्दु | रवीन्दु | ३७० | ६ |
| स्वीन्दु | रवीन्दु | ३७० | १३ |
| सैयुतै | संयुतै | ३७१ | ८ |
| (द्येकरे) | (द्येकैर) | ३७४ | १ |
| वांशें | वांशं | ३८२ | ६ |
| परिरिपु) | परि(रिपु) | ३९८ | ८ |
| (तजा) | (जा) | ४०३ | २ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| (शूगो:) | (शूगो) | ४२४ | ३ |
| व(क्त्रं) | व[क्त्रं] | ४२६ | ३ |
| ज्यावयति | च्यावयति | ४३२ | १४ |
| सत्यजार्येण | सत्याचार्येण | ४३६ | १० |
| लक्षनि | लक्षणानि | ४४० | १ |
| च्त्रयोग | च्छत्रयोग | ४४० | ७ |
| वृद्धिश्च | वृद्धिश्च | ४४२ | १० |
| अनन्तर | अनन्तरं | ४४३ | १२ |
| स्ववश | स्ववश | ४४४ | १ |
| (च संस्था)चर्या | चर्या(च संस्था) | ४४७ | १३ |
| हशासु | दशासु | ४५१ | ४ |
| युत्ता | युता | ४५५ | १३ |
| पुव | पुन | ४६० | ० |
| दंप(त्यो) | दंपत्यो | ४६३ | ६ |
| कन्यां | कन्यां(न्या) | ४६८ | २० |
| (मा) | (मा:) | ४६९ | २ |
| (खी) | (रवी) | ४६९ | १७ |
| शशिजस्त्य | शशिजस्त्व | ४७० | २ |
| घातका: | घातुका: | ४७९ | ७ |
| पितु | पितृ | ४७९ | ८ |
| पुष्ये(ष्ये) | पुष्ये(ष्पे) | ४८२ | ३ |
| शिखातियां | शिखा(फा)यां | ४८२ | ४ |
| (फा) | ति | ४८२ | ४ |
| विपायै | विपत्यै | ४९५ | २ |
| प्र[पैरनु | प्र[पै]रनु | ४९८ | ८ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
| --- | --- | --- | --- |
| (र्मोवरलाभ)देव | देव(र्मोवरलाभ) | ५०५ | १२ |
| योगैः | योगौ | ५०६ | १० |
| सचन्द्रायस्थो वा | सचन्द्रा वा | ५०९ | ५ |
| चद्रा | त्र वा | ५१६ | ६ |
| श्चन्द्रे | श्चन्द्रे | ५१६ | ८ |
| सौम्यै | सोम्यै | ५२६ | ५ |
| (स्य)गे | (स्त)गे | ५३३ | ९ |
| (त्रि)तौ | (न्त्रि)तौ | ५४३ | ३ |
| (खनोह्नि तरणो) | (ह्नि तरणौ) | ५४५ | १२ |
| सित | सितं | ५४७ | ४ |
| (स्थैस्थे) | स्थै(स्थे) | ५५६ | ६ |
| (क) | की | ५५८ | ५ |
| रवसुखो | स्वसुखो | ५६४ | १ |
| युक्तो | युक्तौ | ५६५ | ७ |
| तद्ज्ञ | तज्ज्ञै | ५६७ | ९ |
| (ग)रव | [ग]ख | ५६८ | ११ |
| दृत्र्या | दृत्र्या | ५७३ | ० |
| स्थगुरो | गुरो | ५७५ | ६ |
| (पचय) | (उपचय) | ५७६ | ४ |
| वस्त्र | वस्त्रं | ५८८ | ९ |
| ईशावस्थाः | ईशानस्थाः | ६०३ | १३ |
| नाममाद्या | नामाद्या | ६०४ | १० |
| मूर्नि | मूर्धनि | ६१३ | २ |
| गुहथे | गुह्ये | ६१३ | ३ |
| तत्र्यंगे | त(त्र्यं)गे | ६२४ | ३ |
| नेपतितां | नृपतितां | ६१४ | ५ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| निहिता | निहंता | ६१९ | ११ |
| ऽेऽखिका | ऽेखिका | ६३० | ५ |
| ज्ञनम् (भर्त्येः) | ज्ञानम् | ६३३ | ३ |
| ॥ ८ ॥ | ॥ ८ ॥)] | ६४५ | ४ |
| प्रत्यङ्भ | प्रत्यङ्द् | ६४६ | १२ |
| कौज | कौजी | ६५० | १४ |
| जात्य | जात्या | ६५२ | १ |
| ॥ ३४ ॥ | ॥ ३४ ॥)] | ६६४ | १३ |
| वेश्यां | वेश्या | ६६५ | १ |
| क्षण | क्षणा | ६७९ | २० |
| (यां) | [यां] | ६८० | ५ |
| (चैव)च्च्यु | [चैव]च्यु | ६८० | ९ |
| नेरः | नरः(रतः) | ६८१ | १५ |
| (स्थिति | स्थिति | ६८२ | ५ |
| भौस्यस्य | भौमस्य | ६८४ | ८ |
| (विद्या) | [विद्या] | ६८५ | १० |
| (शत्रु) | [शत्रु] | ६९० | ११ |
| स्वीद्वेषी | स्त्रीद्वेषी | ६९० | १४ |
| वृद्वि | वृद्धि | ६९० | १८ |
| धीरोऽश्रत्रुः | धीरोऽशत्रुः | ६९६ | ५ |
| (सरस्य दौशा) | (सौ)रस्य दाशा | ६९७ | ९ |
| वाफ् | वाक् | ६९९ | ८ |

# श्रीजातकसारदीपे उदाहृता ग्रन्थकर्तारः

# श्रीजातकसारदीपे प्रमाणतयोदाहृता ग्रन्थाः

---